# श्रीमद्भगवद्गीता

श्रीवंशीधरमिश्रप्रणीतया
वंशीव्याख्यया विभूषिता

व्याख्याकारः सम्पादकश्च

पण्डितश्रीवंशीधरमिश्रः

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 126 ]

# ŚRĪMADBHAGAVADGĪTĀ

With Commentary VAMŚĪ

BY

Ācārya Śrī Vaṁśīdhara Miśra
Ex-Lecturer
GOVERN ENT SANSKR T COLLEGE
Bhagalapur ( Vihara )



VARANASI
1990

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002.



First Edition—1000 Copies
Price Rs 96 00



Printed by—
Dr. Ram Manohar Mishra
O. S. D.
Sampurnanand Sanskrit University Press
Varanasi.

सरस्वतीभवन–ग्रन्थमाला

[ १२६ ]

# श्रीमद्भगवद्गीता

'वंशी'व्याख्यया विभूषिता

व्याख्याकारः सम्पादकश्च

पण्डितश्रीवंशीधरमिश्रः

भूतपूर्वप्राध्यापकः,

राजकीयसंस्कृतमहाविद्यालयस्य

भागलपुरम् ( विहारप्रदेशः )



वाराणस्याम्

२०४७ तमे वैक्रमाब्दे    १९१२ तमे शकाब्दे    १९९० तमे खैस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः—
निदेशकः अनुसन्धान-संस्थानस्य,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी.
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२



प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२



प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्—९६ ०० रूप्यकाणि



मुद्रकः—
डॉ० राममनोहरमिश्रः
विशेषाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी

# प्ररोचना

सर्वोपनिषत्सारभूता श्रीमद्भगवद्गीता सर्वैः प्रस्थानैः समधीता, व्याख्याता। निरन्तरं विद्वद्भिः स्वानुभवमधिकृत्य नवोन्मेषपूर्वकं विशदीकृता अद्यत्वेऽपि विदुषां लेखनीं समुत्तेजयतीति ग्रन्थस्यास्य किमप्यपूर्वं वैशिष्टयम्। यः कोऽपि ब्रह्मविद्यायां मनो नियुङ्क्ते, कर्ममार्गस्य सन्धानं कुरुते योगरहस्यं वेत्तुं प्रयतते, स श्रीमद्भगवद्गीतासूपनिषत्सु अवश्यमेव अवगाहते। अवगाह्य च नवनवार्थमौक्तिकान्युदाहरति।

मिथिलाक्षेत्रस्य तपोवृद्धानां विद्वत्तल्लजानां श्रीवंशीधरमिश्रमहाभागानां श्रीमद्भगवद्गीतानिमज्जनफलं 'वंशी'नाम्नी टीका, यया संवलितः श्रीमद्भगवद्गीताग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाश्यते। अस्यां टीकायां पूर्वटीकापदार्थानां समावेशो यत्र तत्र नवोन्मेषपूर्वकमर्थस्य प्रकाशनञ्च उभयं समुदितम् अभिलक्ष्यते। अस्माद्धेतोरयं ग्रन्थः श्रीमद्भगवद्गीताव्याख्यापरम्परायां किञ्चिन्नवं योजयति। एतदर्थं श्रीमिश्रमहाभागाः सभाजनपदानीति शम्।

काश्याम्,<br>आषाढकृष्णैकादश्याम्<br>वि० सं० २०४७<br>(१९-६-१९९० खृस्ताब्दे)

विद्यानिवासमिश्रः<br>कुलपतिः,<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य<br>वाराणसी

# गीताया नीराजना

(१) ॐ जय भगवद्गीते, ह्रीं जय भगवद्गीते ।
सर्वोपनिषद्मातर्वाङ्मनसातीते ॥ध्रुवम् ॥

(२) सच्चिद्ब्रह्मनिरूपिणि, मोहनिवारिणि हे ।
अनाद्यविद्यानाशिनि, विद्यादायिनि हे ॥ॐ जय०॥

(३) श्रीश्रीकृष्णमुखाम्बुजचन्द्राऽमृतकिरणैः ।
परिपूर्णाऽसि कलामयि, सौवर्णाऽऽभरणैः ॥ॐ०॥

(४) शास्त्रीयं निष्कामं स्वंस्वं कर्म जनः ।
कुर्वन् हरौ विदध्यात् स्वच्छं स्वस्य मनः ॥ॐ०॥

(५) ततः सुयोग्याद् गुरोर्लभेतात्मज्ञानम् ।
सर्वं ब्रह्मैवेति ततः स्याद् विज्ञानम् ॥ॐ०॥

(६) दैवी संपद् ग्राह्या हेयाऽऽसुरी तु सा ।
इत्येवं शिक्षयसि दयामयि, शान्तिरसा ॥ॐ०॥

(७) हर हर शोकं मोहं हृदि नः संनिहिता ।
शरणं भव हरिगीते त्वं नः सर्वहिता ॥ॐ०॥

(८) एतां वाङ्मयपूजां स्वीकुरु हरिगीते ।
नमोऽस्तु ते मयि दयतां भवती भवभीते ॥
ॐ जय भगवद्गीते, ह्रीं जय भगवद्गीते ।
सर्वोपनिषद्मातर्वाङ्मनसातीते ॥ॐ जय०॥



# अथ गीतावंश्या भूमिका

हेरम्बमम्बिकां गङ्गां विश्वेशं माधवं रमाम् ।
वाग्देवीं शङ्करं व्यासं काशीं च प्रणमाम्यहम् ॥ १ ॥

पाणिन्यादीन् गुरूंश्च श्रीदामोदरसभापतीन् ।
वन्दे येभ्यश्च विज्ञानं प्राप्य पश्यामि विश्वतः ॥ २ ॥

नौमि श्रीचन्द्रिकादत्तं पण्डितं ज्ञानदं पुरा ।
स्वामिनं करपात्रं च याभ्यां किञ्चिदवाप्तवान् ॥ ३ ॥

वन्दे पितामहं श्री श्रीशालग्रामं शुचिव्रतम् ।
पितरं मङ्गलानन्दम् अम्बां बुद्धिमतीं च ताम् ॥ ४ ॥

मध्वरिं सुद्धचुपास्यं तम् धात्रंशं लाक्षातं हरिम् ।
गीताख्यशास्त्रकारं श्री कृष्णं वन्दे जगद्गुरुम् ॥ ५ ॥

शङ्करं शङ्करं वन्दे भाष्यकारं तपोनिधिम् ।
यद्ग्रन्थात् प्राप्य विज्ञानं वंशीमहमवादयम् ॥ ६ ॥

नमोऽस्तु भगवद्गीते तुभ्यमद्वैतदर्शिके ।
देहि देवि सुविज्ञानं यत् तरेयं भवार्णवम् ॥ ७ ॥

विश्वविद्यालयं नौमि सम्पूर्णानन्दसंस्कृतम् ।
यस्माद् उदेति गीतेयं वंशीव्याख्यासमन्विता ॥ ८ ॥

विश्वविद्यालयं काश्याः सम्पूर्णानन्दसंस्कृतम् ।
नौमि यस्माद् उदेतीयं सम्पूर्णाऽऽनन्ददायिनी ॥ ९ ॥

विश्वविद्यालयं काश्याः संम्पूर्णाऽऽनन्दसंस्कृतम् ।
नौमि यस्मादुदेतीयं गीता वंशीचमत्कृता ॥ १० ॥

विश्वविद्यालयं काश्याः सम्पूर्णानन्दसंस्कृतम् ।
नौमिच्छात्राः पठिष्यन्ति प्राप्य वंशीमिमां यतः ॥ ११ ॥

प्रणिपत्य पुनर् देवं कृष्णं नारायणं विभुम् ।
भूमिकां वच्मि गीतानां प्रकाशेऽभिनवे हरेः ॥ १२ ॥

विश्वस्य मानवा मान्याः, श्रीवंशीव्याख्ययाऽन्वितम् ।
लभन्ताम् अद्य संसिद्धयै गीताशास्त्रं सुबोधितम् ॥ १३ ॥

अहो भाग्यमहोभाग्यं नृणाम् अद्य समागतम् ।
साक्षान्नारायणप्रोक्तं यल्लभ्यं सुखमेव नः ॥ १४ ॥

मनुष्यजन्म - साफल्यं सज्जनाः, कुरुताऽधुना ।
सुखं गीतासु विज्ञानं प्राप्य तीर्णा भवार्णवम् ॥ १५ ॥

इदमेव सुपाण्डित्यम् इयमेव सुचातुरी ।
अयमेव च सुस्वार्थः पुंसां यद् ब्रह्मदर्शनम् ॥ १६ ॥

गीतानाम् अद्य माधुर्यं वंशीवेयं रमापतेः ।
वंशीव्याख्या सुधीस्वाद्या वितनिष्यति विश्वतः ॥ १७ ॥

यावत् परेशस्य कथा नृलोके
गीता इमाः सन्ति सुधीसमाजे ।
तावत् परेशं परिदर्शयन्ती
वंशीयमास्तां दृशि सज्जनानाम् ॥ १८ ॥

अथेदानीं गद्यगिरा तत्र तावद् अनुबन्धा निगद्यन्ते—अस्य गीताख्य-शास्त्रस्य सुप्रसिद्धस्य प्रधानो विषयः—परमात्मा परब्रह्माख्यः सगुणो निर्गुणश्च । शास्त्राऽध्ययनस्य प्रयोजनं ब्रह्मात्मैक्यज्ञानं ब्रह्मज्ञानपूर्वकम् । तेन च दुःख-त्रयाऽभिघातरूपात्संसाराद् विमोक्षः । शास्त्रश्रवणाधिकारी भगवद्-भक्तस्त-पस्वी सुश्रूषुर् अनसूयुर्मुमुक्षुः । ग्रन्थविषययोः प्रतिपाद्य-प्रतिपादकभावः संबन्धः । तत्र तावत् प्रयोजनं प्रपञ्च्यते—

इह हि श्रीमन्नारायणेन सकलसुराऽसुरसिद्धगन्धर्वमुनिजनादिवन्दित-चरणारविन्देन स्वलीलया स्वशक्तिभूतया मायया प्रदर्शिते नाना विधचित्र-प्रपञ्चाऽञ्चिते एतस्मिन् विश्वस्मिन् वयं मानवा एव प्रधानभूताः स्मः । सुदुर्लभं परमानन्दपदमपि संप्राप्तुं वयमेव अर्हामः । अतो वयं विशेष-कृपां भजामहे भगवतः परमेश्वरस्य । प्रत्यक्षमिदं बुद्धीन्द्रियादिसकलसामग्री-

संपन्नाः सन्तो मानवाः स्वेतरान् अतिशेरते भुञ्जते च। इतरेषु शासनं कुर्वन्ति गजादिष्वपि विशालकायवलेपु। प्रत्यक्षप्रमाणाद् अन्येऽपि पुराणादयः प्रमाणभूता अत्र सन्ति। तथाहि दिव्यभोगान् भुञ्जाना अपि स्वर्लोकसौभाग्यं नन्दनवनसुरद्रुमवनितादिप्रदत्त—सुखं लब्धवन्तोऽपि देवजना इह नृषु जन्मने स्पृहयन्ति, कामयन्ते मनुष्यभावम्। यथोक्तं श्रीमद्भागवते—'अहो अमीषां किमकारि शोभनम्, प्रसन्न एषां स्विदुत स्वयं हरिः। यैर्जन्म लब्धं नृषु भारताऽजिरे, मुकुन्दसेवौपयिकं स्पृहा हि नः॥ (     ) इति। अत्रेदं कारणम्—नास्ति स्वर्गे शाश्वतं सुखं निरतिशयं च। तस्माद् युक्तं तत्र निवासिनां शाश्वत निरतिशयसुखलाभाय मनुष्यजन्मने स्पृहाकरणम्। अत एव हि दृष्टानुश्रविकविषयसुखेभ्यो विरज्यन्ते मनीषिणः। विरज्य च तत्प्राप्तये ब्रह्मणः श्रवणमनननिदिध्यासनानि समाचरन्ति। तैश्च परमानन्दबोधस्वरूपमात्मानं साक्षात् कुर्वन्ति। एतद् मनुष्यभावेनैव भवितुमर्हति नान्यथा। किं बहुना-मनुष्यान् स्वसृष्टान् दृष्ट्वा भगवान् अपि मुदं प्राप्तवान्। यथोक्तं श्रीमद्भागवते एव—'सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या, वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्। तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः॥' (११।९।२८) इति। अत्र श्लोके 'पुरुषं-ब्रह्मावलोकधिषणम्' इति विशेष्य विशेषणाभ्यां पुरुषस्य (मनुष्यस्य) ब्रह्मावलोक एव मुख्यं विशिष्टं च फलम् अस्तीति गम्यते। ब्रह्मावलोको ब्रह्मात्मैक्यसाक्षात्कार एव। स चास्य गीताशास्त्रस्य श्रवणादिभिः सुतरां साध्योऽस्ति। इयं हि गीता आत्मविद्याऽस्तीत्यपि श्रीमद्भागवते स्पष्टमुक्तम्। भीष्मेण परमविदुषा भगवतः श्रीकृष्णस्य स्तवने प्रोक्तम्—'व्यवहितपृतनामुखं निरीक्ष्य, स्वजनवधाद् विमुखस्य दोषबुद्ध्या। कुमतिमहरदात्मविद्यया यश्चरण रतिः परमस्य तस्य मेऽस्तु॥' (     ) इति। अत्र 'आत्मविद्यया' इति पदं भगवद्गीतामेव विषयीकरोतीति श्लोकार्थपर्यालोचनेन निश्चीयते। अपि च सकलां गीतोपनिषदं श्रावयित्वा भगवता पृष्टः शिष्यः—'कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय॥' (१८।७२) इति। शिष्येण उत्तरं दत्तम्—'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥' (१८।७३) इति। आभ्यां गुरोः शिष्यस्य च प्रश्न प्रतिवचनाभ्यां निश्चीयते यद् अनेन शास्त्रेण मोहनाशपूर्वकः स्मृतिलाभः संभवतीति। अत्र मोहशब्देन अविद्यैव गृह्यते, स्मृतिशब्देन च आत्मसाक्षात्कारः। एवञ्च गीताशास्त्रस्य प्रयोजनं स्फुटीकृतम्। अपि च महा-

भारत एव अनुगीतासु—'एष धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने।' इति। ब्रह्मात्मैक्यसाक्षात्कारादेव संसारसागरात् समुद्धारो नाऽन्यथेति श्रुतिस्मृतिभ्याम् ज्ञायते। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥' इति। 'ब्रह्म वेद ब्रह्मैव भवति' इति। 'तरति शोकम् आत्मवित्' इति चैवमादयः श्रुतयः। स्मृतयश्च—'ददामि बुद्धियोगं तं येन माम् उपयान्ति ते॥' (गी० १०।१०) इति। 'मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते॥' (१३।१८) इति च। 'एषा ब्राह्मी स्थितिः पार्थ, नैनां प्राप्य विमुह्यति। स्थित्वाऽस्याम् अन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति।' (२।७२) इति चैवमाद्याः। जीवात्मा सच्चिदानन्दोऽपि सन् अनाद्या अविद्यया उपहत इवेति तन्मूल एव संसारपरिभ्रमोऽस्ति यथोक्तं भागवते—'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिभ्रमातुराः' (८। ) इति। तस्माद् गीताशास्त्रेऽस्मिन् यतनीयं धीमता।

अथ संक्षेपेण विषयाः कथ्यन्ते शास्त्रस्य। प्रथमेऽध्याये भवरोगस्य बीजभूता दोषाः प्रदर्शिताः। दोषज्ञाने सत्येव तन्निवारण औषधप्रयोगः साधुर्भवति। तथाहि अर्जुनेन अत्र स्वकीयात् क्षात्त्रधर्माद् विरामे कारणभूतौ शोकमोहौ प्रदर्शितौ। तौ च तस्य नित्ये भीष्मद्रोणादिजनात्मनि अनित्यत्वस्य संभावनया संजातौ। अपि च तस्य शोकमोहौ स्वाऽहङ्कारममकारजन्यौ—अहम् एषां हन्ता, एते च मम पूज्यस्वजना इति। इमौ तस्य अहङ्कारममकारौ अनाद्यविद्याजन्यौ। पूर्वोक्ता तस्य अनित्यत्वसंभावनाऽपि अविद्याजन्यैव। सा च अविद्या भ्रान्तिरेव। एवमेव अर्जुनइव अन्योऽपि भ्रान्त्या शोकमोहाभ्यां प्रयुक्तः स्वधर्माऽऽचरणाद् विमुखो भवति। परकीयं धर्मं च स्वस्य अधर्मभूतमेव अर्जुन इव भिक्षाशनादिकं कर्तुम् उद्यतः सन् करोति। स्वधर्मे स्थिता अपि केचन सकामाः साहङ्काराश्च भवन्ति। एवञ्च तेषां पुण्यपापोपचयात् संसारदुःखं जन्ममरणादि निरन्तरं प्रचलति नत्वेव विरमति। इत्येवं संसाररोगस्य बीजं प्रदर्शितं प्रथमाऽध्याये। एवं सति अर्जुनस्य विषादोऽपि घटध्वंसं प्रति घट इव ब्रह्मज्ञानोपदेशाय कारणत्वं प्रपेदे। तस्माद् अर्जुनस्य अयं विषादोऽपि योग इति युक्तम् उच्यते। इदं च अत्र द्रष्टव्यम्—वस्तुतस्तु योजयतीति योग इति व्युत्पत्त्या सम्यग्दर्शनमेव मुख्यो योगो योगरूढ्या—'योगसंन्यस्तकर्माणम्' (४।४१) इत्यादौ व्यवहाराद् अस्ति तथापि योग इव योग इति लक्षणया सम्यग्दर्शनप्रयोजकाः कर्मयोगादय इतरेऽपि योगा अत्र शास्त्रे परिपठिताः।

द्वितीयाऽध्यायादारभ्य अष्टादशं यावत् साङ्गोपाङ्गं भवरोगस्य निवारणाय औषधस्वरूपं ब्रह्मज्ञानं प्रदर्शितम्। द्वितीये तावद् 'आत्मा अशोच्यः' इति पूर्वं प्रतिज्ञाय तत्-सिद्धये महताऽऽडम्बरेण आत्मनः सार्वकालिकत्वं विनाशशून्यत्वरूपं नित्यत्वं प्रदर्शितम्। देहादिकमपि न शोकाऽऽस्पदम् सर्वथा विनाशशीलत्वाद् आगमाऽपायित्वाच्चेति दर्शितम्। तत्र विशेषतः श्लोकोऽयं द्रष्टव्यः—'नासतो विद्यते भावो नाऽभावो विद्यते सतः' (२।१६) इति। अस्य वंशी व्याख्याऽपि द्रष्टव्या।

यद्यपि प्रासङ्गिकं किञ्चिद् अन्यदपि उक्तम् अत्राध्याये तथापि आत्मस्वरूपनिरूपणमेवास्य मुख्यो विषयः। अत एवायं साङ्ख्ययोगो नामाऽध्यायः। यद्यपि कर्मयोगोऽपि सूत्रितोऽस्मिन् तथापि ज्ञानयोगस्यैव अत्र प्राधान्येन निरूपणम्। अत एव च विस्तरेण स्थितप्रज्ञस्य (आत्मदर्शिनः) लक्षणम् अध्यायोपसंहारे निरूपितम्।

इदमत्राऽवधेयम्—शास्त्रजन्यं ज्ञानं पूर्वं शाब्दत्वात् परोक्षं भवति ततश्च मनननिदिध्यासनबलात् तदेव अपरोक्षत्वाय कल्पते। अपरोक्षमेव ब्रह्मज्ञानम् अपरोक्षात्मकस्य संसारभ्रमस्य निवर्तकं भवतीति शारीरकभाष्यभामत्यां स्पष्टम्।

अत एवोच्यते अभियुक्तैः—'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय–इति–दर्शनहेतवः॥' इति। क्वचित् तु प्राक्तनजन्मान्तरीयदृढसंस्कारवशात् केवलेन श्रवणेनापि अपरोक्षं ज्ञानं भवति अर्जुनस्य यथा। अत एव च अभियुक्तैरिति दर्शनहेतव इति बहुवचनं प्रयुक्तम्। अन्यथा 'इति हेतुस्तदुद्भवे' इति काव्यप्रकाश इव अत्रापि दण्डचक्रादिन्यायेन मिलितानां हेतुत्वे हेतुरिति एकवचनमेव प्रयुज्येत।

तृतीयेऽध्याये द्वितीये कर्मयोगस्य, 'कर्मण्येवाधिकारस्ते' इति 'योगस्थः कुरु कर्माणि' इति च सूत्रितस्य विस्तरोऽस्ति। न हि सामान्यजनस्य कर्मयोगानुष्ठानं विना चित्तशुद्धिरूपा ज्ञानयोगप्राप्तेर्योग्यता स्याद्—'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः। स्मृतेश्च—'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' (गी०) इति। अत एव च अयं तृतीयोऽध्यायः कर्मयोगनामा भवति।

कर्मयोगाऽनुगृहीतं ज्ञानयोगं तृतीयद्वितीयाभ्यां निरूप्य शास्त्रार्थं समाप्तं मत्वा भगवान् चतुर्थे उपक्रमे विद्याया अस्याः कृत्रिमत्वशङ्काया

निवारणाय सम्प्रदायवंशं वर्णयतिस्म—'इमं विवस्वते योगम्' इत्यादिना। तत्रैव प्रश्नबीजं समुपलभ्य पृष्टवते शिष्याय भगवान् स्वावतारकालप्रयोजनादि निरूपितवान्। अस्मिन् चतुर्थे—'कर्मण्यकर्म यः पश्येद् अकर्मणि च कर्म यः' इति ग्रन्थस्य ग्रन्थिर्भगवता कृता, क्षेत्रस्य कण्टकशाखाऽऽवरणवत् पश्वादि-तुल्यानां प्रवेशवारणाय। सा तु ग्रन्थिर्भगवता शङ्करावतारेण शङ्करेण योग्या-नाम् अधिकारिणां प्रवेशाय उद्घाटिताऽस्ति। मयाऽपि तदनुयायिना वंशी—व्याख्यायाम्।

अस्मिन्नेवाऽध्याये ब्रह्मार्पणमन्त्रोऽपि विद्यते। अपि च ज्ञानयज्ञस्य श्रेष्ठत्वं निरूपयिष्यन् भगवान् अत्र द्वादशविधान् यज्ञान् वर्णयामास—'दैव-मेवापरे यज्ञम्' इत्यादिना। ज्ञाने प्राप्ते सति कर्मसंन्यासस्य इष्टत्वाद, इमं चतुर्थं ज्ञानकर्मसंन्यासयोगनामानं कृतवान् सर्वज्ञः।

पुनः प्रश्नबीजोपलब्धौ सत्यां पृष्टवते प्रियशिष्याय जगद्गुरुः–पञ्चमम् अध्यायं कृतवान्। अत्र विशेषतो द्रष्टव्याः श्लोकाः—'नैव किञ्चित् करो-मीति युक्तो मन्येत तत्त्ववित्' (८।९) इति। 'कायेन मनसा बुद्ध्या' (११) 'सर्वकर्माणि मनसा' (१३) 'तद्बुद्धयस्तदात्मानः' (१७) 'विद्याविनयसम्पन्ने' (१८) इति च। कर्मसंन्यासस्यैवात्र प्राधान्यात् प्राधान्येन व्यपदेशा भवन्तीति न्यायात् कर्मसंन्यासयोगनामाऽयं पञ्चमः।

पुनः स्वयमेव भक्तवत्सलो भक्तभक्तिमान् भगवान् सम्यग्दर्शनं प्रति अन्तरङ्गसाधनत्वं समीक्ष्य ध्यानयोगस्य साङ्गस्योपदेशाय षष्ठमध्यायं प्रवर्त-यामास। अयं ध्यानयोग एवात्मसंयमयोगो, नाममात्रे भेदात्। आत्माऽत्र अन्तःकरणम्। संयमो नाम धारणाध्यानसमाधित्रयम्, 'त्रयमेकत्र संयमः' इति पातञ्जलयोगशास्त्रे परिभाषणात्। अत्र आसनाहारविहारादीनां नियम उक्तो भगवता। असम्प्रज्ञातयोगो योगशास्त्रे प्रसिद्धोऽत्र भगवता समुपदिष्टः। 'यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥' (१९) इत्युपमाऽत्र भगवता दत्ता। तत्र अन्ते 'आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्' (२५) इत्यभिदधता भगवताऽत्र निर्गुणनिर्वि-शेषाऽक्षरब्रह्मण एव ध्यानं समुपदिष्टम्। वस्तुतस्तस्यैव ज्ञेयत्वात्। क्षेत्रा-ध्यायेऽपि वक्ष्यते 'ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत् परं ब्रह्म न सत् तद् नासदुच्यते॥' इति। अपि चात्र षष्ठे कर्ममार्गस्य सीमा कृता भगवता—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव

कृताऽस्ति शमःकारणमुच्यते ।।' (३) इति । अत्र शमः सर्वकर्मभ्यो निवृत्तिरित्येवार्थः प्रतिकूलवर्तिभिरपि रामानुजाचार्यादिभिः स्वीकृतो, न केवलं भगवत्पादैरेव भाष्यकारैः स्वीकृतः । युक्तं सीमाकरणं कर्ममार्गस्य । अन्यथा ज्ञानमार्गस्य निरवकाशताऽऽपद्येत । श्रीमद्भागवतेऽपि भगवत्कथाऽनुरागाविर्भावं यावत् कर्ममार्गस्य सीमा कृतास्ति । अपि चात्र षष्ठे 'उद्धरेदात्मनाऽऽत्मानम्' 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' इत्यादि हृदयग्राही समुपदेशः कृतो भगवता प्रियशिष्याय । एवमयं षष्ठ आत्मसंयमयोगशब्देन व्यपदिष्टः ।

अग्रेऽपि भक्तपराधीनो भगवान् अपृष्टवतेऽपि शिष्याय आवश्यक इतिसप्तमं प्रवर्तयामास । अत्र मुख्यतः पराऽपरप्रकृतिद्वयनिरूपणं कृतवान् । ध्यानार्थं सर्वसाधारणानां कृते कतिचन स्वकीया विभूतयोऽपि बोधिताः । अत्र सप्तमे विशेषतो द्रष्टव्याः श्लोकाः—'दैवी ह्येषा गुणमयी' (१४) 'चतुर्विधा भजन्ते माम्' (१६-१९) इति । पराऽपरप्रकृतिद्वय—द्वारा सकलजगद्योनिर्भगवान् इति प्राधान्येनात्र निरूपयामास । अत एवायं ज्ञानविज्ञानयोगो नामाऽध्यायः । सम्यग्दर्शनं प्रति प्रकृत्यादिज्ञानविज्ञानस्य साधनत्वादिति ।

सप्तमान्ते प्रश्नबीजमुपन्यस्तं भगवता शिष्यबुद्धिपरीक्षणाय । तदुपलभ्य योग्यशिष्याय पृष्टवते भगवान् अष्टमं प्रवर्तयामास । अत्र शिष्येण सप्त प्रश्ना उपस्थापिताः । भगवताऽपि प्रश्नसप्तकं समाधाय शिष्यस्य विज्ञानं वर्धयामास । अत्र विशेषतः कण्ठस्थीकरणीयाः श्लोकाः—'सर्वद्वाराणि संयम्य' (१२-१४) इत्यादयः । अपि च भगवान् अत्र वैराग्यदीपनाय 'भूतग्रामः स एवाऽयं भूत्वा भूत्वा प्रलीयते' इत्याद्युक्तम् । 'परस्तस्मात्तु भावोऽन्यो' इति (२०-२१) श्लोकद्वयेन अक्षरब्रह्मणो निरूपणं कृतवान् । अत एवायम् अक्षरब्रह्मयोगनामाऽध्याय, । श्रुत्युक्तौ देवयानपितृयाण मार्गौ च प्रदर्शितौ ।

अग्रेऽपि भगवान् सर्वलोकसुहृद् गुह्यतमं ज्ञानविज्ञानं वर्णयिष्यन् नवमं प्रवर्धयामास । प्रकारान्तरेण अत्रापि सम्यग्दर्शनमेव न्यरूपयद् भगवान् । अत्र विशेषतः स्मरणीयाः श्लोकाः—'मया ततमिदं सर्वम्'—(४-६) 'मयाऽध्यक्षेण प्रकृतिः सूयते' (१०) 'अनन्याश्चिन्तयन्तो माम्' (२) 'पत्रं पुष्पं फलं तोयम्' (२६) 'यत्करोषि यदश्नासि' (२७), 'अपिचेत् सुदुराचारः' (३०-३३) 'अहं क्रतुरहं यज्ञः' (१५-२१) इति । राजविद्याराजगुह्ययोगनामाऽयमध्यायः । आत्मविद्यायास्तथात्वादिति ।

अग्रेऽपि प्रीयमाणाय शिष्याय सर्वसुहृद् भगवान् स्वयमेव दशमं प्रवर्तयाम्बभूव। अत्र कण्ठस्थीकरणीया विशेषतः श्लोकाः—'मच्चित्ता मद्गतप्राणाः' (९-११) प्रार्थितवते—शिष्याय दिव्यविभूतीरपि भगवान् कतिचन अनुक्रान्तवान्। तत्र उत्तमाऽधिकारिणं प्रत्याह—'अहमात्मा गुडाकेश' (२०) इति। इतरानधिकारिणः प्रत्याह–'आदित्यानामहं विष्णुः' (२१) इत्यादि (४१) यावत्। पुनरुत्तमाय प्राह—'अथवा बहुनैतेन' (४२) इति। अत एव विभूतियोगो नामाऽयमध्यायः। ध्यानकरणार्थं विभूतय उपदिष्टा भगवता।

विश्वरूपदर्शनाय शिष्यस्य प्रार्थनायां भगवान् एकादशे विश्वरूपं स्वस्य तस्मै दर्शितवान्। तद् दृष्ट्वा तुष्टाव शिष्यः पश्यामीति (१५-३१)। पुनर्भगवान् 'द्रोणं च भीष्मं च' (३४) इत्यनेन शिष्यस्य ध्रुवं विजयं बोधितवान्। भूयोऽपि किरीटी तुष्टाव—'स्थाने हृषीकेश' (३६) इत्यादिना। अयं श्लोको मन्त्रशास्त्रेऽपि मन्त्रत्वेन प्रोक्तोऽस्ति। तत्र 'पितासि लोकस्य' (४३) 'तस्मात् प्रणम्य' (४४) इतीमौ श्लोकौ, 'स्थाने (३६)' इति च विशेषतः स्मर्तव्याः। सम्यग्दर्शनं प्रति भक्तेः साधनत्वं स्पष्टीकृतवान्—'मत्कर्मकृद्' (५५) इति। अतोऽयं विश्वरूपदर्शनयोगनामाऽध्यायः॥

प्रश्नबीजं समुपलभ्य पृष्टवते शिष्याय द्वादशं प्रवर्तयाञ्चकार। तत्र सौकर्यमभिप्रेत्य सगुणोपासनायां श्रेयस्त्वम् अभिहितं भगवता। सगुणोपासनायाः क्रममुक्तिप्रदत्वं प्रमाणान्तरसंवादेन समायाति। साक्षान्मुक्तिदानेन तु निर्गुणोपासनाया एव श्रेयस्त्वं स्वीकृतं भगवतेति ग्रन्थेऽवलोक्यम्। 'अद्वेष्टा' (१३) इत्यादयः समाप्ति यावद् अक्षरोपासकानामेव आत्मज्ञानिनां निष्ठां वर्णयन्ति श्लोकाः। अत्र 'भक्तास्तेऽतीव मे प्रियाः' इति अभिदधद् भगवान् सप्तमे 'प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः' (१७) इति सूत्रिताया एव प्रतिज्ञाया अत्र विवरणं कृतवानिति ध्यातव्यम्। सप्तमे सूचितस्य ज्ञानिभक्तस्यैवाऽयं प्रपञ्चः। अत्र भक्तिश्चतुर्थी ज्ञानात्मिकैवेति स्मर्तव्यम्।

अग्रेऽपि शिष्याय अपृष्टवतेऽपि आवश्यक इति कृत्वा करुणानिधिस्त्रयोदशं वर्णयामास। प्रथमषट्के त्वं पदार्थस्य जीवस्य निरूपणम्, द्वितीयषट्के तत् पदार्थस्य ब्रह्मणो निरूपणं कृत्वा भगवान् अत्र तृतीये षट्के जीवब्रह्मणोरेकत्वं 'तत् त्वमसि' इति श्रुतिसिद्धं बोधयति—'क्षेत्रज्ञं चापि मां विद्धि' सर्वक्षेत्रेषु भारत' (२) इति। अस्य अन्यथा व्याख्यानं कृतवन्तः खण्डिताः सन्तीति

वंशी द्रष्टव्या। इच्छाद्वेषादिकं क्षेत्रधर्म एव, न क्षेत्रज्ञस्य। ज्ञानसाधनगणम् अन्तरङ्गं प्राह भगवान् अत्र त्रयोदशे—'अमानित्वम्' इत्यादि (७-११)।

ज्ञेयं ब्रह्म श्रुतिरिव अत्र निषेधमुखेनैव प्रतिपादयति—'न सत् तद् नासदुच्यते' (१२) इति। विधिमुखेन शब्दस्य तत्र गत्यभावात्। जात्यादि धर्मपुरस्कारेणैव शब्दप्रमाणस्य प्रवृत्तिर्भवति। निरस्तसर्वविशेषे ब्रह्मणि जात्यादीनाम् अभावात्।

एवं कस्यचिद् असत्त्वाशङ्का मा भूदिति अध्यारोपन्यायेन 'सर्वतः पाणिपादं तद्' (१२-१७) इत्यादि भगवता वर्णितम्। उक्तञ्च अभियुक्तैः—'अध्यारोपाऽपवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति। जीवब्रह्मणोरैक्यमभिप्रेत्यैव 'उपद्रष्टाऽनुमन्ता च' (२२) इत्यादिः श्लोकः। अयमपि स्मरणीयः श्लोकः—'प्रकृत्यैव च कर्माणि' (२९) इति। यथा—वर्णितं तथा क्षेत्रक्षेत्रज्ञविभागयोगनामाऽयमध्याय इति युज्यते।

पुनः प्रकारान्तरेणापि भगवान् शिष्याय उपदिष्टवान् आत्मज्ञानसाधनं ज्ञानम् चतुर्दशे। अत्र स्मरणीयाः श्लोकाः—'सत्त्वं रजस्तम इति गुणाः' (५-१८) इति। अत्र विशेषतो द्रष्टव्यम्—नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति। गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति (१९)' इति। अत्राध्याये 'प्रकाशं च' (२२) इत्यादिना 'मां च' (२६) इत्यन्तेन गुणातीतस्य जीवन्मुक्तस्य लक्षणं—साधनं च भगवान् प्राह। एवं सति त्रिषु स्थानेषु शिष्यबुद्धि वैशद्याय भगवान् शास्त्रेऽस्मिन् करुणानिधिः सर्वलोकसुहृद् मातापितृसहस्रेभ्योऽपि वत्सलतरः प्रोवाच आत्मज्ञानिनां लक्षणं साधनञ्च। द्वितीये स्थितप्रज्ञलक्षणेन, द्वादशे भक्तलक्षणेन, अत्र चतुर्दशे गुणातीतलक्षणेनेति स्मर्तव्यम्। गुणत्रयविभागयोगनामाऽयमध्यायः।

अग्रेऽपि दयानिधिः स्वयमेव पञ्चदशम् उपदिष्टवान्। अत्र पूर्वं वैराग्यदीपनाय वृक्षरूपककल्पनया संसारस्य मिथ्यात्वम् उक्तवान्। तत्र प्राक्तनजन्मतः सहायाता वासना एव संसारस्य वृक्षस्य विरूढानि अवान्तरमूलानीति वर्णितम्। वृश्च्यते इति वृक्ष इति व्युत्पत्तिमभिप्रेत्य श्वोऽपि न स्थाता अश्वत्थ इति च व्युत्पत्त्या क्षणभङ्गुरत्वमपेक्ष्य च संसारस्य अश्वत्थवृक्षत्वेन अध्यवसायो विहितः। वृक्षत्वादयमुच्छेदयोग्यः। क्षणभङ्गुरत्वादस्माद् वैराग्यमेव युक्तमिति बोधयितुम्। अत्र स्मरणीयः श्लोकः—'निर्मान-

मोहाः' (५) इत्यादिः। अपि चात्राऽध्याये जीव ईश्वरांश इति वेदान्तसूत्रप्रसिद्धं 'ममैवांशो जीवलोके' (७) इति श्लोकेन निरूपितं भगवता। श्लोकोऽयं शारीरकभाष्येऽपि भगवता शङ्करेण समद्धृतः। अत्र इदञ्च स्मर्तव्यम्—मुख्यम् एकदेशरूपम् अंशत्वं जीवस्य भवितुं नार्हति ईश्वरस्य जीवस्य च निराकारत्वात्। किन्तु अंश इवांश इति लक्षणया गौणम् अंशत्वं विवक्षितमत्र। यथा कौमुदीव कौमुदीति सिद्धान्तकौमुदीशब्दे। यथा घटाकाशो महाकाशस्य अंश इव एवमेव उपाधिवशाद् ईश्वर एव स्वयम् स्वस्य अंश इव जीवरूपेण विद्यते। घटाद्युपाधिनाशे यथा घटाकाशो महाकाश एकी भवति तथैव अन्तःकरणरूपोपाधिनाशे मोक्षदशायां जीव ईश्वरे एकीभवति। इदमेव कैवल्यं नामेति। क्षराऽक्षरपुरुषरूपेण मूलप्रकृति तत्कार्याणां वर्णनं कृत्वा पुरुषोत्तमरूपेण ताभ्याम् अन्यं सच्चिदानन्दमात्मानं निरूपितवानिह। अत एव पुरुषोत्तम—योगनामाऽयमध्यायः।

अग्रेऽपि षोडशे स्वयमेव भगवान् आत्मज्ञानसाधनं ज्ञानं प्रोवाच। तत्र आदानाय दैवी संपद् 'अभयं सत्त्वसंशुद्धिः' (१-३) इति प्रोक्ता। परिहाराय च 'दम्भो दर्पोऽभिमानश्च' (४) इति 'प्रवृत्तिं च निवृत्तिं च (७-१८)' इति श्लोकैरासुरी संपद् उक्ता। 'यः शास्त्रविधिम्' (२३) इति 'तस्माच्छास्त्रम्' (२४) इति च श्लोकाभ्याम् कार्याऽकार्यव्यवस्थितौ शास्त्रस्य प्रामाण्यं ग्राह्यम् इति स्थापितवान्। दैवासुरसंपद्विभागयोगोऽयं षोडशः॥ अत्र कामक्रोधलोभान् त्यजेदिति च उपदेशः कृतो भगवता (२१-२२) श्लोकाभ्याम्।

प्रश्नबीजमुपलभ्य पृष्टवते शिष्याय सप्तदशं प्रारेभे भगवान्। अत्र श्रद्धाऽऽहारयज्ञतपोदानानां सात्त्विकादिभेदेन त्रैविध्यमुक्तवान् सात्त्विकानां ग्रहणाय अन्येषां परिहाराय च। अत एव श्रद्धात्रयविभाग योगोऽयमध्यायः॥

अष्टादशे संन्यासत्यागशब्दार्थयोस्तत्त्वं बुभुत्सुना शिष्येण प्रार्थितो भगवान् तयोस्तत्त्वं बोधयित्वा अवशिष्टम् अन्यदपि आवश्यकं ज्ञातव्यं प्रोक्तवान्। आत्मज्ञान सम्पादनाय कर्तृत्वं नात्मगतम् इति हि विस्तरेणाऽत्र अष्टादशे प्रतिपादितं भगवता। पूर्वत्र तु संक्षेपेणैव प्रोक्तम्—"गुणा गुणेषु वर्तन्ते' (३।२८) 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते' 'नैवकिञ्चित्करोमि' (५।८-९) इति लोकैः। इह अष्टा- दशे 'अधिष्ठानं तथा कर्ता' (१४-१७) इत्यादिना 'कर्तृत्वं नात्मगतम्' इति विशदीकृतम्। अत्र विशेषतः स्मरणीयाः श्लोकाः—४६, ४७,

५१-५४, ६१-६६ इत्यङ्किताः ॥ तत्रैव—"सर्वगुह्यतमौ श्लोकौ—'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' (६५) इति। 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' (६६) इति च। अनयोः प्रथमः कर्मयोगस्योपसंहारः। द्वितीयस्तु ज्ञानयोगस्योपसंहारो वेदितव्यः। द्वयोरेव योगयोरुपसंहार्यत्वात्। इह गीतासु कर्मयोगानु गृहीतज्ञानयोगस्य निरूपणं विहितम्—'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति। 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।' इति च। मध्ये मध्ये अभ्यासोऽपि उभयोर्योगयोः। तस्माद् उपसंहारोऽपि द्वयोर्न्याय्यः। प्रथमश्लोके एव कर्मयोगनिष्ठायाः सीमा भूता ईश्वरशरणता उपसंहृता। न हि ईश्वरमनस्त्वम् ईश्वरभक्तत्वम्, ईश्वरयाजित्वम्, ईश्वरनमस्कारम् विहाय अन्या ईश्वरशरणता अस्ति। द्वितीये तु ज्ञाननिष्ठा उपसंहृता। 'शरणं व्रज' इत्यस्य 'शरणं सर्वाधिष्ठानम् एकं सजातीयविजातीयस्वगतभेदरहितम् अद्वितीयम् माम् आत्मानं सच्चिदानन्दम् अहमेव, न मत्तोऽन्यत् किञ्चिदिति अवधारय' इत्यर्थः। न हि उत्तरदेशसंयोगानुकूल व्यापार रूपोऽर्थोऽत्र व्रजगतौ इत्यस्य भवितुमर्हति ईश्वरस्य व्यापकत्वात् देशान्तरपरित्यागपूर्वक देशान्तरगमनं नात्र संभवितुमर्हति अपि तु 'व्रज गतौ' इत्यस्यात्र अवगतिरूपज्ञानार्थत्वमेव संभवति। व्याख्यातं च भगवत्पादै रेवमेव। तदनुयायिभिर्वच्चाज्ञा स्वामिकरपात्रमहोदयादिभिः पण्डितेन्द्रैश्चाऽपि तथैव। अनेन वेदान्तप्रसिद्धं जीवब्रह्मणोरैक्यं स्थापितम्। 'तरति शोकम् आत्मवित्' इति श्रुतिसिद्धमेवात्र 'मा शुचः' इति शोकनिषेधविधानम्। अन्यथा व्याख्यानं श्रुतियुक्तिविरुद्धमेवेति कृत्वा अतोऽन्यथा व्याचक्षाणाः सर्वेऽपि पण्डितैरुपेक्ष्या एव मूढैः संमानिता अपीति विभावनीयम्। ये तु केचन सम्प्रदायक्रमागतगुरुजनाऽनादृतचरणाः स्वयमेव स्वमनीषया यत्किंचिज्ज्ञाः अर्जुनस्य पश्चाद् भावियुद्धादिकं समीक्ष्य कर्मयोगपरकत्वं शास्त्रस्य व्याचख्युस्ते न समीचीनविचाराः। 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसी'ति भगवद्वचनं तैर्विस्मृतमेव। प्रारब्धक्षेपवशाद् आत्मज्ञानिनोऽपि लोकसंग्रहार्थं कर्म कुर्वाणा दृश्यन्ते। न तेषां तत् कर्म बन्धकं भवेदित्यन्यत्र विस्तरो ज्ञेयः।

'नष्टो मोहः स्मृतिर्लब्धा' इति शिष्यस्य प्रतिवचनेन गुरोश्च कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय' इति प्रश्नेन अविद्यात्मक मोहरूपाऽऽवरणनाश एव शास्त्रस्य फलमिति निश्चीयते। आवरणनाशे स्वयमेव आत्मा साक्षाद् भवतीत्यलम्। सर्वधर्मान् परित्यज्येत्यत्र धर्मशब्देन उपलक्षणार्थ-

त्वाद् अधर्मोऽपि गृह्यते—'त्यज धर्ममधर्मं च' इति महाभारतग्रन्थान्तर संवादात् औचित्याच्चेति कृत्वा 'सर्वकर्माणि संन्यस्य' इति तदर्थः। अतः सर्वकर्मसंन्यास पूर्वकाद् भगवत् तत्त्वविज्ञानान्मोक्षो भवतीति समायातम्। तस्माद् अयमष्टादशोऽध्यायो मोक्षसंन्यासयोगनामा निगद्यते।

'शतानि पञ्च पद्यानां सचतुःसप्ततीन्यजः। प्राह चत्वार्यशीतिं च प्रश्ने पद्यानि पाण्डवः। संजयो ह्येकचत्वारिंशतमाहाऽनुवादकृद्। धृतराष्ट्र उवाचैकं गीतायां मानमुच्यते ॥ इतिवयम् ॥'

यत्तु 'षट्शतानि सविंशानि श्लोकानां प्राह केशवः। अर्जुनः सप्तपञ्चाशतं, सप्तषष्टिं तु संजयः। धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते।' इति (महा० भीष्म० ४३।५) तत् प्रक्षिप्तमिति नीलकण्ठादयः। अन्येऽपि भगवद्भाष्यकाररीत्या सप्तैव शतानि पद्यानां व्याख्यान्ति। इति शम् ॥

## अथ ग्रन्थप्रकाशे सहायकाः स्मर्यन्ते

श्रीरामकरणं धीरं मान्यं कुलपतिं तदा।
श्रीमन्तं च हरिश्चन्द्रमर्णं वन्देऽधिकारिणम् ॥ १ ॥

सन्तं कुलपतिं श्रीमद्राजदेवमहोदयम्।
नौमि प्रशासने यस्य प्रशस्ये भाति भारती ॥ २ ॥

श्रीकैलासपतिं भव्यभारतीभाषणक्षमम्।
स्तौमि वंशीप्रकाशेऽस्मिन् य एतेऽस्मत्समर्थकाः ॥ ३ ॥

श्रीमद्रामप्रसादाख्यः शाब्दिकानां शिरोमणिः।
श्रीमद्रामप्रसादाद् यस्तं च नौमि हितैषिणम् ॥ ४ ॥

श्रेष्ठं प्रह्लादरायं श्रीमन्तं कृष्णोऽवतात् सदा।
कृतवान् मम काश्यां यो यथाशक्ति व्यवस्थितिम् ॥ ५ ॥

सिद्धिनन्दनशर्माणं रसशास्त्रमनीषिणम्।
प्रशंसामि सुकार्येऽस्मिन् य उत्साहं ममैधयत् ॥ ६ ॥

नमामि च सुधीवृन्दमान्यं राममनोहरम्।
त्रिपाठिहरिवंशं च पण्डितं सूक्ष्मदर्शिनम् ॥ ७ ॥

त्रुटिश्चेद् मुद्रणादौ या सा संशोध्याऽनसूयुभिः।
सूचितव्या च विद्वद्भिः सताम् एतत् कुलव्रतम् ॥ ८ ॥

विधाय भूमिकाम् एतां गीताशास्त्रार्थदर्शिनीम्।
वंश्याऽनया च संवन्दे पार्वतीपरमेश्वरौ ॥ ९ ॥

इत्येवं सच्चिदानन्दस्य कृष्णस्य जगद्गुरोः।
परमं धाम संगन्तुं वंशीधर उपस्थितः ॥ १० ॥

पुनरभ्यर्थये युक्तान् गीतार्थः श्रूयतामिति।
मनुष्यजन्मसाफल्यं यथा स्याद् भवतामहो ॥ ११ ॥

कृशाऽऽप्याकारतो गीता गम्भीरार्था प्रवर्तते।
वंशीयमधुना व्याख्या तां सुबोधां करिष्यति ॥ १२ ॥

भूयो भूयो निवेद्यैतद् विद्वत्सु परमात्मनः।
चरणाम्बुजयोर्वासं करिष्यन् विरमाम्यहम् ॥ १३ ॥

श्रीमद्गङ्गाधरं सन्तं चिदानन्दं शिवं गुरुम्।
संनमन् संस्मरंश्च श्रीकृष्णं वन्दे जगद्गुरुम् ॥ १४ ॥

**विद्वज्जनानुरागी सोऽहं वंशीधरमिश्रः**

(प्राप्तस्वर्णपदकव्याकरणाद्यनेक—
शास्त्राचार्यः)

तिथिः—(२२।१।९०) [ग्राम - चन्दौत-निवासी
पोस्ट—चन्दौत-ढोगरा
जिला—औरंगाबाद
( विहार )]

# अथ विषयाऽनुक्रमः

## प्रथमेऽध्याये


पृष्ठसंख्या

१. वंशीव्याख्यारम्भे मङ्गलाचरणम् १
२. गीतावंशीयं शाङ्करभाष्यानुसारिणी ,,
३. नारायणोऽव्यक्तादिभ्यः परः ,,
४. भगवान् स्वसृष्टजगतः स्थितये
मरीच्यादिप्रजापतिभ्यः कर्मयोग रूपं धर्मं ग्राहयामास। सनकादिभ्यो ज्ञान योगरूपं धर्मम् ,,
५. द्विविधो हि वेदोक्तो धर्मः। धर्मस्य लक्षणं च ,,
६. कालक्रमेण भगवान् धर्मरक्षणाय कृष्णो बभूव २
७. स च भगवान् अर्जुनाय तदेव धर्मद्वयं प्रोवाच ,,
८. सर्वज्ञो वेदव्यासः सप्तभिः श्लोकशतैर्भगवतोपदिष्टं गीताख्यं निबबन्ध ,,
९. कालक्रमेण पण्डितम्मन्यैर्दुर्गृहीतं गीतार्थं विलोक्य स एव भगवान् शङ्करो भूत्वा सिद्धान्तार्थबोधकं भाष्यं शाङ्करं चकार ,,
१०. पुनश्च कालक्रमेण शाङ्करभाष्यस्य दुर्बोधत्वे जाते स एव भगवान् वंशीधरेण वंशीव्याख्यां कारितवान् ,,
११. गीताशास्त्रस्य प्रयोजनम् ,,
१२. गीताशास्त्रस्य प्रधान विषयः ३
१३. महाभारते भीष्मपर्वणि शास्त्रमिदम् ,,
१४. धृतराष्ट्रस्य संजयं प्रति प्रश्नः ४
१५. संजयेन तदुत्तरस्यारम्भः ,,
१६. दुर्योधनेन द्रोणं प्रति पाण्डवसेनायाः प्रधानमहारथानां निर्देशः ५-६
१७. दुर्योधनेन द्रोणं प्रति स्वकीयविशिष्टसैन्यनायकानां कथनम् ६-७
१८. दुर्योधनः स्वबलस्य अपर्याप्त त्वम् परबलस्य पर्याप्तं त्वं चाह ८
१९. भीष्मेण शङ्खवादनम् ,,

२०. ततोऽन्यैरपि दुर्योधन बले शङ्खादयो वादिताः ९
२१. अथ माधव धनञ्जयाभ्यां दिव्यौ शङ्खौ वादितौ ९-१०
२२. भीमादिभिरपि स्व-स्व शङ्खा वादिता १०-११
२३. स शङ्खघोषो धार्तराष्ट्राणां भयं जनयामास ११
२४. अथ सेनयोर्मध्ये रथस्य स्थापनाय कपिध्वजस्य प्रार्थना १२-१३
२५. अहो भगवानपि सर्वेश्वरो नियुज्यते भक्तेनेति आनन्दगिरे-
हर्षोद्गारः १२
२६. भगवता तथा कारणम् १४
२७. तत्र स्वजनानां समीक्षणेन जातानां पार्थेन श्रीकृष्णं प्रति स्वकीय-
विषादजन्यगात्रकम्पादीनां निवेदनम् १५-१९
२८. तस्मान्नार्हा वयं हन्तुमित्युपसंहृत्य कुलक्षयकृतभाविदोषाणां तेन
कथनम् २०-२२
२९. स्वजनहननव्यवसायेनापि पार्थस्य तापः २३
३०. शोकसंविग्नमानसः सशरं चापं विसृज्य रथोपस्थ उपाविशत् २४

अथ द्वितीये

१. क्लैव्यं माऽम गम इति भगवता उपदेशो विषीदन्तं प्रति २५-२६
२. श्री भगवान् इति शब्दस्यार्थः ,,
३. पूजार्हौ भीष्मद्रोणौ न योद्धव्यौ २७
४. न चैतद् विद्मः कतरन्नोगरीयः २८-२९
५. कार्पण्यदोषोपहतस्वभावः शिष्यभावेन भगवन्तमाश्रयते ३०-३१
६. समृद्धं भूमिराज्यादि न मम शोकनिस्तारकम् इति वैराग्यं
दर्शयित्वा न योत्स्य इति निश्चित्य तूष्णीं बभूव ३२
७. हृषीकेश शब्दार्थो गोविन्दशब्दार्थश्च ३३
८. परन्तप गुडाकेशविशेषणयोर्भावः ,,
९. प्रसन्नमुखो भगवान् शिष्याय अध्यात्मशास्त्रम् उपदेष्टुं प्रारेभे ३४
१०. गीताशास्त्रे सर्वेषां वाक्यानाम् एकवाक्यता ,,
११. "दृष्ट्वा तु पाण्डवानीकमित्यारभ्य तूष्णींबभूव ह" एतदन्तस्य
तात्पर्यम् ३४-३५
१२. अशोच्यान् इत्यादिश्लोकार्थः ३५-३६
१६. आत्मनः सिद्धं नित्यत्वम् ३७

१४. सर्वे वयमिति देहभेदाद् वहुवचनम् ३७
१५. तत्र श्रीरामानुजाचार्यस्य व्याख्यापेक्ष्या ,,
१६. आत्मनो नित्यत्वे दृष्टान्तः ३८
१७. मात्रास्पर्शाः सोढव्याः ,,
१८. तत्सहनस्य फलम् ३९
१९. अतिदुःसहमपि तत्त्वविचारेण सोढव्यम्। तत्र 'नासतो विद्यते भावः" इत्यादि हेतुवचनस्य व्याख्या ३९-४१
२०. किं सत् ? किञ्च असत् ४३
२१. आत्मा अप्रमेयः ,,
२२. युद्धयस्व इत्यनुवादमात्रं, न विधिः ४४
२३. उपनिषदिव शोकमोहादिसंसारकारणनिवृत्त्यर्था गीता ४४
२४. कठोपनिषद्गते द्वे ऋचाविह ४४-४५
२५. 'न जायते' इत्यादिश्लोकस्य व्याख्या ४७-४८
२६. संस्कृतं मन आत्मदर्शने करणम् ४८
२७. वेदाऽविनाशिनमित्यस्य व्याख्या ४७-४८
२८. सर्वविक्रियारहितोऽहम् अकर्ता अभोक्तेतिविज्ञानं संस्कृते मनसि जायते एव ४८
२९. आत्मनोऽविनाशित्वे दृष्टान्तः ४९
३०. आत्मनोऽविनाशित्वं द्रढयति ४९-५०
३१. शोको न कार्यः ५०-५१
३२. प्राकृत दृष्ट्याऽपि शोको न कार्यः ५१-५२
३३. तत्रैव कारणमाह ५२
३४. कार्यकरणसंघात रूपाणि भूतानि प्रत्यपि शोको न कर्तव्यः ५२-५३
३५. प्रकृत आत्मा दुर्विज्ञेयः ५३-५५
३६. प्रकरणार्थमुपसंहरति ५५
३७. स्वधर्माऽपेक्षयाऽपि शोकमोहौ न कर्तव्यौ ५६
३८. सुखिनः क्षत्रिया युद्धं लभन्ते ५७
३९. युद्धाऽकरणे दोषाः ५७-५८
४०. युद्धकरणे सर्वथा लाभः ५९
४१. युद्धकरणे यथा पापं न स्यात् तथा शिक्षयति भगवान् ३९
४२. परमार्थदर्शनमुपसंहरति ६०

४३. कर्मयोगं प्रत्तौति च ६०
४४. कर्मयोगं स्तौति ६१
४५. काम्यकर्म-दुद्ध्यपेक्षया सांख्यबुद्धेः कर्मयोगबुद्धेश्च श्रेष्ठत्वम् ६२
४६. विषयासक्तानां तु व्यवसायात्मिका बुद्धिर्न भवति ६३-६४
४७. जीवकल्याणे प्रवृत्ता अपि वेदाः काम्यकर्माणि किमर्थं वदन्ति ६४-६५
४८. कर्मयोगाङ्गं यत्नं शिक्षयति ६५-६६
४९. कर्मयोगस्य ज्ञानयोग द्वारा सकलानन्दप्रापकत्वम् ६६-६७
५०. कर्मण्येवाधिकारस्ते इत्यस्य व्याख्या ६७-६८
५१. कर्मयोगिना कथं कर्म कर्तव्यम् ६८
५२. योगयुक्तं कर्म स्तौति फलकामं निन्दति च ६८-६९
५३. योगः कर्मसु कौशलम् ६९
५४. कर्मयोगस्य फलम् ७०
५५. यौगाऽनुष्ठानजनित सत्त्वबुद्धिजा बुद्धिः कदा लभ्यते ७०-७१
५६. स्थित प्रज्ञस्य लक्षणं स्थितप्रज्ञतायाः साधनञ्च ७२-७३-८२
५७. तत्रादौ स्वेन्द्रियाणि वशीकरणीयानि ७६
५८. विपयध्यानं सर्वाऽनर्थमूलम् ७७-७८
५९. रागद्वेष विरहितै र्भाव्यम् ७८
६०. चित्तस्य प्रसन्नता स्तूयते ७८
६१. नास्ति बुद्धिरयुक्तस्य ७९
३२. इन्द्रियाणां निग्रहः कर्तव्यः ८०
६३. या निशा सर्वभूतानाम् इत्यस्य व्याख्या ८०-८१
३४. कामकामिनो न शान्तिः ८१-८२
६५. स्थितप्रज्ञता अन्तकालेऽपि यदि स्यात् तदापि निर्वाणप्राप्तिः ८२

## अथ तृतीये

१. कर्मनिष्ठातो ज्ञाननिष्ठायाः श्रेष्ठत्वे कथं घोरे कर्मणि भक्तो नियुज्यते ८३
२. द्वे निष्ठे मया पुरा प्रोक्ते ८४
३. ज्ञाननिष्ठायाम् अधिकार सिद्धये कर्मनिष्ठाया उपयोगः ८५-८६
४। अनात्मज्ञः स्वधर्मरूपं कर्म न करोति तद् असत् ८७
५. फलाभिलापरहितः कर्मयोगी मिथ्याऽऽचाराद् विशिष्यते ८७

६. क्षत्त्रियैर् नियतं कर्म करणीयम् ८८
७. ईश्वरार्थात् कर्मणोऽन्यत् कर्म बन्धनकारणम् "
८. यज्ञाधिकृतप्रजाः सहयज्ञाः सृष्ट्वा प्रजापतिना उक्ता अनेन इष्टान् कामान् प्रसविष्यध्वम् ८९
९. देवेभ्योऽप्रदाय भुञ्जानः स्तेन एव ८९
१०. गृहस्थस्य पञ्चसूनाः, तज्जन्यं पापं पञ्चभिर्यज्ञैर्व्यपोहति ९०
११. जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यम् ९०-९१
१२. आत्मविदः कार्यं नास्ति ९२-९३
१३. अनात्मविदा स्वकर्म कर्तव्यमेव ९३
१४. कर्मणैव हि जनकादयः संसिद्धाः ९४
१५. लोकसंग्रहमेवाऽपि संपश्यन् कर्म कुर्यात् "
१६. श्रेष्ठानुसारी इतरो भवति "
१७. कृतार्थेनाऽपि लोकमर्यादास्थापनाय कर्म कर्तव्यम् ९५
१८. विद्वान् पराऽनुग्रहार्थमेव कुर्यात् ९६
१९. लोकसंग्रहं चिकीर्षोरिदमुपदिश्यते "
२०. प्रकृतेर्गुणैः कर्माणि क्रियन्ते तत्र अहङ्कारविमूढ एव कर्ताहम् इति मन्यते ९६-९७
२१. तत्त्वविद् तु न कर्ताहमित्यभिमन्यते ९७-९८
२२. विद्वान् अज्ञानां बुद्धिभेदं न जनयेद् इति यदुक्तं तद् उपसंहरति ९८
२३. मुमुक्षुणा इत्थं कर्तव्यम् "
२४. ईश्वराय करोमि भृत्यवत् इति स्वधर्माऽऽचरणं कुर्यात् "
२५. फलाऽभिसन्धिरहितो भगवदर्पणात् कर्मणो मोक्षं प्राप्नोति ९९
२६. ये तु एतन्मतं नानुतिष्ठन्ति ते नष्टाः "
२७. उत्कटरागादिना शास्त्रस्य गुरोर्वा शासनम् अतिक्रामति जनः १००
२८. यदा तु रागद्वेषौ शास्त्रदृष्ट्या निवारयति तदा स न स्यात् प्रकृतिवशः "
२९. विगुणोऽपि स्वधर्मः परधर्मात् प्रशस्यः १०१
३०. कामक्रोधाभ्यां प्रयुक्तः पापं चरति १०१-१०२
३१. कामक्रोधाभ्यां बुद्धिराव्रियते १०३-१०४
३२. इन्द्रियाणि मनो बुद्धिश्च कामस्याधिष्ठानम् । तस्मात् तदधिष्ठानं वशीकृत्य कामं हन्यात् १०४

३३. प्रत्यक्षात्मकमेव ज्ञानं साक्षाद् मोक्षदम् १०५
३४. इन्द्रियादिसमाधानाद् संभवति आत्मसाक्षात्कारः १०५-१०६
३५. यावन्न आत्मसाक्षात्कार स्तावत् कामस्य न समूलोच्छेदः १०६

अथ चतुर्थे

१. विवक्षितं कर्मयोगोपायकं ज्ञानयोगं विद्यावंशकथनेन स्तौति १०७-१०८
२. अर्जुनः पृच्छति-अर्वाचीनो भवान् प्राचीनाय विवस्वते कथमादौ प्रोक्तवान् योगम् १०८
३. अहम् ईश्वरोऽस्मीति प्रश्नं समाधत्ते १०९
४. धर्मस्य ग्लानौ तत्संस्थापनाय साधूनां परित्राणाय च ममावतारः ११०
५. भगवतो दिव्यजन्मकर्मणी तत्त्वतो जानन् श्रेयः प्राप्नोति १११
६. ज्ञानपूता बहवः कैवल्यं प्राप्ताः १११-११२
७. येन प्रयोजनेन धनलाभादिना भजति वासुदेवम् तत्फलप्रदानेनैव भगवान् अनुगृह्णाति ११२
८. अन्यदेवतायजने लोकानाम् शृणु कारणम् "
९. चातुर्वर्ण्यं मया सृष्टम् ११२-११४
१०. न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा इत्यभिजानन् देह-बन्धनं न लभते ११४-११५
११. पूर्वैरपि मुमुक्षुभिः कर्म कृतम् ११५
१२. कर्माऽकर्मविषये मेधाविनोऽपि मुह्यन्ते "
१३. कर्माऽकर्मविकर्मणां याथात्म्यं बोद्धव्यम् ११६
१४. 'कर्मण्यकर्म यः पश्येद्' इत्यस्य व्याख्या ११६-११७
१५. ब्रह्मार्पण मन्त्रस्य व्याख्या १२१-१२२
१६. कर्मण्यकर्मदर्शनं स्तौति षड्भिः ११७-१२२
१७. द्वादश यज्ञान् उपक्षिपति षड्भिः १२३-१२७
१८. द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः श्रेयान् १२८-१२९
१९. तदेतद् ज्ञानं केनोपायेन लभ्यते १२९
२०. ज्ञानस्य माहात्म्यम् १३०-१३१
२१. श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः १३२
२२. यथोक्तसाधनवान् अचिरेण ब्रह्म साक्षात् करोति अत्र संशयो न कर्तव्यः १३२-१३३

२३. सकलाऽध्यायविस्फारितमर्थं संक्षिपति १३३-१३४

अथ पञ्चमे

१. 'संन्यासं कर्मणां कृष्ण' इत्यस्यावतरणम् १३५
२. संन्यासकर्मयोगयोरेकं श्रेयः किम् १३६
३. कर्मयोगस्य सौकर्यमभिप्रेत्य श्रेयस्त्वमाह १३६-१३८
४. आत्मतत्त्वविदः कर्मयोगो न संभवति १३६
५. केषु केषु आत्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माऽभावः प्रतिपाद्यते १३७-१३८
६. संन्यासस्य द्वैविध्यम् १३८
७. अविरक्तस्य कर्मत्यागात् कर्माऽनुष्ठानं विशिष्यते ,,
८. कर्मयोगस्य कथं निःश्रेयसकरत्वम् १३९-१४०
९. संन्यासस्तु दुःखमाप्तुमयोगतः १४१
१०. कर्मयोगी कदा जीवन्मुक्तः स्यात् १४१ १४२
११. सम्यग्दर्शी परमार्थतः किञ्चिद् न करोति ,,
१२. ईश्वरार्थं करोमि भृत्य इव इति चिन्तयन् यः करोति अनात्मज्ञः स पापेन न लिप्यते १४३
१३. ईश्वराय कुर्वाणः सत्त्वशुद्धिं लभते ,,
१४. फले सक्तो निबध्यते १४३-१४४
१५. शुद्धचित्तस्य सर्वकर्मसंन्यास एव श्रेयान् १४४-१४५
१६. आत्मनः स्वतः कर्तृत्वं कारयितृत्वं च नास्ति १४५-१४६
१७. भगवान् सुकृतं दुष्कृतं वा नादत्ते ,,
१८. अनादिमायाऽऽवृतविवेकविज्ञानवतां कथं संसारनिवृत्तिः १४७
१९. अन्तरङ्गाणि विद्यापरिपाकसाधनानि १४७-१४८
२०. पण्डितास्तत्त्वं कथं पश्यन्ति ,,
२१. संस्कारगुणाऽपेक्षया विषमेषु समदर्शिनो न दोषवन्तः १४९
२२. न प्रहृष्येत् प्रियं प्राप्येति लिङ् प्रत्ययौ किं सूचयतः १५०
२३. ब्रह्मणि स्थितस्य विशेषमाह ,,
२४. विषयप्रीतेरिन्द्रियाणि निवर्तयेत् १५१
२५. कथंभूतो ब्रह्म प्राप्नोति —कामक्रोधोद्भवो वेगः कष्टतमो दोषः १५१-१५२
२६. आत्मज्ञानस्य साधनान्तरमाह ,,

२७. कामक्रोधौ त्याज्यौ १५३
२८. षष्ठे वक्ष्यमाणस्य ध्यानयोगस्य सूत्रभूताः श्लोकाः १५३-१५४

## अथ षष्ठे

१. कर्मयोगं स्तौति १५५
२. साग्नेः सक्रियस्य च संन्यासो गौणः १५६
३. कर्मयोगो ध्यानयोगस्य साधनम् १५७
४. तीव्रेच्छायाः प्राप्तेरनन्तरं योगारोहणस्य सर्वकर्मभ्यो निवृत्तिरेव साधनम् ,,
५. कदा योगारूढो भवति ,,
६. उद्धरेदात्मनाऽऽत्मानम् इत्यस्य व्याख्या १५९
७. एकस्यैवात्मनो मिथोविरुद्धं रिपुत्वं बन्धुत्वं च कथम् ,,
८. वशीकृतकार्यकरणस्य बन्धुरात्मा ,,
९. कदा युक्त इत्युच्यते १५९-१६०
१०. योगारूढानां मध्ये विशिष्टमाह ,,
११. साङ्गं योगं विधत्ते १६०-१६१
१२. साधकस्य आसनाहारविहारादीनां नियमः १६१-१६३
१३. ध्यान योगस्य फलम् १६२
१४. युक्ताहारादेर्योगो भवति १६३
१५. कदा युक्तो भवतीति विशेषान्तरविवक्षया पुनरुच्यते ,,
१६. समाहितचित्तस्य उपमानम् १६४
१७. द्विविधः समाधिः ,,
१८. असम्प्रज्ञातसमाधेर्लक्षणम् १६४-१६५
१९. केन क्रमेण योगः कर्तव्यः १६५-१६६
२०. चञ्चलस्य मनसः कथम् आत्मसंस्थत्वम् ,,
२१. मनः प्रशान्तेः फलम् १२७
२२. ध्यानयोगस्य फलं ब्रह्मात्मैक्यदर्शनं प्रदर्शयति १६८
२३. आत्मैकत्व दर्शनस्य फलम् ,,
२४. सम्यग्दर्शनस्य फलं मोक्षमभिधत्ते १६९
२५. सर्वयोगिनां मध्ये श्रेष्ठो योगी १६९-१७०
२६. शिष्येण पृष्टो भगवान् दुर्निग्रहस्य मनसो निग्रहोपायमाह १७०-१७१

२७. प्रयत्नशैथिल्यात् सम्यग्दर्शनस्य इह अलाभेऽपि उत्तरे जन्मनि लाभः स्यादिति शिष्याय प्रश्नकारिणे भगवानाह १७२-१७४
२८. अल्पकालाऽभ्यस्तयोगभ्रंशे गतिम् उक्त्वा चिराऽभ्यस्तयोगभ्रंशे गतिमाह १७३-१७४
२९. योगनिष्ठस्य श्रेष्ठत्वम्, ध्यानयोगोपसंहारश्च १७५-१७६

अथ सप्तमे

१. प्रथमे षट्के त्वंपदार्थं निरूप्य द्वितीये षट्के तत्पदार्थं निरूपयितुमाह १७७
२. श्रोतारं प्ररोचनेन अभिमुखीकृत्य ज्ञातव्यमुपदिशति १७८
३. पराऽपरे प्रकृती १७९
४. प्रकृतिद्वयस्वामितया अभिन्ननिमित्तोपादानत्वं भगवतः ,,
५. भगवति सर्वमिदं प्रोतम् १८०
६. अप्सु रसोऽस्मीत्यादि विभूतीनां निरूपणम् १८०-१८२
७. मोहितं जगद् भगवन्तं न जानाति ,,
८. दुरतिक्रमां दैवीं मायां तरन्ति भक्ताः १८३
९. नराधमा भगवन्तं न साक्षात्कुर्वन्ति १८४
१०. नरोत्तमाश्च भगवन्तं भजन्ते ,,
११. तेषां मध्ये ज्ञानी विशिष्यते १८४-१८५
१२. प्राप्तज्ञान परिपाकः सुदुर्लभः १८५-१८६
१३. भगवान् योगमायासमावृतत्वात् सर्वस्य न प्रकाशः १८८
१४. सर्वभूतानि सर्गे द्वन्द्व मोहेन संमोहं यान्ति इच्छाद्वेष समुत्थेन १८९
१५. उत्तमाधिकारिणो निर्गुणं जानन्ति, मध्यमाधिकारिणां सगुणो भगवान् ध्यातव्यः १९०-१९१

अथ अष्टमे

१. किं तद्ब्रह्मेत्यादयः सप्त प्रश्ना अर्जुनस्य १९२
२. भगवतः क्रमेणोत्तरम् १९३-१९४
३. मरणकाले यद् यदेव चिन्तयति तत्-तद्-भावं याति १९५
४. तीर्थे श्वपच गृहे वा नष्टस्मृति रपि परित्यजन् देहं ज्ञानी मुक्त एव १९७

५. सतत भावनाऽन्त्य भावना हेतुः १९६-९७
६. भगवान् सर्वदा स्मरणीयः १९८-१९९
७. प्रणवाधारम् अभ्यासयोगं विधत्ते २००
८. सर्वद्वाराणि संयम्य ओमित्येकाक्षरं ब्रह्म व्याहरन् मृतः परम-गतिं लभते २०१
९. वायुनिरोधविधुरेणापि अनन्यचेतसा सततं भगवन्तं स्मरता मुच्यते २०२
१०. इतरपुण्यविशेषेण ब्रह्मलोकं गत्वाऽपि पुनरावर्तते २०३
११. ब्रह्मलोकसहिता भूलोकादयः कालपरिच्छिन्नाः २०४
१२. भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते २०५
१३. भगवद्-धामगता न निवर्तन्ते २०६
१४. आवृत्त्यनावृत्तिमार्गौ २०७-२०८-२०९
१५. शृणु योगस्य माहात्म्यम् २१०

## अथ नवमे

१. सुषुम्नाख्य नाडीद्वारेण अनावृत्तिम् उक्त्वा अन्यथापि मोक्षप्राप्ति-रित्याह २११
२. आत्मज्ञाने श्रद्धाहीना बहुक्लेशभाजः २१२
३. आत्मज्ञानं व्याख्याति २१२-२१४
४. स्वस्य निमित्तोपादानत्वं स्फुटी करोति २१५
५. विषमं विदधतोऽपि परमेश्वरस्य न धर्माऽधर्माभ्यां संबन्धः २१६
६. मयाऽध्यक्षेण प्रकृतिः सूयते इत्यस्य व्याख्या २१६-२१८
७. मूढा मानुषीं तनुमाश्रितस्य अवज्ञां कुर्वन्ति अतः शोच्याः २१८
८. महात्मानस्तु भगवन्तं भजन्ति २१९
९. द्वाभ्यां भजनस्य प्रकारमाह २२०-२२१
१०. अहं क्रतुरित्यादि विभूतीन् आह २२१-२२
११. कामकामा गतागतं लभन्ते २२३
१२. निष्कामानां योगक्षेमौ वहति भगवान् २२४-२२५-२२६
१३. सुखाराधनोऽपि भगवान् अन्यदेवताभक्तानां न तावत् फल ति ,,
१४. क्रिया-भोजन-हवन-दानादि कृष्णार्पणं कुर्यात् २२६
१५. अर्पणफलं संसारान्मोक्षः २२७

१६. सर्वभूतेषु समोऽपि भगवान् अग्निवद् दूरस्थानां सुखं न करोति २२८
१७, दूराचारोऽपि भक्तिबलात् साधुरेव भवति, तस्य प्रणाशो न २२७
१८. भक्तौ जातिनियमो नास्ति २२९
१९. केन रूपेण भगवद्भजनं कर्तव्यम् २३०


## अथ दशमे


१. दशमस्य अवतरणम् २३१
२. भगवन्तं विद्वान् सर्वपापैः प्रमुच्यते २३१
३. भयाऽभयाऽहिंसादयो लोकमहेश्वरादेव भवन्ति २३२
४. भृग्वादयो भगवद्गतभावा मानसा जाताः २३२
५. भगवद्विभूतियोगयो र्ज्ञानस्य फलम् २३३
६. बुधा भगवन्तं भजन्ते २३३
७. प्रेमपूर्वकं यद् भजनं बुधानां तदेव विवृणोति २३४
८. प्रीतिपूर्वकं सततं भजतां भगवान् बुद्धियोगं ददाति येन मोक्षः २३४
९. ज्ञानदीपेन भास्वता तेषाम् अज्ञानजं तमो नाशयति भगवान् २३४-२३५
१०. विस्तरेण दिव्यविभूतिं योगं च श्रावयितुं शिष्यः प्रार्थयामास २३६-२३९
११. भगवान् दिव्यविभूतिप्रकथन प्रस्तावे आदौ एव पारमेश्वरं पारमार्थिकं रूपं श्रावयति २४०
१२. समस्तं विभूतियोगं ध्यातुम् अशक्तेभ्यो व्यस्तं विभूतियोगम् उपदिशति २४१-२४७
१३. अतिसंक्षिपति यद् यदिति २४७
२४. मन्दमध्यमाधिकारिणां ध्यानविषयस्य विवक्षया आदित्यानामहं विष्णुरित्यादिना व्यस्तं विभूतियोगं व्याचख्यौ। उत्तमाधिकारिणां ध्यानविषयस्य विवक्षया पुनः समस्तं विभूतियोगं प्रकारान्तरेण व्याख्याति २४८


## अथैकादशे


१. एकादशाऽवतरणम् २४९
२. विश्वरूपप्रदर्शनाय शिष्यः प्रार्थयते २४९-२५०
३. भगवान् तद् दर्शनाय शिष्यं नियुनक्ति २५०-२५१
४. तस्मै पारमेश्वरं रूपं दर्शयामास २५१

५. विश्वरूपं विशिनष्टि २५२
६. देवदेवस्य शरीरे तदा पाण्डव एकस्थं सकलं जगद् अपश्यत् २५३
७. उपमा विश्वरूपस्य प्रभायाः
८. ततोऽर्जुनः कृताञ्जलिरभाषत २५३-२६०
९. अर्जुनं श्रीभगवानाह २६१-६२
१०. अर्जुनः स्तौति स्थाने इत्यादिभिः २६३-६९
११. अर्जुनं भीतमुपलभ्य उपसंहृत्य विश्वरूपं चतुर्भुजो बभूव २६९-२७१
१२. ततो निर्भयः सन् स्वस्य स्वस्थतां निवेदयामास २७१
१३. स्वकृतस्य अनुग्रहस्य पुण्यातिशयलभ्यत्वमाह २७१-२७३
१४. अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थः संगृह्योच्यते 'मत्कर्म-कृदिति' २७३

## अथ द्वादशे

१. सगुणोपासन निर्गुणोपासनयोः कतरद् विशिष्टम् २७४
२. सुशक्यत्वगुणेन सगुणोपासनस्य श्रेष्ठत्वम् ३७५-२७७
३. क्लेशं विनैव सगुणशरणानां समुद्धारः २७७-२७८
४. अत्र अशक्तं प्रति सुगमोपायमाह २७८
५. सर्वकर्मफलत्यागं स्तौति २७९-२८०
६. अक्षरोपासकानां धर्मजातमाह २८०-२८५

## अथ त्रयोदशे

१. प्रथमद्वितीय षट्कयोस्त्वंपदार्थतत्पदार्थौ निरुक्तौ । अधुना तृतीये षट्के तयोरैक्यं निरूपयिष्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणं प्रकृतिद्वयं निरूपयति तत्त्वज्ञानञ्च २८६-२९०
२. क्षेत्र-क्षेत्रज्ञ-क्षेत्रज्ञेश्वरैक्यानि निरूपयति २८६-२९०
३. क्षेत्राध्यायार्थस्य प्रतिपत्तिसौकर्याय संग्रहश्लोकमाह २९०
४. विवक्षितं क्षेत्रक्षेत्रज्ञयो र्याथात्म्यं स्तौति २९१
५. स्तुत्याऽभिमुखीभूताय शिष्यायाह २९१-२९२
६. यदिह अव्यक्तमिति सा मूलप्रकृतिः कापिल सांख्यानाम् २९२
७. तत्सांख्यमताद् गीतामते विशेषः २९२

८. वैशेषिका आत्मगुणा इति यान् आहुस्तेऽपि भगवन्मते क्षेत्रधर्मा एव इच्छाद्वेषादयः २९२-२९४
९. अमानित्वादिं विंशतिसंख्याकतत्त्वज्ञानसाधनगणम् आह २९४-९६
१०. अमानित्वादिसाधनेन ज्ञातव्यं परब्रह्म प्रवक्ति २९६-२९७
११. परं ब्रह्म निषेधमुखेनैव कथम् उच्यते, विधिमुखेन कुतो न ? २९७-९८
१२. सदादिशब्दाऽविषयस्य ज्ञेयस्य ब्रह्मणोऽसत्त्वमेव किं न स्यात् ? तत्राह २९८-३०२
१३. क्षेत्रक्षेत्रज्ञयोरपि प्रकृत्योः किञ्चित् प्रकृत्यन्तरं स्यादिति शङ्कां निवर्तयति ३०२-३०४
१४. प्रकृतेः पुरुषस्य च संसारकारणत्वम् ३०४-३०५
१५. असङ्गस्य पुरुषस्य प्रकृतिस्थत्वाद् भोक्तृत्वम् ३०५-३०६
१६. मोक्षसाधकस्य आत्मज्ञानस्य साक्षाद् निर्देशः ३०६-३०८
१७. आत्मज्ञानाद् लाभमाह ३०८
१८. आत्मदर्शने उपायविकल्पा ध्यानादयः ३०९-३१२
१९. अथ मन्दान् आत्मज्ञाने प्रवर्तयति ३१०
२०. क्षेत्रज्ञेश्वरैक्यज्ञानं मोक्षसाधनम् ३१०-३११
२१. अविद्याया निवर्तकं सम्यग्ज्ञानं पुनराह ३११-३१२
२२. प्रकृत्यैव क्रियमाणेषु कर्मसु आत्मनः कर्तृत्वाभावं पश्यन् सम्यक् पश्यति ३१३
२३. क्षेत्रभेददर्शनमपि अपाकरोति ३१३-३१४
२४. एकस्यैव आत्मनः सर्वदेहात्मत्वेऽपि देहविशेषगतैर्दोषैर्न तस्य संबन्धः ३१४-३१५
२५. अध्यायार्थोपसंहारः ३१५-३१६

## अथ चतुर्दशे

१. पुरुषस्य प्रकृतिस्थत्वं गुणेषु सङ्गश्च संसारकारणमिति पूर्वाध्याये उक्तम् । तत्र के वा गुणाः, कस्मिन् गुणे कथं सङ्गः ? कथं वा ते बध्नन्ति कथं च गुणेभ्यो मोक्षणं स्यात् ? मुक्तस्य च किं लक्षणम् तत्राह ३१७-३३१
२. यज्ञादि जडवर्गविषयेभ्यो ज्ञानेभ्यो गुणादिविषयकज्ञानस्य उत्तमत्वं न तु अमानित्वादिभ्योऽपि ३१७

३. ब्रह्मसाक्षात्कारसाधनं ज्ञानं प्रकारान्तरेण पुनर्वक्ष्यति ३१७
४. गुणादि विज्ञानेन मोक्षसाधनः साक्षात्कारोऽवश्यंभावी ३१८
५. परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतयोनित्वम् न तु स्वतन्त्रयोः ३१९
६. पूर्वोक्तमेव शङ्कानिराकरणेन स्पष्टीकरोति ३१९-२०
७. क्षेत्र-क्षेत्रज्ञ संयोगरूपया अविद्यया ब्रह्मैव संसरति। तत्र के गुणाः कथं च बध्नन्तीति प्रश्नद्वयं समुत्तरति ३२०-३२२
८. सत्त्वादीनां गुणानां लक्षणं बन्धकत्वप्रकारं चाह ३२१-३२३
९. उद्भूतस्य सत्त्वादेर्लक्षणम् ३२३-२४
१०. मरणात् परं यत्फलं तदपि अन्यतमगुणजन्यमेव ३२४-३२५
११. कस्माद् गुणात् किं जायते ? ३२५-३२६
१२. गुणानाम् ऊर्ध्वमध्याऽधो नयनं च फलम् ३२६
१३. सम्यग्दर्शनान्मोक्षमाह ३२६-३२७
१४. गुणातीतस्य लिङ्गानि ३२७-३२९
१५. गुणान् कथम् अतिवर्तते ? ३२९-३३०
१६. गुणातीतस्य ब्रह्मभावे किं कारणम् ३३०-३३१

## अथ पञ्चदशे

१. वैराग्यहेतो र्वृक्षरूपक कल्पनया संसारस्वरूपं वर्णयति
२. संसारस्य मिथ्यात्वम् तत्त्वज्ञानेनोच्छेदश्च ३३४-३३५
३. तत्त्वज्ञानेन च्छित्वा किं कर्तव्यम् ३३५-३६
४. कथंभूतास्तत्पदं गच्छन्ति ? ३३६-३३७
५. तद् धामगतानाम् अनिवृत्ती कारणम् ३३७-३८
६. जीवः परमात्मनोंऽशो जलसूर्यको जलस्येव। घटाद्याकाशो महाकाशस्येव वा ? ३३७
७. तदेव पदं विशिनष्टि ३३७
८. जीवो निराकारस्य परमात्मनो लक्षणया अंश इव ३३६
९. जीवः शरीरत्याग ग्रहणयो रिन्द्रियाणि कर्षति ३३७-३३८
१०. जीवस्य संसरणे मनः षष्ठानि इन्द्रियाणि प्राधान्येन निमित्तानि ३३९
११. विमूढा एनं संनिहिततमपि न पश्यन्ति ३३९

१२. कृतात्मानो यतमाना एनं पश्यन्ति ३३९-४०
१३. तस्य पदस्य विभूतिसंक्षेपमाह चतुर्भिः ३४०-४२
१४. नारायणस्य निरुपाधिकस्य स्वरूपं निर्धारयति क्षराऽक्षरोपाधिभ्यां भिन्नतया पुरुषोत्तमत्वेन ३४२ ३४४
१५. यथा निरुक्तमात्मानं पुरुषोत्तमं यो वेद तस्य फलम् ३४४
१६. यदुक्तं तत्त्वज्ञानं मोक्षफलं तत्स्तौति ३४४-४५

## अथ षोडशे

१. दैवीं संपदमाह ३४६-३४८
२. आसुरीं संपदम् एकेन ३४८
३. अनयोः संपदोः फलविभागः ३४९
४. विस्तरेण आसुरी सम्पदुच्यते ३५०-३५२
५. असुराणामेव व्यवहारं निरूपयति तत्र सादृश्यलक्षण-विचारश्च ३५३-३५४, ३४३
६. आसुरसम्पद्युक्तानां परिणाममाह ३५४-३५५
७. सर्वस्या आसुर्या संपदः संक्षेपः ३५५
८. शास्त्रप्रमाणादेव ज्ञात्वा विहितं कर्म कर्तव्यम् ३५६-५७

## अथ सप्तदशे

१. शिष्यस्य प्रश्ने श्रीभगवान् श्रद्धाया भेदत्रयमाह ३५८-३६०
२. आहार-यज्ञ तपोदानानां च प्रत्येकं त्रयो भेदाः ३६१-३६७
३. ब्रह्मणस्त्रिविधो निर्देशः ३६८
४. ओंकारस्य प्राशस्त्यम् च ३६८
५. तदित्यस्य विनियोगः ३६९
६. सच्छब्दस्य विनियोगः ,,
७. अश्रद्धया कृतम् असद् ३७०
८. सप्तदशाध्यायेन कृतोपदेशस्य संग्रहः ३७१

## अथाष्टादशे

१. अध्यायावतरणम् ३७१
२. संन्यासत्यागशब्दार्थयोस्तत्त्व जिज्ञासा ३७२

३. श्रीभगवता उत्तरम् ३७३
४. संन्यासत्यागशब्दार्थौ ३७२-३७४
५. कर्मत्यागविषये विप्रतिपत्तिः ३७४-३७५
६. तत्र भगवतः स्वनिर्णयः ३७६-३७७
७. कर्मणो मोहात् परित्यागस्तामसः ३७८
८. राजसः परित्यागः ,,
९. सात्त्विकत्यागः ३७९
१०. सात्त्विकत्यागिनो व्यवहारः ३८०
११. देहभृता कर्मणः स्वरूपेण त्यागो न संभवति ३८१
१२. अनिष्टादिरूपं कर्मणः फलम् ३८२
१३. सर्वकर्मणां सिद्धये पञ्च कारणानि निबोध ३८३
१४. अधिष्ठानादयः पञ्च कारणानि ३८४

अष्टादशे

१५. अधिष्ठानादीनां पञ्चानां सर्वकर्मसाधकत्वं विवृणोति ३८५-३८६
१६. आत्मानं कर्तारं पश्यन् दुर्मतिः ३८६
१७. कः सुमतिर्यः सम्यक् पश्यति ३८७-३८८
१८. कर्मणां प्रवर्तकविधया संग्रहविधया च आत्माऽस्पर्शित्वम् ३८९-३९०
१९. क्रियाकारकफलानां सर्वेषाम् आत्मसंबन्धो नास्ति ३९०-३९१
२०. ज्ञान-कर्म-कर्तॄणां प्रत्येकं त्रैविध्यम् ३९०
२१. सात्त्विकं, राजसं, तामसं च ज्ञानम् ३९१-३९२
२२. सात्त्विकं, राजसं तामसं च कर्म ३९२-३९३
२३. सात्त्विको राजसस्तामसश्च कर्ता ३९३-३९४
२४. बुद्धेर्धृतेश्च गुणतस्त्रैविध्यम् ३९४
२५. सात्त्विकी, राजसी, तामसी च बुद्धिः ३९५-३९६
२६. सात्त्विकी, राजसी, तामसी च धृतिः ३९६-३९७
२७. सुखं त्रिविधम्–सात्त्विकं, राजसं तामसं च ३९८-३९९
२८. ब्राह्मणक्षत्रियविशां शूद्राणां च कर्माणि ३९९-४२२
२९. स्वे-स्वे कर्मणि प्रवृत्तो नरः सिद्धिं लभते ४०३
३०. स्वधर्मो विगुणोऽपि प्रशस्यः ४०४

३१. सहजं कर्म सदोषमपि न त्यजेत् ४०५-४०६
३२. सर्वत्र असक्तबुद्धिः परमां नैष्कर्म्यसिद्धिं लभते ४०७
३३. नैष्कर्म्यलक्षणा सिद्धिः केन क्रमेण भवति ४०७-४११
३४. ब्रह्मप्राप्तियोग्यस्य स्वभावः फलं च ४११-४१३
३५. स्वकर्मणा भगवदभ्यर्चनस्य भक्तियोगाख्यस्य स्तुतिः ४१४-४१५
३६. वासुदेवे सर्वकर्मसमर्पणं कृत्वा तदेकशरणो भवेत् ४१५
३७. ईश्वरः सर्वभूतानां हृद्देशे तिष्ठति ४१६-४१७
३८. नारायणस्य सर्वान्तर्यामित्वात् सर्वभावेन नारायणमेव शरणं गच्छेत् ४१७
३९. शास्त्रमुपसंहर्तुमिच्छन्नाह ४१७
४०. सर्वगुह्यतमं प्राह ४१८-४२२
४१. आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वम् ४२२-४२४
४२. शास्त्रार्थसंप्रदायविधिमाह ४२५
४३. संप्रदायस्य कर्तुः फलम् ४२५-४२६
४४. गीताश्रवणस्य फलम् ४२७-४२८
४५. भगवान् शिष्यस्य शास्त्रार्थग्रहणं परीक्षते ४२८
४६. शिष्यः स्वकृतार्थतां गुरवे निवेदयति ४२८-४२९
४७. परिसमाप्ते शास्त्रार्थे कथासंबन्धं प्रदर्शयति ४३०-४३२
४८. वंशीव्याख्याकृदुत्तरमङ्गलाचरणम् ४३३-४३५



॥ श्रीगणेशाय नमः ॥

श्रीहरिः शरणम्

# श्रीमद्भगवद्गीता

## [ वंशीव्याख्योपेता ]

### ॥ प्रथमोऽध्यायः ॥

****

॥ वंशीव्याख्याकृन्मङ्गलाचरणम् ॥

श्रीकृष्णं परमात्मानं वेदव्यासं सरस्वतीम् ।
शङ्करं च प्रणम्याद्य गीतावंशीं तनोम्यहम् ॥१॥

भगवच्छङ्कराचार्यकृतभाष्यानुसारिणीम् ।
शृण्वन्तु रसिका गीतावंशीं वंशीधरस्य मे ॥२॥

"ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥३॥"

उपोद्घातः—

स भगवान् सृष्ट्वेदं जगत् तस्य स्थितिं चिकीर्षुर्मरीच्यादीन् प्रजापतीन् अग्रे सृष्ट्वा तान् प्रवृत्तिलक्षणं वेदोक्तं धर्मं ग्राहयामास । ततोऽन्यांश्च सनकसनन्दनादीन् उत्पाद्य तान् निवृत्तिलक्षणं ज्ञानवैराग्यगम्यं शमदमादिरूपं वेदोक्तं धर्मं ग्राहयामास । "द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो

निवृत्तिलक्षणश्च" इति भगवान् शङ्कराचार्यः। "अभ्युदयनिःश्रेयससिद्धिहेतु-र्वेदप्रतिपाद्योऽर्थो धर्मः" इति कणादजैमिनी। ततः सुदीर्घेण कालेन अनुष्ठातॄणां कामोद्भवाद् हीयमानविवेकविज्ञानहेतुकेन अधर्मेण धर्मेऽभिभूयमाने प्रवर्धमाने चाऽधर्मे जगतः स्थितिं परिपिपालयिषुः स एवादिकर्ता नारायणो विष्णुर्धर्मस्य रक्षणाय देवक्यां वसुदेवाद् अंशेन कृष्णः किल संबभूव। स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्य अजोऽव्ययो भूतानाम् ईश्वरो नित्यशुद्धबुद्ध-मुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वन् इव च लक्ष्यते। स्वप्रयोजनाऽभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्म-द्वयम् अर्जुनाय शोकमोहमहोदधौ निमग्नाय उपदिदेश। तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुप-निबबन्ध। तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम् अस्ति।

ततः पुनर्दीर्घेण कालेन कलौ बुद्धिमालिन्यात् पण्डितम्मन्यैर्दुर्गृहीतं स्वगीतार्थमवलोक्य स एवादिकर्ता भगवान् नारायणाख्यः कृष्णः स्वाऽभिन्न-भगवच्छङ्करस्यांशतः श्रीशङ्कराचार्यो भूत्वा स्वाऽभीष्टसिद्धान्तार्थप्रतिपादकं शाङ्करभाष्यं गीताशास्त्रे रचयामास। पुनश्च दीर्घेण कालेन कलिकालप्रभा-वादिदमपि शाङ्करभाष्यं दुर्विज्ञेयं संजातम्। अत एव भगवता प्रेरितोऽहं वंशीधरेण वंशीधराख्यः शाङ्करभाष्यानुसारिणीं गीताशास्त्रे गीतावंशीं तनोमि यथाऽद्यत्वे दुर्गमस्तद्भाष्यार्थः सुकुमारमतिभिरपि सुगृहीतः स्यादिति। तस्याऽस्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं सहेतुकस्य संसारबन्धस्य अत्यन्तो-परमलक्षणं निःश्रेयसम्। तच्च सर्वकर्मसंन्यासपूर्वकाद् आत्मज्ञाननिष्ठारूपाद् निवृत्तिलक्षणाद् धर्माद् भवति। सोऽयं गीतार्थधर्मः। तदुक्तं—'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' (१८।६६) इति। अभ्युदयार्थोऽपि यः प्रवृत्ति-लक्षणो धर्मो वर्णान् आश्रमांश्च उद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन् ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाऽभिसन्धिवर्जितः।

शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते। तथा च इममेवार्थम् अभिसंधाय वक्ष्यति 'ब्रह्मण्याधायकर्माणि' (५।१०) 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' (५।११) इति।

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्म अभिधेयभूतं विशेषतोऽभिव्यञ्जयद् विशिष्टसंबन्धाऽभिधेयवद् गीताशास्त्रमिदम्। यतोऽस्यार्थे विज्ञाते समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया।

अवतरणम्—तत्र भगवद्वेदव्यासविरचिते महाभारतग्रन्थे भीष्मपर्वणि त्रयोदशाध्यायाद् चतुर्विंशमध्यायं यावच्छ्रीमद्भगवद्गीतापर्वाऽवान्तरपर्वभूतं विद्यते। तत्र पञ्चविंशादध्यायादारभ्य द्विचत्वारिंशम्—अध्यायं यावच्छ्रीमद्भगवद्गीताशास्त्रं विराजते। तत्र त्रयोदशे संजयेन धृतराष्ट्राय भीष्मस्य मृत्योर्निवेदनं—'संजयोऽहं महाराज, नमस्ते भरतर्षभ। हतो भीष्मः शान्तनवो भरतानां पितामहः॥' (१३।३)—इत्यादिना। चतुर्दशे विलपतो धृतराष्ट्रस्य भीष्मवधविस्तृतवृत्तान्तजिज्ञासया प्रश्नः संजयं प्रति। पञ्चदशात् त्रयोविंशं यावत् संजयेन युद्धारम्भस्य भूमिकानां वर्णनम्। चतुर्विंशे सैनिकानां हर्षोत्साहविषये धृतराष्ट्रस्य प्रश्ने संजयेन तदुत्तरस्य कथनम्। पञ्चविंशे पुनर्धृतराष्ट्रस्य प्रश्ने—'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादिना एकेन श्लोकेन ततः प्रभृति संजयेन अष्टादशभिरध्यायैर्द्विचत्वारिंशमध्यायं यावत्, सम्पूर्णस्य भगवद्गीताशास्त्रस्य निवेदनम्। तत्र 'धृतराष्ट्र उवाच' 'संजय उवाच' इति वचनं परीक्षित्पुत्रं जनमेजयं प्रति महाभारतकथानिवेदनाय प्रवृत्तस्य वैशम्पायनस्य मुनेरस्ति। ततश्च सम्प्रति वैशम्पायनमुनिर्जनमेजयं राजानं प्रति गीताशास्त्रस्य श्रीकृष्णार्जुनसंवादस्य प्रस्तावाय कथामारभते—

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥१॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥२॥

---

व्याख्या—संजय, हे सञ्जय, धर्मक्षेत्रे धर्मस्य प्रवृत्तिनिवृत्तिलक्षणस्य यथोक्तस्य क्षेत्रम् सस्यस्येव उत्पत्तिवृद्धयोः स्थानम् तस्मिन् । कुरुक्षेत्रे पाण्डव-धार्तराष्ट्राणाम् आदिपुरुषः कुरुनामा बभूव । तस्य तपःस्थानविशेषः कुरु-क्षेत्रं नाम, तस्मिन् । अस्य धर्मक्षेत्रत्वं महाभारते शल्यपर्वणि त्रिपञ्चाशत्तमेऽ-ध्याये स्पष्टम् । धर्मक्षेत्रे इति विशेषणेन तत्र करिष्यमाणो धर्मविचारः सूचितः । समवेता एकत्रभूताः । युयुत्सवो योद्धुम्, इच्छवः । मामकाः मम धृत-राष्ट्रस्य इमे । पाण्डवाः पाण्डोरिमे । उभयत्र 'तस्येदम्' (पा० सू०) इत्यण् । चेति समुच्चयार्थः । एवेति पादपूरणार्थः । किम् अकुर्वत कृतवन्तः ? अस्य युद्धारम्भाद् अव्यवहिते पूर्वकाले इति शेषः सामर्थ्याद् गम्यते । तथा हि एतत्प्रश्नस्य उत्तरे संजयेन गीताशास्त्रस्य अष्टादशभिरध्यायैस्ततः परेण एकेन त्रिचत्वारिंशेन अध्यायेन सहितैः कृते सति महाभारते भीष्मपर्वणि चतुश्चत्वारिंशेऽध्याये धृतराष्ट्रः पुनर्युद्धारम्भविषये प्रश्नं करिष्यति 'धृतराष्ट्र उवाच—एवं व्यूढेष्वनीकेषु मामकेस्वितरेषु च । के पूर्वं प्राहरंस्तत्र कुरवः पाण्डवा नु किम् ॥' (४४।१) इत्येवम् । ततश्च तदा सञ्जयः कौरवपाण्डवयोः प्रथमदिनस्य युद्धारम्भं वर्णयिष्यतीति । तस्माद् युद्धारम्भाऽव्यवहितपूर्वकाल-वृत्तिघटनाया एव विषयेऽयं प्रश्नः संगच्छते ॥१॥

अवतरणम्—एवं प्रश्ने संजयः 'किमुत्तरं कृतवान् धृतराष्ट्रं प्रति इत्यपेक्षायाम् जनमेजयमाह वैशम्पायनः (मूलम्) संजय उवाच—इत्यादि ।

व्याख्या—तदा-यस्मिन्काले युयुत्सुषु धार्तराष्ट्रेषु पाण्डवेषु च कुरु-क्षेत्रे समवेतेषु, पाण्डवानीकं व्यूढं जातम्—तस्मिन्काले, राजा—'वीरपुरुषा अत्यादरेण स्वकार्ये युद्धादौ प्रवर्त्याः' इति राजनीतिविदित्यर्थः । दुर्योधनस्तु पाण्डवानीकम्-पाण्डवानाम् अनीकं सैन्यम्, व्यूढं व्यूहयुक्तं दृष्ट्वा अवलोक्य आचार्यं द्रोणम् उपसंगम्य तस्य समीपं गत्वा, वचनं वाक्यं वक्ष्यमाणम्,

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥

---

अब्रवीत् उवाच' अब्रवीदित्येव सिद्धे वचनपदं वक्ष्यमाणवाक्यबोधकम् । अत्रानन्दगिरिः—'पाण्डवानां भयप्रसङ्गो नास्ति इत्येतत् तु शब्देन द्योत्यते प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव ।' इत्याह ॥२॥

अवतरणम्—'किं तद् वचनम्' इत्यत आह—पश्यैताम् इति ।

व्याख्या—आचार्य हे गुरो, तव भवतः, धीमता बुद्धिमता शिष्येण छात्रेण द्रुपदपुत्रेण द्रुपदस्य राज्ञः पुत्रेण तनयेन धृष्टद्युम्नेन, व्यूढां कृतव्यूहां पाण्डुपुत्राणां युधिष्ठिरादीनां महतीं पूजितां चमूं सेनां पश्य अवलोकय । प्रार्थनायां लोट् । तव शिष्येण इति कथनं 'स्वशिष्यरचितो व्यूहो भवता गुरुणा भेत्तुं सुशकः इति सूचयितुम् : धृष्टद्युम्नेन इत्यनुक्त्वा द्रुपदपुत्रेण इति कथनं द्रुपदेन सह द्रोणस्य पूर्वजात वैरस्य स्मारणेन तस्मिन् तत्क्रोधस्योद्दीपनार्थम् । स्वकीयसेनाऽपेक्षया संख्यायामल्पत्वेऽपि वक्ष्यमाणमहारथबाहुल्येन धीमत्कृतव्यूहवत्वेन च पाण्डवीयसेनायाः शक्तया पूजितत्वरूपं महत्त्वमस्तीति महतीमित्युक्तम् । महतीम् इत्यनेनापि पाण्डवसेनाया अनुपेक्षणीयता सूचिता ॥३॥

अवतरणम्—पाण्डव-सेनाया महत्त्वे हेतोः कथनस्याऽभिप्रायेण तत्र शूरमहारथबाहुल्यं प्रदर्शयन्नाह—अत्रेति ।

व्याख्या—अत्र पाण्डुपुत्राणां चम्वाम्, युधि संग्रामे, भीमार्जुनसमाः, भीमश्च अर्जुनश्च तयोः समाः सदृशाः महेष्वासा इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासा धनूंषि, बाहुलकात् करणे घञ् । महान्त इष्वासा येषां ते । शूरा वीराः । युयुधानः सात्यकिः । विराटश्च । महारथो द्रुपदश्च । सात्यकिरर्जुनस्य शिष्यः । विराट उत्तरायाः पिता । द्रुपदो द्रौपद्याः पिता । धृष्टकेतुश्चैद्यशिशुपालस्य पुत्रः । चेकितानो यादवशूरः । वीर्यवान् शक्तिमान् काशिराजश्च काश्याः स्वनामप्रसिद्धपुर्याः काशीनां वा जनपदविशेषाणां राजा काशिराजः । पूर्वत्र काशीशब्दे 'संज्ञाच्छन्दसो र्बहुलम्' (पा. सू.) इति कालिदास इव ह्रस्ववत्म् । उत्तरत्र 'काशि' इति ह्रस्वान्त एव शब्दोऽस्ति ।

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥६॥
अस्माकंतु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥७॥

---

पुरुजित् कुन्तिभोजश्च । इमौ कुन्त्या भ्रातरौ । नरपुङ्गवः नरेषु पुंगवः श्रेष्ठः । सुप्सुपेति समासः । शैब्यश्च, अयं केवलयुधिष्ठिरस्य भार्यायाः पिता । विक्रान्तो विक्रमवान् युधामन्युश्च, अयं पाञ्चालः । सौभद्रोऽभिमन्युः सुभद्राया अपत्यं पुमान् । 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' (पा० सू०) इत्यण् । आदिवृद्धिः । द्रौपदेयाश्च द्रौपद्या अपत्यानि पुमांसः । प्रतिविन्ध्य-सुतसोम-श्रुतकर्म-शतानीक-श्रुतसेननामानः क्रमेण युधिष्ठिरभीमार्जुननकुलसहदेवेभ्यो जाताः पञ्च । 'स्त्रीभ्यो ढक्' (पा० सू०) इति ढक् । तस्य एयादेशः । (एते) सर्वे एव महारथाः सन्ति । महान्तो रथा येषां ते महारथाः । महारथलक्षणं महाभारते—'एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्र-शास्त्र-प्रवीणश्च महारथ इति स्मृतः ॥' (महा०उद्योग १६९/१७२) इति । पुनर्महारथ इति विशेषणाद् द्रुपदस्य विशिष्टमहारथत्वं गम्यते । एवमेव सविशेषणाः शैब्ययुधामन्यूत्तमौजसश्च विशिष्टवीर्यविक्रमादिगुणा आसन् इति गम्यते ॥६॥

अवतरणम्—सम्प्रति स्वकीयसेनाया विशिष्टान् निर्देक्ष्यन् तेषां निबोधाय आचार्यं तावत् प्रार्थयते—अस्माकं तु–इति ।

व्याख्या—द्विजोत्तम, द्वाभ्यां जन्मसंस्काराभ्यां जात इति द्विजः । 'अन्येष्वपि दृश्यते' (पा. सू.) इतिडः । द्विजेषु उत्तम इति 'सुप्सुपा' (पा. सू.) इति समासः । तत्संबुद्धौ हे द्विजोत्तम ब्राह्मणश्रेष्ठ? अस्माकं तु निर्धारणषष्ठ्या अस्माकं मध्ये तु इत्यर्थः । ये विशिष्टाः शौर्यादिविशेषगुणयुक्ताः, (अतो) मम राज्ञो दुर्योधनस्य सैन्यस्य नायकाः सेनापतयः सन्तीति शेषः । तान् निबोध जानीहि । भौवादिकस्य परस्मैपदिनो बुधधातो रूपम् । प्रार्थनायां लोट् । तान्

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥

---

ते तव संज्ञार्थम्, सम्यक्ज्ञानं संज्ञा, परिज्ञानम्; 'आतश्चोपसर्गे' (पा. सू.) इति भावे अङ् ! संज्ञा अर्थः प्रयोजनं यस्मिन् कर्मणि तद् इति ब्रवीमि इति क्रियाया विशेषणम् । क्रियाविशेषणानां कर्मत्वम् एकत्वम् नपुंसकत्वञ्चेति द्वितीयाया एकवचनम् । ब्रवीमि अहं वदामि ॥७॥

. अवतरणम्—तानाह—भवान् इत्यादि ।

व्याख्या—भवान् द्रोणाचार्यः । गुरुत्वात् प्रथमं गणयति । ततः शौर्यानुसारम् अन्यान् । भीष्मश्च कर्णश्च कृपश्च । समितिञ्जयः समितिं संग्रामं जयतीति 'संज्ञायां भृतृवृजि' (पा. सू.) इत्यादिना खश् । संज्ञायां खश्विधानाद् इयं क्वचित्संग्रामजयनिमित्ता कृपाचार्यस्य संज्ञाऽस्तीति गम्यते । अश्वत्थामा अश्वस्येव स्थामा स्थितिर्यस्य सः । 'पृषोदरादीनि यथोपदिष्टम्' (पा. सू.) इति निपातनात् समासः । विकर्णः, अयं दुर्योधनस्य भ्राता । तथैव च सौमदत्तिः सोमदत्तस्य अपत्यं पुमान् श्रेष्ठत्वाद् भूरिश्रवाः । 'तस्यापत्यम् अत इञ्' (पा. सू.) इति साधुत्वम् । शन्तनु-भ्राता वाह्लीको नाम, तस्य पुत्रः सोमदत्तस्तस्य पुत्रोऽयम् । तथैव चेत्यस्य स्थाने 'जयद्रथः' इति पाठः श्रीमधुसूदनसरस्वती श्रीनीलकण्ठकृतव्याख्ययोर्धृतः ॥८॥

अन्ये इतरे च शल्यकृतवर्मप्रभृतयो बहवः शूरा वीराः मदर्थे मम दुर्योधनस्य अर्थे प्रयोजने त्यक्तजीविताः त्यक्तं जीवितं यैस्ते । जीवितमपि त्यक्तुम् अध्यवसिताः सन्तीतिभावः । एतेन स्वस्मिन् तेषामनुरागातिशयः सूचितः । अचिरेणैव ते जीवितं त्यक्ष्यन्तीत्यपि सूचितम् । (ते च) नाना शस्त्रप्रहरणाः नाना बहूनि शस्त्राणि खड्गादीनि, प्रहरणानि प्रहरणसाधनानि येषां ते सन्तीतिशेषः (किञ्च) सर्वे भवदादय एते, युद्धविशारदाः युद्धे युद्धकर्मणि विशिष्टा अधिका शारदा बुद्धिर्येषां ते सन्तीति शेषः ॥९॥

अवतरणम्—अथ द्वयोः सेनयोः सामर्थ्यासामर्थ्ये निबोधयति अपर्याप्तमिति ।

अपर्याप्तं तदस्माकं बलं भीष्माऽभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाऽभिरक्षितम् ॥१०॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥

---

व्याख्या—अस्माकं धार्तराष्ट्राणाम्, भीष्माभिरक्षितम् भीष्मेण अभितः पालितम्, तत्प्रक्रान्तं बलं सैन्यम् अपर्याप्तम् असमर्थम् परकीयसैन्यकर्मकविजयकरणे इति शेषः । अस्तीति च शेषः । अस्मदीयबले परकीयबलापेक्षया संख्याया आधिक्येऽपि भीमार्जुनसदृशशूराणामल्पत्वाद् इत्याशयः । एतेषां पाण्डवानां तु भीमाऽभिरक्षितं भीमेन अभितः पालितम् इदं प्रत्यक्षं दृश्यमानं बलं सैन्यं पर्याप्तं समर्थम् अस्मदीयसैन्यकर्मकविजयकरणे अस्तीति शेषः । भीमार्जुनसदृश बहुशूर साहित्यादित्याशयः ॥ 'भीमादयोऽपादाने' (पा. सू.) इति भीम-भीष्म शब्दौ निपातितौ ॥१०॥

अवतरणम्—इदानीं स्ववचनमुपसंहरति दुर्योधनः—अयनेषु इति ।

व्याख्या—सर्वेषु निखिलेषु अयनेषु व्यूहप्रवेशमार्गेषु चकाराद् अन्यत्रापि युद्धस्थानेषु, यथाभागं स्व-स्वसमुचितस्थानम् अनतिक्रम्य अवस्थिताः स्थिताः सन्तो भवन्तः सर्वे एव हीति निश्चयेन, भीष्मम् सेनाभिरक्षकमेव अभिरक्षन्तु परिरक्षन्तु । सेनाभिरक्षके भीष्मेऽभिरक्षिते सत्येव वयं सर्वेऽभिरक्षिताः स्यामेत्याशयः ॥११॥

अवतरणम्—तदेवम् आचार्यं प्रति संवादं स्वविषयकसंमानयुक्तं कृतवन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्याशवर्ती पितामहस्तद्बुद्धयनुरोधार्थमित्थं कृतवानित्याह—तस्येति ।

व्याख्या—कुरुवृद्धः कुरुषु कुरुवंशभवेषु वृद्धः, सुप्सुपेति समासः । वृद्धो वयसा ज्ञानेन च श्रेष्ठः । प्रतापवान् अति तेजस्वी, पितामहो भीष्मः । तस्य दुर्योधनस्य हर्षं मोदं संजनयन् संजनयितुम् 'लक्षणहेत्वोः क्रियायाः' (पा. सू.) इति शता । तत्र हेतु शब्देन फलस्याऽपि ग्रहणात् । सिंहनादं विनद्य सिंहस्येव

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाऽभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥

---

गर्जनं कृत्वा 'उपमाने कर्मणि च' (पा. सू.) इति णमुल् । उच्चैस्तारस्वरेण शङ्खं दध्मौ वादयाञ्चक्रे । हर्षं संजनयन् इत्यनेन इतः पूर्वं दुर्योधनो हर्षहीन आसीदिति गम्यते । प्रतापवानिति विशेषणेन भीष्मे दुर्योधनस्य हर्षजनने सामर्थ्यं सिंहनादेन च सूचितम्, दूरादेव अरिनिवहं प्रति भयजननलक्षणस्य प्रतापस्य तस्मिन् सत्त्वात् । कुरुवृद्धपितामहपदाभ्यां तस्यैव शङ्खवादनं समुचितमिति सूचितम्, कुरु शब्देन योगशक्त्या पाण्डवानामपि ग्राह्यत्वेऽपि योगरूढ्या धार्तराष्ट्राणामेव ग्राह्यत्वात् 'कुरवः पाण्डवानु किम्' (महा० भीष्म० ४४।१) इत्यत्र यथा ॥१२॥

अवतरणम् –तदनन्तरं दुर्योधनसेनायाम् अन्यैरपि शङ्खादयो वादिता इत्याह–तत इति ।

व्याख्या—ततः भीष्मकृतशङ्खवादनात्परमनन्तरम्, सहसैव झटित्येव शङ्खाश्च भेर्यश्च (नगाड़े) पणवानकगोमुखाः पणवाश्च (ढोल) आनकाश्च (मृदङ्गानि) गोमुखाश्च (रणसिंहे) द्वन्द्वसमासः । अभ्यहन्यन्त वादिताः सैनिकैः युद्धोत्सवरूपेणेतिशेषः । स अभिहतशङ्खादिजन्यः शब्दो ध्वनिः, तुमुलोऽतीव महान् अभवत् जातः । एतदन्तेन मामकाः किमकुर्वतेति धृतराष्ट्र-प्रश्नः समाहितः ॥१३॥

अवतरणम्—अथ पाण्डवाः किमकुर्वतेति प्रश्नस्योत्तरं करिष्यन् सञ्जय आह—तत इति ।

व्याख्या—ततः परकीय सैनिककृतशङ्खादिवादनानन्तरम्, श्वेतैः शुक्लैर्हयैरश्वैर्युक्ते महति विशाले स्यन्दने रथे स्थितौ । खाण्डववनदाहावसरे प्रीतेन अग्निदेवेन अर्जुनाय दत्तः श्वेताश्वयुक्तो महान् रथस्तत्र स्थितावित्यर्थः । माधवः श्रीकृष्णः पाण्डवोऽर्जुनः । अग्रे धनञ्जयपदेन विवरणात् । दिव्यौ दिवि स्वर्गे भवौ जातौ शङ्खौ कम्बू प्रदध्मतुः प्रकर्षेण वादितवन्तौ । (तत्र) हृषीकेशः हृषीकाणाम् इन्द्रियाणाम् ईशः प्रवर्तकः सर्वान्तर्यामी परमात्मा श्रीकृष्णः ।

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥

---

यथोक्तं श्रीमद्भागवते ( योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना । अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान् नमो भगवते पुरुषाय तुभ्यम् ।' ( ४| ) इति । पाञ्चजन्यम् पञ्चजने भवः पाञ्चजन्यस्तम् । 'पञ्चजनादुपसंख्यानम्'—(का० वा०) इतिञ्यः । समुद्रमध्ये पञ्चजननामा शङ्खाकारः कश्चिदसुरः प्रतिवसति स्म । भगवान् श्रीकृष्णः स्वगुरुपुत्रानयनप्रसङ्गे तं निहत्य तस्य अस्थ्ना स्वशङ्खं कारयामास । स एव शङ्खः पाञ्चजन्यो नाम तम् । दध्मौ इति संबन्धः । धनञ्जयः अर्जुनः । दिग्विजयसमये अर्जुनो राज्ञो विजित्य तेभ्यः प्रभूतं धनमाहृतवान् । तन्निमित्तेयं सञ्ज्ञार्जुनस्य । धनञ्जयतीति विग्रहे (संज्ञाया भृतृजि --' (पा० सू०) इत्यादिना खश् । (अरुर्द्विषदजन्तस्य मुम् (पा० सू०) इति मुम् । एतेन अयं परान् जेष्यतीति सूचितम् । देवदत्तम् देवेन इन्द्रेण दत्तोऽर्जुनायेति देवदत्तनामायं शङ्खस्तम् । दध्मौ इत्यन्वयः भीमकर्मा भीमं भयङ्करं हिडिम्बवधादिरूपं कर्म यस्य सः । वृकोदरः वृकस्येवोदरम् यस्य सः । भीमः । पौण्ड्रं नाम महाशङ्खं दध्मौ वादितवान् ॥१५॥

कुन्तीपुत्रः कुन्ती नाम पाण्डोर्भार्या तस्याः पुत्रः । राजा नृपः युधिष्ठिरः अनन्तविजयं अनन्तविजयं नाम शङ्खं दध्मौ इत्यन्वयः । नकुलः सहदेवश्च (क्रमेण) सुघोषमणिपुष्पकौ नाम शङ्खौ दध्मतुरिति विभक्तिविपरिणामेन अन्वयः कार्यः । 'कुन्तीपुत्रः, राजा, युधिष्ठिरः, अनन्तविजयम्' इति शब्दैः कुन्त्या महता तपसा धर्ममाराध्य लब्धत्वादयमेव युधि स्थिरो भूत्वा विजयं प्राप्य राज्यं करिष्यतीति सूचितम् ॥१६॥

व्याख्या—काश्यः काशिराज इति श्रीधरस्वाम्यादयः । काशी निवासोऽस्येति काश्यः । यद्वा काशयितुं योग्य इत्यर्थे णिजन्तात् 'काशृदीप्तौ' इत्य-

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥१८॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

---

स्माद् अचोयत् । पूर्वत्र 'सोऽस्य निवासः' (पा० सू०) इत्यण् । सञ्ज्ञापूर्वकविधेरनित्यत्वादीकारस्य 'यस्येति च' (पा० सू०) इति लोपाभावे इकोयणचीति यण् । परमेष्वासः परमो विशाल इष्वासो धनुर्यस्य सः । महान् रथो यस्य स महारथः, न पराजितोऽपराजितः । परमेष्वासत्व महारथत्वाऽपराजितत्व-महाबाहुत्वेति विशेषणचतुष्टयं प्रत्येकं राजनि संबध्यते इत्यानन्दगिरिः । महान्तौ बाहू यस्य स महाबाहुः । शिखण्डी शिखण्डोऽस्यास्तीति शिखण्डी । अयं द्रुपदस्य ज्येष्ठः पुत्रः । धृष्टद्युम्नः. अयं द्रुपदस्य कनिष्ठः पुत्रः । विराटः अयं परिक्षिन्मातुरुत्तरायाः पिता । सात्यकिः, अयम् अर्जुनस्य शिष्यो यादवः । द्रुपदो द्रौपद्याः पिता । द्रौपदेयाः द्रौपद्याः प्रतिविन्ध्यादयः पञ्च पुत्राः पूर्वोक्ताः । सर्वशः सर्वे 'बह्वल्पार्थाच्छस्' (पा० सू० ) इति शस् । सौभद्रोऽभिमन्युः सुभद्राया अपत्यं पुमान् । पृथिवीपते धृतराष्ट्र पृथक् पृथग् अन्यम् अन्यम् स्वं स्वं शङ्खं दध्मुः इति शङ्खान् दध्मुः—वादितवन्तः । स माधवपाण्डवादिवादितशङ्खजन्यस्तुमुलोऽतीव तीव्रः घोषः शब्दः, नभश्च आकाशं च पृथिवींचैव व्यनुनादयन् प्रतिध्वनिभिः पूरयन् ( सन् ) धार्तराष्ट्राणाम् धृतराष्ट्रस्य इमे धार्तराष्ट्रा दुर्योधनादिसकलसैनिकास्तेषाम् । हे धृतराष्ट्र भवदीयानां दुर्योधनादीनामित्यर्थः । हृदयानि वक्षांसि व्यदारयत् विदीर्णानि अकरोत् । हृदयविदारणजन्यदुःखसदृशं दुःखम् तेभ्यो ददाविति भावः । एतेन भगवता शङ्खवादनकाल एव दुर्योधनभीष्मकर्णादयः सद्रोणाः सर्वेऽपि निहता इति सूचितम् । अतएव वक्ष्यते मयैवैते निहताः पूर्वमेवेति ॥१९॥

अवतरणम्—एवं पाण्डवशङ्खघोषेण धार्तराष्ट्राणां हृदयविदारणं कथयित्वा तत्परं संजातां पाण्डवचेष्टां कथयितुमारभते संजयः अथेति ।

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥२०॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥

---

व्याख्या—अथ अनन्तरम् कपिध्वजः कपिर्हनुमान् ध्वजे यस्य सः । अर्जुनः । अर्जुनस्य कपिध्वजत्वं महाभारते वनपर्वणि स्पष्टमुक्तम् । एतेन अर्जुनस्य महान् प्रकर्षो द्योतितः । पाण्डवोऽर्जुनः । धार्तराष्ट्रान् हे धृतराष्ट्र भवदीयान् दुर्योधनभीष्मद्रोणकर्णशल्यप्रभृतीन्, व्यवस्थितान् स्वहृदयविदारणे वृत्तेऽपि कथञ्चिद् धैर्यमवलम्ब्य वैषम्येण अवस्थितान् दृष्ट्वाऽवलोक्य शस्त्रसंपाते लक्षणया शस्त्रसंपातफलकशस्त्रग्रहणावसरे प्रवृत्ते प्रवर्तमाने सति 'आदिकर्मणिनिष्ठावक्तव्या' (का० वा० ) इतिक्तः । धनुर्गाण्डीवाख्यम् उद्यम्य उत्थाप्य तदा तस्मिन् काले महीपते हे भूपते धृतराष्ट्र, हृषीकेशम् सर्वान्तर्यामिणं परमात्मानं श्रीकृष्णम्, इदम् अनन्तरमेव वक्ष्यमाणं वाक्यं वचनम् आह उवाच । उवाचेत्यर्थे आहेति विभक्तिप्रतिरूपकम् अव्ययम् । अच्युत देशकालवस्तुषु व्यापकत्वेन च्युतिरहित हे विष्णो सच्चिदानन्द, उभयोर्द्वयोः सेनयोर्मध्ये मे मम रथं स्यन्दनं स्थापय स्थिरं कुरु । अत्रानन्दगिरिः—"अहो सर्वेश्वरेश्वरोऽपि भगवान् अर्जुनेन सारथ्ये नियुज्यते ! किं हि भक्तानाम् अशक्यम्? यद् भगवानपि तन्नियोगम् अनुतिष्ठति । युक्तं हि भगवतो भक्तपारवश्यम् ।" इति प्राह । वयमपि तथैव मन्यामहे यथोक्तं श्रीमद्भागवते--"भगवानुवाच—(अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ (१०/) इति । 'श्री शुक उवाच--एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् । उपदिश्य सतां मार्गं पुनर्द्वारवतीमगात् ॥' ( १०/ ) इति च ॥२०-२१॥

अवतरणम्—सेनयोर्मध्येऽपि प्रदेशस्यविस्तृतत्वात् कुत्रप्रदेशे ? किमर्थश्च-रथः स्थाप्यताम् इत्यत आह—यावदिति ।

व्याख्या—यावदित्यव्ययम् । यावति प्रदेशेस्थित्वेत्यर्थः । एतान् सन्निहितान् योद्धुकामान् योद्धुंकामोयेषां तान् 'तुं काममनसोरपि' (का. वा.) इति

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

---

मकारलोपः। अवस्थितान् प्रकार विशेषेण स्थितान् 'धार्तराष्ट्रान्' इत्यनुवर्तते। अहं निरीक्षे वर्तमान समीपे भविष्यति काले निरीक्षिष्ये 'वर्तमानसामीप्ये-वर्तमानवद् वा' (पा.सू.) इति वर्तमानसमीपे भविष्यति लट्। यद्वा 'यावत्पुरा-निपातयोः' इति भविष्यति लट्। सामान्यतो दृष्टानपि विशेषतो द्रक्ष्यामीत्यर्थः किमेषां निरीक्षणेन ? इत्यत आह–कैरित्यादि। अस्मिन् वर्तमाने रणसमुद्यमे रणोद्योगे मया अर्जुनेन कै धार्तराष्ट्रैः सह योद्धव्यम् युद्धंकर्तव्यम् ? किञ्च तन्त्रेण मया सह कैर्धार्तराष्ट्रैर्योद्धव्यम् ? इति पर्यालोचनार्थमिति शेषः। एकेन शब्देन अनेकार्थबोधनं तन्त्रमिति वैयाकरणाः। यद्यपि सहशब्दबलाद् युद्ध-क्रियायाः कर्तृत्वं सहार्थस्य प्रतियोग्यनुयोगिनो रुभयोरेव विश्राम्यति तथापि शाब्दबोधे विशेष्यविशेषणभावमात्रे भेदः। मया सहेत्युक्ते अस्मच्छब्दार्थे विशेषणता। कैः सहेत्युक्तेतु किंशब्दार्थे विशेषणतेत्यन्यत्र विस्तरः। योद्धव्यम् इत्यत्र अर्हे तव्यप्रत्ययः। योग्यैरेव प्रतिभटैः सह युद्धकरणम् उचितमित्यभि-प्रायः ॥२२॥

नन्विह समवेता भीष्मद्रोणादयः पक्षद्वयहितैषितया सन्धिमेव कार-यिष्यन्ति कुतो युद्धस्यावसरः ? इत्यत आह–योत्स्यमानान् इत्यादि। य एते भीष्मद्रोणादयो दुर्बुद्धेर्धार्तराष्ट्रस्य धृतराष्ट्रपुत्रस्य दुर्योधनस्य युद्धेसर्व-वाक्यं सावधारणम् इति न्यायाद् युद्ध एवेत्यर्थः। प्रिय चिकीर्षवः प्रियं प्रियमेव नतु हितं कर्तुम् इच्छवः सन्तोऽत्र कुरुक्षेत्रे समागताः संप्राप्ताः (एतान्) योत्स्यमानान् भविष्यत्कालवृत्ति युद्धक्रियाकर्तॄन् (एव न तु सन्धि-प्रयोजकान्) अहम् अवेक्षे एतेषां शस्त्रोद्यमन प्रदर्शनादि चेष्टाया व्यञ्जि-काया दर्शनेन उपलभे चेष्टाया व्यञ्जकत्वं हि काव्यप्रकाशादौ स्फुटम्। अतो योग्यप्रतिभटावलोकनं ममावश्यकम् इत्याशयः ॥२३॥

अवतरणम्—एवम् अर्जुनस्य वचनं श्रुत्वा श्रीकृष्णेन किं कृतम् ? इति धृतराष्ट्रस्य जिज्ञासामाशङ्क्य संजयेन यत् कथितं तद् अनुवदितुं वैशम्पायनो जनमेजयमाह—

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥२५॥

---

व्याख्या—भारत, हे भरतवंशोद्भव, धृतराष्ट्र, गुडाकेशेन गुडाका निद्रा तस्या ईशेन विजयिना, सर्वदा सावधानेनेति भावः। अर्जुनेन एवं पूर्वोक्त-प्रकारेण उक्तो हृषीकेशः सर्वान्तर्यामी सर्वेन्द्रियप्रवर्तको भगवान् श्रीकृष्णः। उभयोर्द्वयोः सेनयोर्मध्ये भीष्मद्रोणप्रमुखतः भीष्मद्रोणयोः प्रमुखतः संमुखे 'आद्यादिभ्यउपसंख्यानम्' (का. वा.) इति सार्वविभक्तिकस्तसिः। सर्वेषां महीक्षिताञ्च राज्ञाञ्च प्रमुखतः सर्वेषाञ्चेतिचकारेण समासनिविष्टस्यापि प्रमुखतः शब्दस्य समासैकदेशस्य महीक्षितामित्यनेन संबन्धः। पृथग्नामग्राहं कीर्तनेन भीष्मद्रोणयोः प्राधान्यं सूचितम्। तत्रापि अभ्यर्हितञ्च' (पा. सू.) इति पूर्वनिपातेन भीष्मस्य प्राधान्यं सूचितम्। रथोत्तमम् रथेषु उत्तमस्तम्। अग्निना दत्तत्वाद् दिव्यत्वाद् हनूमताऽधिष्ठितत्वाच्च ध्वजे रथेषुश्रेष्ठं रथम्। स्थापयित्वा, स्थिरीकृत्यं उवाच उक्तवान्-पार्थ पृथाया अयम् पार्थस्तत्सम्बुद्धौ रूपम्। 'तस्येदम्' (पा. सू.) इत्यण्। 'तस्यापत्यम्' (पा. सू.) इत्यधिकारे 'अवृद्धाभ्यों नदीमानुषीभ्यः' (पा. सू.) इत्यण, तु न 'द्व्यचः' (पा. सू.) इति ढका परत्वाद्बाधस्य प्रसङ्गात्। एतान् मयाङ्गुल्या निर्दिश्यमानान् सम-वेतान् संगतान् कुरून्-कुरुर्नाम कश्चिद्राजा। कुरवो देशविशेषाश्च। कुरो राज्ञोऽपत्यानि पुमांसः कुरूणां जनपदानां राजानो वा कुरवः, तान्। जन-पदक्षत्रियवाचकात् कुरु शब्दात् अपत्ये राज्ञिवाऽर्थे 'कुरुनादिभ्योण्यः' (पा. सू.) इतिण्यः। तस्य 'तद्राजस्य बहुषुतेनैवाऽस्त्रियाम्' (पा. सू.) इति बहुत्वे लुक्। कौरवशब्दे तु नैषधशब्द इव शैषिकोऽण्। पश्य अवलोकय। अत्र हृषीकेशपार्थ कुरुशब्दैः सर्वेन्द्रियनियामकः परमात्मैव स्वबान्धवकौरवदर्शन-प्रेरणाव्याजेन पृथासम्बन्धिनोऽर्जुनस्य अन्तःकरणे पृथास्वरूपस्त्रीस्वभावभूतौ शोकमोहौ संसारबन्धकारणभूतौ तन्निवारणव्याजेन सकलाधिकारिलोको-द्धारकगीतोपनिषत्प्रकाशनफलायैव प्रवर्तयामासेति सूचितम् ॥२४-२५॥

अवतरणम्—ततः पार्थेन किं कृतम्? इत्यत आह तत्रेति।

तत्राऽपश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ।।२६।।
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।।२७।।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

अर्जुन उवाच—
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।।२८।।

---

व्याख्या—तत्र भगवता द्वयोः सेनयोर्मध्ये रथोत्तमस्य स्थापने कृते सति 'पार्थ, एतान् समवेतान् कुरून् पश्य' इति दर्शनस्य अनुज्ञायां कृतायां सत्याञ्च । पार्थः पृथापुत्रोऽर्जुनः उभयोरपि सेनयोः स्थितान्, पितॄन् पितृव्यान् भूरिश्रवः-प्रभृतीन् । अथ शब्दस्तथाशब्दपर्याय इत्यानन्दगिरिः । पितामहान् भीष्म-सोमदत्तादीन् । आचार्यान्–द्रोणकृपादीन् । मातुलान् शल्यशकुनिप्रभृतीन् । भ्रातॄन् दुर्योधनादीन् । पुत्रान् लक्ष्मणादीन्—पौत्रान् लक्ष्मणादीनां पुत्रान् । तथा सखीन् अश्वत्थामजयद्रथादीन् वयस्यान् । श्वशुरान् दुर्योधनादीनां पत्नीनां जनकान् । सुहृदो मित्राणि कृतवर्मभगदत्तादीन् । एव अपश्यत् । दृष्टवान् । एव शब्दाद् न बन्धुभ्योऽन्यान् दृष्टवानित्यर्थः । उभयोरपीत्यपिशब्दात् स्वकीयसेनायां स्थितान् बन्धूंस्तु मध्ये रथस्य स्थापनात् पूर्वम् दृष्टवाने-वासीत् । किन्त्वधुना परकीयसेनायामपि स्थितान् उक्तान् बन्धून् एव दृष्टवान् नान्यानित्यर्थः । सः पूर्वोक्तः । कौन्तेयः कुन्तेस्तन्नामकस्य क्षत्रियस्य अपत्यं स्त्री कुन्ती, 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' तस्य स्त्रियामवन्ति कुन्तिकुरुभ्यश्च' (पा० सू०) इति लुक् । "इतोमनुष्यजातेः' (पा० सू०) इति ङीप् । कुन्त्या अपत्यं कौन्तेयः, 'द्व्यचः इति ढक् । तान् उक्तान् पितृप्रपितामहाचार्य—मातुल-भ्रातापुत्रपौत्रसखिश्वशुरसुहृदः सर्वान् अशेषान् बन्धून् स्वजनान् अवस्थितान् युद्धार्थमुपस्थितान् समीक्ष्य दृष्ट्वा विचार्य (तदनन्तरमेव न तु ततः पूर्वम्) परया महत्या कृपया दयया आविष्टो व्याप्तः सन् विषीदन् विषादम् अनु-भवन् 'धातुसंबन्धे प्रत्ययाः' (पा० सू०) इति लट् । तस्य शत्रादेशः । इदम् अनन्तरं वक्ष्यमाणम् अब्रवीत् उवाच श्रीकृष्णमिति शेषः ।।२७।।

कृष्ण हे वासुदेव, युयुत्सुम् योद्धुम् इच्छुम् समुपस्थितम् संग्रामक्षेत्रं संप्राप्तम् इमं मयाङ्गुल्या निर्दिश्यमानम् स्वजनम् आत्मीयं पितृव्य पिता-

**सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥**
**गाण्डीवं स्तंसते हस्तात् त्वक्चैव परिदह्यते ।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥**
**निमित्तानि च पश्यामि विपरीतानि केशव ।**
**नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥**

---

महादिजनम् दृष्ट्वा ( स्थितस्य ) मम गात्राणि शरीराङ्गानि सीदन्ति-करचरणादीनि व्यथन्ते । मुखम् आननञ्च परिशुष्यति परितः शोषम् आप्नोति । वेपथुः कम्पश्च मे मम, शरीरे जायते भवति । रोमहर्षश्च रोमाञ्चश्च जायते । चकारबलाद् जायते' इत्येकस्याऽपि वेपथुश्चेत्य-त्रापि संबन्धः । हस्तात् करात्, गाण्डीवम् तन्नामकं मम प्रसिद्धं धनुः स्रंसते अधःपतति । महाभारते विराटपर्वणि गाण्डीवस्य परिचयः स्वयम् अर्जुनेनैव बृहन्नलारूपेण उत्तराय कुमाराय दत्तः–'यन्मां पूर्वमिहापृच्छः शत्रुसेनापहारिणम् । गाण्डीवमेतत्पार्थस्य लोकेषु विदितंधनुः ॥' (महा० विराट० ४३।१ ) इत्यादिना वाक्यकदम्बेन । त्वक् शरीरचर्म चैव परिदह्यते परितो दाहमाप्नोति । न च अवस्थातुं शरीरं वोढुमपि शक्नोमि पारयामि । तत्र कारणमाह—भ्रमतीव च मे मम मनः । चो हेतौ । यतो मम मनो भ्रमतीव घूर्णतीव ततोऽवस्थातुमपि न शक्नोमीत्यर्थः । दृष्ट्वेति क्त्वा प्रत्ययस्य 'समानकर्तृकयोः पूर्वकाले क्त्वा' (पा० सू०) इति विहितस्य साधुत्वाय ततः परं 'स्थितस्य' इति पदम् अध्याहार्यम् । 'स्वजनं दृष्ट्वा' इत्यर्जुनस्य तेषु स्वजनत्वाभिमानः सूचितः । तेषां दर्शनेन तद्विषयक-स्नेहस्याविर्भावादेव अर्जुनस्यायं विषादो न तु भयाद् इति सूचितम् ॥३०॥

अवतरणम्—एवं स्व-विषाद कार्याणि स्वगात्रसदनादीनि उक्त्वा स्वविषाद-कारणभूताम् स्वबुद्धिञ्च—युद्धाःरणे अनिष्टजनकत्वज्ञानरूपाम्–इष्टसाधन-त्वाभावज्ञान रूपाञ्च, सम्प्रत्याह— निमित्तानीति ।

व्याख्या—केशव, हे अभिरूपकेश । "अभिरूपाः केशाअस्य स केशवः । 'केशाद्वोऽन्यतरस्याम्' (पा. सू.) इति व प्रत्ययः प्रशंसायाम् । यद्वा कश्च अश्च ईशश्च त्रिमूर्त्तयः केशाः, ते यद्वशेन वर्तन्ते स केशवः । केशिवधाद्वा ।

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥

---

"यस्मात् त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात् केशव नाम्ना त्वं लोके ख्यातो भविष्यसि" इति विष्णुपुराणे (५।१६।२३) श्रीकृष्णं प्रति नारदवचनम् । पृषोदरादित्वाच्छब्दसाधुत्वकल्पना ।" इति भगवान् शङ्कराचार्यो विष्णुसहस्रनाम भाष्ये (१६) श्लोके । "केशसञ्ज्ञिताः सूर्यादिसङ्क्रान्ता अंशवः । तद्वत्तया केशवः । 'अंशवो ये प्रकाशन्ते मम ते केशसञ्ज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ॥' (शान्ति० ३४१४८/४८) इति महाभारते । ब्रह्मविष्णुशिवाख्याः शक्तयः केशसञ्ज्ञिताः । तद्वत्तया वा केशवः । 'त्रयः केशिनः, इति श्रुतेः । मत्केशौ वसुधातले' (विष्णुपु० ५/१/६१) इति केशशब्दः शक्तिपर्यायत्वेन प्रयुक्तः 'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवांशसंभूतौ तस्मात् केशवनामवान् ॥' (३'८८/४८) इति हरिवंशे ।" इति च भगवान् शङ्कराचार्यस्तत्रैव (८२ तमे श्लोके) । निमित्तानि शकुनानि च विपरीतानि प्रतिकूलानि-वामाङ्गस्फुरणादीनि पश्यामि । यद्वा निमित्तानि युद्धस्य फलानि च विपरीतानि अनिष्टानि पश्यामीत्यर्थः । आहवे संग्रामे स्वजनं पितृव्यपितामहाचार्यादि हत्वा मारयित्वा श्रेयः कल्याणं न अनुपश्यामि । अनु युद्धात्पश्चाद् जनिष्यमाणं न च पश्यामि । ननु विजयराज्यादि कल्याणं स्यादेव ? इत्यत आह न काङ्क्षे इत्यादि । कृष्ण, हे सच्चिदानन्द ? यथोक्तं विष्णुसहस्रनामभाष्ये भगवता शङ्कराचार्येण "कृषिर्भूवाचकः शब्दो णश्चनिर्वृतिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥ (महा० उद्योग ७०/५) इति व्यासवचनात् सच्चिदानन्दात्मकः कृष्णः ।" इति । विजयं पराऽभिभवं, न काङ्क्षे नेच्छामि । राज्यं सुखानि च न काङ्क्षे । गोविन्द, हे गुहागतनष्टधरणिप्रापक "नष्टां वै धरणीं पूर्वम् अविन्दं यद् गुहागताम् । गोविन्द इति तेनाऽहं देवैर्वाग्भिरभिष्टुतः॥ (महा०शान्ति० ३४२/७०) इति मोक्षधर्मवचनाद् गोविन्दः ।" इति विष्णुसहस्रनामभाष्ये भगवान् शङ्कराचार्यः । हे वाणीप्राप्तिप्रयोजक हे गवामिन्द्र "अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् । (हरि.२/१९/४५) इति 'गौरेषा तु यतोवाणी तां च विन्दयते भवान् गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् ॥ 'इति च (३/८८/५०) हरिवंशे ।" इति च त्रयस्त्रिंशत्तमे श्लोके-

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।।३३।।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।।३४।।

---

विष्णुसहस्रनामभाष्ये स एव भगवान् शङ्कराचार्यः । हे वेदान्तवाणीवेद्य, "गोभि र्वाणीभि र्विन्दते, वेत्ति वेदान्तवाक्यैरिति वा गोविन्दः । गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः । 'इति श्रीविष्णुतिलके" इति च भगवान् शङ्कराचार्यस्तत्रैव एकसप्ततितमे श्लोके । नोऽस्माकम् । राज्येन किम् ? न किमपि साध्यमित्यर्थः । भोगैः भोगा विषयानुभवास्तैः, किम् ? न किमपि प्रयोजनम् अस्माकमित्यनुवर्तते । जीवितेन वा किम् ? न किमपि फलम् । इह सर्वत्र आक्षेपवाची किं शब्दो न प्रश्नवाची । राज्यादीनां वैयर्थ्ये अन्यदपि कारणमाह-येषामित्यादि । येषाम् आचार्यादीनाम् अर्थे प्रयोजने राज्यं भोगाः सुखानि च नः काङ्क्षितम् । भोगा विषयानुभवाः । सुखानि विषयास्वादा इति विवेकः । त इमे आचार्यादयो वक्ष्यमाणाः प्राणान् प्राणाशाम्, धनानि धनाशां च त्यक्त्वा युद्धे अवस्थिता उपस्थिताः सन्ति । केचन प्राणत्यागेऽपि प्राप्ते धनं न त्यजन्ति । अपरे धनत्यागेऽपि प्राप्ते प्राणान् न जिहासन्ति । अतस्तदुभयोपादानम् ।।३९-३३।।

अवतरणम्—एतेन स्वस्य विषयेभ्यो वैराग्येऽपि स्वकीयानां लाभाय युद्धं कार्यमित्यपास्तम् के इमे प्राणान् धनानि च त्यक्त्वा युद्धेऽवस्थिताः ? येषामर्थे न काङ्क्षितं राज्यादित्यत आह --आचार्या इति ।

व्याख्या—आचार्या द्रोणकृपादयः । पितरः पितृव्या भूरिश्रवःप्रभृतयः । पुत्रा दुर्योधनादीनां लक्ष्मणादयः । पितामहाः भीष्मसोमदत्तादयः । मातुलाः शल्यशकुनिप्रभृतयः । श्वशुरा दुर्योधनादिपत्नीनां जनकाः पौत्रा लक्ष्मणादीनां पुत्राः । श्याला दुर्योधनादिपत्नीनां भ्रातरः । तथा संबन्धिनः इतरे अश्वत्थामजयद्रथकृतवर्मभगदत्तादयः । अत्र भ्रातृभूतानां दुर्योधनादीनां ग्रहणं न कृतम् तैः सह साक्षाद् विरोधात् । न तु तत्पुत्रादिभिः सह अर्जुनस्य विरोधआसीदित्याशयः ।।३४।।

अवतरणम—ननु यदि कृपया त्वम् एतान् न हंसि तर्हि एत एव त्वां निःसपत्नराज्यलोभेन हन्युः । अतस्त्वमेव एतान् हत्वा राज्यं भुङ्क्ष्वेतिचेत् तत्राह—एतान् इति ।

एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किनु महीकृते ॥३५॥

निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६॥

---

व्याख्या—एतान् धार्तराष्ट्रान् धृतराष्ट्रसम्बन्धिनः, घ्नतोऽपि घातं कुर्वतोऽपि त्रैलोक्यराज्यस्यापि हेतो र्हन्तुं नेच्छामि । किं नु महीकृते पृथ्वीमात्रकृते हन्तुं नेच्छामीति किं वक्तव्यम् ? मधुसूदन हे मधुनामकदैत्यविनाशन, "मधुनामानमसुरं सूदितवानितिमधुसूदनः" इति विष्णुसहस्रनामशाङ्करभाष्ये । जनार्दन, हे दुर्जनहिंसक, हे दुर्जननरकगतिप्रयोजक, हे भक्तजनपुरुषार्थप्रदायक, "जनान् दुर्जनान् अर्दयति हिनस्ति नरकादीन् गमयतीति वा जनार्दनः । जनैः पुरुषार्थम् अभ्युदय निःश्रेयसलक्षणम् अर्द्यते याच्यते इति वा जनार्दनः" इति विष्णुसहस्रनामशाङ्करभाष्ये । 'अर्द हिंसायाम्' 'अर्द गतौ याचने च' इति धातुद्वयमत्र । धार्तराष्ट्रान् धृतराष्ट्रस्य पक्षवर्तिनो भीष्मद्रोणकर्णदुर्योधनादीन् निहत्य मारयित्वा (स्थितानाम्) नोऽस्माकं का प्रीतिः स्याद् न कापि प्रीतिः स्यादित्यर्थः । प्रत्युत एषां हननस्य फलं प्रीतेः प्रतिकूलमेव नः स्यादित्याह पापमेवाश्रयेदित्यादि । एतान् धार्तराष्ट्रान् आततायिनः, आततायिनोऽपीत्यर्थः सामर्थ्यात । हत्वा (स्थितान्) अस्मान् पापम् एव आश्रयेत् आश्रित्य तिष्ठेत् । एवकारेण न किञ्चिच्छ्रेयो न च काचित्प्रीतिरस्मानाश्रयेदित्यर्थः । आततायिलक्षणम् । वसिष्ठस्मृतावुक्तम् —'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते ह्याततायिनः । (व० स्मृ० ३/३/९) इति । एषां दुर्योधनादीनां सर्वप्रकारैराततायित्वमिति स्पष्टं महाभारते । ननु आततायिवधे कथं पापं स्यात् ? पुण्यपापयोः शास्त्रैकगम्यत्वात् 'आततायिनमायान्तं हन्यादेवाऽविचारयन् ।' 'नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' ( मनु. ८/३५१ ) इति स्मृतिशास्त्रेण तद्विधानाद् इतिचेत् —श्रीमद्भागवते समाहितम् —'वपनं द्रविणादानं स्थानान्निर्यापणं तथा । एष हि ब्रह्मबन्धूनां वधो नाऽन्योऽस्ति दैहिकः ॥ (१।७।५७) इति । तथाहि द्रोणाचार्यस्य ब्राह्मणस्य दैहिकवधं विना युद्धविश्रान्तेर -संभवात्तस्य दैहिकवधे तु पापस्यावश्यं निष्पत्तिरिति । राज्ञो दुर्योधनस्य आततायित्वेतदनुसारिणां द्रोणादीनामपि आततायित्वं सिध्यतीत्याशयः । किञ्च अर्जुन-

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥

---

स्यायं विचारः पूर्वपक्ष एव न सिद्धान्तपक्षो मोहमूलकत्वादित्यलं तत्र शास्त्रसम्मतेरन्वेषणेनेति सुधियो विभावयन्तु ॥३५-३६॥

अवतरणम्—'दृष्ट्वेमं स्वजनं कृष्ण' इत्यादि यदुक्तं तदुपसंहरति—तस्मादिति ।

व्याख्या—तस्मात् 'दृष्ट्वेमं स्वजनं कृष्णे' त्यारभ्य 'पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः' इत्यन्तेन उक्ताद् हेतोः स्वबान्धवान् स्वबन्धून् धार्तराष्ट्रान् धृतराष्ट्रस्य संबन्धिनो दुर्योधनभीष्मद्रोणकर्णादीन् हन्तुं मारयितुं वयं न अर्हा न योग्याः स्मः । सिंहावलोकनन्यायेन पुनः समर्थयते स्वजनं हीति । हि यतः स्वजनं स्वबान्धवान् हत्वा माधव हे श्रीपते, वयं कथं सुखिनः स्याम ? न कथञ्चिदित्यर्थः । "मायाः श्रियो धवः पतिर्माधवः मधुविद्याऽवबोध्यत्वाद्वा माधवः । मौनाद् ध्यानाच्च योगाच्च विद्धि भारत माधवम् ? (महा. उद्योग.-७०/४) इति व्यासवचनाद्वा माधवः" "माया विद्यायाः पति र्माधवः ।' मा विद्या च हरेः प्रोक्ता तस्या ईशोयतो भवान् । तस्मान्माधवनामासि धवः स्वामीतिशब्दितः । 'इति हरिवंशे (३/८८/४९)" "मधुकुले जातत्वाद्माधवः" इति विष्णुसहस्रनामशाङ्करभाष्ये । हे मधुविद्याऽवबोध्य, हे मौनध्यानयोगाऽनुष्ठानसाक्षात्करणीय, हे विद्यापते, ॥६७॥

अवतरणम्—ननु यथा दुर्योधनादयः प्रवर्तन्ते तथा त्वमपि युद्धकर्मणि प्रवर्तस्वेति ? तत्राह—यद्यपीति ।

व्याख्या—जनार्दन, हे भक्तजनपुरुषार्थप्रदायक, यद्यपि लोभोपहतचतेसः लोभेन उपहतं विवेकभ्रष्टं चेतो येषांते । एते धार्तराष्ट्राः । कुलक्षयकृतं कुलस्य स्ववंशस्य क्षयेण नाशेन कृतं जनितं दोषं वक्ष्यमाणं न पश्यन्ति न विचारयन्ति । मित्रद्रोहे मित्राणां द्रोहे वैरे पातकं पापं च न पश्यन्तीति संबन्धः । (तथापि) अस्माभिः अलोभोपहतचेतोभिः कुलक्षयकृतदोषं प्रकर्षेण पश्यद्भिः अस्मात्

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥
अधर्माऽभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥४१॥

---

कुलक्षयकृतदोपजनकाद् मित्रद्रोहे जायमानाच्च पापाद् निवर्तितुं पृथग्, भवितुं कथं न ज्ञेयम् ? अवश्यं ज्ञेयम् ज्ञातव्यम् इत्यर्थः ॥३८-३९॥

अवतरणम्—कुलक्षयकृता दोषाः के ? इत्यत आह—कुलेति ।

व्याख्या—कृष्ण हे सच्चिदानन्द, कुलस्य वंशस्य क्षये नाशे सति सनातनाः सना सर्वदाभवा परम्परा प्राप्ताः शाश्वताः कुलधर्माः कुलस्य वंशस्य धर्माः शास्त्रविहितानि अग्निहोत्रदर्शपौर्णमासयागसन्ध्योपासनादीनि कर्माणि प्रणश्यन्ति प्रकर्षेण नश्यन्ति अनुष्ठातॄणाम् अभावात् इतिशेषः । धर्मेनष्टे जातौ एकवचनाद् धर्मेषु नष्टेषु इत्यर्थः । कृत्स्नं सम्पूर्ण कुलं वंशम् अवशिष्टं नारी-बालकादिरूपम् अधर्मः पापम् अभिभवति वशीकरोति । अधर्माऽभिभवात् अधर्मेण वशीकारात् कुलस्त्रियः कुलस्य वंशस्य स्त्रियो नार्यः प्रदुष्यन्ति प्रकर्षेण दुष्यन्ति दोषं व्यभिचारैः जारैः सह मैथुनं कुर्वन्ति । वार्ष्णेय हे वृष्णिवंशप्रसूत, स्त्रीषु नारीषु दुष्टासु व्यभिचारिणीषु (जातासु) वर्णसंकरः वर्णा ब्राह्मण-क्षत्रियवैश्यशूद्राः, तेषु अन्यतमयोर्द्वयो वर्णयोः संकरो मिश्रणं जायते । संकरो-वर्णद्वयमिश्रितपुत्रादिः 'कुलघ्नानाम् अवशिष्टानां कुलघातिनाम् कुलस्य च अवशिष्टस्य नारीबालकादिरूपस्य नरकाय एव नरकगमनप्रयोजक एव भवतीतिशेषः । नरकास्तु 'तामिस्त्रमन्धतामिस्त्रं महारौरवरौरवौ' इत्यादिना मनुस्मृतौ परिगणिताः । न केवलं कुलघ्नानां कुलस्य चावशिष्टस्य नरक-गमनाय भवति अपि तु तत्पितॄणामपि नरकगमनाय भवतीत्याह–पतन्तीत्यादि। एषाम् अवशिष्टानां कुलघ्नानाम् अवशिष्टस्य कुलस्य च पितरोहि पितरोऽपि पितृलोकगताः लुप्तपिण्डोदकक्रियाः पिण्डश्च उदकञ्च तयोः क्रिया लुप्तायेषां ते सन्तः । पिण्डोदकदानकर्तॄणाम् अभावात् संकरदत्तपिण्डाद्यग्रहणाच्चेत्या-शयः । पतन्ति पितृलोकाद् नरकायैवेति तन्त्रेण अत्रापि संबध्यते । अत्र नीलकण्ठकृतव्याख्यायाम्—"हि शब्दो वैदिकीं प्रसिद्धिं द्योतयति । वैदिक-

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥

---

प्रसिध्या बीजपतेरेव पिण्डादिप्राप्तिर्न क्षेत्रपतेरिति लुप्तपिण्डोदकक्रियत्वाद-वश्यं पितॄणां पातो भवति । क्षेत्रजपुत्रस्मृतिस्तु इहलोके वंशस्थापनमात्रपरा । नतु तेन क्षेत्रपतेः कश्चिदामुष्मिक उपकारोऽस्ति श्रुतिविरोधात् ।" इत्युक्तम् । अत्र वैदिकी प्रसिद्धिरपि पूर्वोक्ता दर्शिता नीलकण्ठेन – "सा हि 'न शेपो अग्ने अन्यजातमस्ति' इति श्रुतिः । अन्यस्माज्जातं शेपोऽपत्यं नास्तीति तदर्थः 'अन्योदर्यो मनसा पि न मन्तव्यो ममायं पुत्रः 'इति यास्कवचनाच्च' ये यजामहे' इतिशास्त्रात् ये वयं स्मस्तेवयं यजामहेइत्यर्थकाद्दृश्यमानस्य पित्रादेः संशयग्रस्तत्वाद् अयं मम पितै वेति निश्चयस्य दुःसाध्यत्वात् । मन्त्रश्च 'योऽहमस्मि स सन्यजे' । ब्राह्मणे अर्थवादश्च 'न चैतद् विद्मो ब्राह्मणाः स्मो वयम् अब्राह्मणावा' । इति ।।' इति।। ४०-४२।।

**अवतरणम्** अधुना कुलक्षयकृतदोषानुपसंहरति – दोषैरिति ।

**व्याख्या**—जनार्दन, हे दुर्जनविनाशन, कुलघ्नानां स्वकुलघातकानाम् वर्णसंकरकारकैः वर्णयोः संकरः कारकः प्रयोजको येषां तैः वर्णयोः संकरस्य कारकैश्चेतितन्त्रेण समासद्वयम् । वर्णसंकरप्रयोज्यैः वर्णसंकरप्रयोजकैश्चैत्यर्थः । एतैः पूर्वोक्तैः सनातनकुलधर्मप्रणाशाऽधर्माऽभिभव-स्त्रीव्यभिचार-पिण्डोदक-क्रियालोप-पितृनरकपात-स्वनरकपातात्मकैः, दोषैः, जातिधर्माः स्वकुलघ्नाना-मेव अवशिष्टानां क्षत्रियत्वादिजातिनिबन्धना वर्णधर्माः शाश्वताः परम्परा-प्राप्ता नित्याः कुलधर्माश्च वंशधर्माश्च चकाराद् आश्रमधर्माश्च उत्साद्यन्ते विनाश्यन्ते । कुलघ्नानामित्यस्य दोषैरित्यत्र जातिधर्मा इत्यादौ च संबन्धः । उत्सन्नकुलधर्माणाम् उत्सन्ना विनष्टाः कुलधर्मा उपलक्षणतया जात्याश्रम-कुलधर्मा येषां तेषाम् । मनुष्याणाम् मनोर्जातिमन्तो मनुष्यास्तेषाम् 'मनोर्जा-तावज्यतौषुक् च' (पा. सू.) इतियत्षुकौ । नरके रौरवादौ, नियतं निश्चितं,

अहो वत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

संजय उवाच—

---

वासो भवति प्रेतत्वनरकवासविमुक्तिकारणपिण्डोदकादिक्रियाणां नाशादिति भावः । इति अनुशुश्रुम शास्त्रादभियुक्तानां मुखाच्च वयं श्रुतवन्तः । अनुपूर्वकाद् 'श्रु श्रवणे' इत्यस्माल्लिटि उत्तमपुरुषबहुवचने रूपमिदम् ॥४३-४४॥

अवतरणम्—इदानीं स्वजनहननव्यवसायेनापि संतप्यमान आह अहो वतेति ।

व्याख्या—अहो वतेति दारुणखेदसूचकम् अव्ययद्वयम् । वयं महत्पापं कर्तुं व्यवसिताः सयत्नाः स्मः । यद्राज्यसुखलोभेन राज्यस्य सुखं तस्य लोभेन स्वजनं पितृव्यपितामहादिं हन्तुम् उद्यता उद्युक्ताः स्मः । तद् महत्पापं कर्तुं व्यवसिता वयम् इति संबन्धः । उत्तरवाक्यस्थेन यच्छब्देन पूर्ववाक्यस्थस्य तच्छब्दस्याध्याहारः प्रसिद्धः ॥४५॥

अवतरणम्—एतन्महापापापेक्षया मृत्युमेव वरं मन्वान आह—यदीति ।

व्याख्या—यदीति संभावनाद्योतकम् । शस्त्रपाणयः शस्त्रं पाणौ येषां ते । धार्तराष्ट्रा दुर्योधनादयः । अशस्त्रम् अविद्यमानं शस्त्रं यस्यतम् । अप्रतीकारं प्रतीकाररहितम् ( तूष्णीमुपविष्टम् ) माम् अर्जुनं रणे संग्रामे हन्युस्तद् हननं मे मम क्षेमतरं हिततरं भवेत् स्यात् । पूर्वोक्तमहापापाऽनिष्पत्तेरित्याशयः । अशस्त्रम् अप्रतीकारम् इति विशेषणाभ्याम् सप्रतीकारत्वे सशस्त्रत्वे च अर्जुनोऽयम् अजेय एव अस्ति इति सूचितम् ॥४६॥

अवतरणम्—ततः किं कृतम् अर्जुनेन ? इत्यपेक्षायाम् यत् संजयो धृतराष्ट्रमाह तदनुवदितुं वैशम्पायनो जनमेजयमाह— संजय उवाचेति ।

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

ॐ तत्सदितिश्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥१॥

---

व्याख्या—एवम् पूर्वोक्तप्रकारेण उक्त्वा कथयित्वा अर्जुनः संख्ये युद्धक्षेत्रे शोकसंविग्नमानसः सन् 'शोकग्रहणं मोहस्यापि उपलक्षणार्थम्' इत्यानन्द-गिरिः। अतः शोकमोहाभ्यां संविग्नं प्रकम्पितं मानसं यस्य सः सन्। सशरं शरेण सहितं चापं धनुः, सबाणं धनुः, विसृज्य त्यक्त्वा रथोपस्थे रथस्य उपस्थे पश्चाद्भागे उपाविशत् उपविवेश ॥४७॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रसंवादि-तायां शाङ्करभाष्यानुसारिण्यां प्रथमोऽध्यायः ॥१॥

श्रीकृष्णार्पणमस्तु ॥१॥



## ॥ अथ गीतावंश्यां द्वितीयोऽध्यायः ॥

अवतरणम्—ततः परं किम् अभूदित्यपेक्षायाम् वैशम्पायन आह—

संजय उवाच—

तं तथा कृपयाविष्टम् अश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥

श्रीभगवान् उवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥२॥

---

व्याख्या—मधुसूदनः मधुर्नाम दैत्यविशेषः । सूदयतीतिसूदनः मधोः सूदनः मधुसूदनः श्रीकृष्णः श्रीविष्णुः । तथा तेन प्रकारेण कृपया दयया आविष्टं व्याप्तम् अश्रुपूर्णाकुलेक्षणम् अश्रुणा पूर्णे आकुले ईक्षणे नयने यस्य तम् । विषीदन्तं विषादम् दुःखम् अनुभवन्तं तम् अर्जुनम्, इदम् अनन्तरवक्ष्यमाणम् वाक्यं वचनम् उवाच जगाद । मधुसूदन इति स्वयं दुर्जननिग्रहकृद्, भगवान् अर्जुनं प्रत्यपि दुर्जननिग्रहार्थमेव वक्ष्यतीति सूचितम् ॥१॥

अवतरणम्—कोऽयं मधुसूदनः ? किञ्चोवाच ? इत्यत आह—श्रीभगवान् इति ।

व्याख्या—श्रीभगवान् श्रीर्लक्ष्मीस्तत्सहितो भगवान् श्रीभगवान् शाकपार्थिवादेराकृतिगणत्वाद् मध्यमपदलोपी समासः । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ( विष्णु० ६।५।७४) सोऽस्यास्तीति भगवान् । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ (६।५।७८) इति विष्णुपुराणे ।" इति विष्णुसहस्रनामशाङ्करभाष्ये । समग्रम् ऐश्वर्यादिषट्कम् यस्मिन् नित्यमस्ति नित्ययोगे मतुप् । स भगवान् उवाच । परमात्माऽयं मधुसूदन इत्यर्थः । एतेन नित्यैश्वर्यज्ञानादिमानयं मधुसूदनो ज्ञानोपदेशेन अर्जुनस्य शोकमोहौ निवार्य तं दुर्जननिग्रहे लोकसंग्रहचिकीर्षया नियोक्ष्यतीति सूचितम् । अर्जुन हे शूरशिरोमणे ? अनार्यजुष्टम् न आर्योऽनार्यस्तेन जुष्टम् सेवितम्

**क्लैव्यं मा स्म गमः पार्थ नैतत् त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ।।३।।**

---

अशिष्टसेवितम् । अस्वर्ग्यम् स्वर्गस्य निमित्तं स्वर्ग्यम् 'गोद्यचः' (पा० सू०) इति यत् । न स्वर्ग्यम् अस्वर्ग्यम्, स्वर्गजनकविरुद्धम् नरकजनकमित्यर्थः अकीर्तिकरम् अयशस्करम् । इदं कश्मलम् 'अयं मोहः' इति श्रीधरस्वामी । 'अयं शोकः' इति रामानुजाचार्यः । 'कश्मलं मूर्च्छा' इत्यमरः । मूर्च्छाया मोह-रूपतया 'अयं मोहः' इति वयमपि । विषमे संकटकाले त्वा त्वां कुतः कस्मात् समुपस्थितम् प्राप्तम् ? इदं युद्धपराङ्मुखत्वरूपं कश्मलं तव शूरशिरोमणेर्न योग्यं निर्हेतुकञ्च । यस्तु त्वयाऽत्र हेतुरुक्तः स हेत्वाभास एव न वस्तुतो हेतुरिति भावः ।।२।।

अवतरणम्—एवं श्रुत्वाऽपि कश्मलम् अत्यजन्तं तं पुनराह श्रीभगवान्–क्लैव्यमिति ।

व्याख्या—पार्थ, हे पृथापुत्र, पृथा मम पितृष्वसा । अतो मम सम्बन्धिन-स्तव ममेव क्लैव्यं नोचितमिति संबोधनेन सूचयति । क्लैव्यम् क्लीवम् नपुं-सकम् । तस्यभावः कर्मवा क्लैव्यम् । 'गुणवचन ब्राह्मणादिभ्यः कर्मणिच' (पा. सू.) इति ष्यञ् । तन्त्रेणेह द्वयं विवक्षितम् । क्लीवस्य भावः स्वभावः युद्धकाले उपस्थिते गात्रसादः, मुखपरिशोषः शरीरकम्पः, रोमहर्षः, मनोभ्र-मणम्, अवस्थानाऽशक्तिः अश्रुपूर्णाकुलेक्षणादिश्चेति । क्लीवस्य कर्म-युद्धात्प-राङ्मुखभवनम् सशरचापविसर्जनादि च । तद् । मास्म गमः त्वं मास्म प्रापः । एतत् क्लैव्यम्, त्वयि अर्जुने व्यञ्जनया साक्षान्महेश्वरेणापि सह कृतयुद्धे शूरशिरोमणौ प्रख्यातवीर्याऽतिशये, न उपपद्यते न युज्यते । परन्तप, हे शत्रुतापन, परं तापयतीति विग्रहे 'द्विषत्परयोस्तापेः' (पा. सू.) इति खच्-प्रत्ययः । एतेन 'लाक्षागृहानलविषदानादिदारुणकर्मभि र्धार्तराष्ट्रास्तव शत्रव एव संजाता न स्वजनाः सन्ति. तान् परान् बुद्धवा तास्तापयितुं युद्धं कुरु' इति भगवतस्तात्पर्यं सूचितम् । क्षुद्रम् अकीर्त्यधर्मादितुच्छकार्यकरत्वात् तुच्छम् । हृदयदौर्बल्यम् मनोनिर्बलत्वम्, त्यक्त्वा परित्यज्य वस्तुतत्त्व विवेकेने-तिशेषः । उत्तिष्ठ युद्धार्थम इतिशेषः । उक्तं गात्रसादादिरूपं क्लैव्यं तव न शारीरशक्त्यभावकृतम्, अपि तु स्वधर्मभूते युद्धे अधर्मत्वाऽभिमानात् अनश्वरे भीष्मद्रोणादौ नश्वरत्वाऽभिमानाच्च भवतीति तव अविवेककृतमेव । अत ईदृशं मनोदौर्बल्यं त्वया तत्त्वविवेकेन सुत्यजम् । अतस्तत्परित्यज्य युद्धार्थम् उत्तिष्ठेति भगवतोऽभिप्रायः ।।३।।

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥४॥
गुरूनहत्वा हि महानुभावान्-
श्रेयो भोक्तुं भैक्षमपीहलोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

---

अवतरणम्—भगवतः पूर्वोक्तं भावं किञ्चिद् गूढत्वाद् अर्जुनः शोकमाहाऽभिभूतविवेकविज्ञानतया अनवधार्य स्वस्मिन् कृतयो र्हृदयदौर्बल्यक्लीवत्वारोपयोः समाधानस्याऽभिप्रायेण भगवन्तं श्रीकृष्णं यदवोचत तद् धृतराष्ट्रं बोधयितुं सञ्जय आह—अर्जुन उवाचेति।

व्याख्या—मधुसूदन,हे मधुनामकदैत्यविनाशन, अरिसूदन, हे शत्रुनाशन, अहं शिष्टोऽर्जुनः संख्ये संग्रामे पूजार्हौ। 'पूजाया योग्यौ भीष्मं पितामहम् द्रोणञ्च आचार्यम् कथं केन प्रकारेण इषुभिः शरैः प्रतियोत्स्यामि प्रति युद्धं करिष्यामि ? न कथमपीत्यर्थः। योत्स्यामीति परस्मैपदम् आर्षम्। यदा पूजार्हेण सह वाचापि क्रीडास्थानेऽपि युद्धं न करणीयम् 'गुरुं हुकृत्य त्वंकृत्य' इत्यादिना निषिद्धत्वात्तदा इषुभिस्तत्रापि संग्रामे कथङ्कारं युद्धं कर्तव्यंस्यात् ? महदनुचितं तद्। नहि भीष्मद्रोणौ अपुरस्कृत्य युद्धक्षेत्रे, दुर्योधनादयः स्थास्यन्ति। अतो युद्धस्य अधर्मत्वाद् अहं ततः पराङ्मुखोऽस्मि न क्लीवत्वाद् न वा हृदयदौर्बल्यादित्याशयः। मधुसूदनारिसूदनेति पदाभ्यां 'यथा भवान् दैत्यस्यैव सूदनं कृतवान् न तु पूज्यस्य। किञ्च पूज्यस्याऽपि कंसस्य अरित्वादेव सूदनं कृतवान् न तु अनरेस्तथैव अहमपि अनरिपूज्ययोर्हननार्थं न प्रेरणीयो भवतेति सूचितम् ॥४॥

अवतरणम्—ननु भीष्मद्रोणयो विघाताऽभावे दुर्योधनस्य राजत्वे तव देहयात्रापि न भवितुमर्हति। किञ्च यदि त्वं तान् न जयेस्तर्हि त एव त्वां जयेयुरिति चेत् तत्राह—गुरूनिति।

व्याख्या—महानुभावान् महान् पूज्यः पूजितो वा अनुभावः श्रुताध्ययनतपस्याचारादिनिबन्धनः प्रभावो येषां तान्। एतेन 'गुरोरप्यवलिप्तस्य कार्याऽकार्यमजानतः। उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥' (महा०

न चैतद् विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

---

इति परित्यागस्मृतेरविषयान् इति सूचितम् । गुरून् भीष्मद्रोणादीन्, अहत्वा भैक्षम्, भिक्षणंभिक्षा भावेअः । भिक्षाया इदं भैक्षम् भिक्षान्नम् इत्यर्थः । यद्वा भिक्ष्यते इति भिक्षा भिक्ष्यं वस्तु, कर्मणि अः भिक्षाणां समूहो भैक्षम् । अपि भोक्तुं श्रेयःप्रशस्यम् । स्वार्थे ईयसुन् 'अल्पाच्तरम्' इति वत् । हि शब्दो भैक्षभोजनस्य प्रशस्यत्वे हेतोः प्रसिद्धि द्योतयति । गुरुवधप्रयोज्य महापातकाऽसम्पर्कादिति भावः । अपि शब्दात् तान् हत्वा राज्यमपि भोक्तुं न श्रेय इत्यर्थः । महापातकसम्पर्कादिति भावः । इहलोके मृत्युलोके सर्वस्यैव पदार्थस्य क्षणभङ्गुरत्वात् कञ्चित्क्षणं भैक्षमेव भुक्त्वा जीवनयापनं श्रेयोऽस्ति। महापापेन परलोके अनन्तकालं दुःखं माभूदिति सूचितम् । यद्वा इहलोके अस्मिन् मनुष्य शरीरे इत्यर्थः । मनुष्यदेहस्य बहुप्राक्तनपुण्यलभ्यत्वाद् मोक्षैकफलकत्वाच्च विषयभोगे तस्य व्ययो नैव कार्य इत्यभिप्रायः । गुरूणां हननेन प्राप्तो भोगस्तु अतीव जुगुप्सित इत्याह —हत्वार्थकामांस्तु इत्यादि । गुरून् हत्वा तु इहैव जन्मनि इहैव लोके वा, न तु जन्मान्तरे परलोके वा । रुधिरप्रदिग्धान् रुधिरेण रक्तेन प्रदिग्धान् प्रलिप्तान् लक्षणया रुधिरप्रलिप्तानिव अतीव जुगुप्सितान् । अर्थकामान्, अर्थाश्च कामाश्च तान् । धनरूपान् इन्द्रियतर्पणरूपांश्च । भोगान् भुज्यन्त इति भोगा विषयास्तान् । भुञ्जीय अश्नीयाम् आशङ्कायां शक्तौ वा लिङ् । 'सर्वं वाक्यं सावधारणम्' इति न्यायाद् अर्थकामान् एव भोगान् भुञ्जीय न तु धर्ममोक्षावपि भोगौ भुञ्जीयेत्यर्थः । अतो गुरुवधादिसाध्यान् भोगान् परित्यज्य भिक्षाशनमेव युक्तमिति भावः । अत्र श्रीधरस्वामी—"यद्वा अर्थकामानिति गुरूणां विशेषणम् । अथ तृष्णाकुलत्वाद् एते तावद् न निवर्तेरन् तस्मादेतद्वधः प्रसज्येतैवेत्यर्थः । तथा च युधिष्ठिरं प्रति भीष्मेणोक्तम् अर्थस्य पुरुषोदासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ।' इति ॥५॥

ननु विजयलाभार्थमेव युद्धं कर्तव्यम् इति चेत् तत्राह—न चैतदित्यादि । च किञ्च, यद् वा । जयेम, वयम् तान् अभिभवेम । यदि वा नोऽस्मान् ते

जयेयुः अभिभवेयुः। (एतयोर्मध्ये) कतरद—किम् अस्मत्कर्तृकं धार्तराष्ट्र-कर्मकं जयनम् ? किं वा धार्तराष्ट्रकर्तृकम् अस्मत्कर्मकं जयनम् नोऽस्मभ्यम्। गरीयो गुरु प्रशस्यं स्यात् ? पूर्वत्र लोकप्रसिद्धिः प्रशस्यताहेतुः। किन्तु युद्ध-करणे गुरुवधादिजन्यपापसम्पर्कभयम्। उत्तरत्र गुरुवधादिजन्य पापसम्पर्क-भिया युद्धाऽकरणे धार्तराष्ट्राणां जये सत्यपि पापाऽनिष्पत्तिः प्रशस्यताहेतुः किन्तुं लोकगर्हाभयम्। अतः कोटिद्वयस्य उत्थानात् सन्देहात् एतद् न विद्मो न निश्चिनुमो वयम्। इति व्याचक्षीत। किन्त्वत्र पक्षे एकादशे वक्ष्यमाणं भाष्यं न स्वारस्यं दधाति। तथाहि द्रोणञ्च भीष्मञ्च जयद्रथञ्च कर्णम्' इत्यादिश्लोके भाष्यम् "येषु येषु योधेषु अर्जुनस्याशङ्कासीत् तांस्तान् सर्वान् व्यपदिशति भगवान्-मया हतानिति" इति। तत्रैव च 'माव्य-थिष्ठाः' इति वाक्यं विवृण्वन् "तेभ्यो भयं माकार्षीर्युद्धयस्व जेतासि दुर्योधनप्रभृतीन् सकलान् शत्रून्।" इत्युक्तं भाष्ये तेन गम्यते यद् जयविषयेऽपि अर्जुनस्य संदेह आसीदिति। अतोऽत्र आनन्दगिरे-र्व्याख्या द्रष्टव्या श्रीधरस्वामिनः श्रीनीलकण्ठस्य च। अत्रानन्दगिरिः— क्षत्रियाणां स्वधर्मत्वाद् युद्धमेव श्रेयस्करम् इत्याशङ्क्याह—न चैतदिति। एतदपि न जानीमो भैक्षयुद्धयोः कतरन्नोऽस्माकं गरीयः श्रेष्ठम्। किं भैक्षं हिंसाशून्यत्वाद् उत युद्धं स्ववृत्तित्वादिति। संदिग्धा च जयस्थितिः। किं साम्यमेव उभयेषाम् ? यद्वा वयं जयेम अतिशयीमहि यदिवा नोऽस्मान् धार्त-राष्ट्रदुर्योधनादयो जयेयुः ?" इति। अत्रश्रीधरस्वामी—"किञ्च यद्यपि अधर्ममङ्गीकरिष्यामस्तथापि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायते इत्याह—न चेति। एतद् द्वयोर्मध्ये नोऽस्माकं कतरत् किं नाम गरीयोऽधिकतरं भविष्यतीति न विद्मः। तदेव द्वयं दर्शयति। यद्वा एतान् वयं जयेम जेष्यामः, यदि वा नोऽस्मान् एते जयेयुः जेष्यन्तीति।" इत्याह। अत्रनीलकण्ठः—"एवं तर्हि भैक्षमेव तव श्रेय इत्याशङ्क्याह—न चैतदिति यद्यपि अक्षत्रियस्य भैक्षम् एवेष्टम् तथापि नोऽस्माकं क्षत्रियाणां भैक्षराज्य-भोगयोर्मध्ये कतरद् गरीय इति वयं न विद्मः। ननूक्तं युद्धमेव गरीय इति ? तत्राह—यद्वेति। यदि वा वयं जयेम शत्रून् यदि वा नोऽस्मान् शत्रव एव जयेयुरिदमपि न विद्मः। अन्त्यपक्षे पुनर्मरणम् अप्रार्थितं भैक्षमेव वा आपद्येत इति भावः।" इत्याह। ननु मयि सहाये सति तव जय एव निश्चित इत्यतआह—यानेवेति। यानेव हत्वा न जिजीविषामः। जीवितुं नेच्छामस्त-एव धार्तराष्ट्राः धृतराष्ट्रसंबन्धिनो भीष्मद्रोणादयः प्रमुखे सेनाया अग्रभागे

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।

---

अवस्थिताः युद्धोदयोगेन स्थिताः। युद्धकरणे नूनं भीष्मद्रोणादीनां विनाशो भविष्यति। ततश्च तैर्विना जीवितुं नेच्छाम इति महान् अनर्थो भविष्यतीति जयोऽप्यस्माकं फलतः पराजय एव तस्माद् भैक्षाद्, युद्धस्य श्रेष्ठत्वं न सिद्धम् इत्यर्थः। इदञ्चात्र द्रष्टव्यम्—'कृपया परयाविष्टो विषीदन्' तं तथा कृपया-विष्टम्' इत्यादि प्रकरण पर्यालोचनयाऽर्जुनस्य युद्धकरणे स्वजननाशसम्भावनया स्वजनविषयकस्नेहादेव युद्धपराङ्मुखत्वं दृढतया प्रतीयते न तु युद्धकरणे जयपराजयोः सन्देहादपीति निश्चीयते तथापि युद्धे जयपराजययोः सन्देहस्य अतिस्वाभाविकतया आनुषङ्गिकरूपेण तस्य सन्देहोऽत्र प्रतिभाति न मुख्यतया। न च तदेवाश्रित्य युद्धपराङ्मुखत्वमिह तस्य गोचरीभवति। न च तद् विद्म इत्यत्र चकारोऽपि अन्वाचय द्योतकएव न समुच्चयद्योतक इत्यलम् ॥६॥

अवतरणम्—एवं युद्धं न कर्तव्यम् इति पुनः पुन विचारेणाऽपि क्षात्र-स्वभावात् प्रसिद्धशूरशिरोमणेरर्जुनस्य एकान्ततः कर्त्तव्यविषयकः सन्देहो न निवृत्तः। अत एव अष्टादशे भगवान् वक्ष्यति प्रकृतिस्त्वां नियोक्ष्यतीति (५९)। 'स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा। कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपितत्'(६०) इति च। अतः किं भैक्षं हिंसाशून्यत्वाद् मम कर्तव्यम्? उत युद्धं स्वधर्मत्वान्मम क्षत्रियस्य कर्तव्यम्? इत्येवं संदिहानोऽन्यतर कोटिकनिश्चयम् अपश्यन् विषादञ्च अनुभवन् आत्मानं धर्मसंमूढचेतसं मन्वानोऽर्जुनः शोकमोहाभ्याम् मुक्तये धर्मविज्ञानाय 'आचार्यवान् पुरुषोवेद' (छा०) इति श्रुतेः 'तरतिशोकम् आत्मविद्' (छा ) इतिश्रुतेश्च तद्विज्ञानार्थं गुरुमेवाऽभिगच्छेत् श्रोत्रियं ब्रह्मनिष्ठम्' इतिश्रुतेश्च श्री गुरुचरणाम्बुजोपसरणमेवोपायं निश्चित्य सम्प्रति जगद्गुरोः श्रीकृष्णस्य चरणाम्बुजं शिष्य-भावेन समाश्रयते—कार्पण्येति।

व्याख्या—कार्पण्यदोषोपहतस्वभावः कृपणोऽनात्मविद्—'यो वा एत-दक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः, (बृ.) इतिश्रुतेः, तस्य भावः कार्पण्यम् अनात्मवित्त्वम्, आत्मज्ञानाऽभाव इति यावत्। तत्कृतो दोषः

यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥

---

'एते धार्तराष्ट्रा मम स्वजनाः, तेषु हतेषु जीवितुं न इच्छामि' इत्यभिनिवेशलक्षणो ममतास्वरूपः । शाकपार्थिवादेराकृतिगणत्वात्समासः । कृतशब्दलोपश्च । तेन उपहतोऽभिभूतः स्वोभावो विद्याबुद्धिविवेकरूपो यस्य सः । अथवा कार्पण्यं दीनता—'एतान्, हत्वा कथं जीविष्यामि' इति बुद्धिरूपा । दोषो लक्षणया कुलक्षयकृतदोषज्ञानं गुर्वादिवधकृतदोषज्ञानं वा, तद् भयं वा, ताभ्याम् उपहतः स्वभावः शौर्यादिलक्षणो यस्य सः । (अतएव) धर्मसंमूढचेताः धर्मे स्वधर्मे संमूढं विवेकहीनतां गतं चेतो यस्य सः । अथवा धारयतीति धर्मः सर्वाधिष्ठानं परं ब्रह्म तदभिन्नम् आत्मतत्त्वम् । तत्र संमूढं चेतो यस्य सः । त्वां सर्वज्ञं लोकगुरुं पृच्छामि । निश्चितं श्रेय इति मुख्यकर्मणोऽनुषङ्गः । त्वामिति गौणकर्म, प्रच्छधातो द्विकर्मकत्वात् निश्चितं श्रेयो निर्णीतं श्रेयः । श्रेयो धर्मम् । अतो निश्चितं निर्णीतं श्रेयो धर्मो यत् स्यात् तत् श्रेयो मे मह्यं ब्रूहि व्यक्तं कथय । यद्वा निश्चितम् ऐकान्तिकम् आत्यन्तिकं च श्रेयो दुःखत्रयापघातकारणं मोक्षसाधनं ब्रह्मज्ञानम् । तन्मह्यं ब्रूहि । अपि च निश्चितम् अवश्यम् ब्रूहि । अपि च निश्चितं निःशेषेण चितं सविस्तरं प्रत्यक्षबोधात्मकफलोपधानपर्यन्तं यथा स्यात् तथा ब्रूहि इत्यर्थः । तन्त्रेण सर्वेऽर्थाः । ननु विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् । असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा' (मनु) इत्यादिस्मृत्या शिष्यायैव भक्ताय विद्या देया नान्यस्मै इति चेत्-तत्राह-शिष्यस्तेऽहमित्यादि । अहं ते तव शिष्योऽस्मि शासनयोग्योऽस्मि । त्वां लोकगुरुम् सर्वज्ञं प्रपन्नं शरणंप्राप्तं माम् अर्जुनं शाधि उपदिश । प्रार्थनायां लोट् । श्रीमद्भागवतेऽपि एवम्–'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः । यदृच्छयेहोपसृता यमाप्नुयुः स मुक्तिदो नः परमो गुरुर्भवान् ॥८।२४।४६ इति ॥७॥

अवतरणम् —ननु निःश्रेयसमेव कुतः पृच्छसि ? ऐहिकपारलौकिकसुखसाधनं किमिति न पृच्छसि । अपि च 'क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ' इत्यनेन वाक्येन 'युद्धं तव धर्मः' इति मयोक्तमेव किमर्थं पुनः पृच्छसि ? किञ्च त्वं स्वयमेव निश्चितं श्रेयो विचारयेतिचेत् तत्राह—नहिति ।

न हि प्रपश्यामि ममापनुद्याद्
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥८॥

संजय उवाच--
एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥

---

व्याख्या—भूमौ इहलोके असपत्नं सपत्नेन शत्रुणा रहितम् ऋद्धं पूर्णम् राज्यम् राजत्वम्। (परलोके) सुराणाम् देवानाम् आधिपत्यम् स्वामित्वम् इन्द्रत्वम् इत्यर्थः। चापि, अवाप्य (स्थितस्य) मम अर्जुनस्य इन्द्रियाणाम् अन्तःकरणबाह्यकरणानाम् उच्छोषणम् अतिशोषणकरम् शोकम् अनिष्ट-चिन्तात्मकम् चित्तवृत्तिविशेषम् । यत् श्रेयः कल्याणकरं कर्म अपनुद्यात् निवारयेत् तत्श्रेयः कल्याणकरं कर्म नहि प्रपश्यामि हि यस्मात् तस्माद् अहं धर्मसंमूढचेता भवन्तं निश्चितं श्रेयः इत्यस्य पूर्वश्लोकादनुकर्षः सामर्थ्यात्। यद्यपि युद्धधर्मेण भूमौ निःसपत्नं पूर्णं राज्यं प्राप्नुयाम्। तथा युद्धधर्मेण राज्यं लब्ध्वा कृतेन यागादिधर्मेण परलोके सुरेन्द्रत्वमपि प्राप्नुयाम्। तथाप्यहं स्वशोकापनोदं न प्रपश्यामि। 'तद् यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' (छा० ८।१।६) इति श्रुत्या कर्मफलानां क्षयित्वस्य बोधनात्। अतः प्रपन्नं शिष्यं मां शास्तु भवान् जगद्गुरुः सर्वज्ञः कृपानिधिः। इतिवाक्यार्थः। एवम् इहामुत्रार्थभोगविरागस्य ब्रह्मजिज्ञासायां ममुक्षोरधिकारिणो विशेषणता सूचिता ॥८॥

अवतरणम्—ततः 'किं कृतवान् अर्जुन' इत्यपेक्षायां धृतराष्ट्रं प्रति यत्सं-जयेन प्रोक्तं तदनुवदितुं वैशम्पायनो जनमेजयमाह—संजयेति।

व्याख्या—'परन्तपो गुडाकेशो हृषीकेशं गोविन्दम् एवम् उक्त्वा 'न योत्स्ये' इति उक्त्वा तूष्णीं बभूव ह ॥' इत्यन्वयः। परंतपः परं शत्रुं तापयति संताप-यति दहति वा इत्यर्थे 'तपसंतापे' इति भ्वादिण्यन्तात् 'तपदाहे' इति चुरा-दिण्यन्ताद्वा 'द्विषत्परयोस्तापे' (पा० सू०) इति खच्प्रत्यये ह्रस्वे मुमि च रूपं साधु। गुडाकेशः-गुडाका निद्रा तस्या ईशो विजयी जितनिद्रः अर्जुनः, हृषी-केशम्—"हृषीकाणि इन्द्रियाणि, तेषाम् ईशः क्षेत्रज्ञरूपभाक्। यद्वा, इन्द्रियाणि

सञ्जय उवाच—

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥

---

यद्वशे वर्तन्ते स परमात्मा हृषीकेशः । यस्य वा सूर्यरूपस्य चन्द्ररूपस्य च जगत्प्रीतिकरा हृष्टाः केशा रश्मयः स हृषीकेशः । 'सूर्यरश्मिर्हरिकेशः पुरस्तात्' इतिश्रुतेः पृषोदरादित्वात् साधुत्वम् । यथोक्तं मोक्षधर्मे —'सूर्याचन्द्रमसौ शश्वदंशुभिः केशसञ्ज्ञितैः । बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ बोधनात्स्वापनाच्चैव जगतो हर्षणं भवेत् । अग्नीषोमकृतैरेवं कर्मभिः पाण्डुनन्दन । हृषीकेशो महेशानो वरदो लोकभावनः ॥' (महा शान्ति० ३४२।६६-६७) इति विष्णुसहस्रनामभाष्ये भगवान् शङ्कराचार्यः । तम्, इति" सर्वेन्द्रियप्रवर्तकत्वेन अन्तर्यामिणम् । गोविन्दम् 'गां वेदलक्षणां वाणीं विन्दतीति व्युत्पत्या सर्ववेदोपादानत्वे सर्वज्ञम्' इत्यर्थो मधुसूदनीये । एवंभूतं श्रीकृष्णम् । एवम् 'कथं भीष्ममहं संख्ये' (२/४) इत्यारभ्य 'राज्यं सुराणामपि चाधिपत्यम्' (२/८) इति यावदुक्तेन प्रकारेण उक्त्वा (पूर्वं) कथयित्वा (पश्चात्) 'न योत्स्ये' युद्धं न करिष्यामीत्युक्त्वा कथयित्वा (ततः पश्चात्) तूष्णीं बभूव ह, मौनं निःशब्दताम् अवलम्बितवान् । हेति प्रसिद्धौ अव्ययम् इति प्रौढमनोरमा । इह परन्तपगुडाकेशशब्दाभ्याम् अर्जुनस्य स्वाभाविकशौर्यजितालस्यत्वयोः सूचकाभ्याम् अर्जुने आगन्तुकमेव शत्रोरतापनत्वम् आलस्यञ्च वर्तेते । अतस्ते चिराय न स्थास्येते इति सूचितम् । एवम् हृषीकेशगोविन्दपदाभ्यां भगवतः सर्वशक्तिमत्त्व सर्वज्ञत्वयोः सूचकाभ्यां भगवान् अर्जुनस्य शोकमोहौ अनायासेनैव निवारयिष्यतीति सूचितम् ॥९॥

अवतरणम्—ततः परं पाण्डवपक्षवर्ती श्रीकृष्णः किं कृतवान् ? इत्यपेक्षायां धृतराष्टं प्रति संजयेन यदुक्तं तदनुवदितुं वैशम्पायनो नाम मुनिर्जनमेजयं राजानं प्राह —तमुवाचेति ।

व्याख्या—भारत, हे भरतवंशोद्भवधृतराष्ट्र, हृषीकेशः हृषीकाणामिन्द्रियाणाम् ईशः प्रवर्तकः सर्वान्तर्यामी परमात्मा श्रीकृष्णः, प्रहसन्निव प्रहसन् प्रकृष्टहासं कुर्वन् जनो यथा प्रसन्नमुखो भवति तथा प्रसन्नमुखः सन् इत्यर्थः । हृषीकेशत्वेन सर्वान्तर्यामितया भक्तवत्सलतया च भगवतः स्वसकलभक्तसमुद्धारफलकपरमार्थतत्त्वप्रकाशनस्य स्वचिकीर्षितस्यैव अर्जुनस्य

शोकमोहरूपं निमित्तमाश्रित्य 'अयम् इष्टोऽवसरः संप्राप्तः' इति भगवतश्चेतसि संजाता प्रसन्नता, तस्य मुखचन्द्रेऽपि प्रादुरभूत्, इत्याशयः। उभयोः स्वकीयपरकीययोः सेनयोर्मध्ये मध्यस्थाने, विषीदन्तं दुःखम् अनुभवन्तं, तम् अर्जुनम्। इदम्—'अशोच्यान् अन्वशोचस्त्वम्' (२।११) इत्यारभ्य 'कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय' (१८/७२) इतियावद्, क्वचिन्निरन्तरं क्वचित् तत्प्रश्नपूर्वकञ्च वक्ष्यमाणं वचो वचनम् अध्यात्मशास्त्ररूपम्, उवाच-परिभाषितवान्। 'उभयोः सेनयोर्मध्ये विषीदन्तम्' इत्यनेन अर्जुनस्य विषादस्य स्वजननिरीक्षणजन्यशोकमोहमात्रहेतुकत्वं पूर्वोक्तं स्मारितवान्॥१०॥

अवतरणम्—ननु स्वार्थबोधे समर्थानाम् अङ्गाङ्गित्वव्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहृत्य जायते॥ इति दर्पणोक्तरीत्या गीताशास्त्रेऽस्मिन् कथं सर्वेषां वाक्यानाम् अङ्गाङ्गित्वरूपम् एकवाक्यत्वम्? इतिचेत्-श्रूयताम् 'श्रीभगवानुवाच-अशोच्यान् अन्वशोचस्त्वम् (२।११) इत्यारभ्य 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' (१८।६६) इति यावद् अङ्गी ग्रन्थः। शेषस्तु ग्रन्थोऽङ्गम्। तथाहि 'धृतराष्ट्र उवाच धर्मक्षेत्रे कुरुक्षेत्रे (१।१) इत्यारभ्य विषीदन्तमिदं वचः' (२।१०) इति यावत् श्रीकृष्णार्जुनमुख्य संवादप्रस्तावक-कथानिरूपणम्। 'इदं ते नातपस्काय (१८।६७) इत्यारभ्य-'करिष्ये वचनं तव' (१८।७३) इति यावत् शास्त्रोपदेशाधिकारिशास्त्रप्रवचन-ग्रहणफल-शास्त्रोपदेशसाफल्यप्रश्नोत्तरनिरुपणम् 'संजय उवाच-इत्यहं वासुदेवस्य (१८।७४) इत्यारभ्य 'नीतिर्मतिर्मम' (१८।७८) इति यावद् गीताशास्त्रस्योपसंहारः कृत-इति। तत्र प्रथमाध्यायस्थप्रथमश्लोकस्य 'धृतराष्ट्र उवाच' इति सहितस्य गीताशास्त्र-कथा-सम्बन्धप्रदर्शनपरत्वम् प्रकृतशास्त्रस्य महाभारतेऽवतारस्य द्योतकत्वात्। 'संजय उवाच--दृष्ट्वा तु पाण्डवानीकम्' (१।२) इत्यारभ्य 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' (२।९) इत्येतदन्तो ग्रन्थः प्राणिनां शोकमोहादिसंसारबीजभूतदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयः। प्राणिनां संसारस्य जन्ममरणादिदुःखचक्रस्य बीजभूता दोषाः शोकमोहमिथ्याभिमानस्नेहगर्हादयश्चित्तदोषाः तेषाम् उद्भवे कारणम् अहङ्कारोऽहमितिबुद्धिर्ममकारो ममेतिबुद्धिस्तद्धेतुरविद्या च तत्प्रदर्शनार्थो ग्रन्थः। तथाहि अर्जुनेन राज्य-गुरु-पुत्र-मित्र-सुहृत्स्वजनसम्बन्धिबान्धवेषु 'अहमेषाम्' 'ममैते' इत्येवं यो भ्रान्तिप्रत्ययस्तन्निमित्तको यस्तेषु स्वस्य स्नेहस्तद्विच्छेदादि प्रत्ययश्च, तन्निमित्तकौ स्वस्य शोकमोहौ प्रदर्शितौ।

श्रीभगवानुवाच—

**अशोच्यान् अन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।**
**गतासून् अगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥**

---

तत्र शोकः प्रतिकूलवेदनात्मिका चिन्ता। मोहो विवेकाभावः। भ्रान्तिप्रत्ययो भ्रमात्मकज्ञानम्। तस्य कारणम् अविद्या। यतः स्वत एव क्षात्रधर्मे युद्धे प्रवृत्तोऽप्यसौ शोकमोहाऽभिभूतविवेकविज्ञानतया तस्मात् स्वधर्मभूताद्- युद्धाद् उपरराम। परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते। तथा च (अर्जुन- स्येव सर्वप्राणिनां शोकमोहादिचित्तदोषाविष्टचेतसां स्वभावत एव स्वधर्म- परित्यागः प्रतिषिद्धकर्मग्रहणं च स्याताम्। स्वधर्मे येऽपि प्रवृत्तास्तेषामपि शोकमोहादिचित्तदोषाविष्टचेतसाम् वाङ्मनःकायादीनां प्रवृत्तिः फलाभि- सन्धिपूर्विकैव कर्तृत्वभोक्तृत्वाभिमानरूपाऽहङ्कारसहिता च भवति। तत्रैवं सति धर्माऽधर्मोपचयाद् इष्टाऽनिष्टजन्मसुखदुःखसंप्राप्तिलक्षणः कष्टप्रायः संसारस्तेषाम् अनुपरतो भवति। अतः संसारस्य बीजभूताः शोकमोहादयो- दोषा इति सिद्धम्। 'शोकसंविग्नमानसः' 'शोकमुच्छोषणमिन्द्रियाणाम्' 'धीरस्तत्र न मुह्यति' 'तत्र का परिदेवना' 'अज्ञानसंमोहः प्रणष्टस्ते धनञ्जय' (नष्टो मोहः) 'अशोच्यान् अन्वशोचस्त्वम्' 'मा शुचः' इत्येवं स्पष्टतया च अर्जुनस्य शोकमोहौ प्रदर्शितौ। तौ च अर्जुनस्य राज्य गुरु-पुत्र-मित्रसुहृतस्व- जनसम्बन्धिबान्धवेषु 'अहमेषाम्' 'ममैते' इति अहङ्कारममकारात्मकभ्रम- प्रत्ययजन्यस्नेहभ्रमतद्वियोगादिभ्रमजन्यौ। अहङ्कारममकारभ्रमौ च अनाद्यविद्याजन्यौ। अविद्या नाम अनिर्वचनीया भागवती माया। अतश्च तयोः शोकमोहयोः सर्वकर्मसंन्यासपूर्वकाद् अविद्याविरोधिनः परमात्मज्ञान- निष्ठारूपात् स्वधर्माद् नान्यतो निवृत्तिरिति तदेवोपदिदिक्षुर्भगवान् वासुदेवः सर्वलोकानुग्रहार्थञ्च तम् अर्जुनं 'अशोच्यान् अन्वशोचस्त्वम्' (२।११) इत्यादि अध्यात्मशास्त्रं प्राह। तदनुवदितुं संजयो धृतराष्ट्रमाह—श्रीभगवानिति।

व्याख्या—(हे अर्जुन) त्वम् अशोच्यान्, शोच्याः शोकविषयीभावयोग्याः, न शोच्या अशोच्याः। अशोच्या भीष्मद्रोणादयस्त्वञ्च, सद्वृत्तत्वात्, परमार्थ- रूपेण नित्यत्वाच्च। तान् भीष्मद्रोणादीन् आत्मानञ्च। अन्वशोचः 'ते नङ्क्ष्यन्ति मन्निमित्तम्, अहं तैः विनाभूतः किं करिष्यामि राज्यसुखादिना' इत्येव- मादिरूपेण अनुशोचितवान् असि—'दृष्ट्वेमं स्वजनं कृष्ण' (१/२८) इत्यादिना 'कथंभीष्ममहं संख्ये' (२/४) इत्यादिना च वचनेन। प्रज्ञावादांश्च

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥**

---

किञ्च प्रज्ञावतां वादाः प्रज्ञावादास्तान्, 'देहादन्यम् आत्मानं जानन्तः प्रज्ञावन्तो बुद्धिमन्तः, तेषां वादान् वचनानि 'उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन। नरके नियतं वासः' (१।४३) 'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः' (१/४२) इत्यादीनि, भाषसे वदसि। तदेतद् मौढ्यं बुद्धिमत्त्वं च विरुद्धम् आत्मनि दर्शयसि उन्मत्त इवेतिभावः। प्रज्ञावतां वादान् भाषमाणोऽपि त्वं वस्तुतः प्रज्ञावान् नासि। तत्र हेतुमाह—गतासूनिति। (यस्माद्) गतासून् गता असवः प्राणा येषां तान्, मृतान्, अगतासूंश्च अगतप्राणान् जीवतश्च। पण्डिताः आत्मज्ञाः 'पाण्डित्यं निर्विद्य' (बृह ३।५।१) इतिश्रुतेः। न अनुशोचन्ति तद्विषये शोकं न कुर्वन्ति। तस्माद् अशोच्यान् अनुशोचितवांस्त्वम् मूढ एवासीति भावः—'अयं च भावः' 'तरति शोकमात्मवित्' (छा.) इत्यादि श्रुतेः परमार्थदृष्ट्या न शोकस्थानं किञ्चित्। मायिकव्यवहारदृष्ट्याऽपि सद्वृत्ता न शोकस्थानम् मरणादिविषये। तेषां मरणोत्तरम् उत्तमगतिप्राप्तेः। नापि असद्वृत्ताः केचन शोच्यास्तद्विषये। तैः स्वकर्मफलस्यावश्यं भोक्तव्यत्वेन उपेक्षणीयत्वात्। 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्याऽपुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (पा. यो. सू.) इत्युक्तेः। परमार्थप्रकरणे सर्वस्यैव प्रपञ्चस्य मिथ्यात्वेन अशोच्यत्वेऽपि इह मृतजीवितयोरेवाऽशोच्यत्वाऽभिधानं पुरःस्फूर्तिकत्वेन उपलक्षणार्थत्वादिति। अनद्यतने लङ्विधानाद् अन्वशोचइति आर्षम् ॥११॥

अवतरणम्—ननु भीष्मादीनां वधे तेषां विनाशः स्यादिति शोच्यास्ते स्युः इतिचेत् मैवम् यतस्ते नित्याः। कथम् ? इत्यत आह—नत्वेवाहमिति।

व्याख्या—अहं वक्ता श्रीकृष्णः, व्यञ्जनया सर्वेश्वरो भगवान्। जातु। कदाचिद् नआसम् (इति) तु नैव (अस्ति) अपि तु सर्वदा अहम् आसम् एव। त्वं योद्धव्योऽर्जुनः, व्यञ्जनया जीवः, जातु न (आसीरिति) न त्वेव अपि तु सर्वदा आसीरेव। इमे, दृश्यमानाः, जनाधिपा राजानः, व्यञ्जनया अन्ये जीवाः, जातु न आसन् (इति) न त्वेव। अपि तु सर्वदा आसन् एव। 'आसम्' इत्येकस्यापि विभक्तिविपरिणामेन प्रोक्तरीत्याऽन्वयः। एतेन आत्मनः (ईश्वरस्य जीवस्य च) प्रागभावाऽप्रतियोगित्वं दर्शितम्। सर्वे वयम् अहं च त्वं च इमे चेति वयम्। एकशेषः। अतोऽस्मात्कालात्परम् उत्तरकालमपि जातु

कदाचिद् न भविष्यामः न स्थास्यामः (इति न चैव । अपितु सर्वदा स्थास्याम एव । एतेन आत्मनः प्रध्वंसाऽप्रतियोगित्वमुक्तम् । तथा च त्रिष्वपि कालेषु सत्त्वात् प्रागभावाऽप्रतियोगित्वे सति अत्यन्ताऽभावाऽप्रतियोगित्वे च सति प्रध्वंसाऽभावाऽप्रतियोगित्वरूपं नित्यत्वम् आत्मनः सिद्धम् । अतीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासम् । अस्माद् देहविनाशात्पर-मपि नित्य एव स्थास्यामि । त्रिष्वपि कालेषु सर्वे वयम् मरणे सति देहविनाशेऽपि आत्मस्वरूपेण नित्या एव स्म आत्मनोऽविनाशाद् इत्यर्थः । तन्त्रेण जातु इत्यस्य सर्वत्रान्वयः । अत्र भगवान् शङ्कराचार्यः—'सर्वे वयमिति देहभेदाऽनुवृत्त्या बहुवचनम्, नात्मभेदाऽभिप्रायेण ।' इति प्राह । अयं भावः-'अयमात्मा ब्रह्म' (बृह० २।५।१९) 'तत् त्वमसि' (छा० ६।८।७।१६) 'अहं ब्रह्मास्मि' (बृह० १।४।१०) ब्रह्मवेद ब्रह्मैव भवति' (मु०)' तत् सृष्ट्वा तदेवानुप्राविशत्' (तै० उ २।६)' स एष इह प्रविष्ट आ नखाग्रेभ्यः' (बृह०-१।४।७) इत्यादिश्रुतिभ्यः स्मृतिभ्यश्च-'क्षेत्रज्ञं चापि मां विद्धि' (गीता १३।२) 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।।' (विष्णुपुराण ६।७।९६) 'यज्ज्ञात्वा न पुनर्मोहम् एवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' (गीता ४।३५) 'अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्' (श्रीमद्भागवत १२।५) 'ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवान् एक ईयते ।।' (श्रीमद्भागवत) इत्यादिभ्यो जीवब्रह्मणोरभेदोऽवसीयते यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोहमित्येतद् विफलं वचः ।।' (विष्णुपुराण २।१३।९१) इत्यादिभ्यश्च । 'एकमेवाद्वितीयम्' (छा० ६।२।१)' एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।' (श्वेता० ६।११ 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव' (कठो० २।२।९) 'वायुर्यथैकोभुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्त-रात्मा रूपं रूपं प्रतिरूपो बहिश्च ।।' (कठो० २।२।१०) 'एको देवो बहुधा सन्निविष्टः' (तै० आ० ३।१४) इत्यादिश्रुतिभ्यो ब्रह्मण एकत्वम् जीवरूपत्वञ्च अवगम्यते । तथा च ब्रह्मणा सह अभेदे जीवस्य एकत्वं सुतरां सिद्धयति । 'बुद्धयाद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानम् आकाशस्येव घटादि-निमित्तम् ।' इतिशारीरकमीमांसाभाष्येऽपि भगवान् शङ्कराचार्यः प्राह । एवं सति यत्त्वत्र श्रीरामानुजाचार्य आह– 'भगवतः सर्वेश्वराद् आत्मनां परस्परञ्च भेदः पारमार्थिक इति ।' तद् असदेव, प्रोक्तश्रुतिस्मृतिविरोधाद् न्यायविरोधाच्चेत्यलम् ।।१२।।

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमाऽपायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

---

**अवतरणम्**—आत्मनो नित्यत्वं प्रतिज्ञाय तत्र दृष्टान्तं प्रदर्शयन् धीरस्य देहान्तर (प्राप्तौ मोहाऽभाव इति बोधयति—देहिन इति।

**व्याख्या**—यथा देहिनः आत्मनः आध्यासिक सम्बन्धेन देहोऽस्यास्तीति देही आत्मा तस्य। अस्मिन् दृश्यमाने स्थूलदेहे कौमारं कुमारस्य भावो बाल्यावस्था, यौवनं यूनो भावो मध्यमावस्था, जरा वयोहानि जीर्णाऽवस्था (भवन्ति) तथा देहान्तरप्राप्तिः, तेन प्रकारेण अन्यो देहो देहान्तरम्, 'मयूरव्यंसकादयश्च' (पा. सू.) इति साधुत्वम्। तस्य प्राप्तिर्भवतीति शेषः। यथा (येनप्रकारेण) आत्मनोऽस्मिन् स्थूलदेहे कौमारयौवनजरावस्था अन्योऽन्यविलक्षणा अपि अनष्टस्यैवात्मनो दृष्टास्तथा ( तेन प्रकारेण ) स्थूलदेहान्तरप्राप्तिरपि अनष्टस्यैवात्मनः स्यात्। ( एव सति ) धीरो धीमान् तत्र तस्मिन् स्थूलदेहान्तरप्राप्तौ (अपि) न मुह्यति, न मोहम् आपद्यते। आत्मानम् अनष्टं पर्यालोच्य न खिद्यते इति भावः ॥१३॥

**अवतरणम्**—नन्वेम् आत्मनो नित्यत्वात् तद्विनाशं प्रति शोकस्य अकर्तव्यत्वेऽपि भीष्मादीष्टस्थूलदेहसंयोगवियोगनिमित्तकसुखदुःखापेक्षया शोकः कर्तव्यः, इतिचेद्-मैवम्-इत्याह—मात्रेति।

**व्याख्या**—कौन्तेय, हे कुन्तीपुत्र, मात्रास्पर्शास्तु मीयन्ते ज्ञायन्ते शब्दादयो विषया आभिरिति मात्राः श्रोत्रादीनि इन्द्रियाणि। तासां स्पर्शाः, विषयैः शब्दादिभिः सह सम्बन्धाः। अथवा मीयन्ते इति मात्राः ज्ञायमानाः। स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः। मात्राश्च ते स्पर्शाश्चेति कर्मधारयसमासः। ज्ञायमानविषयाः। तु आत्मनो वैपरीत्येन, शीतोष्णसुखदुःखदाः, शीतं च उष्णं च शीतोष्णं शीतोष्णे, सुखं च दुःखं च सुखदुःखं सुखदुःखे, शीतोष्णे च सुखदुःखे च शीतोष्णसुखदुःखानि, तानि ददतीति उपपदसमासः। शीतोष्णग्रहणम् अनियतसुखदुःखजनकसकलवस्तूपलक्षणार्थम्। अतो न न्यूनता। शीतं हि कदाचित्सुखजनकम् कदाचित्तु दुःखजनकम्।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

---

एवम् उष्णमपि । अनियतसुखदुःखजनकत्वादेव शीतोष्णयोः सुखदुःखाभ्यां पृथग् ग्रहणम् । कश्चिन्मात्रास्पर्शो हि अनियतसुखदुःखजनकः कश्चिच्च नियतसुखदुःखजनकः । इतिद्वयोरेव शीतोष्ण-सुखदुःखयोर्ग्रहणम् । यद्यपि सन्ति तथापीतिशेषः । आगमापायिनः आगमश्च अपायश्च तौ स्तो येषां ते उत्पत्तिविनाशवन्तः (अत एव) अनित्या अस्थिराः क्षणिका इति यावत् । आगत्य कंचित्कालं स्थित्वा ततः परं निवर्तन्ते इत्यर्थः । (तस्मात्) भारत, हे भरतवंशोद्भवार्जुन, तान् अनित्यान् क्षणिकान् मात्रास्पर्शान् तितिक्षस्व त्वं सहस्व । 'एते अस्थिरत्वान्मम अकिञ्चित् कराः' इति विवेकबुद्ध्या तान् उपेक्षस्व । तेषु जायमानेषु हर्षविषादौ मा कार्षीरिति वाक्यार्थः । यद्यपि शीतोष्णादयः पटावरणादिप्रतीकारमन्तरेण सोढुं नोपेक्षामात्रेण शक्यन्ते इति सामान्य लोकस्य प्रत्यक्षम् तथापि तदुपेक्षया सुखदुःखयोः स्वल्पत्वं भवत्येवेत्यपि प्रत्यक्षम् इति वयम् ॥१४॥

अवतरणम्—मात्रास्पर्शसहनस्य फलमाह भगवान्—यं हीति ।

व्याख्या—एते मात्रास्पर्शप्राप्ताः । शीतोष्णादयः, समदुःखसुखं, समे-दुःखसुखे यस्य तम्, सुखदुःखप्राप्तौ हर्षविषादरहितम् । यं धीरं धीमन्तं पुरुषम् न व्यथयन्ति न क्षोभयन्ति, नित्यात्मदर्शनाद् न चालयन्ति इति यावत् । स नित्यात्मदर्शननिष्ठो द्वन्द्वसहिष्णुः पुरुषः, हे पुरुषर्षभ, पुरुषश्रेष्ठ, अमृतत्वाय कल्पते मोक्षाय समर्थो भवति । हीति निश्चये हेतौ वा । यस्मात् तत्सहनस्येदं फलम् तस्मात् तत् सहस्वेति पूर्वेणान्वयः ॥१५॥

अवतरणम्—ननु तथापि अतिदुःसहम् उत्कटं शीतोष्णादिकं कथं सोढ-व्यम् ? इत्याशङ्क्य तत्त्वविचारतस्तद् असदिति ज्ञात्वा सोढुं शक्यम् इत्या-शयेनाह—नासत इति ।

व्याख्या—असतः, अविद्यमानस्य, देहादेः शीतोष्णादेश्च सकारणस्य, भावो भवनम् अस्तिता, न विद्यते (स्वकारणादन्यत्रेति शेषः) । सतः आत्मनः

अभावः अविद्यमानता न विद्यते नास्ति। अयंभावः—भ्रान्तैर्लोकैः प्रतीयमानमपि द्वैतं शीतोष्णादि सकारणम् तत्त्वविचारेण आमज्ञकर्तृकेण वाध्यत्वाद् मूलकारणाद् ब्रह्मणः पृथग् नास्त्येव। तद्वैपरीत्येन तु अज्ञलोकैर् अप्रतीयमानमपि अद्वैतम् आत्मवस्तु तत्त्वज्ञैः प्रतीयमानत्वाद्, अस्त्येवेति। तथाहि द्वैतम् असद् अप्रामाणिकत्वाद् रज्जुसर्पादिवत्। रज्जुसर्पादौ धर्मिग्राहकस्य प्रत्यक्षादेः प्रामाण्याऽबोधकत्वदर्शनात्। ननु क्वचित्प्रत्यक्षादेर्भ्रमत्वेऽपि न सर्वत्र तथा। ततश्च प्रत्यक्षादिविषयस्य शीतोष्णादेः कथम् असत्त्वम्? इतिचेद्-मैवम्, शीतोष्णादे द्वैतस्य विकारत्वेन आगमापायित्वाद् असत्त्वस्य निर्णयात्। तथा चायं प्रयोगः शीतोष्णादिकं कार्यम् असद् (मिथ्या) आगमापायित्वाद् रज्जूरगवदिति। अपि च जन्मनः प्राक् प्रध्वंसादूर्ध्वञ्च अनुपलब्धेः सर्वेषां विकाराणां सर्वदा असत्त्वं सिद्ध्यति। 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत् तथा' इति न्यायात्। किञ्च, यथा घटादिसंस्थानं वहिरन्तश्च चक्षुषा निरूप्यमाणं मृद्-व्यतिरेकेण अनुपलब्धेर् असद् मृदि कल्पितमात्रम्। तथैव सर्वोऽपि विकारः स्व-स्वकारणव्यतिरेकेण अनुपलब्धेर् असन्। कार्यस्य घटादेः कारणस्य मृदादेस्तत्कारणस्य तत्कारणस्य चाऽव्यक्तस्य तत्कारणपरमात्मव्यतिरेकेण अनुपलब्धेः। तथा च 'सर्वः शीतादिविकारोऽसन् स्व-स्वकारणव्यतिरेकेण अनुपलब्धेर् 'घटकुण्डलादिवद्' इत्यनुमानप्रयोगः। एवं च केवलपरममूलकारणस्य परमात्मन एव सत्त्वं परिशिष्यते। तस्मिन्नेव अधिष्ठाने सर्वेषां विकाराणाम् कल्पितत्वात्। श्रुतिरपि सर्वविकाराणाम् असत्त्वं प्रतिपादयति—'वाचारम्भणं विकारो नामधेयम् मृत्तिकेत्येव सत्यम्' (छा. ६।१ ४) इत्यादिः। ननु एवं विकाराणाम् असत्त्वे परममूलकारणमपि न स्यात् विकारभावशून्यस्य तस्य प्रत्यक्षानुमानाभ्याम् असिद्धेरिति सर्वाऽभाव प्रसङ्गः। इतिचेद्-मैवम्। सर्वत्र व्यवहारभूमौ सर्वैः सद्-बुद्धेरसद्-बुद्धेश्चोपलम्भात् सदसतोरुभयोरेव प्रत्यक्षानुमानसिद्धत्वात्। तथाहि सर्वत्र व्यवहारभूमौ सर्वैं द्वे, बुद्धी उपलभ्येते समानाधिकरणे—सतो बुद्धिरिति असतो-बुद्धिरिति च। यथा 'सन् घटः' 'सन् पटः' 'सन् हस्ती' त्येवम्। तत्र विशेषणविषया बुद्धिः सतो बुद्धिः। घटादिविशेष्यविषया बुद्धिर् असतो बुद्धिः। त्रिकालाऽबाध्यत्वम् सत्त्वम् इति सतो लक्षणाद्, यद्विषया बुद्धि नं व्यभिचरति तत् सत्। यद्विषया तु बुद्धि व्यंभिचरति तद् 'असत्' इत्येवं सदसद्विभागो बुद्धितन्त्रः। तत्र 'सन् घटः' इत्यादौ घटादिविषया बुद्धि व्यंभिचरति, घटादीनां विकारत्वाद्, जन्मनः प्राक् प्रध्वंसादूर्ध्वञ्च

तदनुपलब्धेः। 'सन्-पट' इत्यादौ तददर्शनाच्च। न तु सद्विषया बुद्धिः कदापि व्यभिचरति। घटे विनष्टे घटबुद्धेर्व्यभिचारेऽपि सद्बुद्धेः 'सन् पटः' इत्यादावन्यत्र दर्शनात्। ननु सद्बुद्धिवद् घटबुद्धिरपि घटान्तरे दृश्यते इति चेन्न, पटादौ घटबुद्धेर दर्शनात्। ननु सद्बुद्धिरपि नष्टे घटे न दृश्यते इति चेन्न, विशेष्यरूपव्यञ्जकाऽभावात्। सद्बुद्धि विशेषणविषया सती विशेष्याऽभावे विशेषणाऽनुपपत्तौ (व्यञ्जकाऽभावे व्यङ्ग्यानुपपत्तौ) व्यक्तौ नष्टायां जातिरिव व्यञ्जकाऽभावात् किं विषया स्यात्? नन्वेवम्, अद्वैत-वादिनये घटादीनां सर्वेषां विशेष्याणाम् अभावाद् विशेष्याऽभावे सद्बुद्धिरपि न स्यादितिचेन्न 'सद् इदम् उदकम्' इति मरुमरीच्यादौ वस्तुत उदकाऽभावेऽपि व्यवहारभूमौ सामानाधिकरण्यदर्शनात् प्रातिभासिकंविशेष्यमाश्रित्यापि सद्बुद्धेरुपपत्तेः। तथा च व्यावृत्तेषु यद् अनुवृत्तं तत् सद् अव्यभिचरितत्वात्। यथा 'सर्पोऽयम्' 'उदकमिदम्' इत्यादौ सर्पोदकादिषु व्यावृत्तेषु रज्जुमरी-च्यादेरिदमंशः। यद्व्यावृत्तं तन्मिथ्या। यथा सर्पजलादि। इति नियमः सिद्धः। एवञ्च सद्बुद्धेरव्यभिचारे तद्बोध्यस्य सतोऽपि परमकारणस्य अव्यभिचाराद्। घटादि विकारविषयकबुद्धेर्व्यभिचारे तद्बोध्यस्य घटादेरपि व्यभिचारात् 'परमकारणं सत् सर्वत्र अव्यभिचारात् विकाराश्च असन्तः पर-स्परं व्यभिचारात्।' इत्यनुमानद्वयेन परमकारणस्य परमात्मनः सत्त्वम्, विकाराणां सर्वेषाम् असत्त्वञ्च सिद्ध्यति। अपि च 'सर्वत्र अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणम् मृत्सुवर्णादिवत्। परस्परस्मिन् व्यावृत्तत्वाद् विश्वं कार्यंघट-कुण्डलादिवत्' इत्यनुमानमपि ब्रह्मणः परमकारणत्वे श्रीधरस्वामिना श्रीमद्-भागवतप्रथमपद्यस्य स्वव्याख्यायां दर्शितमिह ध्येयम्। तथाच श्रुतिरपि परमकारणस्य सत्त्वं प्रतिपादयति—सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' (छ. ६।२।१) इत्यादिः। ननु तर्हि कथम् असतः शीतोष्णादेः सत्त्वम् सतश्च ब्रह्मणः असत्त्वं लौकिकानां प्रतिभाति? इति चेत् तत्त्वदर्शनाऽभावादित्याह—उभयोरपीति। उभयोरपि अनयोरात्माऽनात्मनोः सदसतोः 'सत् सदेव' 'असत् असदेव' इत्येवम् अन्तो निर्णयस्तु तत्त्वदर्शिभिः, तस्य भावस्तत्त्वम् ब्रह्मणो याथात्म्यम्, तद्द्रष्टुं शीलं येषां तैरेव 'सर्ववाक्यं सावधारणम्' इति न्यायाद् एवशब्दार्थलाभः। दृष्ट उपलब्धः प्रत्यक्षीकृतः। हे अर्जुन, त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा 'शीतोष्णादीनि निय-ताऽनियतरूपाणि द्वन्द्वानि 'विकारोऽयम् असन्नेव मरीचिजलवन्मिथ्यावभासते' इत्येवम् प्रत्येकं मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः ॥१६॥

**अविनाशि तु तद् विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥**
**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥**

---

अवतरणम्—ननु किं पुनः सद् इति ? यत्सर्वदा सदेवास्ति ? इत्यत आह—अविनाशीति ।

व्याख्या—तु शब्दोऽसदपेक्षया सति भेदस्य सूचकः । अविनाशि तु, न विनष्टुं शीलम् अस्येति अविनाशि । अर्थात् सत् तु (सदसतोर्मध्ये), तद्, विद्धि, जानीहि येन अर्थात् आत्मना इदं दृश्यमानं सर्वं साकाशं जगत् ततं व्याप्तम् आकाशेन घटादिकमिव ब्रह्मणा । येन ब्रह्मणा आत्मना सर्वमिद साकाशं जगद् व्याप्तम् तत्तु सदिति जानीहि इति संवन्धः । साकाशसर्वजगद्-व्यापकं ब्रह्मैव सच्छब्दवाच्यमित्यर्थः। अविनाशीति 'सुप्यजातौ णिनिस्ता-च्छील्ये (पा० सू०) इति ताच्छील्येणिनिः । आत्मनो विनाशाऽभावे युक्तिमाह—विनाशम् अव्ययस्येत्यादि । अव्ययस्य, न व्येति उपचयापचयौ याति यत् तद् अव्ययम् । नैतत्सदाख्यं ब्रह्म देहादिवत् स्वेन रूपेण व्येति निरवयवत्वाद् । नापि आत्मीयेन रूपेण व्येति यथा देवदत्तो धनहान्या व्येति अपचीयते तथा, एतस्य आत्मीयाऽभावात्, अतो हि अव्ययस्य उपचयापचयरहितस्य अस्य सदाख्यस्य ब्रह्मणो विनाशम् अदर्शनम् अभावं न कश्चित् कर्तुम् अर्हति । ईश्वरोऽपि आत्मानं विनाशयितुम्, नार्हति न शक्नोति । अव्ययत्वात् । आत्मा हि ब्रह्म । आत्मनि क्रिया विरोधाच्चेत्याशयः । "कः पण्डित स्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् । सर्वान् ददाति सुहृदो भजतोऽभिकामान् आत्मानमप्युपचयापचयौ न यस्य ।।" (श्रीमद्भाग० ११ ।) इति भागवतेऽपि अस्योपचयापचयराहित्यमुक्तम् तदनुसन्धेयम् ॥१७॥

अवतरणम्—ननु किं पुनरसदिति ? यत् सर्वदा असदेवेति ? इत्यत आह—अन्तवन्त इति ।

व्याख्या—नित्यस्य कूटस्थस्य । अनाशिनः, नाशरहितस्य । नित्यस्य अनाशिन इति न पुनरुक्तम् नित्यत्वस्य नाशस्य च प्रत्येकं द्विविधत्वाद्, मुख्यनित्यत्वबोधस्य द्विविधनाशराहित्यबोधस्य च स्फुटीकरणाय तदोभयावश्य-कत्वात् । तथाहि नित्यत्वं द्विविधं मुख्यं, गौणं च । तत्राद्यं कूटस्थत्वरूपम् ।

यथा ब्रह्मणः। अन्त्यन्तु कल्पादिप्रभृतिकल्पान्तपर्यन्त स्थायित्वरूपं यथा पृथिव्या-दीनाम्। तत्र अनाशिन इति बलात् कूटस्थत्वरूपमेव मुख्यं नित्यत्वं स्फुटतया गृह्यते। एवं नाशोऽपि द्विविधो मुख्यो गौणश्च। तत्राऽऽद्योऽदर्शनरूपः। अन्त्यस्तु अन्यथा परिणामरूपः। यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट इत्युच्यते। विद्यमानोऽपि देहो व्याध्यादिना अन्यथा परिणतो नष्ट इत्युच्यते तथा च नित्यस्येति विशेषणबलाद् द्विविधेनापि नाशेन असंबन्धोऽस्य शरीरिणः स्फुटतया गृह्यते। अप्रमेयस्य, प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्य। रूपादिराहित्यात् आत्मा तावन्न चक्षुरादिप्रत्यक्षः। नापि अनुमेयो व्याप्ति-ग्रहाऽभावात्। नाप्युपमेयः तत्सदृशस्याऽन्यस्याऽभावात्। ननु आगमेन आत्मा परिच्छिद्यते? न, आत्मनः स्वप्रकाशत्वेन स्वत एव (प्रमाणानपेक्षयैव)। ज्ञातत्वात्। ज्ञाते हि आत्मनि प्रमातरि सति प्रमेयं घटादिकं प्रमित्सोः पुरुषस्य प्रत्यक्षादीनां प्रमाणानाम् अन्वेषणा भवति न हि आत्मा नाम कस्य-चिद् अप्रसिद्धो भवति। नहि पूर्वम् 'इत्थमहम्' इत्यात्मानम् अप्रमाय पश्चात् प्रमेयघटादिपरिच्छेदाय प्रवर्तते लोकः। तस्माद् आत्मनः स्वप्रकाशचैतन्य-रूपतया स्वत एव ज्ञातत्वाद् न प्रमाणपरिच्छेद्यता। शास्त्रन्तु 'मनुष्योऽहम्' कर्ताऽहम्' 'भोक्ताऽहम्' इत्याऽद्यनात्मधर्माध्यारोपनिवर्तकत्वमात्रेण प्रमाण-त्वम् आत्मनि प्रतिपद्यते। नतु अज्ञातार्थज्ञापकत्वेन। तथा च श्रुतिः— 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' (बृह० ३।४।१) इति। यत् स्वतोऽपरोक्षम्, तद् ब्रह्म, स एवआत्मा सर्वान्तर इत्यर्थः। स्वतो विज्ञाते तु आत्मनि पश्चाद् देहादिभिन्नत्वम् अनुमानेनापि तस्य विज्ञायते। 'आत्मा देहादन्यः' 'योऽहं बाल्ये पितरौ अन्वभूवम्, स एवाहं सम्प्रति जरसि पौत्रादीन् अनुभवामि।' इत्यनुसंधानात्। 'आत्मा इन्द्रियेभ्योऽपि भिन्नः 'योऽहमद्राक्षं स एवाहं शृणोमि' इत्यहमालम्बनस्य प्रत्यभिज्ञानात्। 'बुद्धिमनोभ्यामपि भिन्न आत्मा' तयोः करणत्वेन कर्तृत्वाऽयोगात्। अहमालम्बनस्य कर्तृतया प्रतीतेः। यद्यपि औपाधिकमेवात्मनः कर्तृत्वम् बुद्धिसम्पृक्तस्यैव न तु स्वत-स्तथापि केवलमनोबुद्ध्योः करणत्वस्यैव प्रतीति र्न कर्तृत्वस्येति भावः। 'अहं स्थूलः' 'अहं कृशः' इत्यादिप्रत्ययस्तु प्रेमास्पदे भार्यादौ विकले 'अहमेव विकलः' इत्यादिप्रत्ययवद्- उपचारादुपपद्यते। शरीरिणः आध्यासिकसंबन्धेन शरीरमस्यास्तीति शरीरी, तस्य। इमे प्रतीयमानाः। देहाः स्थूलसूक्ष्म-कारणरूपाः। देहा इति शीतोष्णादिसर्वविकाराणाम् उपलक्षणम्। सकलस्य द्वैतप्रपञ्चस्येति यावत्। अन्तवन्तः, अन्तो विनाशो विद्यते येषां ते। यथा

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥**

मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते, स तस्या-न्तः । तथा अन्तवन्तः । स्वप्नमायादेहादिवच्च अन्तवन्तः (असन्तः) इत्युक्ताः । तत्त्वज्ञानिभिरितिशेषः । यस्मादेवं नित्योऽविक्रियश्चात्मा, 'सन्' इति न शोकस्थानम् । तस्य देहा असन्त इति तेऽपि न शोकस्थानम् । मात्रास्पर्शाश्च सोढव्या एवेति तेऽपि न शोकस्थानमिति । तस्माद् भारत हे भरतवंशोद्भवार्जुन, भरतवंशोद्भवत्वेनापि शोकमोहयोरनौचित्यं सूचितम् । युद्धयस्व, युद्धादुपरमं मा कार्षीः । अत्र भाष्ये "नह्यत्र" युद्धकर्तव्यता विधीयते । युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीम् आस्ते । तस्य कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्माद् 'युद्धयस्व' इत्यनुवाद-मात्रं न विधिः" इत्युक्तम् । 'एतेन आत्मनो नित्यत्वादिस्वरूपम् उपपाद्य युद्धकर्तव्यत्वविधानाद, मोक्षं प्रति ज्ञानकर्मसमुच्चयस्य साधकत्वं प्रतिभाति' इत्यपास्तम् । केवलस्य ब्रह्मसाक्षात्कारमात्रस्यैव साक्षान्मोक्षसाधकत्वात् । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे.) इत्यादिश्रुत्या ब्रह्मसाक्षात्कारमात्रस्य मोक्षं प्रति साधकत्वस्य निर्णयात् । ग्रन्थान्ते विस्तरे-णैतद् निरूपयिष्यते । अस्य गीताशास्त्रस्य च तत्रैव तात्पर्यमिति तत्रैव वर्णयिष्यते विस्तरेणेत्यवधेयम् ॥१८॥

अवतरणम्—उपनिषच्छास्त्रमिव शोकमोहादिसंसारकारणनिवृत्त्यर्थमिदं गीताशास्त्रमपि विद्यते । न कर्मकाण्डशास्त्रवत् प्रवर्तकमस्ति । इत्यस्यार्थ-स्यैकदेशाऽनुमत्या साक्षिभूते कठोपनिषदन्तर्गते द्वे ऋचौ इह आनिनाय भगवान् । तत्र 'अहमेषां भीष्मादीनां हन्ता' 'एते भीष्मादयो मया हन्यन्ते' इत्यर्जुनस्य बुद्धेर्मृषात्वं बोधयितुं तावत् प्रथमाम् ऋचमुदाहरति भगवान्—एनमिति ।

व्याख्या—यः पुरुषः, एनं देहिनम् आत्मानम्, 'देहिनः' 'शरीरिणः' इत्येवं पूर्वत्र प्रकृतम्, हन्तारम् हननक्रियायाः कर्तारं 'हन्ताऽहम्' इति वेत्ति जानाति । यश्च अन्यो जनः, एनम् आत्मानम् हतम् देहहनने 'हतोऽहम्' इति हननक्रियायाः कर्मभूतम्, मन्यते जानाति । तौ आत्मनि हननकर्तृत्व-कर्मत्वाऽऽरोपिणौ, उभौ द्वावपि, न विजानीतः न विवेकेन अहंप्रत्यय-विषयम् आत्मानं जानीतः । देहे स्थूले सूक्ष्मे वा हन्तरि सति 'हन्ताऽहम्' इति,

न जायते म्रियते वा कदाचिद्
नायं भूत्वाभविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥२०॥

---

देहे स्थूले हते सति 'हतोऽहम्' इति 'हतोऽयम् आत्मा' इति वा यौ जानीतः, तौ द्वावपि देहात्मबुद्धिकत्वेन भ्रान्तौ सन्तौ 'अहंप्रत्ययविषयस्य आत्मनः स्वरूपस्य अनभिज्ञौ एव स्तः, इत्यर्थः। (यस्मात्) अयम् आत्मा, न हन्ति, न हननक्रियायाः कर्ता भवति। न हन्यते न च हननक्रियायाः कर्म भवतीत्यर्थः अविक्रियत्वादिति शेषोऽत्र। एतेन आत्मनोऽव्ययत्वेन हननक्रियायाः कर्मत्वस्याऽसम्भवेऽपि देहकर्मकहननक्रियायाः कर्ता आत्मा स्यादित्यपास्तम्। अविक्रियत्वेन समाधानात्। अनेन वाक्येन आत्मनि सर्वविकाराऽभावस्योपलक्षणीयत्वात्। अतः कस्या अपि क्रियायाः कर्ता आत्मा न भवति, क्रियाकर्तृत्वस्य विकारत्वेन आत्मनि तदभावात्। यथा लौहपिण्डे वह्निसंबन्धादेव दग्धृत्वं, न स्वतः। तथैव अन्वयव्यतिरेकाभ्यां बुद्ध्यादिसमनियतं कर्तृत्वं बुद्ध्यादेरेव धर्मो नात्मनः। आत्मनि कर्तृत्वप्रतीतिस्तु बुद्ध्यादिसंबन्धादेव। आत्मनो बन्धोऽपि बुद्ध्यादिविशिष्टस्यैवात्मनो न केवलस्य। आत्मनो मोक्षश्च बुद्ध्यादिवियोग एवेति बन्धमोक्षयोर्न वैयधिकरण्यम्। जगद्रचनाकर्तृत्वमपि ब्रह्मणो मायासंबन्धादेव, न स्वतः। तस्मान्न कर्तृत्वम् आत्मधर्मः। स्पष्टञ्चेदं 'कर्ता शास्त्रार्थवत्त्वात्' 'यथा च तक्षोभयथा' इति ब्रह्मसूत्राधिकरणे शाङ्करभाष्ये। आत्मन्येवं क्रियामात्रस्यैव कर्तृत्वाऽभावेऽपि नायं हन्तीति विशेषक्रियोपादानं हन्तेः प्रकृतत्वेन पुरः स्फूर्तिकतया काकेभ्यो दधि रक्ष्यताम् इतिवद् उपलक्षणार्थत्वात्। कठोपनिषदि अयं श्रौतः पाठः—"हन्ता चेन्मन्यते हन्तुम्। हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥" (१।२।१९) इति। नार्थे भेद इति द्रष्टव्यम् ॥१९॥

अवतरणम्—ननु आत्मनो हननक्रियाया अभावे 'अविक्रिय आत्मा इति कारणमुक्तं पूर्वम्। तत्र कथम् अविक्रिय आत्मा? इति चेद् द्वितीयो मन्त्रः न इति।

व्याख्या—अयं कदाचिद् न जायते म्रियते वा। (यस्मात्) न भूत्वा भूयो भविता न वा। (तन्त्रेण) भूत्वा भूयो न भविता न वा (इति)।

(यस्माद् न जायते तस्माद्) अजः। (यस्मान्न म्रियते तस्माद्) नित्यः। (अपि च) अयं शाश्वतः पुराणः। शरीरे हन्यमाने (अपि) (अयं) न हन्यते। इत्यन्वयः। अयं प्रकृत आत्मा। कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते कदाचिद् न जायते कदाचिन्न म्रियते इत्येवम् वाशब्दौ चार्थे। कदाचित् कस्मिन्नपि काले। न जायते नोत्पद्यते। जनिलक्षणा विक्रिया आत्मनो नास्तीत्यर्थः। कदाचिद्, म्रियतेवा, विनश्यति च। वाशब्दस्य चार्थत्वात् 'न जायते' इत्यतो नकारव्यानुकर्षणाद्, न कदाचिद् म्रियते चेत्यर्थः। अनेन आत्मनो विनाश-लक्षणा अन्त्या विक्रिया प्रतिषिद्धा। 'न जायते' इत्यत्र हेतुमाह—नायंभूत्वे-त्यादि (यस्यादयं कदाचिद) न भूत्वा अविद्यमानो भूत्वा भूयः पुनः पश्चात् कदाचित् भविता उत्पत्ति गन्ता न वा न चास्तीत्यर्थः। भूत्वेत्यत्र महाविभा-षया वैकल्पिकत्वात् समासाऽभावः। भवितेति तृजन्तं कृदन्तम्। यो हि प्राग् अविद्यमानो भूत्वा पश्चादुत्पत्ति गच्छति 'स जायते' इत्युच्यते लोके। नैवम् आत्मा। तस्माद् आत्मा न जायते इत्याशयः। अपि चात्र तन्त्रेण न म्रियते इत्यत्रापि हेतुमाह–नायंभूत्वेयादि। इह वा शब्दवलान्नशब्दबलाच्च तन्त्रं गम्यते। एकेन अनेकार्थबोधनं तन्त्रम् इत्युक्तम्। (यस्माद्) अयमात्मा (कदाचिद्) भूत्वा उत्पद्य भूयः पुनः पश्चात् (कदाचिद्) न भविता अभावं गन्ता न वा न चास्ति। अत्र न भवितेत्यत्र महाविभाषया वैकल्पिकत्वात् समासाऽभावः। योहि कदाचिद् भूत्वा कदाचिद् न भवति अभावं गच्छति स 'म्रियते' इत्युच्यते लोके। नैवम् आत्मा। तस्मादात्मा न म्रियते इत्याशयः। न जायते इत्यादिनोक्तमुपसंहरन्नाह-अजो नित्य इति। (यस्मादयं कदाचिन्न-जायते तस्माद्) अजःआत्मा न जात इत्यर्थः। "अनेन जन्मपूर्विका अस्तित्व-विक्रियापि न आत्मनोऽस्तीत्याह" इत्यानन्दगिरिः। (तथा यस्मादयं न म्रियते तस्माद् आत्मा) नित्यः कूटस्थः। 'त्यब्नेर्ध्रुव इति वक्तव्यम्' (का.वा.) इति निशब्दात् त्यप्। शेषानपि विकारात् निराकर्तुमाह–शाश्वत इत्यादि। (तथा अयमात्मा) शाश्वतः शश्वत् सर्वदा भवः सत्तावान्। एतेन आत्मनि अपक्षयलक्षणविकारस्य निषेधः। यो हि अपक्षीयते नासौ देहादिः सर्वदा सत्तावान्। आत्मा तु सर्वदा सत्तावान्। तस्मान्न अपक्षीयते। अपक्षयो हि आकारक्षयेण वा स्याद् गुणक्षयेण वा। नाद्यः आत्मनो निरवयवत्वात्। न च द्वितीयः स्यात् तस्य निर्गुणत्वादित्याशयः। "अपक्षयविपरीताऽपि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते–पुराणइति। योहि अवयवागमेन उपचीयते स 'वर्धते' 'अभिनवः' इतिचोच्यते। अयन्तु आत्मा निरवयवत्वात् पुराऽपि

वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥

---

न व एवेति पुराणो न वर्धते इत्यर्थः ।' इति भाष्यम् । 'पृषोदरादीनि यथोपदिष्टम्' ( पा. सू. ) इति पुराणशब्दस्य साधुत्वम् । अत्र कठोपनिषदि शाङ्करभाष्यम्–"यो हि अशाश्वतः सोऽपक्षीयते अयन्तु शाश्वतः, अत एव पुराणः पुरापि नव एवेति । यो हि अवयवोपचयद्वारेण अभिनिर्वर्त्यते स इदानीं नवो यथा कुम्भादिः । तद्विपरीतस्तु आत्मा पुराणो वृद्धिवर्जित इत्यर्थः ॥" इति । विपरिणामलक्षणविकारमपि प्रतिषेद्धुमाह–न हन्यते इत्यादि । (तथा) शरीरे स्थूलदेहे हन्यमाने विपरिणम्यमाने (अपि) अयमात्मा । न हन्यते न विपरिणम्यते ।" हन्तिरत्र विपरिणामार्थको द्रष्टव्योऽपुनरुक्ततायै । न विपरिणम्यते इत्यर्थः ।" इति भगवान् शङ्कराचार्यः । अन्यथा न म्रियते इत्यनेनैव गतार्थत्वाद् 'न हन्यते' इति पुनरुक्तं स्यात् । किञ्च पूर्वमपि नायं हन्ति, न हन्यते इत्युक्तम् इति भाष्याशयः । एवञ्चात्र— "जायतेऽस्तिवर्धते विपरिणमतेऽपक्षीयते विनश्यतिचेति षड्भावविकाराः" इति निरुक्तकारमहर्षियास्कोक्ता उपलक्षणतया तत्रैवान्तर्भूता इतरेऽपि यौवनादयः क्रियादयश्च सर्वे एव विकारा आत्मनि निराकृताः । एवञ्च यस्मात् सर्वविकारशून्य आत्मातस्माद् उभौ तौ न विजानीत इति पूर्वमन्त्रेणास्य मन्त्रस्य संबन्धः । कठोपनिषदि तु अयं श्रौतः पाठः–"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥" (कठो० १।२।१८ इति ॥२०॥

अवतरणम्—'य एनं वेत्ति हन्तारम्' इति प्रथम मन्त्रेण 'आत्मा हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय तत्र हेतुम् आत्मनो ह्यविक्रियत्वं द्वितीयमन्त्रेण 'न जायते म्रियतेवा' इत्यादिना संसाध्य सम्प्रति भगवान् पूर्वमन्त्रप्रतिज्ञातमर्थम् उपसंहरति—वेदेति ।

व्याख्या–पार्थ हे पृथापुत्रार्जुन, यः पुरुषः, एनं प्रकृतम् आत्मानम् । अजम् जन्मतदनन्तरसत्तारूपप्रथमद्वितीयविकाररहितम् । (तथा) अव्ययम् अपक्षयरहितम् (तथा) अविनाशिनं विनाशरूपान्त्यविकाररहितम् (तथा) नित्यम परिशिष्टवृद्धिविपरिणामकर्तृत्वभोक्तृत्वादिरूपसकलविकाररहितं वेद विजानति, स विद्वान्, पुरुषः, कथं केन प्रकारेण, कं घातयति कस्य हन्तारं प्रयोजयति ? (कथं वा) कं हन्ति कस्य हननक्रियां करोति ? न कथञ्चित् कंचिद्

घातयति न च कथञ्चित् कञ्चिद् हन्तीत्यर्थः। किम् शब्द आक्षेपार्थकः सर्वत्र, न प्रश्नार्थकः। हननक्रियानिषेधे हेतुत्वेनोक्तस्य अविक्रियत्वस्य (अजत्वाव्ययत्वादिरूपस्य) हननप्रतिषेध इव सर्वकर्मप्रतिषेधे तुल्यरूपेण हेतुतया विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः। हन्तिमात्रस्य तु आक्षेप उपलक्षणार्थतया कृतः प्रकृते हननस्यैव पुरःस्फूर्तिकत्वात्। विदुषः सर्वकर्माऽसंभवे ह्यात्मनोऽविक्रियत्वमेव कारणमिति द्रष्टव्यम्। विदुषः एवाऽऽत्मत्वात्। न हि देहादिसंघातस्य विद्वत्ता। विदुषः कर्माऽसंभववचनाद् 'यानि कर्माणि शास्त्रेण विधीयन्ते तानि अविद्वद्विषयाणि' इति भगवतो निश्चयोऽवगम्यते। अत एव भगवान् नारायणः सांख्यान् विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति–"ज्ञानयोगेन सांख्यानां कर्मयोगेन, योगिनाम्" (३।३) इति। 'जन्मादिसर्वभावविक्रियारहितोऽहम्' 'अविक्रियोऽहम्' 'अकर्ताऽहम्' 'अभोक्ताऽहम्' तथा 'एकोऽहमात्मा' इति विज्ञानं शास्त्राचार्योपदेशतद नुष्ठानजनितैः शमदमादिभिः संस्कृते मनसि उत्पद्यते एव। "मनसैवाऽनुद्रष्टव्यम्" (बृह. ४।४।१९) इति श्रुत्या आत्मनः संस्कृतमनोरूपकरणगोचरत्वस्य स्पष्टमुक्तत्वात्। अत्र 'शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मन आत्मदर्शने करणम्' इति भगवान् शङ्कराचार्यः। शास्त्राचार्योपदेशतदनुष्ठान जनित शमदमादि संस्कृतं मन आत्मसाक्षात्कारे करणम् इति तदर्थः। आत्मनः करणाऽगोचरत्वस्योक्तिस्तु असंस्कृतमनोऽपेक्षया चक्षुरादिकरणाऽगोचरत्वाच्च। अत एव मनःसंस्कारार्थतया कर्मयोगस्य साफल्यम्। शुद्धचित्ते एव आत्मविज्ञानस्य संभवात्। एतेन 'तादृशम् आत्मविज्ञानं न कस्यापि जायते' इति परास्तम्। अत एवोक्तं खण्डनखण्डखाद्ये—"ईश्वरानुग्रहादेषा पुंसाम् अद्वैतवासना। महाभयकृतत्राणा द्वित्राणां यदि जायते॥" (१।२५) इति। अवधूतगीतायाञ्चोक्तम् "ईश्वरानुग्रहादेव पुंसामद्वैतवासना। महाभयपरित्राणा विप्राणामुपजायते॥" (१।१) इति। ननु यदि विदुषः सर्वविकार शून्यत्वेन कर्माऽसंभवस्तर्हि कथं जनकादेर्जीवन्मुक्तस्य कर्मवर्णनम्? इति-चेन्न। प्रबलप्रारब्धफलककर्मवशाद् बाधिताऽनुवृत्त्या लोकसंग्रहाय वा विदुषः शरीरेन्द्रियैः कर्माऽऽभाससंभवेऽपि विदुषः स्वस्मिन् कर्तृत्वाऽभिमानाऽभावात् तादृशकर्माऽऽभासस्य बन्धफलाऽजनकत्वाद् वस्तुगत्या तस्य कर्माऽऽभावस्यैव सत्त्वात्। तदुक्तं श्रीमद्भागवते—'मुक्तोऽपि तावद् बिभृयात् स्वदेहं प्रारब्धमश्नन् अभिमानशून्यः। यथाऽनुभूतं प्रतियातनिद्रः किन्त्वन्यदेहाय गुणान् न वृङ्क्ते॥' (५।१।१६) इति। ननु य एनमेवं वेद स न हन्ति

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥२२॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

---

इत्युक्ते यो हि अज्ञः स तु हन्तीति बोधः स्यात् ? न चेष्टापत्तिः नायं हन्ति इति सामान्यप्रतिज्ञाया विरोधात् । इति चेन्न । 'य एनमेवं वेद स न हन्ति,' आत्मानं हन्तारं नाऽभिमन्यते । यो हि आत्मानं हन्तारम् अभिमन्यते स न वेद' इति विवक्षितत्वात् । एवञ्च विदुषोऽविदुषश्च द्वयोरेव सर्वकर्माऽभावे समानेऽपि विद्वान् स्वात्मनि कर्तृत्वं नाऽभिमन्यते अविद्वांस्तु स्वात्मनि कर्तृत्वम् अभिमन्यते इति भेदः । शरीरेन्द्रियसंघातस्यैव कर्तृत्वं न कूटस्थ-स्यात्मन इति अष्टादशे 'अधिष्ठानं तथा कर्ता' इत्यादिप्रकरणे विस्तरेण वक्ष्यते ॥२१॥

**अवतरणम्**—आत्मनो ह्यविनाशित्वं यत् प्रतिज्ञातं प्रकृते तद् दृष्टान्ते-नापि स्फुटीकरोति—वासांसीति ।

**व्याख्या**—नरः पुरुषः यथा येन प्रकारेण, जीर्णानि दुर्बलतां गतानि, वासांसि वस्त्राणि, विहाय परित्यज्य, अपराणि अन्यानि नवानि नूतनानि (वासांसि) गृह्णाति उपादत्ते । तथा, तद्वत्, देही आत्मा जीर्णानि दुर्बलतां गतानि, शरीराणि तत्तद्जन्मभेदप्राप्तानि स्थूलशरीराणि विहाय परित्यज्य अन्यानि अपराणि नवानि अभिनवानि शरीराणि स्थूलजीर्णशरीरत्यागेऽपि संयाति संगच्छति । यथा जीर्णवस्त्रत्यागे पुरुषो न नश्यति तथैव जीर्णशरीर-त्यागेऽपि आत्मा न नश्यति इति तात्पर्यम् । बुद्धीन्द्रियादिघटितं सूक्ष्मशरीरम् अविद्यात्मकं कारणशरीरञ्च मोक्षकाल एव विद्वानेव त्यजतीति द्रष्टव्यम् । आत्मनः स्थूलशरीरग्रहणत्यागौ पूर्वोक्तौ बुद्धिसम्पृक्तस्यैव न केवलस्य । केवलस्य तु सर्वकर्माऽसंभवस्य पूर्वत्र प्रदर्शितत्वादित्यवधेयम् ॥२२॥

**अवतरणम्**—आत्मनो ह्यविनाशित्वमेव सुबोधयितुमाह—नैनमिति ।

**व्याख्या**—एनं प्रकृतं देहिनम् आत्मानम् शस्त्राणि खड्गादीनि, न छिन्दन्ति निरवयवत्वान्नास्य अवयवविभागं कुर्वन्ति । (तथा) पावकोऽग्निः,

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

---

एनं न दहति, न भस्मीकरोति । आपो जलानि च एनं न क्लेदयन्ति सावयव-मृत्पिण्डादिकमिव विश्लिष्टावयवं न कुर्वन्ति निरवयवत्वादेवेति भावः । (तथा) मारुतः पवनः, एनमात्मानम्, न शोषयति स्नेहवद्द्रव्यमिव स्नेह-शोषणेन न नाशयति स्नेहाऽभावादिति भावः । इह पृथिव्यप्तेजोवायूनां नाशकत्वाक्षेपः शस्त्राणां पृथिव्यन्तर्गतत्वात् । आकाशस्य तु न नाशकत्वा-क्षेपः तस्य नाशकत्वस्याऽप्रसिद्धेः ॥२३॥

(यत एवं तस्मात्) अयम् आत्मा अच्छेद्यः, द्वैधीकरणायोग्यः (तथा) अयम् अदाह्यः भस्मीकरणाऽयोग्यः । (तथा) अक्लेद्य आर्द्रीकरणाऽयोग्यः, अशोष्य एव च, तथा शुष्कीकरणाऽयोग्य एवास्तीति शेषः । एव शब्दस्य अच्छेद्यत्वादावपि सर्वत्र संबन्धः-अच्छेद्य एव, अदाह्य एवेत्येवम् । एवेन न तु छेदनयोग्यः, न च दहनयोग्य इत्येवमर्थः । (यस्माद् अन्योन्यनाशहेतू-न्यपि भूतानि नैनम् आत्मानम् नाशयितुम् उत्सहन्ते तस्माद्) अयं नित्यः, अविनाशी, (नित्यत्वात् सर्वगतः, सर्वत्रप्राप्तः, सर्वगतत्वात्) स्थाणुः स्थाणु-रिव स्थिरः, (स्थिरत्वाद्) अचलोऽयमात्मा, (अतः) सनातनश्चिरन्तनोऽनादिर्न कारणात् कुतश्चिन्निष्पन्नोऽभिनवः किन्तु सनातन एवेत्यर्थः । ननु 'न जायते म्रियते वा' इत्येकेनैव श्लोकेन आत्मनो नित्यत्वम् अविक्रियत्वञ्चोक्तम् पुन 'वेदाविनाशिनम्' इत्यारभ्य 'अचलोऽयं सनातनः' इति यावद् व्यर्थ श्लोककथनम्, क्वचिच्छब्दतः क्वचिच्चार्थतः पुनरुक्तेरिति चेद् न । दुर्बोधत्वा-दात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् भक्तवत्सलः कथं तु नाम संसारिणाम् अव्यक्तं तत्त्वं बुद्धिगोचरताम् आपन्नं सत् संसारनिवृत्तये स्यादित्याशयात् ॥२४॥

अवतरणम्—प्रकारान्तरेणाऽपि आत्मस्वरूपं निरूपयन् भगवान् वासु-देवोऽर्जुनाय आत्मस्वरूपमेवंभूतं परिज्ञाय आत्मविषये शोको न कर्तव्य इत्युप-दिशति—अव्यक्तेति ।

व्याख्या—(किञ्च) अयमात्मा अव्यक्तः सर्वकरणाऽविषयत्वाद-प्रत्यक्षः । यो हि इन्द्रियगोचरो भवति स प्रत्यक्षत्वाद् व्यक्त उच्यते अयन्तु

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२६॥

---

रूपादिहीनत्वान्न इन्द्रियगोचरस्तस्माद् अव्यक्तः उच्यतेऽभियुक्तैरितिशेषः। 'उच्यते' इत्यस्य तन्त्रेण त्रिष्वपि संबन्धः। (अव्यक्तत्वादेव) अयमात्मा अचिन्त्यः चिन्तनाऽनर्हः, उच्यते। यद्, हि वस्तु इन्द्रियगोचरं भवति तदेव चिन्ताविषयत्वमापद्यते। अयन्तु आत्मा अनिन्द्रियगोचरस्तस्माद् अचिन्त्य उच्यते। (अचिन्त्यत्वाद्) अविकार्यः, विकारानर्हः। यथा क्षीरादि दध्यादिरूपेण विकारि, न तथाऽयमात्मा निरवयवत्वाच्च अविक्रियः। न हि निरवयवं किमपि विकारि दृष्टम्। अविक्रियत्वाद् अयम् अविकार्य उच्यते। तस्माद्, एवं यथोक्तप्रकारेण, एनम् आत्मानम् विदित्वा विज्ञाय (त्वम्) अनुशोचितुं 'हन्ताहमेषाम्' 'एते मया हन्यन्ते' इत्येवं शोकं कर्तुं न अर्हसि न योग्योऽसि। यद्यपि "मनसैवानुद्रष्टव्यम्" (बृह. ४।४।१९) इतिश्रुतेः 'शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मन आत्मदर्शने करणम्' इति 'वेदाविनाशिनम्' (२।२१) इति श्लोकस्य भाष्ये भगवता शङ्कराचार्येणोक्तत्वात् तत्र दर्शन इत्यस्य प्रत्यक्षे इत्यर्थाद् आत्मा संस्कृतमनःकरणकप्रत्यक्षविषय एव। स्वप्रकाशत्वाद् रूपाद्यभावेऽपि आत्मनः प्रत्यक्षस्य मानसस्य स्वीकार एव तथापि सामान्यलोकस्य असंस्कृतमनसोऽप्रत्यक्षत्वमाश्रित्यैव अस्य अव्यक्तत्वम् अचिन्त्यत्वञ्चोक्तमिति द्रष्टव्यम्। नित्यनिर्विकारात्मस्वरूपज्ञाने सति आत्मनि हन्तृत्वहतत्वाऽभिमानौ अनुचितौ। एवंभूतात्मस्वरूपस्य अज्ञानदशायां क्रियमाणं शोकं सम्प्रति यथोक्तमात्मस्वरूपं ज्ञात्वा नित्यनिर्विकारात्मस्वरूपज्ञानदशायां परित्यजेति भगवतस्तात्पर्यम् ॥२५॥

**अवतरणम्**—एवं तत्त्वदृष्ट्या आत्मनो जन्मविनाशाऽभावात् सर्वविकारशून्यत्वाच्च तस्य देहादेश्च असत्त्वेन तयोर्विनाशे विनाशकत्वे वा शोको न कर्तव्य इत्युक्तम्। इदानीं प्राकृतजनदृष्ट्या यदि देहेन सह आत्मनो जन्म, तद्विनाशेन च आत्मनो विनाशः, इति अङ्गीक्रियेत तथापि शोको न कार्यः, इत्युच्यते—अथेति।

**व्याख्या**—अथ चेति पक्षान्तराभ्युपगमार्थम्। अथ च यदि च। प्राकृतजनदृष्ट्या देहेन सह आत्मनोऽपि जन्ममरणयोः स्वीकारस्य पक्षे इत्यर्थः। एनम् आत्मानम्, नित्यजातम् नित्यं जातो नित्यजातस्तम्। पुनः पुनर्जातम्।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥

---

पौनः पुन्यवाचकोऽत्र नित्यशब्दः 'नित्यवीप्सयोः' (पा. सू.) इत्यत्र यथा। लोकप्रसिद्धया तत्तद्देहे जाते जाते सति जातं जातम्। नित्यं मृतं वा, तत्तद्देहे विनष्टे विनष्टे सति विनष्टं विनष्टं च, मन्यसे अभिमन्यसे, तथापि तथा स्वीकारपक्षेऽपि, महाबाहो, महान्तौ बाहू यस्य स महाबाहुस्तत्संबुद्धौ हे महाबाहो। अनेन शोकं परित्यज्य युद्धे बाह्वोर्महत्वं प्रकाशयेति सूचितम्। त्वम् अर्जुनः, एवम् स्वोक्तेन प्रकारेण अर्थाद्, भीष्मादिनाशविषये शोचितुम् शोकं कर्तुम्, न अर्हसि न योग्योऽसि। अत्र कारणं परेण श्लोकेन वक्ष्यते ॥२६॥

अवतरणम्—पूर्वश्लोकार्थे कारणमाह जातस्येति।

व्याख्या—हि, यतः, जातस्य जन्मप्राप्तस्य, ध्रुवोऽव्यभिचारी, अवश्यं भावी, मृत्युर्मरणम्। अस्तीति शेषः। मृत्योर्ध्रुवत्वं विधेयम् स्ववर्तमानस्थूलशरीरधारकप्रारब्धफलककर्मक्षये जाते इति भावः। मृतस्य प्राणवियोगं प्राप्तस्य जन्म च ध्रुवम् अवश्यं भावि अस्तीति शेषः। तत्तद्देहकृतनूतनतत्तद्देहारम्भक प्रारब्धफलककर्मकृतभोगप्राप्तौ सत्यामिति भावः। जन्मवतो नाशो नाशवतो जन्म च अवश्यं भाविनी इति तात्पर्यम्। तस्माद् अवश्यं भावित्वाद् अपरिहार्ये अवर्जनीये अर्थे जन्ममरणलक्षणे त्वं बुद्धिमान् अर्जुनः शोचितुं नार्हसि अतः शोकं मा कार्षीरित्याशयः ॥२७॥

अवतरणम्—कार्यकरणसंघातात्मकानि भूतानि अपि उद्दिश्य शोको न युक्तः कर्तुमिति सकारणमाह—अव्यक्तेति।

व्याख्या—भारत हे भरतवंशोद्भवार्जुन, अव्यक्तादीनि अव्यक्तम् अदर्शनम् अनुपलब्धिः, आदिरुत्पत्तेः प्रागवर्तिरूपम् येषां तानि, व्यक्तमध्यानि (अपि) व्यक्तं दृष्टं मध्यम् उत्पत्तिमरणयोरन्तरालवर्ति रूपं येषां तानि (अपि) भूतानि पुत्रमित्रादिकार्यकरणसंघातात्मकानि, अव्यक्तनिधनान्येव (पुनः) अव्यक्तम् अदर्शनम् अनुपलब्धिर्निधनं मरणोत्तरवर्ति रूपं येषां तान्येव भवन्ति। मरणादूर्ध्वं पुनरव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थः। तत्र तादृशेषु

आश्चर्यवत्पश्यति, कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ।२९।।

---

अदृष्टदृष्टप्रणष्टेषु भूतेषु का परिदेवना ? कः शोकनिमित्तको विलापः ? यथा स्वप्ने दृष्टस्य स्वप्नात्पूर्वमुत्तरश्च न सत्ता केवलं स्वप्न एव सत्ता । न च प्रबुद्धः कश्चित्स्वप्नदृष्टप्रणष्टं शोचति तथैव गुर्वादीनां भूतानां कृतेऽपि शोको न युक्तः । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत् तथा' (मा. का. २।६) इति न्यायेन तेषाम् अव्यक्तादित्वाव्यक्तान्तत्वाभ्यां मिथ्यात्वस्य निर्णयात् । तथा चोक्तं महाभारते –'अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं तत्र का परिदेवना ?' (महा. स्त्री. २।१३) इति ।।२८।।

**अवतरणम्**—प्रकृत आत्मा दुर्विज्ञेयोऽस्ति । अतः केवलस्त्वमेव नोपालम्भपात्रम् । त्वदन्येऽपि बहवो जना आत्मस्वरूपविषये भ्रान्ताः सन्ति । तस्मादात्मविज्ञानाय प्रयतस्वेत्याशयेन आत्मनो दुर्विज्ञेयत्वं प्रदर्शयति भगवान्—आश्चर्येति ।

**व्याख्या**–कश्चिदेनम् आश्चर्यवत्पश्यति, तथैव च अन्य (एनम्) आश्चर्यवद् वदति । अन्यश्च एनम् आश्चर्यवत् शृणोति । कश्चिच्च एनं श्रुत्वाऽपि नैव वेद । इत्यन्वयः । (अथ च) आश्चर्यवद् (विद्यमानः) कश्चिद् एनं पश्यति । तथैव च आश्चर्यवद् (विद्यमानः) अन्य एनं वदति । आश्चर्यवद् (विद्यमानः) अन्यश्च एनं शृणोति । कश्चिच्च श्रुत्वाऽपि एनं नैव वेद इत्यन्वयः । वक्ष्यमाण श्रुत्यनुरोधात् तन्त्रेण द्वयोरेवार्थयोर्विवक्षास्ति । तत्र आद्यपक्षे आश्चर्यवदिति पश्यतीत्यादीनां क्रियाणां विशेषणम् । अन्यपक्षे तु आश्चर्यवदिति कर्तृणां विशेषणम् विद्यमानपदाध्याहारात् । अन्यथा क्रियातुल्यत्वाऽभावात् 'तेन तुल्यं क्रियाचेद् वतिः (पा. सू.) इति वतेरनुपपत्तिः । पक्षद्वयमिदं भाष्यकृता गृहीतमस्ति श्रुतिसिद्धान्तनिष्णातेन । कश्चिद् अर्थात् शास्त्रज्ञः एनम् आत्मानम्, आश्चर्यवत्, आश्चर्यम् अदृष्टपूर्वम् अकस्माद् दृश्यमानम् अद्भुतम् । तेन तुल्यं (दर्शनादिकम्) आश्चर्यवत् । 'तेन तुल्यं क्रियाचेद् वतिः' (पा. सू.) यत् तुल्यं सा क्रिया चेद् इति वतिः । आश्चर्यमिव । पश्यति, शाब्दज्ञानविषयम् करोति । परोक्ष जानातीति यावत् ।

'आश्चर्यकर्मकदर्शनतुल्यम् आत्मकर्मकं दर्शनम् कस्यचिद्' इति बोधः। तथा च आश्चर्यकर्मकदर्शनमिव आत्मकर्मकं दर्शनं दुर्लभम् अस्तीति भावः। दुर्लभत्वस्यैव द्वयोरुपमानोपमेययोर्दर्शनयोः साधारणधर्मतया तुल्यताप्रयोजकत्वात्। तथैव च अन्यः शास्त्रज्ञः सन्नेव शास्त्रोपदेष्टा, एनम् आत्मानम् आश्चर्यवद् आश्चर्येण तुल्यं वदति, आश्चर्यमिवोपदिशति। आश्चर्यकर्मकोपदेश इव आत्मकर्मकोपदेशोऽन्यस्येतिबोधः। अन्यश्च तथा अन्यः, एनम् आत्मानम्, आश्चर्यवद् आश्चर्येण तुल्यं शृणोति। आश्चर्यकर्मकश्रवणमिव आत्मकर्मकं श्रवणम् अन्यस्येति बोधः। पूर्ववदेव वदनश्रवणयोर्दुर्लभत्वं गम्यते। कश्चित् शास्त्राचार्योपदेश-तदनुष्ठानजनितशमदमादेरभावेन असंस्कृतमनाः पापप्रतिबद्धो वा श्रुत्वाऽपि उपलक्षणतया श्रुत्वा दृष्ट्वा उक्त्वाऽपि एनम् आत्मानम्, नैव वेद नैव प्रत्यक्षेण जानाति, अपि शब्दात् यो न श्रुतवान् यो न दृष्टवान्, यश्च नोक्तवान् स नैव वेदेति किमाश्चर्यम्? इत्यर्थः। एतेन आत्मप्रत्यक्षे श्रवण-दर्शन-प्रवचनानां दण्डचक्रादिन्यायेन मिलितानां कारणता द्योतिता। संस्कृतेनैव मनसा आत्मसाक्षात्कारः संभवतीत्यपि। प्रतिबन्धे सति आत्मविज्ञानं न जायते इति ब्रह्मसूत्रे 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्' (३।४।५१) इत्यत्र स्पष्टम्। अथ च योऽयम् आत्मानं पश्यति स आश्चर्यतुल्यो विद्यते। यश्च वदति यश्च शृणोति तावपि आश्चर्यतुल्यौ विद्येते। अनेकस्मिन् सहस्रे कश्चिदेव पश्यति, वदति वा शृणोति वा। आश्चर्यतुल्यो दुर्लभो जन इत्यर्थः। शेषं पूर्ववत्। तथा च पक्षद्वयव्याख्यानाद् अयमर्थः श्लोकस्य सिध्यति--'आत्मविषयकं शाब्दज्ञानं दुर्लभम्। आत्मविषयकशाब्दज्ञानवांश्च दुर्लभः (विरलः) तथा आत्मकर्मकोपदेशो दुर्लभः आत्मकर्मकोपदेशकर्ता च विरलः। तथा आत्मकर्मकं श्रवणं दुर्लभम्, आत्मकर्मकश्रवणकर्ता च विरलः। तथाऽऽत्मविषयकं प्रत्यक्षज्ञानम् अत्यन्तदुर्लभम्, आत्मविषयकप्रत्यक्षज्ञानवांश्च अत्यन्तविरलः।' इति। तथा च श्रुतिः--'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्योऽस्य वक्ता, कुशलोऽस्य लब्धा, आश्चर्यो ज्ञाता कुशलानुशिष्टः॥' (कठो.) इति। अत्र लब्धा शाब्दज्ञानवान्। ज्ञाता प्रत्यक्षज्ञानवान्। वेदनञ्च प्रत्यक्षज्ञानम्। अस्यां श्रुतौ पूर्वार्द्धेन श्रवणवेदनयोर्दुर्लभत्वं बोधितम्। उत्तरार्द्धेन तु वक्तृलब्धृज्ञातॄणां विरलत्वमुक्तम्। श्रुत्वाप्येनं वेद न चैव कश्चिद्' इत्यस्य प्रतिबन्धवशादिति शेषः। अपरस्तु प्रतिबन्धरहितो वेद एवेत्याशयाद्, 'आश्चर्योऽस्य' ज्ञाता इत्यनेन न विरोधः। अतो दुर्विज्ञेय

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

---

आत्मेत्यभिप्रायः। यत्तु केचिद् आश्चर्यवद् विद्यमानमात्मानं कश्चित्पश्यति इत्यादिरीत्या आत्मनोऽपि आश्चर्यतुल्यविद्यमानत्वं व्याख्यातवन्तस्तन्न रमणीयम् दर्शितश्रुत्यनुरोधशून्यत्वात् सर्वव्यापकस्य विद्यमानताया आश्चर्यतुल्यत्वाऽभावाच्चेति दिक्। ननु 'आत्मा दुर्बोध' इति प्रकृतश्लोकस्य तात्पर्यं वर्णितम्। तत्कथं संगच्छते? यावता 'अन्तवन्त इमे देहा.' (२।१८) इतिश्लोकस्य व्याख्याने 'अप्रमेयस्य' इति पदस्य विवरणे 'आत्मा अहमित्याकारकप्रत्ययवेद्यत्वेन सर्वस्यापि लोकस्य प्रसिद्ध एवेति पूर्वमुक्तं भवता इतिचेत् सत्यम्। अहं प्रत्ययेन अहं करोमि' 'अहं गच्छामि' इत्यादौ कर्तृत्वाद्यनात्मधर्मविशिष्टस्यैव आत्मनः प्रतीति न तु शुद्धस्य कूटस्थस्य केवलस्यात्मनः। अतएव तत्राप्युक्तम्–'शास्त्रं 'मनुष्योऽहम्' 'कर्ताऽहम्' इत्याद्यनात्मधर्माध्यारोपनिवर्तकमात्रम्' इति। तस्मात् केवलस्य आत्मनो विज्ञानं दुर्लभमेवेति स्थितम् इति न कश्चिद् विरोधः। विज्ञानशब्देनापि अपरोक्षमेव ज्ञानम् अभिप्रेतम् इति द्रष्टव्यम्। एवञ्च विज्ञानम्, प्रत्यक्षज्ञानम्, अपरोक्षज्ञानम्, अवगतिः, साक्षात्कारः–एते सर्वे शब्दाः समानार्थकाः सन्ति। प्रत्यक्षात्मकस्य संसारभ्रमस्य प्रत्यक्षात्मकमेव आत्मज्ञानं निवर्तकं, नान्यदित्यपि द्रष्टव्यम् ॥२९॥

अवतरणम्—अथेदानीं प्रकरणार्थमुपसंहरति—देहीति।

व्याख्या—भारत, हे भरतवंशोद्भवार्जुन, (यस्मात्) सर्वस्य चराचरस्य प्राणिमात्रस्य देहे (सर्वगत्वात् स्थितो देहे वध्यमानेऽपि) देही शरीरी आत्मा, नित्यं सर्वासु अवस्थासु अवध्यः वधं कर्तुम् अयोग्यः। निरवयवत्वान्नित्यत्वाच्चास्तीति भावः। तस्मात् त्वम् सर्वाणि भूतानि भीष्मादीनि पञ्चभूत रचितदेहोपाधिकात्मनः समुद्दिश्य शोचितुं नार्हसि ॥३०॥

अवतरणम्—इह परमार्थतत्त्वमपेक्ष्य शोकमोहौ न कर्तव्यौ इत्युक्तं प्राक्। सम्प्रति तु स्वधर्मम् अपेक्ष्यापि, न केवलं परमार्थतत्त्वमपेक्ष्यैव, शोकमोहाभ्यां विकम्पितुं नार्हसीत्युच्यते—स्वधर्मेति।

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्त्रियस्य न विद्यते ॥३१॥

---

व्याख्या—च किञ्च, क्षत्त्रियस्य क्षदति क्षतात् त्रायते वा क्षत्त्रम्, क्षत्त्रस्याऽपत्यं क्षत्त्रियः। तस्य। स्वधर्मम् स्वः स्वाभाविको धर्मः स्वधर्मस्तम् अपि शब्दात् परमार्थतत्त्वं च पूर्वोक्तं संगृह्यते। अवेक्ष्य धर्मशास्त्रानुसारं विचार्य त्वं (क्षत्त्रियः) धर्म्याद्, धर्मः पृथिवीजयद्वारेण करिष्यमाणो यागादिः। प्रजारक्षणश्च। तदर्थत्वाद् धर्माद् अनपेतम्, धर्मेण युक्तम्, धर्म्यम् तस्मात्। 'धर्मपथ्यर्थन्यायादनपेते' (पा. सू.) इति यत्। किञ्च धर्मस्य यागादेः प्रजारक्षणस्य च निमित्तं धर्म्यम् तस्मात्। 'तस्य निमित्तम्' इत्यधिकारे 'गोद्व्यचः' (पा. सू.) इत्यादिना यत्। अपि च धर्मो युद्धविषयकन्यायः। तस्माद् अनपेतं धर्म्यं तस्मात्। युद्धाद् विकम्पितुं प्रचलितुं नार्हसि। युद्धं हि क्षत्त्रियस्य स्वयं धर्मः सन् धर्मान्तरस्य यागप्रजारक्षणादेः कारणश्चास्ति। तस्मात् क्षत्त्रियस्त्वम् क्षत्त्रियस्य स्वाभाविकधर्मभूताद्धर्मान्तरस्य कारणाच्च युद्धाद् विचलितुं नार्हसि स्वधर्माऽपेक्षयाऽपि। परमार्थतत्त्वाऽपेक्षया तु विचलितुं नार्हसीत्युक्तमेव प्रागित्याशयः। युद्धं हि क्षत्त्रियस्य स्वाभाविको धर्म इति अष्टादशेऽपि वक्ष्यते—शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम् इति। मनुनाऽप्युक्तम्—'समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः। न निवर्तेत संग्रामात् क्षितिं धर्मेण पालयन् ॥' (७।८७) इति। युद्धविषयकन्यायोऽपि मनुना दर्शितः 'न कूटैरायुधैर्हन्याद् युध्यमानो रणेरिपून्। न कर्णिभिर्नाऽपि दिग्धैर्नाग्निज्वलिततेजनैः' (७।९०) इत्यादौ। ननु धर्म्ययुद्धादपि श्रेयोऽन्यत् क्षत्त्रियस्य स्यादिति तदेव मया कर्तव्यम् इति चेद्-मैवम्-इत्याह—धर्म्याद्धि युद्धादित्यादि। धर्म्याद् युद्धाद् अन्यत् श्रेयः प्रशस्यतरं (कर्म) क्षत्त्रियस्य क्षत्त्रियत्वाऽभिमानिनो न विद्यते। एतेन 'न च श्रेयोऽनुपश्यामि' इति यदुक्तं तदपि समाहितम्। ननु युद्धस्य गुर्वाद्यनेकप्राणिहिंसात्मकस्य अहिंसा शास्त्रेण विरोधात् कथं क्षत्त्रियस्य प्रशस्यतरम् इति चेद् न अग्नीषोमीयादियागेषु पशोहिंसाया इव युद्धे क्षत्त्रियस्य हिंसाया विहितत्वात् सामान्यशास्त्रीयोद्देश्यतायां विशेषशास्त्रीयोद्देश्यातिरिक्तत्वेन सङ्कोचस्य स्वीकारात्। यथा च अग्नीषोमीयादियागेषु विहिता पशोर्हिंसा हीनतरच्छागादिदेहपरित्यागपूर्वककल्याणमयदेहस्वर्गादिप्रापकत्वान्न हानिकरी, तथैव युद्धे मृतानामपि कल्याणतरदेहादिप्राप्तेस्तेषां हिंसा न क्षतिकरीति भावः ॥३१॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥
अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिश्च हित्वा पापमवाप्स्यसि ॥३३॥

---

अवतरणम्—क्षत्रियाणां युद्धस्य कर्तव्यत्वे कारणान्तरमाह—यदृच्छयेति ।

व्याख्या—च = किञ्च । पार्थ हे पृथापुत्र सुखिनः सुखम् अस्ति एषाम् इति 'सुखादिभ्यश्च' (पा. सू.) इति इनिः । अचिरभविष्यत्कालप्राप्य-राज्यस्वर्गादिसुखयुक्ता एवेत्यर्थः 'सर्वं वाक्यं सावधारणम्' इति न्यायात् । क्षत्रियाः क्षत्रियत्वजात्यभिमानिनः यदृच्छया अप्रार्थितया, अयत्नेन, उपपन्नं प्राप्तम्, अपावृतम् उद्घाटितं, स्वर्गद्वारम्, स्वर्गस्य देवभोग्यनानाविध-सुख सामग्रीसहितदेशविशेषस्य द्वारं प्रवेशमार्गभूतम् । युद्धे मृतानां देवदेह-प्राप्तिपूर्वकं स्वर्गे सद्यः प्रवेशलाभाद् इत्याशयः । युद्धे विजयिनां कृते तु लक्षणया स्वर्गस्य स्वर्गसदृशस्य राजधानीनगरस्य प्रवेशमार्गभूतम् । तन्त्रेण इदम् अर्थद्वयं भवति । ईदृशं धर्म्यम्, युद्धं संग्रामं लभन्ते प्राप्नुवन्ति । अत्र ईदृशं युद्धं ये लभन्ते ते क्षत्रियत्वाऽभिमानिनः सुखिनः सन्ति' इति सुखि-त्वांशेऽपि विधेयता विवक्षिता, 'ते किं सुखिनो न सन्ती'तिभाष्यात् तथा प्रतीतेः । काव्यप्रकाशे 'रक्तं पटं वय' इत्यत्र ईदृशी विधेयता दृष्टचरी । अत-एव च 'स्वजनं हि कथं हत्वा सुखिनः स्याम माधव' इति यदुक्तं तदपि समाहितम् । इतोऽपि हेतोस्त्वं युद्धाद् विकम्पितुं नार्हसीति वाक्यार्थः ॥३२॥

अवतरणम्—युद्धकरणे गुणान् उक्त्वा सम्प्रति युद्धाऽकरणे दोषानाह-अथेति ।

व्याख्या—अथेति पक्षान्तरस्वीकारे । पक्षान्तरं स्वीकुर्वन् । चेत् यदि । त्वम्, इमं प्रकृतं, धर्म्यं धर्मादनपेतम्, संग्रामं युद्धं न करिष्यसि, ततस्तर्हि, स्वधर्मम्-स्वः क्षत्रियस्य स्वाभाविको धर्मो युद्धाचरणरूपः, तम् । कीर्तिञ्च महादेवसमागमादिरूपाम्, हित्वा त्यक्त्वा पापं विहिताऽकरणजन्यप्रत्यवायम् अवाप्स्यसि प्राप्स्यसि । 'सर्वं वाक्यं सावधारणम्' इति न्यायात् केवलं पापमेव प्राप्स्यसि न कल्याणं किञ्चिदित्यर्थः ॥३३॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाऽहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

---

अपि च किञ्च, भूतानि लोकाः, ते तव, अव्ययाम् दीर्घकालव्यापिनीम्, अकीर्तिम् अयशः 'युद्धात् पलायितः' इत्यादिरूपाम्, कथयिष्यन्ति वदिष्यन्ति । अकिञ्चित्करत्वाद् अकीर्तिः सोढव्या इति चेन्मैवम्—संभावितस्य 'धर्मात्मा' 'शूरः' इत्येवमादिगुणै र्लोके सम्मानितस्य, च–तु अकीर्तिः, अपयशः, मरणाद् अतिरिच्यते मृत्युदुःखाऽधिकदुःखदा भवतीत्यर्थं ॥३४॥

अवतरणम्—ननु बन्धुस्नेहाद् युद्धान्निवृत्तस्य शूरस्य मम अकीर्तिः कथं स्याद् अत आह—भयादिति ।

व्याख्या—(त एव) महारथा दुर्योधनादयः । त्वां, भयात् कर्णादिभ्यो भीतेर्न तु कृपया, रणाद् युद्धाद्, उपरतं निवृत्तं, मंस्यन्ते ज्ञास्यन्ति । येषां च येषामेव–महारथानाम् त्वम्, बहुमतः 'अर्जुनो महान् शूरः' इत्येवं बहु संमानितः (पूर्वं) भूत्वा 'पश्चात्' लाघवम् 'अर्जुनो भयात्पलायितः' इत्येवं लघुभावं निरादरं, यास्यसि प्राप्स्यसि ॥३५॥

च–किञ्च, तव, अहिताः शत्रवः, तव सामर्थ्यं समर्थतां शक्तिम्, निन्दन्तः कुत्सयमानाः, बहून्, अवाच्यवादान् 'भीरुरयम्' 'षण्ढोऽयम्' इत्यादिरूपान् वदिष्यन्ति । ततः शत्रुकृतबह्ववाच्यवाद-निन्दाप्राप्तिरूपाद् दुःखाद् दुःखतरम् अतिशयितदुःखम्, किं नु, किमाक्षेपे नु वितर्के । नास्ति किमपीति मम वितर्क इत्यर्थः ॥३६॥

अवतरणम्—युद्धाऽकरणे दोषान् प्रदर्श्य युद्धकरणे सर्वथा लाभ एवेति दर्शयति—हतो वेति ।

हतोवा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥
सुखदुःखे समे कृत्वा लाभाऽलाभौ जयाऽजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

---

व्याख्या—कौन्तेय, हे कुन्तीपुत्र, हतो वा यदि हतस्तर्हि स्वर्गं प्राप्स्यसि । जित्वा वा अथवा जित्वा विजयं प्राप्य, महीं पृथ्वीं, भोक्ष्यसे उपभोक्ष्यसे । धातूनामेव अनेकार्थत्वम् उपसर्गाणां द्योतकमात्रत्वम् इति स्पष्टं मञ्जूषायाम् । वाशब्द उत्तरपक्षस्य दृढत्वबोधक इति साहित्यदर्पणे स्पष्टम् । अतो जेष्यस्येवेति सूचितम् । तस्मात्सर्वथा लाभसद्भावाद् हेतोः, युद्धाय कृतनिश्चयः 'युद्धं करिष्याम्येव' इति निश्चयं कृतवान् सन् (युद्धाय) उत्तिष्ठ उत्थितो भव । एतेन, 'नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' (२१) इत्यपि समाहितम् । युद्धे जयपराजययोः संदेहस्य अतिस्वाभाविकत्वेऽपि उभयथा लाभसद्भावे सति सन्देहस्य अकिञ्चित्करत्वमस्तीत्याशयः ॥३७॥

अवतरणम्—इह प्रसङ्गाद् युद्धकरणे यथा पापं न स्यात् तं प्रकारं शिक्षयति भगवान्—सुखेति ।

व्याख्या—सुख दुःखे, अनुकूलवेदनात्मिका चित्तवृत्तिः सुखम् । प्रतिकूलवेदनात्मिका चित्तवृत्ति र्दुःखम् । ते । समे तुल्ये, कृत्वा, (तथा) लाभाऽलाभौ जयाऽजयौ (समान् कृत्वा) तद्विषयकरागद्वेषयोः परित्यागेन सुखदुःखयोर्लाभाऽलाभयोर्जयाऽजयोश्च समीकरणं संभवति । सुखे लाभे जये च रागम् अकृत्वा दुःखे अलाभे अजये च द्वेषम् अकृत्वा इति यावत् । लाभाऽलाभौ सुखदुःखयोः कारणभूतौ । जयाऽजयौ तु लाभाऽलाभयोरपि कारणभूतौ भवतः । ततः तत्परम् । युद्धाय युद्धक्रियायै, युज्यस्व घटस्व । एवम् अनेन प्रकारेण, पापम्, न अवाप्स्यसि, न प्राप्स्यसि । 'एतेन, 'पापमेवाश्रयेदस्मान्' (२१) इत्यपि समाहितम । एष उपदेशः प्रासङ्गिकः । अत्रापि पूर्वदर्शितरीत्या युद्धाय युज्यस्वेति अनुवादमात्रं न विधिरित्यवधेयम् ॥३८॥

अवतरणम्—'स्वधर्ममपि चावेक्ष्य' इत्यादिभिर्, 'नैवं पापमवाप्स्यसि' इत्यन्तैः श्लोकैः शोकमोहापनयनाय लौकिको न्यायः प्रसङ्गादुक्तो भगवता, न तु तात्पर्येण । परमार्थदर्शनं त्विह प्रकृतम् 'नत्वेवाहं जातु नासम्'

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥**

---

(२।१२) इत्यादौ तच्चोक्तम् । सम्प्रति उपसंहर्तव्यम् तत् । उपसंहारोऽयम् शास्त्रस्य विषयविभागस्य प्रदर्शनाय । इह हि प्रदर्शिते विषयविभागे अग्रे-वक्ष्यमाणम् 'ज्ञानयोगेन सांख्यानाम् कर्मयोगेन योगिनाम् ॥ (३।३)' इति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते । श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्ति शास्त्रम् इत्यत आह भगवान्—एषेति ।

व्याख्या—पार्थ हे पृथापुत्र, एषा 'जन्मादिसर्वविक्रियाशून्यत्वाद् अकर्ता, अभोक्ता आत्मा' इत्येषा । सांख्ये सम्यग् अविद्या तत्कार्येभ्यो विविक्त-रूपेण ख्यायते प्रकाश्यते परमार्थतत्त्वम् अनया इति संख्या सम्यग्ज्ञानरूपाऽन्तः-करणवृत्तिः । तत्र प्रकाशमानम् आत्मतत्त्वं सांख्यम् । तस्मिन् । तद्विषया । बुद्धिर्ज्ञानम् सम्यग्ज्ञानम् (साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम्) ते तुभ्यम्, अभिहिता मयोक्ता–'अशोच्यान् अन्वशोचस्त्वम्' (२।११) इत्यारभ्य 'स्वधर्ममपि चावेक्ष्य' इत्यतः प्राक्तनेन ग्रन्थेनेति शेषः । तादृशज्ञानप्रयोजको वाक्यसमुदाय उक्त इति यावत् । एतेन प्रकृतोक्तं परमार्थदर्शनम् उपसंहृतम् । ननु श्रुताऽपि सांख्यबुद्धिर्न मम प्रत्यक्षीभूतान्तःकरणे । केवलं शाब्दबोध-रूपेणैव भासते । न च तादृशशाब्दबोधमात्राच्छोकमोहौ नश्यतः । इति चेत् सत्यम्–प्रत्यक्षरूपैव सांख्यबुद्धिः सम्यग्दर्शनरूपा अज्ञान(भ्रम)निवर्तिका सती शोकमोहादिदोषान् दूरीकरोति । यतः प्रत्यक्षात्मकस्य मोहपूर्णस्य भ्रमस्य प्रत्यक्षात्मकेनैव तत्त्वज्ञानेन निवृत्तिर्दिङ्मोह-भ्रमादौ दृश्यते । स्पष्टञ्चेदं ब्रह्मसूत्रशाङ्करभाष्यस्य भामत्यां जिज्ञासाधिकरणे । तस्मात् सांख्यबुद्धेरात्मज्ञानस्य प्रत्यक्षत्वाय चित्तशुद्धये कर्मयोगोऽनुष्ठेयः । इत्याशयेन कर्मयोगं निरूपयितुं प्रस्तौति भगवान् 'योगे त्विमां शृणु' इति । योगे—चित्त शुद्धिद्वारा प्रोक्तसांख्यबुद्धिप्रत्यक्षताप्राप्तेरुपायभूते 'फलाभिसन्धिवैधुर्यं निःसङ्गत्वम्' इत्यानन्दगिरिः । निःसङ्गतया सुखदुःखादिद्वन्द्वप्रहाणपूर्वके-श्वराधनार्थके चित्तशुद्धिद्वारैव सम्यग्दर्शनान्तरङ्गसाधकध्यानयोगारोहण-सामर्थ्यप्रदे च स्वधर्माऽनुष्ठानलक्षणे कर्मयोगे । युज्यते ब्रह्मणा साकम् अनेनेति योगः सम्यग्दर्शनम् आत्मसाक्षात्कार इत्यर्थः । तत्साधकत्वाल्लक्ष-णया ईश्वराराधनार्थकं कर्माऽपि योगः । कर्मचासौ योगश्चेति कर्मयोगस्तत्र तु । इमाम् अनन्तरमेव मया वक्ष्यमाणां बुद्धिं शृणु । तत्प्रयोजकं वाक्यकदम्बं

नेहाऽभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

---

शृणु इत्यर्थः। तां कर्मयोगबुद्धिं स्तौति प्ररोचनार्थम्-बुद्ध्या युक्तइत्यादि यया कर्मयोगबुद्ध्या युक्तस्त्वं कर्मबन्धं ईश्वराराधनार्थककर्माऽतिरिक्तं कर्मैव धर्माऽधर्मरूपं बन्धः संसारबन्धः। तं प्रहास्यसि प्रकर्षेण पुनरुत्पादराहित्येन हास्यसि त्यक्ष्यसि। ईश्वरप्रसादनिमित्तकचित्तशुद्धिपूर्वकज्ञानप्राप्तेरिति भावः। ज्ञानं साक्षात्कार इह। अत एवाग्रे वक्ष्यते 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥' (५।११) इति। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।' (१८।४६) इति च। 'मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' (१८।५६) इति। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् (१८।६२) इति च। श्रुतावपि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन-तपसाऽनाशकेन--(बृह) इति प्रोक्तम् ॥३९॥

अवतरणम्—ननु कृष्यादिवत् कर्मणां कदाचिद् विघ्नबाहुल्येन चित्त-शुद्धि--फले व्यभिचारस्याऽपि संभवात् कदाचिच्च मन्त्रादियत्किञ्चिदङ्ग-वैगुण्येन चिकित्सादिवत् प्रत्यवायजनकत्वस्याऽपि संभवात् कथं कर्मयोगेन कर्मबन्धप्रहाणम्? इत्याशङ्कायाः समाधानं कुर्वन् पुनः कर्मयोगं स्तौति भगवान्--नेहेति।

व्याख्या—इह मोक्षमार्गभूते--योगे (कर्मयोगे) अभिक्रमनाशः अभि-क्रमः प्रारम्भोऽनुष्ठानम्। तस्य नाशः फलसाधकत्वाऽभावो नास्ति। अन्यत्र तु कृष्यादिकाम्ये कर्मणि प्रारम्भस्य नैकान्तिकफलकत्वम्। (अपि च) प्रत्यवायोऽनर्थो न विद्यते। चिकित्सावद् ज्योतिष्टोमादिकाम्यकर्मवच्च मन्त्रादियत्किञ्चिदङ्गवैगुण्ये कदाचिदिति शेषः। (किञ्च) अस्य कर्मयोगा-ख्यस्य धर्मस्य स्वल्पमपि स्वल्पांशोऽपि महतो भयात् संसारलक्षणात् त्रायते रक्षति। समयान्तरे कर्मयोगस्य परिपाकादिति शेषः। यदि स्वल्पमपि वृथा न भवति, कालान्तरे फलत्येव, तर्हि किं वक्तव्यं सर्वांशसहितः संसार-भयात् त्रायते इति? ईश्वरप्रसादहेतुकचित्तशुद्धिद्वारा तत्त्वसाक्षात्कारजन-कत्वादिति भावः ॥४०॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

---

अवतरणम्—पूर्वेण श्लोकेन काम्यकर्माऽपेक्षया नियमेन मोक्षसाधकतया कर्मयोगस्य वैशिष्ट्यमुक्तम् । अथ परेण काम्यकर्मबुद्ध्यपेक्षया प्रोक्तायाः सांख्यबुद्धेर्वक्ष्यमाणायाः कर्मयोगबुद्धेश्च वैशिष्ट्यमुच्यते—व्यवसायेति ।

व्याख्या—कुरुनन्दन, हे कुरुवंशभूषण, इह श्रेयोमार्गे-कर्मयोगे तदुपकृतसांख्ययोगे चेत्यर्थः । व्यवसायात्मिका व्यवसायः निश्चयः प्रत्यासत्त्या आत्मतत्त्वनिश्चयः । स आत्मा स्वरूपं यस्याः सा आत्मतत्त्वनिश्चयस्वरूपा । बुद्धिः 'आत्मा जन्मादिसर्वविकारशून्यः ।' 'निःसङ्गम् ईश्वराय कृतं कर्म ईश्वरप्रसादेन चित्तशुद्धिद्वारा तादृशात्मप्रत्यक्षजनकम् सत् सर्वदुःखनिवारकम्' इत्येवं ज्ञानरूपा । एका-बुद्धिद्वयत्वेऽपि अङ्गाङ्गिभावेन मोक्षरूपैकफलजनकत्वात् एकत्वसंख्यावती । अस्तीतिःशेषः । योगबुद्धिर्हि सांख्यबुद्धेरङ्गम् । संख्यायाः स्वेतरसंख्याव्यवच्छेदकत्वस्वभावाद् एकेत्यस्य एकैवेत्यर्थः । मुमुक्षोरिति च शेषः । कुरुनन्दनेति संबोधनेन उत्तमकुले जातस्य तव व्यवसायात्मकैकबुद्धिरेव युक्तेति सूचितम् । ननु इह श्रेयोमार्गे मुमुक्षोः कर्मयोगोपकृतसांख्ययोगबुद्धौ जातायाम् तद्विपरीता इतराः काम्यकर्मविषयकबुद्धयस्तदीयशाखाभेदाश्च कुतो न जायन्ते ? कामानां हृदि उत्थाने सति तत्पूर्तयेऽधीतवेदतया तत्पूरककर्मविषयकबुद्धेरपि प्राप्तत्वादितिचेद्-मैवम् । यतः सांख्ययोगबुद्धिरितरविपरीतबुद्धिशाखाभेदानां कामोत्थानबाधनद्वारा बाधिका भवति, वेदान्तरूपसम्यक्प्रमाणजनितत्वात् । अतः श्रेयोमार्गे व्यवसायात्मिका एकैव बुद्धिरस्तीति भावः । (तद्विपरीतम्) अव्यवसायिनाम् वेदान्तजनिततत्त्वनिश्चयात्मकतत्त्वविवेकबुद्धिरहितानाम् । हि तु । बुद्धयः अव्यवसायात्मिकाः काम्यकर्मविषयकबुद्धयः, बहुशाखाः, बहुभेदाः, कामानां स्वर्गपुत्रधनकलत्रादिभेदैर्बहुभेदत्वादिति भावः । अनन्ताश्च ऐकैकस्याऽपि कामभेदस्य बह्ववान्तरभेदवत्त्वेन अनन्तसंख्याश्च भवन्तीति शेषः । मुमुक्षूणाम् व्यवसायात्मकैकबुद्धेः फलं संसारान्मोक्षे अनन्तसुखम्, कामिनाम् अव्यवसायात्मकानन्तबुद्धीनां फलं तु अनन्तसंसारदुःखमितिभाष्ये स्पष्टम् ॥४१॥

अवतरणम्—विषयासक्तानां तु व्यवसायात्मिका बुद्धि र्न भवतीति निरूपयति भगवान्—यामिमामिति ।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥४२॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

---

व्याख्या—पार्थ, हे पृथापुत्र, अनेन संबोधनेन मत्सम्बन्धिनस्तव ममेव व्यवसायात्मकबुद्धिरेव भवितुं युक्तेति सूचितम । विपश्चितः पण्डिता बहुमेधसः तद्भिन्नास्तत्सदृशाः अविपश्चितः अल्पमेधसः । सादृश्यञ्च मेधावत्त्वेन । भिन्नत्वञ्च मेधाया महत्त्वाऽल्पत्वभेदाभ्याम् । 'नञिवयुक्त-मन्यसदृशाधिकरणे' इति महाभाष्यस्थपरिभाषया तद्भिन्नतत्सदृशस्य बोधः । अत एव 'अब्राह्मणमानये' त्यादौ ब्राह्मणभिन्नब्राह्मणसदृशः क्षत्रिया-दिरेवानीयते न तु पश्वादिः (एतेन वेदवाक्यानां तात्पर्यस्य ज्ञाने तेषाम् असामर्थ्यं सूचितम् । (अत एव) वेदवादरताः वेदानां वादेषु अर्थवादेषु 'अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोमम् अमृता अभूम' इत्येवमादिषु वाक्येषु रताः प्रीताः । अर्थवादो नाम विहितकर्मस्तुति-निषिद्धकर्मनिन्दाऽन्यतरफलकं विधिनिषेधभिन्नं विधिनिषेधाऽन्यतरशेषभूतं वाक्यम् । तदुक्तं 'विरोधे गुणवादः स्याद् अनुवादोऽवधारिते । भूतार्थवादस्तद्धानाद् अर्थवादस्त्रिधा मतः ॥ इति । प्रकृते 'तद्यथेहकर्मचितो-लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते' 'तमेव विदित्वाऽति-मृत्युमेति' इत्येवमादिश्रुत्यन्तरप्रमाणैर्हि सर्वसुकृतस्य क्षयित्वबोधनात् तत्त्वज्ञानादेव च अमृतत्वप्राप्ते र्बोधनात् पूर्वोक्तयोः श्रुत्योर्गुणवादत्वरूपार्थ-वादत्वमेव । तथा च अक्षय्यं सुकृतम्, अमृता अभूमेत्यत्र बहुकालव्यापित्व-मात्रं श्रुत्या प्रतिपाद्यते न मोक्षरूपं फलम् । अर्थवादस्य प्रयोजनं हि विहिते कर्मणि प्रशंसयाऽधिकारिणः प्रवर्तनम् । निषिद्धात्कर्मणोऽधिकारिणो निन्दया निवर्तनम् इत्यन्यत्र विस्तरः । अन्यत् स्वर्गप्राप्त्यादि फलसाधनेभ्यः कर्मभ्यो-ऽन्यद् आत्मविज्ञानम्, तत्फलभूतो मोक्षश्च, नास्तीति वादिनो वदनशीलाः । कामात्मानः कामस्वभावाः । कामो विषयभोगेच्छा' स्वर्गपराः स्वर्गः परः

प्रधानः पुरुषार्थो येषां ते। जन्मकर्मफलप्रदाम् जत्मैव कर्मणः फलम् तत्प्रददातीति ताम्। जन्मेति संसारोपलक्षणम्। वेदवादेन कर्मणि (काम्ये) प्रवृत्तिः काम्यकर्मणा च जन्मादिसंसारलाभः। अतो वेदवाग् जन्मकर्मफलप्रदा। भोगैश्वर्यगतिं प्रति, भोगोऽमृतपानोर्वंसीविहारपारिजातपरिमलाद्यास्वादग्रहणम्। ऐश्वर्यं देवादिप्रभुत्वम्। तयोर्गतिः प्राप्तिः, तां प्रतिःसाधनभूता ये क्रियाविशेषाः, ते बहुलाः सन्ति यस्यां वाचि ताम्। तत्र साधनभूता इत्यंशो वाक्यमर्यादया लभ्यते। सापेक्षत्वेऽपि गमकत्वात् समासः। क्रियाणां विशेषाः क्रियाविशेषाः–अग्निहोत्र-दर्श-पौर्णमासज्योतिष्टोमादयः। ते बहुला अधिकाः सन्ति यस्यां वाचि ताम् इत्यर्थः। पुष्पितां पुष्पितपलाशवृक्षवद् विफलतया आपातमात्ररमणीयाम्। अनित्यसातिशयफलजनकतया नित्यनिरतिशयफलाऽजनकत्वाद् न तु अन्ततोऽपि रमणीयाऽम् इत्यर्थः। याम् इमाम् क्रियाविशेषबहुलत्वेन उच्यमानाम् वाचम् काम्यकर्मकाण्डस्थवेदवाक्यलक्षणाम् प्रवदन्ति गूढं तत्तात्पर्यम् सम्यग् अनवधारयन्त एव बाह्यार्थमात्रम् अवलम्ब्य निगदन्ति। अधमाधिकारिणां पूर्वं स्वर्गादिलोभम् उत्पाद्य पश्चाद् नित्यनैमित्तिककर्मणि प्रवर्तनया तदनुष्ठानद्वारा तेषां चित्तशोधनं संपाद्य उत्तमाधिकारित्वे प्राप्ते ब्रह्मज्ञाने तान् प्रवर्त्य क्रमशो मोक्षसम्पादन एव काम्यकर्मकाण्डवेदस्य तात्पर्यम् इति हि रहस्यम्। तया क्रियाविशेषबहुलया वाचा, अपहृतचतेसाम् आच्छादितविवेकप्रज्ञानां, भोगैश्वर्यप्रसक्तानाम् भोगैश्वर्ययोः प्रकर्षेण सक्तानाम् अविपश्चितां वक्तृणां तच्छ्रोतृणाञ्च। समाधौ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्वम् इति समाधिरन्तःकरणम् बुद्धिः, तत्र। व्यवसायात्मिका आत्मतत्त्वनिश्चयस्वरूपा बुद्धिः साङ्ख्ययोगकर्मयोगयोश्चित्तवृत्तिः, न विधीयते, न भवतीत्यर्थः। कर्मकर्त रि लट्। यद्वा न विधीयते न क्रियते इत्यर्थः। शास्त्राचार्योपदेशाभ्यामप्रतिशेषः। ते मूढाः संसारे परिवर्तन्ते। ततश्च अनन्तं दुःखं लभन्ते इति भावः। समाधाविति बुद्धिरन्तः करणम्, वृत्तिमती गृह्यते। व्यवसायात्मिका बुद्धिरिति बुद्धिरन्तःकरणस्य वृत्तिमतो वृत्तिविशेषो गृह्यते निश्चयात्मक इति विवेकः ॥४२-४४॥

अवतरणम्– ननु मातापितृसहस्रेभ्योऽपि वत्सलतरतया जीवकल्याणे प्रवृत्ता वेदाः स्वर्गादि स्वल्पफलानि पुनर्जन्मादिदुःखमूलसंसारप्रदानि कर्माणि किमर्थं वदन्ति ? इत्याशङ्कायाः समाधानं कुर्वन् व्यवसायात्मकबुद्धिहीनानां

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

---

संसारबन्धनरूपं फलञ्च स्फुटीकुर्वन् दयानिधि भगवान् भक्ताय शिष्याय व्यवसायात्मकबुद्धिलाभाय कर्मयोगाङ्गं यत्नं शिक्षयति - त्रैगुण्येति ।

व्याख्या—अर्जुन, हे शिष्य, वेदाः, काम्यकर्मकाण्डस्थाः, प्रकरणसामर्थ्यादिह सामान्यवेदवाचकोऽपि वेदशब्दो वेदविशेषपरः । "वेदशब्देनात्र कर्मकाण्डमेव गृह्यते" इत्यानन्दगिरिः । तत्रापि प्रकरणपर्यालोचनयाऽत्र वेदशब्देन काम्यकर्मकाण्डस्थवेदानामेव ग्रहणं भाष्यपर्यालोचनया चेति वयम् । त्रैगुण्यविषयाः त्रयाणां गुणानां सत्त्वरजस्तमसां भगवन्मायास्वरूपघटकानां समाहारस्त्रिगुणम् 'पात्राद्यन्तस्य न' इति ङीपः प्रतिषेधः । त्रिगुणस्य कर्म त्रैगुण्यम् । 'गुणवचन ब्राह्मणादिभ्यः ष्यञ् कर्मणि च' (पा० सू०) इति ष्यञ् । त्रैगुण्यं काममूलः संसारः स एव प्रकाश्यत्वेन विषयो येषां ते । सन्तीति शेषः । अर्थाद् व्यवसायात्मकविवेकबुद्धिरहितानाम् अतएव कामिनाम् जन्मादिलक्षणः संसार एव काम्यकर्मानुष्ठानस्य फलं भवतीति । काम्यकर्मकाण्डस्थवेदाः सकामा येऽधिकारिणस्तान् प्रत्येव प्रवृत्ताः । निष्कामान् अधिकारिणः प्रति तु नित्यनैमित्तिककर्मकाण्डस्थवेदानां ज्ञानकाण्डस्थवेदानाञ्च प्रवृत्तिः । अतो युक्तं काम्यकर्मकाण्डस्थवेदानां संसारप्रकाशकत्वम् सकामान् अधिकारिणः प्रत्येव प्रवृत्तत्वात् । एवञ्च अधिकारिभेदेन उभयविधानां वेदानां प्रवृत्तिरिति न वेदानां वत्सलतरत्वे विरोध इति भावः । (त्वं तु संसार बन्धप्रहाणमिच्छन् मुमुक्षु र्व्यवसायात्मक बुद्धिलाभाय) निस्त्रैगुण्यो भव निष्कामो भव । अत्र त्रैगुण्यं त्रिगुणस्य कर्म कामस्तस्मान्निर्गतो भव । 'गुणवचने' त्यादिसूत्रे क्रियतेऽइति कर्मेत्यर्थः । अतएव कवेः कर्म काव्यम् इति व्युत्पत्तिः स्वीकृता काव्यप्रकाशे । त्रैगुण्यविषया वेदा इत्यत्र त्रैगुण्यं योग्यत्वात् काममूलः संसारः । निस्त्रैगुण्यो भवेत्यत्र तु त्रिगुणस्य कर्म कामएव योग्यत्वाद् गृह्यते इति न काऽपि क्षतिः । स्पष्टञ्चेदं भाष्ये । ननु शीतोष्णादिद्वन्द्वप्रतीकाराय वस्त्राद्यपेक्षणात् कथं निष्कामो भवेयम् ? तत्रोपायमाह दयानिधिर्निर्द्वन्द्व इति । निर्द्वन्द्वो भव । भवेति सर्वत्र संबध्यते । सुखदुःखे तद्धेतू च सप्रतिपक्षौ (परस्परविरोधिनौ) शीतोष्णादिरूपौ पदार्थौ द्वन्द्वशब्दवाच्यौ ततो निर्गतो भव । 'मात्रास्पर्शास्तु' इत्युक्तन्यायेन सुखदुःखशीतोष्णमानापमानादिद्वन्द्वसहिष्णु र्भवेत्यर्थः । ननु अत्यन्तदुःसहं दुःखं

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

---

कथं सोढव्यम् ? तत्रोपायमाह दयानिधि र्नित्यसत्त्वस्थो भवेति। सदा सत्त्वगुणाश्रितो भव सदा विवृद्धसत्त्वगुणो भवेत्यर्थः। नित्यसत्त्वस्थतया धैर्यमवलम्ब्य द्वन्द्वानि सहस्वेति भावः। ननु कथं विवृद्धसत्त्वो भवेयम् ? तत्रोपायमाह भगवान्-निर्योगक्षेमो भवेति। अनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः। ततो निर्गतो भवेत्यर्थः। योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करा। अतो निर्योगक्षेमो भवेति भावः। (तथा) आत्मवान् भव, अप्रमत्तो भव। न हि सकामस्य द्वन्द्वाकुलस्य निरासत्त्वाऽनाश्रितस्य योगक्षेमप्रधानस्य प्रमादिनः संसारनिवर्तनक्षमा विवेकबुद्धिः स्यादिति भावः। एष तु तवोपदेशः स्वधर्ममनुतिष्ठतः कर्मयोगघटकः ॥४५॥

अवतरणम्—ननु सर्वेषु वेदोक्तेषु कर्मसु कृतेषु प्राप्यानि फलानि स्वर्गादीनि यदि न काम्यन्ते कर्मयोगिना, तर्हि किमर्थं कर्माणि नित्यनैमित्तिकानि अनुष्ठीयन्ते 'ईश्वरायेति' कर्मयोगिना ? ईश्वरार्पणधियाऽपि स्वधर्माऽनुष्ठाने फलकामनाया अभावे वैफल्यं कर्ममार्गस्यापद्यते। किञ्च तैस्तैरानन्दविशेषैर्वञ्चितःस्यात् कर्मयोगीति चेत् तत्राह—यावानिति।

व्याख्या—लोके उदपाने (अनेकस्मिन्) यावान् अर्थस्तावान् सर्वतः सम्प्लुतोदके (यथा एकत्रैव भवति तथैव) सर्वेषु वेदेषु (अपि यावान् अर्थः) तावान् (अर्थः) विजानतो ब्राह्मणस्य (भवत्येव) इति सम्बन्धः। लोके जगति उदपाने उदकं पीयते अस्मिन्निति उदपानम् कूपतडागादिः क्षुद्रजलाशयः तस्मिन् (एकत्र कृत्स्नस्य प्रयोजनस्य क्षुद्रजलाशये परिच्छिन्नोदके असंभवाद्) अनेकस्मिन् परिच्छिन्नोदके क्षुद्रजलाशये कूपतडागादौ यावान् यत्परिमाणः स्नानपानादिरर्थः प्रयोजनम् सकलः, तावान् अर्थः सकलः सर्वतः सम्प्लुतोदके महाजलाशये गङ्गादौ एकत्रैव संपद्यते यथा तथैव सर्वेषु वेदेषु वेदोक्तेषु कर्मसु (अपि) (परमार्थतत्त्वम् अविजानतः कामिनः) यावान् स्वर्गादिफलानन्दः सम्पद्यते तावान् फलानन्दः (वस्तुतो निःसीमानन्दः) परमार्थतत्त्वं विजानतो ब्राह्मणस्य ब्रह्मभूतस्य संन्यासिनः (एकत्रैव ब्रह्मविज्ञाने) संपद्यते एव। सर्वेषां कर्मफलानां ज्ञानफलेऽन्तर्भावात्। 'सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत् स वेद' (छा. ४।१।४) इतिश्रुतेः।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भू र्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥

---

क्षुद्रानन्दानां ब्रह्मानन्दांशत्वात् स्वर्गादिहिरण्यगर्भानन्दपर्यन्तानन्दानां ब्रह्मानन्देऽन्तर्भूतत्वाच्च । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृह०) इतिश्रुतेश्च । इहापि च 'सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते' (४।३३) इति वक्ष्यति । तस्मात् प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्माणि नित्यनैमित्तिकानि अधिकृतेनेश्वरप्रसादद्वारा चित्तशुद्धिद्वारा सर्वतः संप्लुतोदकस्थानीयात्मस्वरूपभूतब्रह्मानन्दप्रापकज्ञाननिष्ठाधिकारप्राप्तये ईश्वरायेतिकूपतडगादिस्थानीयान्यपि कर्तव्यान्येवेतिभावः ॥४६॥

अवतरणम्—ननु यदि कर्मयोगमवलम्ब्य अर्थाद् निष्कामैः कर्मभिरात्मज्ञानं संपाद्य परमानन्दप्राप्तिः क्रियते कर्मयोगिना । तर्हि मया ज्ञानयोगमवलम्ब्य साक्षादेव आत्मज्ञानं किन संपाद्यं ज्ञानयोगिना सता ? इतिचेत्तत्राह—कर्मणीति ।

व्याख्या—(हे अर्जुन) ते तव अपरिपक्वकषायस्य, आत्मसाक्षात्कारप्रतिबन्धकपापाऽशुद्धान्तःकरणस्येति यावत् । कर्मणि एव कर्मनिष्ठायामेव, अधिकारो योग्यता । न तु ज्ञाननिष्ठायाम् अस्तीति शेषः । ज्ञाननिष्ठा वेदान्तवाक्यविचारादिः । पूर्वश्लोकगतस्य 'विजानतः' इति पदस्य सामर्थ्यादिह एवशब्देन ज्ञाननिष्ठाया एव व्यवच्छेदः । ननु तर्हि कर्म कुर्वतो मम तत्फलाऽभिलाषोऽपि स्यादितिचेत् तत्राह—मा फलेषु कदाचनेति । फलेषु फलविषये अधिकारस्तृष्णा मा भूदित्यर्थः । इह अधिकारशब्दार्थो लक्षणया तृष्णा भवति, मा भूदित्यनेन संबन्धे मुख्यार्थस्य बाधात् । कदाचन, कस्यामपि अवस्थायाम् । कर्मानुष्ठानात्प्राक् परतस्तत्काले चेत्यर्थः । फलेषु तृष्णा माभूद् इत्येतदेव प्रपञ्चयति-मा कर्मफलहेतुर्भूरिति । यदा हि कर्मणः फलस्य तृष्णया प्रयुक्तस्त्वं कर्मणि प्रवृत्तो भवेस्तर्हि त्वं कर्मणः फलस्य जन्मादिलक्षणसंसारस्य प्राप्तेर्हेतुः प्रयोजकः स्यास्तृष्णाद्वारा । अतो मैवंभूस्त्वम् । ननु यदि कर्मफलं नेष्यते तर्हि किं कर्मणा दुःखरूपेण ? इत्यत आह मा ते सङ्गोऽस्त्वकर्मणि इति । ते तव अकर्मणि कर्माऽकरणे सङ्गः प्रीतिर्माभूत् स्वधर्माऽनुष्ठानाऽभावे ईश्वरप्रसादस्याऽप्राप्तेश्चित्तशुद्ध्यभावे तत्त्वज्ञानाऽप्राप्त्या संसारान्मोक्षो न भविष्यतीति भावः ॥४७॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

---

अवतरणम्—ननु यदि फलतृष्णा प्रयुक्तेन न कर्तव्य कर्म, तर्हि कथं कर्तव्यम्? अत आह—योगस्थ इति।

व्याख्या—धनञ्जय, सिद्ध्यसिद्ध्योः समो भूत्वा योगस्थः सन् सङ्गं त्यक्त्वा कर्माणि कुरु, समत्वं योग उच्यते इति संबन्धः। धनञ्जयेति संबोधनेन यथा दिग्विजये महीपान् जित्वा धनमाहृत्य राजसूये यज्ञे विनियोजितवानसि तथाऽधुनापि प्रतीपमहीपान् जित्वा यज्ञादीन् संपादयेति सूचितम्। सिद्ध्यसिद्ध्योः फलतृष्णाशून्येन क्रियमाणे कर्माणि सत्त्वशुद्धिजा ज्ञानप्राप्तिः सिद्धिः। सत्त्वाऽशुद्धिजा ज्ञानाऽप्राप्तिरसिद्धिः, तयोः। समस्तुल्यो भूत्वा, ज्ञानस्य प्राप्तेः संभावनायां हर्षम्, अप्राप्तेः संभावनायां विषादं च त्यक्त्वेत्यर्थः। योगस्थः सन्, केवलम् ईश्वरार्थम् इतिशेषः। ईश्वरार्थम् ईश्वरप्रसादनार्थम् इत्यानन्दगिरीये (तत्रापि) सङ्गं 'ईश्वरो मे तुष्यतु' इति फलाऽभिलाषम् त्यक्त्वा, परित्यज्य, तत्रापि=कर्मानुष्ठानस्य ईश्वरप्रसादनफलकत्वे स्थितेऽपि तदभिलापं न कुर्यादित्यर्थं आनन्द गिरीये। कर्माणि नित्यनैमित्तिकानि स्वधर्मभूतानि कुरु अनुतिष्ठ, त्वम् इतिशेषः। ननु कोऽयं योगो यत्र स्थितः कर्माणि कुरु इत्युक्तम्? अत आह—समत्वं योग उच्यते इति। इह इदमेव सिद्ध्यसिद्ध्योः समत्वं योगस्थशब्दघटकयोगशब्दवाच्यम् इत्यर्थः। योगशब्दस्य अनेकार्थत्वाद् योगे त्विमां शृणु' इत्यत्रत्ययोगशब्दात् कर्मवाचकाद् न विरोधः ॥४८॥

अवतरणम्—ननु किमिति सिद्ध्यसिद्धिसमीभावरूपयोगे स्थितेनैव कर्म कर्तव्यम्? फलाऽभिलाषेऽपि तदनुष्ठातुं शक्यत्वादित्याशङ्क्य यथोक्तयोगयुक्तं कर्म स्तौति—दूरेणेति।

व्याख्या—धनञ्जय, हे धनञ्जय, हि यस्मात् कर्म फलार्थं क्रियमाणं यत् तत् कर्मेति प्रकरणसामर्थ्यादर्थः। बुद्धियोगात् समत्वबुद्धियोगात् कर्मणः दूरेण विप्रकर्षेण, अवरम् निकृष्टम्, अतिनिकृष्टम् इत्यर्थः। अस्तीति

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**

---

शेषः । जन्मरणादिसंसारहेतुत्वादिति भावः । (तस्मात्) बुद्धौ योगविषयायां, तत्परिपाकजायां सांख्यविषयायां बुद्धौ, शरणम् आश्रयम्, अन्विच्छ प्रार्थयस्व । अभयप्राप्तेः परम्परया कारणं कर्मयोगम् साक्षात्कारणं ज्ञानयोगं वा आश्रयस्व । परमार्थज्ञानशरणो भवेत्यर्थः । (यतः) फलहेतवः फलं हेतुः कर्मणि प्रवर्तको येषां ते । अथवा फलस्य जन्ममरणादिसंसाररूपफलस्य हेतवस्तृष्णाद्वारा ये सन्ति ते । फलतृष्णाप्रयुक्ताः सन्तो बुद्धियोगाद् दूरेण अवरं कर्म कुर्वाणा जनाः। कृपणाः दीनाः। जन्ममरणादिबहुसंसारदुःखभाजः। सन्तीति शेषः। 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः' (बृह० ३।८।१०) इतिश्रुतेः। बुद्धियोगादिति पञ्चमी 'पञ्चमीविभक्ते' (पा. सू.) इत्यवरयोगे । दूरेणेतितृतीया 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा. सू.) इति चकारात् प्रातिपदिकार्थमात्रे ॥४९॥

**अवतरणम्**—समत्वबुद्धियुक्तः सन् स्वधर्मम् अनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु—बुद्धीति।

**व्याख्या**—बुद्धियुक्तः सिद्ध्यसिद्ध्योः समत्वस्य बुद्ध्यायुक्तः (स्वधर्मम् अनुष्ठाय सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण) उभे द्वेऽपि, सुकृतदुष्कृते पुण्यपापे। इह अस्मिन् लोके। जहाति परित्यजति। सुकृतदुष्कृतहानेन संसारान्मोक्षं प्राप्नोतीतिभावः (यत एवम्) तस्मात्कारणात् योगाय समत्वबुद्धिरूपाय, युज्यस्व घटस्व। योगः स्वधर्माऽऽख्येषु कर्मसु ईश्वरार्पितचेतस्तया वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिस्तद्रूपो योगः (हि = यस्मात्) कर्मसु स्वधर्माख्येषु, कौशलं कुशलभावः। अस्तीति शेषः। बन्धकत्वस्वभावान्यपि कर्माणि तादृशसमत्वबुद्ध्या क्रियमाणत्वाद् बन्धकत्वस्वभावाद् निवर्तन्ते। बन्धकानि नैव भवन्ति । प्रत्युत ईश्वरप्रसादद्वारकसत्त्वशुद्धिद्वारा ज्ञानप्राप्तियोग्यतासम्पादनेन बन्धनाद् मोचयन्तीत्येवं योगः कर्मसु कौशलं भवति। तस्मात् त्वं सिद्ध्यसिद्धिसमत्वबुद्धियुक्तः सन् एव कर्म स्वधर्माख्यम् कुरु इति वाक्यार्थः ॥५०॥

**अवतरणम्**—ननु समत्वबुद्धियुक्तस्य सुकृतदुष्कृतहानं फलम् इत्युक्तम्। तावताऽपि को लाभस्तस्येति शङ्कां परिहरन् योगाय युज्यस्वेति पूर्वोक्तं समर्थयते—कर्मजमिति।

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

व्याख्या—हि यस्मात् । बुद्धियुक्ताः सिद्धयसिद्धिसमत्वबुद्धियुक्ताः, मनीषिणः ज्ञानिनः (भूत्वा) कर्मजं कर्मभ्यो जातम्, फलम् इष्टाऽनिष्टदेहप्राप्तिरूपम्, त्यक्त्वा परित्यज्य, जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धो जन्मबन्धः तेन विनिर्मुक्ताः जीवन्त एव ब्रह्मानन्दानुभवेन बन्धदुःखम् अननुभवन्तो भाविजन्मबन्धरहिताश्च सन्तः, अनामयं सर्वोपद्रवरहितं, पदं पदनीयम्, विष्णो र्मोक्षाख्यम् आत्मतत्त्वानन्दरूपं ब्रह्म, गच्छन्ति अभेदेन प्राप्नुवन्ति । तस्माद् योगाय युज्यस्वेति पूर्वेण संबन्धः ॥ अत्र भाष्ये पक्षान्तरमपि 'दूरेण ह्यवरं कर्म' इत्यादि श्लोकत्रयव्याख्यायाम् दर्शितम् । अथवा 'बुद्धियोगाद्धनञ्जय' इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता (सम्यग्दर्शनरूपा) बुद्धिर्दर्शिता साक्षात् सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात्' इति ॥ अत्र—"यस्मिन् कर्मणि क्रियमाणे परमार्थदर्शनलक्षणा बुद्धिरुद्देश्यतया युज्यते तस्मात्कर्मणः सकाशाद् इतरत् कर्म तथाविधोद्देश्यभूतबुद्धिसम्बन्धविधुरम् अतिशयेन निकृष्यते । ततश्च परमार्थबुद्धिम् उद्देश्यत्वेन आश्रित्य कर्म अनुष्ठातव्यम् । परिच्छिन्नफलान्तरमुद्दिश्य तदनुष्ठाने कार्पण्यप्रसङ्गात् । किञ्च परमार्थबुद्धिम् उद्देश्यमाश्रित्य कर्म अनुतिष्ठन् स्वान्तःकरणशुद्धिद्वारा परमार्थदर्शनसिद्धौ जीवत्येव देहे सुकृतादि हित्वा मोक्षमधिगच्छति । तथा च परमार्थदर्शनलक्षणयोगार्थं मनो धारयितव्यम् । योगशब्दितं हि परमार्थदर्शनम् उद्देश्यतया कर्मसु अनुतिष्ठतो नैपुण्यम् इष्यते । यदि च परमार्थदर्शनमुद्दिश्य तद्युताः सन्तः (तत्संबद्धाः सन्तः) समारभेरन् कर्माणि तदा तदनुष्ठानजनितबुद्धिशुद्धया ज्ञानिनो भूत्वा कर्मजं फलं परित्यज्य निर्मुक्तबन्धना मुक्तिभाजो भवन्ति । इत्येवम् अस्मिन्पक्षे श्लोकत्रयाक्षराणि व्याख्यातव्यानि ।" इत्यानन्दगिरिः ॥५१॥

अवतरणम्—योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यते ? इत्याशङ्क्य तत्प्राप्तिकालमाह—यदेति ।

व्याख्या—यदा यस्मिन्काले, ते तव कर्मयोगिनः, बुद्धिरन्तः करणम्, मोहकलिलम्-मोहोऽविवेकः । सम्पृक्तयो र्देहात्मनो र्नीरक्षीरयोरिव द्वयोः पार्थ-

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥**

---

क्यस्य अज्ञानम् । तदेव कलिलं कालुष्यम् येन स्वगतेन हेतुना अन्तःकरणम् स्वगतं विवेकबोधं कलुषीकृत्य विषय प्रति प्रवर्तते तद् । व्यतितरिष्यति व्यतिक्रमिष्यति शुद्धभावम् आपत्स्यते इत्यर्थः । तदा तस्मिन् काले । इह विवेकपरिपाकावस्था कालशब्देन उच्यते । (बुद्धिशुद्धिफलस्य नित्याऽनित्यवस्तुविवेकबोधस्य प्राप्त्या) श्रोतव्यस्य बुद्धिशुद्धयभावदशायां श्रवणयोग्यत्वेन अभिमतस्य, श्रुतस्य श्रवणविषयीकृतस्य च आत्मतत्त्वाऽतिरिक्तस्य पदार्थस्य (ऐहिकामुष्मिकविषयस्य) निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि । विषयवैराग्येण फलेन अन्तः करणस्य शुद्धि ज्ञास्यसीतिभावः ॥५२॥ मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थदर्शनलक्षणं योगम् अवाप्स्यसीतिचेच्छृणु श्रुतिविप्रतिपन्नेति । श्रुतिविप्रतिपन्ना (वैराग्यपरिपाकाऽवस्थातः पूर्वम्) श्रुतिभिरनेकसाध्यसाधनसम्बन्धप्रकाशकश्रवणैः विप्रतिपन्ना नानाप्रतिपत्तियुक्ता, विक्षिप्तेति यावत् । ते तव बुद्धिरन्तःकरणम् यदा यस्मिन्काले (यस्यां वैराग्य परिपाकावस्थायाम् । समाधौ-समाधीयते चित्तम् अस्मिन्निति समाधिः परमेश्वर आत्मा तस्मिन् । निश्चला विक्षेपात्मकचलनरहिता, अचला विकल्परहिता (च सती) स्थास्यति स्थिरीभूता भविष्यति वेदान्तार्थश्रवणमनननिदिध्यासनैरितिशेषः । तदा तस्मिन् काले (तस्यां वैराग्यपरिपाकावस्थायां वेदान्तार्थश्रवणमनननिदिध्यासनयुक्तायाम्) योगम् कर्मयोगफलं सम्यग्दर्शनरूपं परमार्थयोगम् अवाप्स्यसि प्राप्स्यसि (विक्षेपो विपर्ययः । विकल्पः संशयः) इत्यानन्दगिरिः । अयं भावः निःसङ्गनिष्काम-स्वधर्मानुष्ठानरूपेण कर्मयोगेन परमेश्वराराधने क्रियमाणे सन्तुष्टस्य परमेश्वरस्य प्रसादेन तव अन्तःकरणं देहादावात्मत्वाऽभिमानलक्षणं मोहरूपं स्वगतं कालुष्यं विहाय यदा शुद्धभावम् गमिष्यति तदा त्वं परमात्माऽतिरिक्तेषु सकलज्ञाताऽज्ञातपदार्थेषु वैराग्यं प्राप्स्यसि । ततश्च वैराग्यपरिपाके वेदान्तार्थश्रवणमनननिदिध्यासनैस्तव अन्तःकरणं विपर्ययसंशयौ परिहाय परमात्मनि स्वात्माऽभिन्ने स्थिरीभविष्यति । ततश्च त्वं स्वकर्मयोगस्य फलं सर्वाऽनर्थनिवर्तकं परमानन्दसंप्रापकम् 'अहं ब्रह्मास्मि' 'सर्वक्रियाशून्योऽकर्ता अभोक्ता आत्मा' इति परमात्मसाक्षात्कारं सम्यग्दर्शनं प्राप्स्यसीति ॥५२-५३॥

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

---

अवतरणम्—तदा योगं सम्यग्दर्शनलक्षणं प्राप्स्यसीति प्रश्नबीजं परिलभ्य अर्जुनः प्राप्तसम्यग्दर्शनस्य लक्षणं पृच्छति—अर्जुन उवाचेति ।

व्याख्या—केशव हे भगवन् ! समाधिस्थस्य स्थितप्रज्ञस्य का भाषा ? समाधिशब्दो नानार्थकः । समाधौ 'समाधौ न विधीयते' इत्यत्र अन्तःकरणार्थकः । 'समाधावचला बुद्धिः' इत्यत्र परमेश्वरार्थकः । इह तु तत्त्वज्ञानार्थकः । प्रकरणादीनां नानार्थस्थले शक्तिनियामकत्वात् । (अतः) समाधौ तत्त्वज्ञाने तिष्ठतीति समाधिस्थस्तस्य । स्थितप्रज्ञस्य स्थिता प्रतिष्ठिता 'अहमस्मि परं ब्रह्म' इति प्रज्ञा यस्य स स्थितप्रज्ञः, तस्य । समाधिस्थस्य स्थितप्रज्ञस्येति कृद्योगे कर्मणि षष्ठ्यौ का भाषा ? किं भाषणम् ? भाष्यतेऽनयेति भाषा, 'गुरोश्च हलः' (पा. सू.) इति करणे अङ् । लक्षणम् इति यावत् । केन लक्षणेन स्थितप्रज्ञ उच्यते इत्यर्थः । स्थितधीः (स्वयंवा) किं प्रभाषेत ? किम् आसीत ? व्रजेत (च) किम् ? (आसनं, भाषणं व्रजनं वा तस्य (समाधिस्थस्य स्थितप्रज्ञस्य) कथम् ? इत्यर्थः । 'स्थितप्रज्ञस्य लक्षणमनेनश्लोकेन पृच्छति' इति भाष्यम् । परैः केन लक्षणेन लक्षितः सन् स्थितप्रज्ञ उच्यते ? स्थितप्रज्ञः स्वयं कथं भाषेत कथम् आसीत ? कथं च स व्रजेदित्येतैश्चतुर्भिः प्रश्नैः कृतोत्तरैः स्थितप्रज्ञः पुष्कलरूपेण लक्षितो भवतीति लक्षणम् अनेन श्लोकेन पृच्छतीति भाष्यस्याशयः । प्रथमप्रश्ने लक्षणं स्थितप्रज्ञकर्तृकभाषणाऽऽसनव्रजनातिरिक्तं यत् किञ्चित् तत्सर्वं पृष्टमिति सर्वं संभूय पुष्कलं लक्षणं भवति स्थितप्रज्ञस्येति भावः । ननु इह श्लोके समाधिशब्दस्तत्त्वज्ञानार्थक इत्युक्तम् । भाष्येऽपि पूर्वश्लोकविवरणशेषे 'तदा विवेकप्रज्ञां समाधिं प्राप्स्यसि' इति नित्याऽनित्यवस्तुविवेकजनिता प्रज्ञा तत्त्वज्ञानरूपैव समाधिशब्देन व्यवहृता । योगवासिष्ठेऽपि 'तत्त्वाऽवबोधो भगवन् सर्वाशातृणपावकः । प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥' इति तत्त्वज्ञानस्यैव मुख्यतया समाधित्वं स्वीकृतम् । अतो न पातञ्जलयोगदर्शनप्रसिद्धसमाध्यवस्थायुक्तस्यैव स्थितप्रज्ञस्य विषयेऽयं प्रश्न इति निश्चीयते । भगवताऽपि प्रतिवचने स्थितप्रज्ञः सामान्येनैव गृहीतः ।

तस्मात् तत्त्वज्ञाननिष्ठस्यैव योगरूढया स्थितप्रज्ञत्वात् समाधिस्थत्वाच्च समाधिस्थस्येति विशेषणं पुनरुक्तं भवति ? इति चेद् अत्रानन्दगिरिः— "ज्ञाननिष्ठस्य लक्षणबुभुत्सया प्रश्नमवतार्य तन्निष्ठासाधनबुभुत्सया विशिनष्टि समाधिस्थस्येति" इत्युक्तवान्। तस्यायं भावः—अत्र भाष्ये-'प्रश्नबीजं प्रतिलभ्य लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सयाऽर्जुन उवाच—स्थितप्रज्ञस्येति' इति प्रश्नोऽवतारितः। पुनश्चाग्रे स्थितप्रज्ञस्य का भाषा इत्यस्य विवरणं कृत्वा 'समाधिस्थस्य समाधौ स्थितस्य केशव' इति विवरणं कृतम्। तत्रैव आनन्दगिरिराह—ज्ञाननिष्ठस्येत्यादि। अत्रापि भाष्ये लब्धसमाधिप्रज्ञस्य स्थितप्रज्ञस्येति शब्दाभ्यां समाधि शब्दस्येह तत्त्वज्ञानार्थकत्वमेव निश्चीयते। ततश्च अर्थे पुनरुक्तिर्माभूदिति अर्जुनस्य स्थितप्रज्ञलक्षणविषये समाधिरूपस्थित प्रज्ञतासाधनविषये चायं प्रश्न इति तात्पर्यं कल्प्यते। तथाहि समाधीयते सम्यक् संसाध्यते यः स समाधिरिति व्युत्पत्त्या समाधिशब्दप्रयोगेण संसाधनीयताया उपस्थितेः संसाधनीयायाः स्थितप्रज्ञतायाः किं लक्षणम् इत्युक्ते तस्याः संसाधनीयायाः किं साधनम् इति बुभुत्सापि तात्पर्याख्यशक्त्या प्रतीयते एव। शब्दतः स्थितप्रज्ञताया लक्षण बुभुत्सायाः प्रतीतावपि तात्पर्यतः स्थितप्रज्ञतायाः साधनबुभुत्सायाः प्रतीतिरिति समाधिस्थस्येति समाधिशब्दघटितविशेषणेन सूच्यते इति ॥ व्रजेत इत्यात्मनेपदमार्षम् ॥५४॥

अवतरणम् यो हि जन्मान्तरीयसंस्कारवशादेव कर्मसंन्यासकारणीभूतवैराग्यसम्पत्तौ ब्रह्मचर्यावस्थात एव कर्माणि संन्यस्य ज्ञाननिष्ठायां वेदान्तवाक्यविचारादौ प्रवृत्तो मुमुक्षु जिज्ञासुः। यश्च कर्मयोगेन गार्हस्थ्यावस्थायां क्रमेन प्राप्तया चित्तशुद्ध्या प्राप्तवैराग्यसम्पत्तिः पश्चात्कर्माणि संन्यस्य ज्ञानयोगनिष्ठायां प्रवृत्तो मुमुक्षु जिज्ञासुः। तयोरुभयोरेव स्थित प्रज्ञता लाभाय इह "प्रजहाति यदा कामान्' इत्यारम्य अध्यायसमाप्तिपर्यन्तं स्थितप्रज्ञस्य लक्षणं स्थितप्रज्ञतायाः साधनभूतं चोपदिश्यते। सर्वत्रैव हि अध्यात्मशास्त्रे यानि कृतार्थस्य स्वभावभूतानि लक्षणानि तान्येव कृतार्थतायाः साधनानि यत्नसाध्यत्वादुपदिश्यन्ते साधनोपदेशे एकस्मिन्नेवार्थे शास्त्रस्य तात्पर्यान्न द्वैयर्थ्यकृतवाक्यभेदापत्तिः। अतो भगवान् समानैरेव वाक्यैरितोऽध्यायसमाप्तिपर्यन्तं स्थितप्रज्ञस्य लक्षणं स्थितप्रज्ञतायाः प्राप्तेः साधनभूतमुपदिशति। तत्र का भाषेतिप्रथमप्रश्नस्योत्तरं द्वाभ्याम्—प्रेति।

श्रीभगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥

---

व्याख्या—पार्थ हे पृथापुत्र, (साधकः पुरुषः) यदा यस्मिन् काले (यस्याम् अवस्थायाम्) मनोगतान् मनसि प्रविष्टान् सर्वान् समस्तान् कामान् इच्छाभेदान् प्रजहाति प्रकर्षेण (तद्वासनाराहित्येन) जहाति त्यजति। ननु कामानां मनोगतत्वस्य व्यभिचाराऽभावात् तद् विशेषणं व्यर्थम् ? संभव-व्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्युक्तेरिति चेद् अत्रानन्दगिरिः 'कामानाम् आत्मनिष्ठत्वं कैश्चिदिष्यते तद् अयुक्तम्। तेषां मनोनिष्ठत्वश्रुतेरित्याशय-वानाह मनोगतानिति।' इति। "कामत्यागस्य प्रकर्षो वासनाराहित्यम्" इति चानन्द गिरिः। ननु सर्वकामपरित्यागे तुष्टिकारणस्याऽभावे प्रारब्धकर्मशेष-वशेन जीवतस्तस्य उन्मत्तप्रमत्तस्येव प्रवृत्तिः स्याद् अत आह-आत्मनीत्यादि। आत्मनि एव प्रत्यगात्मस्वरूप एव आत्मना एव स्वेनैव। अत्रापि एवशब्दानु कर्षः। तेन ननु विषयेषु न च विषयैः साधनैरित्यर्थः। तुष्टः परमार्थदर्शनाऽ-मृतरसलाभेन परमार्थदर्शनाद् अन्यत्र अलं प्रत्ययवान्। भवतीतिशेषः। तदा तस्मिन्काले (तस्यामवस्थायाम्) स्थितप्रज्ञः, स्थिता प्रतिष्ठिता 'अहमस्मि परं ब्रह्म' इत्याकारा प्रज्ञा सम्यग्दर्शनरूपा बुद्धिर्यस्य स विद्वान् सद्भिः स्थितप्रज्ञ इत्युच्यते। त्यक्तपुत्रवित्तलोकैषणः सकलवासनाशून्य आत्माराम आत्मक्रीडः पुरुषः स्थितप्रज्ञोऽस्तीत्यर्थः ॥५५॥

(किञ्च) (यदा) दुःखेषु आध्यात्मिकाधिदैविकाधिभौतिकेषु प्राप्तेषु अनु-द्विग्नमनाः न उद्विग्नं प्रक्षुभितं मनो यस्यसः। (तथा) सुखेषु दुःखवद्विविधेषु प्राप्तेषु विगतस्पृहः विगता स्पृहा तृष्णा यस्य सः अज्ञस्य तु इन्धन घृतादि-दाने वह्निरिव सुखान्यनु तृष्णा प्रवर्धते, न विदुषः इति भावः। (तथा) वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च ते वीता विगता यस्मात् सः, मुनिर्मनन शीलः, भवतीतिशेषः। तदा (तस्याम्अवस्थायाम्) (साधको विद्वान्भूतः सन् स्थितधीः सन्) स्थितधीः स्थितप्रज्ञः इति सद्भिरुच्यते भाष्यते। आभ्याम् श्लोकाभ्यां परैः स्थितप्रज्ञस्यका भाषेति प्रथमप्रश्न-स्योत्तरं कृतम् ॥५६॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाऽशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

---

अवतरणम्—अथ लक्षण-साधनविषयकस्य 'स्थितधीः किं प्रभाषेते'ति-द्वितीयप्रश्नस्योत्तरमाह भगवान्—य इति ।

व्याख्या—पूर्वश्लोकाद् मुनिरित्यनुवर्तते । यो मुनिः सर्वत्र देहजीवितादिष्वपि किं पुनः पुत्रदारादिषु अनभिस्नेहः स्नेहहीनः सन् (बाधितानुवृत्त्या प्रारब्ध फलककर्मशेष प्रापितम्) तत् तत् शुभाऽशुभम्, शुभम् अशुभं वा प्राप्य लब्ध्वा, न अभिनन्दति न प्रशंसति न द्वेष्टि न निन्दति । अर्थात् शुभं प्राप्य न हृष्यति न च प्रशंसति, अशुभं प्राप्य न विषीदति न च निन्दति । किन्तु केवलम् उदासीन एव भाषते । तस्य एवं हर्षविषादराहित्येन प्रशंसा-निन्दाक्रियाभ्यां वर्जितस्य मुनेः प्रज्ञा विवेकजा सम्यग्दर्शनरूपा बुद्धिः प्रतिष्ठिता दृढतया स्थिता भवति । एतेन द्वितीयस्य प्रश्नस्योत्तरं कृतम् ॥५७॥

अवतरणम्—अथ स्थितधीः किमासीत्' इति तृतीयप्रश्नोत्तरमाह-चतुर्भिः—यदेति ।

व्याख्या—च = किञ्च । कूर्मोऽङ्गानीव सर्वशः यथा कूर्मः कच्छपः स्वानि अङ्गानि भयात् सर्वशः सर्वतः उपसंहरति संकोचयति तथा अयं मुनिर्ज्ञाननिष्ठो यतिः सर्वशः सर्वेभ्यः, इन्द्रियार्थेभ्यः विषयेभ्यः, इन्द्रियाणि चक्षुरादीनि बाह्यानि, चित्तादीनि अन्तःकरणानि च, यदा उपसंहरति यस्मिन् काले, यस्यामवस्थायाम् संकोचयति, तदा तस्याम् अवस्थायाम्, तस्य प्रज्ञा विवेकजा सम्यग्दर्शनरूपा बुद्धिः प्रतिष्ठिता दार्ढ्येन स्थिता भवति ॥५८॥

अवतरणम्—ननु मूढस्यापि रोगादिवशाद् इन्द्रियैर्विषयग्रहणम् अकुर्वत इन्द्रियाणि विषयेभ्यो निवर्तन्ते कूर्मस्य अङ्गानीव संह्रियन्ते । अत इदं लक्षणं मूढेषु अतिव्याप्तम् इति चेत्—सत्यम् मूढस्य विषयविषयकरागो न निवर्तते । विदुषस्तु सोऽपि निवर्तते इति भेदाद् इन्द्रियाणां निवृत्त्या सहैव

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥**
**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥**

---

विषयविषयकरागनिवृत्तेरपि स्थितप्रज्ञलक्षणघटकतया विवक्षितत्वाद् नातिव्याप्तिरित्याशयेन, स रागः कथं संह्रियते इति चाह भगवान् दयानिधि— विषया इति ।

व्याख्या—निराहारस्य इन्द्रियैर्विषयग्रहणम् अकुर्वतः, देहिनो देहाभिमानिनः, कष्टे तपसि स्थितस्य मूर्खस्य (अपि) विषया लक्षणया इन्द्रियाणि अथवा शब्दादिविषयाऽनुभवाः, विनिवर्तन्ते विदुष इव विशेषेण निवर्तन्ते। आद्ये विषयेभ्य इति शेषः। अन्त्ये इन्द्रियेभ्य इतिशेषः। (किन्तु) रसवर्जम् रसो रागो विषयेषु यस्तं वर्जयित्वा विहाय (विनिवर्तन्ते)। मूर्खस्य रसो न निवर्तते इत्यर्थः। रसवर्जमिति (द्वितीयायां च' (पा. सू.) इति णमुल्। रसोऽपि रसो रञ्जनरूपः सूक्ष्मः (रागः) सोऽपि, अस्य मुनेः स्थितप्रज्ञस्य यतेः परं दृष्ट्वा परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा 'अहमेव परं ब्रह्म' इत्येवम् उपलभ्य (स्थितस्य) निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः। न असति सम्यग्दर्शने बीजभूतस्य रसस्य उच्छेदः। तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं संपादनीयम् इति भावः ॥५९॥

अवतरणम्—सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि । यतः स्ववशे तेषाम् अनवस्थापने दोषः स्यादित्याह—यततेति ।

व्याख्या—हि यस्मात्, कौन्तेय कुन्तीपुत्र। यततोऽपि मोक्षाय प्रयत्नं कुर्वतोऽपि। यतत इति परस्मैपदमार्षम्। 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति तु न, महाभाष्येऽस्याः परिभाषाया अदर्शनादित्यन्यत्र विस्तरः। पुरुषस्य पुरुषत्वाऽभिमानिनः, विपश्चितोऽपि मेधाविनोऽपि मनः (विवेकयुक्तमपि) प्रमाथीनि प्रमथनशीलानि-यानि विषयाऽभिमुखं हि पुरुषं पौनःपुन्येन विक्षोभयन्ति आकुली कुर्वन्ति तानि-इन्द्रियाणि चक्षुरादीनि, प्रसभं प्रसह्य प्रकाशमेव पश्यतस्तस्य विवेकेनैव पश्यतस्तस्य बलात्कारेण हरन्ति आकुलीकृत्य विषयान्प्रति नयन्ति ॥६०॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥
ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥६२॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥६३॥

---

(तस्मात्) तानि सर्वाणि इन्द्रियाणि संयम्य वशीकृत्य, युक्तः समाहितः सन् मत्परः 'अहं वासुदेवः सर्वप्रत्यगात्मा परः प्रधानपुरुपार्थो यस्य सः। अर्थाद् 'नान्योऽहं वासुदेवाद्' इति साक्षात्कुर्वन् सन्, आसीत उपविशेत् तिष्ठेदित्यर्थः यस्य एवम् आसीनस्य यते वंशे हि यस्माद् इन्द्रियाणि वर्तन्तेऽभ्यासबलात्, तस्य तस्यैव प्रज्ञा सम्यग्दर्शनरूपा प्रतिष्ठिता । अस्तीत्यर्थः एतैश्चतुर्भिः श्लोकै स्तृतीयः प्रश्नः 'कथम् आसीत्' इति समाहितः ॥६१॥

अवतरणम्—अथेदानीं स्थितप्रज्ञलक्षण-स्थितप्रज्ञता-साधनविपयकस्य 'कथं व्रजेत' इति चतुर्थप्रश्नस्य 'रागद्वेषवियुक्तैस्तु' इत्यादिभिरष्टश्लोकै-रुत्तरं करिष्यन् तत्र स्पष्टप्रतिपत्तये पूर्वम् 'एवं न व्रजेत' इत्याशयेन 'विषय-ध्यानं सर्वानर्थमूलम्' इत्याह द्वाभ्याम्—ध्यायेति ।

व्याख्या—विषयान्-शब्दस्पर्शरूपरसगन्धेपु स्वाभीष्टान्, ध्यायतश्चि-न्तयतः पुंसस्तद्ध्यानात् तेपु स्वाभीष्टेपु ध्यातेपु सङ्गः प्रीतिरुपजायते भवति। निगृहीतचक्षुरादिवाह्येन्द्रियस्याऽपीतिशेषः । वाह्यार्थेभ्यो निगृहीतान्यपि इन्द्रियाणि मनसो दौर्बल्यात् पुनर्वाह्यार्थान् गृह्णन्तीति भावः । (ततः) सङ्गात्प्रीतेः कामस्तृष्णा (तेपु) संजायते समुत्पद्यते । (ततः) कामात्कुतश्चित्-प्रतिहतात् क्रोधः क्रोधाख्यो रिपुः, अभिजायते भवति । (ततः) क्रोधात् संमोहः कार्याऽकार्यविषयकोऽविवेको भवति उत्पद्यते । क्रुद्धो हि संमूढः सन् गुरुमपि आक्रोशति। (ततः) संमोहाद् अविवेकात्, स्मृतिविभ्रमः शास्त्राचार्यो-पदेशाभ्यां जायमानायाः स्मृतेः संस्कारजन्यज्ञानस्य विभ्रमोभ्रंशः स्मृत्युत्पत्ति-निमित्तप्राप्तौ तदनुत्पत्तिर्भवति। (ततः) स्मृतिभ्रंशाद् बुद्धिनाशः स्मृतिलोपाद् बुद्धेरन्तःकरणस्य नाशः कार्याऽकार्यविवेकाऽयोग्यता भवति । (ततः) बुद्धिनाशात् बुद्धेः कार्याऽकार्यविवेकाऽयोग्यतारूपाद् नाशाद् हेतोः पुरुषः

रागद्वेषवियुक्तैस्तु विषयान् इन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधि गच्छति ॥६४॥
प्रसादे सर्वदुःखानाम् हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥

---

प्रणश्यन्ति पुरुषार्थाऽयोग्यो भवतीत्यर्थः। तावदेव हि पुरुषोऽस्ति यावत् तस्य अन्तःकरणं कार्याऽकार्यविषयकविवेकयोग्यम् अस्ति । तदयोग्यत्वेतु पुरुषः प्रणष्ट एव भवति पुरुषार्थप्राप्त्यसामर्थ्यात् । आयुषः क्षयेसति मरणात् पश्चाद् जन्मान्तरे पुरुषोऽपि न भवतीति भावः। तस्मात् स्थितप्रज्ञतायाः साधकः पुरुषो विषयध्यानपूर्वकं न व्रजेत् 'एवं न व्रजेत्' इति वाक्यार्थः ॥६२-६३॥

अवतरणम्—सर्वाऽनर्थस्य मूलमुक्तं विषयध्यानम्। अथेदानीं मोक्षस्य साधनम् उच्यते। 'एवं व्रजेत्' इति च प्रोच्यतेऽष्टभिः श्लोकैः—रागेति।

'कथं व्रजेत' इति चतुर्थप्रश्नस्योत्तरमाह-अष्टभिः। रागद्वेषवियुक्तैस्तु इत्यादिभिः । तुशब्दः पूर्वोक्ताद् विषयध्यानकारिणः सकाशाद्भेदं सूचयति । रागद्वेषपूर्विका हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी। तत्र यो मुमुक्षुर्भवति स तु रागद्वेषाभ्याम् वियुक्तैः रहितैः (अत एव)आत्मवश्यैः स्वात्मनो वशीभूतैः इन्द्रियैः श्रोत्रादिभि र्विषयान् अवर्जनीयान् जीवनमात्रहेतून् शब्दादीन् चरन् उपलभमानः। विधेयात्मा विधेयः स्ववशवर्ती आत्मा अन्तःकरणं यस्य सः। (मुनिः) प्रसादं मनसः प्रसन्नतां स्वास्थ्यम्, अधि गच्छति प्राप्नोति ॥६४॥
प्रसादे सति यत्फलं तदाह—प्रसादे मनःप्रसादे सति अस्य मुनेर्यतेः सर्वदुःखानाम् आध्यात्मिकाधिभौतिकाधिदैविकानां तापानाम् हानिर्विनाश उपजायते भवति। हि यतः प्रसन्नचेतसः प्रसन्नं स्वस्थं चतोऽन्तःकरणं यस्य तस्य, बुद्धिः सम्यग्दर्शनरूपा प्रज्ञा, आशु शीघ्रम् पर्यवतिष्ठते परिसमन्ताद् आकाशमिव अवतिष्ठते आत्मरूपेणैव निश्चली भवति। अस्य स्थितप्रज्ञता जायते इत्यर्थः। यस्मादेवं स्वस्थचेतसो मुनेः स्थितप्रज्ञस्य कृतकृत्यता भवति तस्माद् रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राऽविरुद्धेषु अवर्जनीयेषु विषयेषु स्वस्थचित्तः सन् समाचरेदिति श्लोकद्वयस्य वाक्यार्थः ॥६४-६५॥

अवतरणम्—चित्तस्य स्वस्थता रूपा प्रसन्नता हि सुखस्य मूलम् इति सा (चित्तप्रसन्नता) स्तूयते—नास्तीति।

नास्ति बुद्धिरयुक्तस्य न चाऽयुक्तस्य भावना ।
न चाऽभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

व्याख्या—अयुक्तस्य असमाहितान्तः करणस्य विक्षिप्तचित्तस्य अप्रसन्नचित्तस्य अस्वस्थचित्तस्येति यावत् । बुद्धिः आत्मस्वरूपविषया आत्मसाक्षात्काररूपसम्यग्दर्शन रूपा, नास्ति, न भवति । न च अयुक्तस्य असमाहितान्तःकरणस्य विक्षिप्तचित्तस्य, भावना आत्मज्ञानाऽभिनिवेशः । शास्त्राद् आत्मनि ज्ञाते तत्साक्षात्कारार्थ स्मृतिसन्तानकरणं भावनेति कथ्यते । स एव च आत्मज्ञानाऽभिनिवेशः तदेव च विजातीयप्रत्ययाऽनवच्छिन्नसजातीयप्रत्ययप्रवाहरूपं निदिध्यासनम् । न च अभावयतः आत्मज्ञानाभिनिवेशम् अकुर्वतः शान्तिस्तृष्णाया उपशमः । विषयतृष्णाया निवृत्तिरिति यावत् । भवतीति शेषः । अशान्तस्य अनिवृत्तविषयतृष्णस्य संसारवारिधौ निमग्नस्य परमानन्दसागराद् विभक्तस्य । कुतः सुखम् ? सुखं न भवतीत्यर्थः । इन्द्रियाणां हि विषयसेवातृष्णातो या निवृत्तिस्तत्सुखम् । न विषयविषया तृष्णा सुखम् । दुःखमेव हि सा । नहि तृष्णायां सत्यां सुखस्य गन्धमात्रमपि स्यादिति भावः ॥६६॥

अवतरणम्—'नास्तिबुद्धिरयुक्तस्य' इत्यत्र हेतुमाह—इन्द्रियेति ।

व्याख्या—हि = यस्मात् । यन्मनः या मनोव्यक्तिः । चरतां स्वस्वविषयेषु प्रवर्तमानानाम् इन्द्रियाणां श्रोत्रादीनाम् । शेषेषष्ठी । अनु विधीयते अनु प्रवर्तते । कर्मकर्तरि लट् । तद् मनः सा मनोव्यक्तिः, इन्द्रियविषयविकल्पने प्रवृत्ता । अस्य मुनेर्यतेः प्रज्ञाम् आत्माऽनात्मविवेकजां सम्यग्दर्शन रूपां बुद्धिम्, वायुः पवनः, अम्भसि उदके, नावमिव तरिमिव, हरति नाशयति यथोदके जिगमिषतां नावं वायुर्मार्गात्पृथक्कृत्वा उन्मार्गे प्रवर्तयति । एवम् इन्द्रियाणाम्—अनुप्रवर्तमानं मनो मुनेरात्मविषयां प्रज्ञां हृत्वा विषयविषयां कल्पनां जनयति । यस्मादेवं तस्माद् 'नास्ति बुद्धिरयुक्तस्ये' ति सिद्धम् ॥६७॥

अवतरणम्—'यततो ह्यपि कौन्तेय' इत्यादिना श्लोकद्वयेन उपन्यस्तस्यार्थस्य अनेकधोपपत्तिमुक्त्वा 'ध्यायतो विषयान्' इत्यादिना श्लोकषट्केन तमर्थमुपपाद्य सम्प्रति उपसंहरति—तस्मादिति ।

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

---

व्याख्या—तस्माद्-इन्द्रियाणां स्वतन्त्रप्रवृत्तौ दोष उपपादितो यस्मात् तस्मात् कारणाद् हे महाबाहो एतेन वैरिनिग्रहसमर्थस्य तव इन्द्रियनिग्रहेऽपि सामर्थ्यं भवितुमर्हतीति सूचितम् । यस्य मुनेर्यतेः सर्वशः सर्वाणि समनस्कानि इन्द्रियाणि श्रोत्रादीनि । (सर्वशः सर्वेभ्यः) इन्द्रियार्थेभ्यः शब्दादिविषयेभ्यः, निगृहीतानि पृथक्कृत्वा वशीकृतानि (सन्ति) तस्य यतेः प्रज्ञा सम्यग्दर्शनरूपा बुद्धिः प्रतिष्ठिता स्थिरा ज्ञातव्येतिशेषः । ननु 'यततो ही' त्यादि श्लोकाभ्याम् उक्तस्यैव अर्थस्य 'इन्द्रियाणां हि चरताम्' इत्यादिश्लोकाभ्यामपि कथ्यमानत्वादस्ति पुनरुक्तिरिति चेत् सत्यम्, उपक्रमोपसंहारपरकत्वान्न दोषः ॥६८॥

अवतरणम्—एवं स्थितप्रज्ञलक्षणांशवर्णनेन 'मुमुक्षुभिरतियत्नेन स्थितप्रज्ञत्वाय समनस्केन्द्रियनिग्रहः कर्तव्यः' इत्युक्तम् । स्थितप्रज्ञस्य तु (जीवन्मुक्तस्य) स्वभावभूत एव समनस्केन्द्रियनिग्रहः । अविद्यायाः सर्वव्यवहारसाधिकाया विरोधिन्या विद्यया निवृत्त्या समूलस्य सर्वव्यवहारस्य तं प्रति अविद्यानिवृत्तेर्निवृत्तत्वात् । योऽयं लौकिको वैदिकश्च व्यवहारः स सर्वोऽपि समुत्पन्नविवेकजविज्ञानस्य (स्थितप्रज्ञस्य) अविद्याकार्यत्वाद् अविद्यानिवृत्ते निवर्तते । अविद्यायाश्च विद्यया विरोधान्निवृत्तिर्भवति । इत्येतमर्थम् स्फुटीकर्तुमाह भगवान्—या निशेति ।

व्याख्या—सर्वभूतानां सर्वेषां भूतानाम् असंयमिनाम् अनात्मज्ञानाम् इति यावत् । या निशा, लक्षणया निशेव अप्रकाशमानम् । तान्प्रति परमार्थतत्त्वस्य अप्रकाशमानत्वात् । तस्याम् परमार्थतत्त्वलक्षणायाम् अनात्मज्ञसर्वभूतनिशायाम् । संयमी जितेन्द्रियो योगी स्थितप्रज्ञः । जागर्ति, स्फीतालोककदिवस इव तं प्रति परमार्थतत्त्वस्य चमत्कारवत्त्वेन अतिप्रकाशमानत्वाद् अज्ञाननिद्रातः प्रबुद्धः सन् सम्यग्दर्शनरूपप्रज्ञानवान् अस्ति । अर्थाद् दिवाचराणां दिनमेव सद् नक्तञ्चराणाम् उलूकादीनां यथा रात्रिरिव भवति दृष्टिदोषात् । तथैव परमात्मा भगवान् परमार्थतत्त्वम् संयमिनां (स्थितप्रज्ञानाम्) चमत्कारवत्त्वेन (स्वप्रकाशत्वेन) दिनमिव अतिप्रकाशमानमेव सद् मूढानां रात्रिरिव

आपूर्यमाणम् अचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥७०॥

---

न प्रकाशते दृष्टिदोषादिति । (तद्वैपरीत्येन) यस्याम् (तु) अविद्यायां निशायामिव मूढजनज्ञानावरणस्वभावायाम् भूतानि मूढलोकरूपाणि जाग्रति लक्षणया जाग्रतीव । अर्थाद् यथा अर्धनिद्रिताः स्वप्नदर्शिनो जनाः स्वप्ने तं तं व्यवहारं कुर्वन्ति जागरिता इव तथैव अज्ञाननिद्रायां वस्तुतः प्रसुप्तान्येव मूढभूतानि स्वप्न इव सकलं व्यवहारं कुर्वन्ति इति । सा अविद्या, पश्यतस्त-त्त्वसाक्षात्कारं कुर्वतः । मुनेः स्थितप्रज्ञस्य । निशा निशेव निद्रास्थानम् अस्तीति शेषः । स्थितप्रज्ञो न तत्र व्यवहरतीत्यर्थः । एतेन 'कर्माणि शास्त्रेण अविद्यावस्थां प्राप्तस्यैव विधीयन्ते न विद्यावस्थां प्राप्तस्येति' भगवता बोधितम् । तस्माद् नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥६९॥

अवतरणम्—'विदुषस्त्यक्तैषणस्य यतेरेव मोक्षप्राप्ति र्नतु असंयमिनः कामकामिनः' इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह भगवान्—आपूर्येति ।

व्याख्या—आपो जलव्यक्तयः (नाना नदीनदादिप्रवाहद्वारेण—वृष्टि-द्वारेण च सर्वदिग्भ्यः प्राप्ताः) आपूर्यमाणम् स्वात्मभिः (जलव्यक्तिभिः) समन्ताद् भ्रियमाणम् (अपि) अचलप्रतिष्ठम् अचला अविक्रिया एव प्रतिष्ठा अवस्थितिर्यस्य तम् । अनतिक्रान्तमर्यादम् स्वात्मनि अविक्रियमेव सन्तम् । समुद्रं सागरम् । प्रविशन्ति प्रविश्य प्रलीयन्ते (अविकुर्वन्त्य एव ) यद्वत्, यथा । तद्वत् तथा (अविकुर्वन्त एव) सर्वे सर्वविषयेभ्यः प्राप्ताः । अशेषाः । (अपि) कामा इच्छाभेदाः (विषय संनिधावपि) यं मुनिं स्थितप्रज्ञं संयमिनम् अविक्रियमेव सन्तं, प्रविशन्ति बाधितानुवृत्त्या तस्य प्रारब्धशेषेण आक्षिप्ता अपि प्रविश्य आत्मन्येव, प्रलीयन्ते, न स्ववशं कुर्वन्ति । स (एव) एवं भूतस्त्य-क्तैषणः स्थितप्रज्ञो मुनिरेव, शान्तिं मोक्षम् । आप्नोति लभते । न कामकामी । काम्यन्ते इति कामाः शब्दादयो विषयाः । तान् कामयितुं शीलं यस्य सः, विषयाभिलाषी मूढः । न शान्तिम् आप्नोतीत्यर्थः ॥७०॥

अवतरणम्—यस्मादेवं तस्माद्—विहायेति ।

विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ।।७१।।
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्याम् अन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ।।७२।।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ।।२।।

---

व्याख्या – यः पुमान्, कामान् इच्छाभेदान् सर्वान् (अपि) पुत्रवित्त-लोकैषणात्मकान् अशेषान् समूलांश्च, विहाय परित्यज्य, निःस्पृहः शरीर-जीवनमात्रेऽपि निर्गता स्पृहा यस्य सः । (तथा) निर्ममः शरीरजीवनमात्रा-क्षिप्त परिग्रहेऽपि 'मम' इत्यभिनिवेशरहितः । (तथा) निरहङ्कारः सन् विद्या-वत्त्वादिनिमित्तकाऽऽत्मसंभावना -सत्कुलाऽभिमानरहितः सन् चरति जीवन-मात्रचेष्टाशेषः संभवद्रागद्वेषादिके देशे प्रतिनियते वासम् अकृत्वा पर्यटति । स एवं भूतः स्थितप्रज्ञो ब्रह्मवित् शान्ति सर्वसंसारदुःखोपरमलक्षणां निर्वाणा-ख्याम् अधिगच्छति प्राप्नोति । ब्रह्मभूतो भवतीत्यर्थः । एतेन 'कथं व्रजेत्' इत्यस्योत्तरम् उपसंहृतम् । एवञ्च प्रोक्तप्रश्नचतुष्टयस्योत्तरेण स्थितप्रज्ञस्य लक्षणं स्थितप्रज्ञतायै साधनञ्च निरूपितम् ।।७१।।

अवतरणम् – सैषा ज्ञाननिष्ठा स्तूयते अधिकारिप्ररोचनार्थम्–एषेति ।

व्याख्या—हे पार्थ, एषा यथोक्ता स्थितप्रज्ञतालक्षणा, स्थितिर्ब्राह्मी, ब्रह्मणि भवा सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानम् । अस्तीति शेषः । एनां यथोक्तां ब्राह्मीं स्थितिं प्राप्य (साधको मुनिर्भूत्वा) न विमुह्यति मोहं न प्राप्नोति । अस्यां ब्राह्म्यां स्थितायाम् अवस्थायाम् अन्तकालेऽपि अन्त्ये वयस्यपि स्थित्वा सिद्धः सन् ब्रह्मनिर्वाणम् ब्रह्मणि निर्वाणं निर्वृतिं मोक्षम् ऋच्छति प्राप्नोति । किमु वक्तव्यम्, यो ब्रह्मचर्यादेव संन्यस्य यावज्जीवं ब्रह्मणि एव अवतिष्ठते स ब्रह्मनिर्वाणम् ऋच्छतीति । तदेवम् अनेन अध्यायेन अङ्गितया ज्ञाननिष्ठा, तदङ्गतया कर्मनिष्ठा च निरूपितेतिशम् ।।७२।।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधर मिश्र-संवादितायां शाङ्कर भाष्यानुसारिण्यां द्वितीयोऽध्यायः ।।२।।

श्रीकृष्णार्पणमस्तु ।।२।।



## ॥ अथ वंशीव्याख्यायां तृतीयोऽध्यायः ॥

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

---

अवतरणम्—अनन्तरातीते द्वितीयेऽध्याये भगवता द्वे बुद्धी निर्दिष्टे सांख्ये बुद्धिरिति योगे बुद्धिरिति च इत्येषाऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु इत्येवम् । तत्र 'प्रजहाति यदा कामान्' इत्यादिनाऽध्यायसमाप्तिपर्यन्तं सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तत एव कृतार्थता प्रोक्ता-एषा ब्राह्मी स्थितिरित्यादिना । अर्जुनाय तु 'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तम् । न च तत एव कर्मयोगात् साक्षाच्छ्रेयःप्राप्तिमुक्तवान् । तदेतद् आलक्ष्य '(कथं भक्तं) मां ज्यायसीं ज्ञानयोगनिष्ठां विहाय क्रूरे हिंसालक्षणे कर्मणि नियोजयति भगवान्' इति पर्याकुलितबुद्धेरर्जुनस्य भगवता साकं यः संवादो जातस्तं धृतराष्ट्रं बोधयितुं सञ्जयः प्राप्तदिव्यदृष्टिराह—अर्जुन उवाचेति ।

व्याख्या—हे जनार्दन, चेत् यदि, कर्मणः सकाशाद् बुद्धि र्ज्ञानम् (आत्मज्ञानम्) ज्यायसी प्रशस्यतरा ते तव 'एषा ब्राह्मी स्थिति' रिति वदतो मता अभिप्रेता, तत् तर्हि हे केशव, घोरे क्रूरे हिंसालक्षणे कर्मणि मां किम् किमर्थम्, नियोजयसि नियुक्तं करोषि-'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि' इत्येवम् । अनेन प्रश्नेन 'कर्माऽपेक्षया ज्ञानस्य ज्यायस्त्वम्' इत्युक्तं भवति ॥१॥ (किञ्च) व्यामिश्रेणेव वाक्येन 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' 'मा ते सङ्गोऽस्त्वकर्मणि' इत्येवं परस्पर संकीर्णेनेव वचनेन, मम बुद्धिम् अन्तःकरणम्, मोहयसीव मूढं करोषीव । यद्यपि भक्तं मां भगवान् प्रतारयितुं नार्हति इति स्वयं विविक्ताभिधायी भगवान् तथापि मन्दबुद्धे र्मम

श्रीभगवानुवाच—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३॥

---

व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति इत्यर्थः। तद् मम व्यामोहनिवारणाय एकं तयो र्ज्ञानकर्मणोरन्यतरद् ज्ञानमेव वा कर्मैव वा निश्चित्य 'इदमेव अर्जुनस्य मम योग्यं बुद्धिशक्त्यवस्थाऽनुरूपम्' इति निर्णीय वद स्फुटतरं ब्रूहि। येन ज्ञानेन वा कर्मणा वा एकेन अहं श्रेयः कल्याणं मोक्षम् आप्नुयाम् लभेय ॥२॥

अवतरणम्—एवं ज्ञानकर्मणोः समुच्चयस्य असंभवं सूचयतः प्रश्नस्य अनुरूपमेव (तयोः समुच्चयस्य असंभवं स्वीकुर्वतैव) प्रतिवचनं भगवता यत् कृतम् तदनु वदितुं संजय आह— श्रीभगवानिति ।

व्याख्या—हे अनघ अपाप, मया सर्वज्ञेन ईश्वरेण पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसार्थं वेदार्थसम्प्रदायम् आविष्कुर्वता, अस्मिन् लोके शास्त्रानुष्ठानाधिकृतानां त्रैवर्णिकानाम्, द्विविधा द्विप्रकारा निष्ठा निश्चिता स्थितिः प्रोक्ता। का सा द्विविधा निष्ठा ? अत आह—सांख्यानाम् आत्माऽनात्मविषयकविवेकज्ञानवताम् ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानाम् परमहंसपरिव्राजकानां ब्रह्मण्येव स्थितप्रज्ञतया अवस्थितानाम्, ज्ञानयोगेन, युज्यते ब्रह्मणा सह अनेन साधनेनेति योगः। ज्ञानमेव योगस्तेन, निष्ठा प्रोक्ता। योगिनाम् ज्ञानयोगानधिकारिणां कर्मिणाम्, कर्मयोगेन। युज्यते ज्ञानयोगेन चित्तशुद्धि द्वाराऽनेनेति योगः। कर्मैव योगः कर्मयोगस्तेन, निष्ठा प्रोक्ता। इह विशिष्टतत्तद्भिन्नपुरुषाधिकारिकर्तृके एव ज्ञानकर्मनिष्ठे वदता भगवता मोक्षं प्रति ज्ञानकर्मणोः समुच्चयस्य कारणत्वं नास्तीति स्पष्टं सूचितम्। एतेन मोक्षं प्रति ज्ञानकर्मणोः समुच्चयस्य कारणत्वम् इति केषाञ्चिदाधुनिकानां विचारः खण्डितः। यत्तु प्रश्नेऽर्जुनेन बुद्धे र्ज्यायस्त्वमुक्तं तत् स्थितम् अनिराकरणात्। 'यत स्त्वं न ज्ञानयोगाधिकृतोऽसि अतस्त्वं कर्मण्येव नियुज्यसे 'मा ते सङ्गोऽस्त्वकर्मणि' इत्यभिप्रायः ॥३॥

अवतरणम्—ज्ञाननिष्ठायाः साक्षान्मोक्षसाधकतया कर्मनिष्ठापेक्षया ज्यायस्त्वेऽपि ज्ञाननिष्ठायाम् अधिकारस्य सिद्धये, चित्तशुद्धिद्वारा कर्मनिष्ठाया

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥

---

ज्ञाननिष्ठां प्रति हेतुत्वात् पूर्वं कर्मनिष्ठैव अशुद्धचित्तस्य योग्या इत्याशयेनाह भगवान्—नेति ।

व्याख्या—पुरुषोऽधिकृतः, कर्मणां, क्रियाणां यज्ञादिरूपाणाम् स्वधर्माणाम्, । इह जन्मनि जन्मान्तरेवाऽनुष्ठितस्य दुरितसञ्चयस्य क्षये हेतुत्वेन सत्त्वशुद्धिकारणानाम् सत्त्वशुद्धिकारणतया च ज्ञाननिष्ठाहेतूनाम्, अनारम्भाद् अननुष्ठानाद् नैष्कर्म्यं निष्कर्मभावं ज्ञाननिष्ठाम्, निष्क्रियात्मस्वरूपेणैवाऽवस्थानमिति यावत् । न अश्नुते न प्राप्नोति । कर्मणाम् अनारम्भान्नैष्कर्म्यं नाश्नुते इति वचनात् कर्मणाम् आरम्भादेव नैष्कर्म्यम् अश्नुते इति तद्विपर्ययाद् गम्यते । 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथा दर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥' (महा० शा० २०४।८) इत्यादिस्मरणात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृह० ४।४-२२) इति श्रुतेश्च । निर्गतं कर्म यस्मादिति निष्कर्मा संन्यासी, तस्य कर्म ज्ञानम् इति व्युत्पत्त्या नैष्कर्म्यशब्देन ज्ञानम् उच्यते । गुणवचन ब्राह्मणादिभ्यः ष्यञ् कर्मणि च' (पा. सू.) इत्यनुशासनेन निष्कर्मशब्दात् कर्मणि अर्थे ष्यञ् । ननु 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् ।' 'शान्तो दान्त उपरतस्तितिक्षुः' 'संन्यासयोगाद् यतयः शुद्धसत्त्वाः' इत्यादौ कर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति शास्त्रम् । 'यतो यतो निवर्तते ततस्ततो विमुच्यते । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि' (विष्णु,) इत्यादि दर्शनाच्च नैष्कर्म्यसिद्धये किं कर्माऽऽरम्भेणेति प्राप्तम् ? अत आह—न च संन्यसनादेवेत्यादि । न च नापि संन्यसनादेव केवलात् कतिपयकर्मपरित्यागात् (ज्ञानोत्पत्तिरहितात्) सिद्धिं नैष्कर्म्यलक्षणां निष्क्रियात्मस्वरूपमात्रेणावस्थानरूपाम् ज्ञाननिष्ठाम् समधिगच्छति प्राप्नोति, नापि प्राप्नोतीति संबन्धः । लोके प्रसिद्धं नैष्कर्म्यं कतिपयकर्मशून्यतामात्रम् । इह तु नैष्कर्म्यं सिद्धिरूपं निष्क्रियात्मस्वरूपमात्रेणावस्थानम् ज्ञानयोगनिष्ठेति । इदन्तु चित्तशुद्धिद्वारा ज्ञानोत्पत्तये कर्मयोगम् अपेक्षते एवेत्यभिप्रायः । उदाहृतानि वचनानि 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादीनि चित्तशुद्धिपूर्वकसंन्यासाऽभिप्रायाणि । न हि चित्तशुद्धिं विना रागादिदोषग्रस्तः सर्वभूतेभ्यः सर्वात्मना अभयं दातुमीष्टे ।

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥**

---

तस्माद् युक्तमुक्तम्–न च संन्यसनादेव सिद्धिं समधिगच्छतीति। वक्ष्यते च योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धयइति ॥४॥

**अवतरणम्**–ज्ञानरहितात् कतिपयकर्मसंन्यासमात्रात् निष्क्रियात्मस्वरूपमात्रावस्थानरूपनैष्कर्म्यलक्षणां सिद्धिं ज्ञानयोगनिष्ठां पुरुषो नाधिगच्छतीत्यत्र किं कारणमिति हेत्वाकाङ्क्षायामाह भगवान् न हीति।

**व्याख्या**—इह "अज्ञ इति वाक्यशेषः। यतो वक्ष्यति 'गुणैर्यो न विचाल्यते' (१४-२३) इति।" इति भाष्यम्। हि यस्मात् कारणात्। सर्वः प्राणी अज्ञः प्रकृतिजैः-प्रकृति र्भगवन्माया त्रिगुणात्मिका देहादिसर्वजगदुपादानम्। ततो जातैः। गुणैः सत्त्वरजस्तमोभिः। अवशः सन् तद्गुणाधीनः (एव) सन्। (सर्वेषु अपि क्षणेषु) कर्म कार्यते,, कर्म कर्तुं प्रेर्यते, कर्म कुर्वन् वा प्रेर्यते। गुणानां नित्यप्रचलितात्मकत्वादिति भावः। (तस्माद्) (अज्ञः) कश्चिद् (अपि) प्राणी। क्षणमपि (कालं) जातु कदाचिद् (अपि) अकर्मकृद् क्रियारहितः कर्मशून्यः सर्वकर्मपरित्यागी, सर्वकर्मसंन्यासी न तिष्ठति, न स्थितिं लभते। हि यस्माद् (एवं तस्माद् नाऽपि कतिपयकर्मपरित्यागमात्रात् केवलात् इत्यर्थकं 'न च संन्यसनादेव सिद्धिं समधिगच्छती'ति सिद्धम्। अज्ञेन सर्वकर्मपरित्यागस्य असंभवाद् निष्क्रियात्मस्वरूपमात्रावस्थानलक्षणस्य नैष्कर्म्यस्य असंभवात्। इति भावः। अत्रेदं बोध्यम्—गुणै र्यो न विचाल्यते (१४-२३) इति वक्ष्यमाणेन 'लोकेऽस्मिन् द्विविधा निष्ठा' (३।२) इत्याद्युक्तेन च सांख्यानाम् (गुणातीतानाम्) पृथक् करणाद् अज्ञानामेव हि कर्मयोगो न ज्ञानिनाम् इतिसिद्धम्। ज्ञानिनां तु गुणातीतानां गुणैरचाल्यमानत्वात् स्वतश्च आत्मस्वरूपस्य निष्क्रियत्वेन तेषां चलनाऽभावात् कर्मयोगो नोपपद्यते। तथा च व्याख्यातं प्राक् 'वेदाऽविनाशिनम्' ( २।२१ ) इत्यत्रेति ॥५॥

**अवतरणम्**—यस्तु अनात्मज्ञः शास्त्रविहितं नित्यं नैमित्तिकञ्च कर्म स्वधर्मरूपं न करोतीति तत् तस्य असदेवेत्याह—कर्मेति।

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥६॥**
**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥७॥**

---

व्याख्या—यः पुरुषः, कर्मेन्द्रियाणि कर्मार्थानि इन्द्रियाणि हस्तादीनि, संयम्य संहृत्य मनसा इन्द्रियार्थान् शब्दादीन् विषयान् स्मरन् चिन्तयन् आस्ते तिष्ठति, स एवं भूतो जनः विमूढात्मा विमूढान्तःकरणः अस्तीतिशेषः। (तथा) मिथ्याचारः मृषाचारः पापाचारः, उच्यते कथ्यते सद्भिः। अत्र 'मनसा स्मरन्' इति विशेषणाद् अयं नित्यनैमित्तककर्मत्यागी मूढ एवास्तीति गम्यते । अतोऽस्य विहितकर्माऽकरणे प्रत्यवाय एवास्तीति पापाचारोऽय-मुच्यते सद्भिः। आत्मज्ञस्य नित्यनैमित्तिकादिसर्वकर्मसंन्यासिनस्तु न विहिता-ऽकरणजन्यप्रत्यवायप्राप्तिः संन्यासविधायकशास्त्रेण सर्वकर्मत्यागस्य तं प्रति विधानात्—'व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृह० ३।५।१) इति। 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः (ना० उ० २।१२) इति च। 'त्यज धर्ममधर्मञ्च' (महा० शान्ति०) इति च। तस्माद् न एषणाभ्यो व्युत्थितानां संन्यासिनां कर्माणि। अतो ज्ञानकर्मणोः समुच्चयानुपपत्तिरिति न विस्मर्त-व्यम् ॥६॥

अवतरणम्—यस्तु अनात्मज्ञ एव शास्त्रोक्तं कर्म फलाऽभिलाषरहितः करोति स पूर्वस्मात् सदाचारित्वेन प्रशस्योऽस्तीत्याह—यस्तु इति ।

व्याख्या—यस्तु पुनः कर्मण्यधिकृतोऽनात्मज्ञः पुरुषः, इन्द्रियाणि बुद्धी-न्द्रियाणि चक्षुरादीनि मनसा अन्तःकरणेन नियम्य संहृत्य कर्मेन्द्रियैः वाक्पाण्या-दिभिः, असक्तः सन् फलाऽभिलाषशून्यः सन्, कर्मयोगम्-युज्यते चित्तशुद्धिद्वारा ज्ञानेन सह अनेनेति योगः, ज्ञानोपायः, कर्मैव योगः कर्मयोगस्तम् आरभते करोति। हे अर्जुन, सः कर्मयोगी, विशिष्यते मिथ्याचारात्पूर्वोक्ताद् अधिको भवति प्रशस्योऽस्तीत्यभिप्रायः ॥७॥

अवतरणम्—यत एवम् अतो—नियतमिति ।

नियतं कुरु कर्मत्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥८॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥९॥

---

**व्याख्या**—हि यस्मात्, अकर्मणः, करणं कर्म, न कर्म अकर्म, तस्माद्, अकरणादित्यर्थः। कर्म कर्मकरणम्, ज्यायः फलतोऽधिकतरम्, भवतीति शेषः। (तस्मात्) हे अर्जुन, त्वम् नियतं कर्म 'नियतं नित्यं यो यस्मिन्कर्मणि अधिकृतः फलाय च अश्रुतं तद्, नियतं कर्म तत् कुरु।' इति भाष्यम्। अकरणात् करणं कथं ज्यायः ? अत आह—शरीरेत्यादि। शरीरयात्राऽपि च शरीरस्थितिरपि च ते तव, क्षत्त्रियस्य अकर्मणः अकरणात्,न प्रसिध्येत् प्रसिद्धिं न गच्छेत् क्षत्त्रियोचितवृत्तिकृतत्वलक्षणेन प्रकर्षेण न सिध्येत् न निष्पद्येत। अतो दृष्टः कर्माऽकर्मणो विशेषो लोके। भिक्षया शरीरधारणं तु क्षत्त्रियस्य अनुचितम्। अब्राह्मणस्य विदुष स्तुल्य न्यायात् कर्मसंन्यासे स्वीकरणीयेऽपि पारिव्राज्यं प्रकृत्य पुराणे–'मुखजानामयं धर्मो यद् विष्णो र्लिङ्गधारणम्। वाहुजातोरुजातानां नायं धर्मः प्रशस्यते।' इति नीलकण्ठोदधृते लिङ्गधारण-पूर्वकस्य संन्यासस्य निषेधादिति भावः। मूले ज्याय इति पदे ईयसुन्, भाष्ये अधिकतरमिति पदे तरप् च स्वार्थे। न तु प्रकर्षाऽपेक्षयेति प्रतीयते। अना-त्मज्ञस्य कर्माऽकरणस्य अधिकत्वाऽभावादप्रशस्तत्वाच्च। स्वार्थेऽपि तौ भवत एव भाष्य-सूत्रप्रयोगादिति कैयटादौ स्पष्टम् ॥८॥

**अवतरणम्**—यदपि 'कर्मणा बध्यते जन्तु र्विद्यया च विमुच्यते' इतिस्मृतेः सर्वं कर्म बन्धकमिति मन्तव्यम् तदप्यसत्। कथम् ? इत्यत आह—यज्ञेति।

**व्याख्या**—अयं लोकोऽधिकृतः, यज्ञार्थात् कर्मणः 'यज्ञो वै विष्णुः' (तै० सं० १।७।४) इतिश्रुते र्यज्ञ ईश्वरः। तदर्थं यत् क्रियते तद् यज्ञार्थं कर्म। तस्मात्कर्मणः, अन्यत्र ईश्वरार्थकर्माऽतिरिक्तकर्मविषये कर्मबन्धनः, कर्म बन्धनं यस्य सः। अस्तीति शेषः। ईश्वरार्थकर्मणोऽन्येन कर्मणा लोकोऽयं बध्यते, न तु ईश्वरार्थकर्मणाऽपि बध्यते इत्यर्थः। ईश्वरार्थकर्मणा तु ईश्वर-प्रसादात् चित्तशुद्धिद्वारा ज्ञानप्राप्तेर्मुच्यत एव। (तस्मात्) हे कौन्तेय, तदर्थं कर्म, यज्ञार्थं कर्म, मुक्तसङ्गः विष्णुप्रीतिरूपस्यापि कर्मफलस्य सङ्गेन

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥
देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तान् अप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥

---

अभिनिवेशेन अभिलाषेण वर्जितः सन् समाचार सम्यक् कुरु । उदाहृतस्मृतौ सामान्यविशेषन्यायेन यज्ञार्थाऽतिरिक्तत्वेन कर्म विशेषणीयमिति भावः ॥९॥

अवतरणम्—इतश्च अधिकृतेन कर्म कर्तव्यम् मुमुक्षुणा स्वर्गादयर्थिना चेति प्रसङ्गादाह—सहेति ।

व्याख्या—पुरा सर्गादौ प्रजापतिः प्रजानां स्रष्टा रक्षकश्च प्रजाः यज्ञाधिकृतास्त्रयो वर्णा ब्राह्मणक्षत्रियवैश्याः ताः । सहयज्ञाः यज्ञेन सहिताः सृष्ट्वा उत्पाद्य (प्रजा) उवाच—(यूयम्) अनेन यज्ञेन प्रसविष्यध्वम् प्रसवो वृद्धिस्तां कुरुध्वम् । एष यज्ञो वो युष्माकम् इष्टकामधुक् इष्टान् अभिप्रेतान् कामान् फलविशेषान् दोग्धीति सः । अस्तु भवतु । अत्र यज्ञपदम् विहित-कर्मोपलक्षणार्थम् ॥१०॥

अवतरणम्—यज्ञः कथम् इष्टकामधुक् स्यात् अतआह—देवानिति ।

व्याख्या—हे प्रजा, (यूयम्) अनेन सहोत्पन्नेन यज्ञेन देवान् इन्द्रादीन् भावयत वर्धयत । युष्माभि र्वर्धितास्ते देवा वो युष्मान् भावयन्तु वृष्ट्यादिना वर्धयन्तु । एवं परस्परं भावयन्तः वर्धयन्तः (यूयं देवाश्च) परं श्रेयो मोक्षलक्षणं चित्तशुद्धिद्वारा ज्ञानप्राप्तिक्रमेण स्वर्गं वा यथेष्टम् अवाप्स्यथ प्राप्स्यथ ॥११॥ हि=किञ्च—यज्ञ भाविता यज्ञवर्धिता यज्ञतोषिता देवा वो युस्मभ्यम्, इष्टान् शुभान् अभिलषितान् वा भोगान् धनस्त्रीपशुपुत्रादीन् दास्यन्ते वितरिष्यन्ति । तै र्दैवै र्दत्तान् भोगान् धनादीन् एभ्यो देवेभ्योऽप्रदाय पूजनादिना यज्ञेन प्रदानमकृत्वा आनृण्यम् अकृत्वा यो भुङ्क्ते स्वदेहेन्द्रियाणि एव तर्पयति,

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥**
**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥**

---

स देवस्वापहारी स्तेन एव तस्कर एव । अस्तीतिशेषः । तस्करवद् दण्डनीय इति भावः ॥१२॥

अवतरणम् अन्ये पुनः—यज्ञशिष्टाशिन इति ।

व्याख्या—यज्ञशिष्टाशिनः-यज्ञेभ्यः शिष्टम् अवशिष्टम् अशनीयम् अमृताख्यम् अशितुं शीलं येषांते । देवयज्ञपितृयज्ञमनुष्ययज्ञ-भूतयज्ञ-ब्रह्मयज्ञान् निर्वर्त्य तच्छिष्टाऽमृतभोजिनः—सन्तः सर्वकिल्बिषैः सर्वपापैः चुल्ली-कण्डनी-पेषणी-मार्जन्युदकुम्भीरूपपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैरन्यैश्च सर्व-पापैः । मुच्यन्ते रहिता भवन्ति । ये तु पापा आत्मम्भरयः आत्मकारणात्, आत्महेतोरेव पचन्ति गृहे पाकं निर्वर्तयन्ति ते तु अघं पापं भुञ्जते । तथा च स्मृतिः—कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥' इति । 'पञ्चसूना कृतं पापं पञ्चयज्ञै र्व्यपोहति ।' इति च । अधिकृतेन नित्यनैमित्तिकानि अवश्यम् अनुष्ठेयानीति प्रजापति-वचनार्थः ॥१३॥

अवतरणम्—इतश्च अधिकृतेन कर्म कर्तव्यम् । जगच्चक्रप्रवृत्तिहेतु र्हि कर्म । कथम् ? इत्यत आह-त्रिभिः—अन्नादिति ।

व्याख्या—अन्नाद् भुक्तात् लोहितरेतोरूपेण—परिणतान् भूतानि प्राणि-शरीराणि भवन्ति जायन्ते (इति प्रत्यक्षम्) । पर्जन्याद् वृष्टेः, अन्नसंभवः अन्नस्य अदनीयस्य संभवउत्पत्तिः (भवति) (इत्यपि प्रत्यक्षम्) । पर्जन्यो वृष्टिः यज्ञाद् अपूर्वाख्याद् धर्माद् भवति । अत्र प्रमाणम्—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टि र्वृष्टेरन्नं ततः प्रजाः ॥' (मनु० ३।७६) इति स्मृतिः । यज्ञः अपूर्वम्, कर्म समुद्भवः ऋत्विग्यजमानयो र्व्यापारो यागहोमादिः कर्म । ततः समुद्भवः उत्पत्ति र्यस्य सः । अस्तीति शेषः । 'अग्नौ प्रास्ताहुतिः' इत्यादि स्मृतिवचनादिति भावः ॥१४॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

---

अवतरणम्--ननु यद् अपूर्वहेतुत्वेन यागहोमदानादि कर्मोक्तम् । तस्य केन प्रमाणेन अनुष्ठानं कर्तव्यम् ? इत्यत आह--कर्मेति ।

व्याख्या--(तच्च) कर्म ब्रह्मोद्भवं विद्धि, ब्रह्म वेद उद्भवः प्रमाणरूपं कारणम् यस्य तत् । विद्धि जानीहि । हे अर्जुन, वेदविहितमेव कर्म अपूर्वसाधनं त्वं जानीहि । न तु पाखण्डादिप्रतिपादितमित्यर्थः । ननु पाखण्डवचनाऽपेक्षया वेदस्य किम् वैशिष्ट्यम् ? अत आह-ब्रह्मेत्यादि । ब्रह्म वेदाख्यम् अक्षरसमुद्भवम् अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तद् विद्धि इति पूर्वेण संबन्धः ? "अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः" इत्यादि श्रुतेः । साक्षात्परमात्मनः पुरुषनिःश्वासवद् अबुद्धि पूर्वम् आविर्भूतो वेदः । स एव अपौरुषेयत्वेन निरस्तसमस्तपुंदोषाऽऽशङ्कतया अतीन्द्रियेऽर्थे प्रमाणम् । न तु भ्रमप्रमादकरणाऽपाटवविप्रलिप्सादिदोषाक्रान्तपाखण्डादिवाक्यमिति भावः । वेदं यज्ञं च स्तौति-तस्मादित्यादि । तस्माद् यतः साक्षात् परमात्मनः पुरुषनिःश्वासवत् समुद्भूतं तस्मात् कारणात् वेदाख्यं ब्रह्म सर्वार्थप्रकाशकत्वात् सर्वगतम् (विषयतासंबन्धेन सर्वगतमपि सद् यज्ञविधिप्रधानत्वाद्) यज्ञे नित्यं सदा प्रतिष्ठितं प्राधान्येन स्थितम् । अस्तीति शेषः । अतः पाखण्डप्रतिपादितोपधर्मपरित्यागेन वेदबोधित एव धर्मो यागादिरनुष्ठेय इत्याशयः ॥१५॥

अवतरणम्--तस्माद् अधिकृतेन अध्ययनानुष्ठानाभ्यां वेदयज्ञपूर्वकं जगच्चक्रम् अनुवर्तनीयम् । अन्यथा ईश्वराज्ञोल्लङ्घिनस्तस्य प्रत्यवायः स्यादित्याह--एवमिति ।

व्याख्या--एवम् इत्थम् ईश्वरेण वेदयज्ञपूर्वकं, प्रवर्तितं प्रवृत्तिमत् कृतं चक्रं जगच्चक्रं जगद्रूपं चक्रम् यः पुरुषः, इह लोके कर्मणि अधिकृतः सन् न अनुवर्तयति न अनुसरति हे पार्थ, अघायुः अघं पापम् आयु जीवनं यस्य सः पापजीवनः । इन्द्रियारामः इन्द्रियैः आरामः आरमणम् विषयेषु आक्रीडा यस्य सः । स जगच्चक्राननुसारी पुरुषः मोघं निष्फलं वृथा जीवति

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।।१७।।**

---

मोक्षाऽनिष्पत्तेः पुरुषजीवनं तस्य वृथैवास्तीत्यर्थः। तस्माद् अनात्मज्ञेन अधिकृतेन कर्तव्यमेव शास्त्रोक्तं कर्मेति प्रकरणार्थः ।। अत्र इदन्तु बोध्यम्- 'प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेरनात्मज्ञेन अधिकृतेन आत्मज्ञाननिष्ठायोग्यतायाः प्राप्तये निःसङ्गतया योगस्थतया च कर्तव्यमेव शास्त्रोक्तं कर्म' इत्येतद् न कर्मणामनारम्भाद्' इत्यारभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः इत्येवमन्तेन ग्रन्थेन प्रतिपाद्य 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेन ग्रन्थेनापि प्रासङ्गिकम् अधिकृतस्य अनात्मविदः कर्माऽनुष्ठाने बहु कारणमुक्तम्, तदकरणे च दोषसंकीर्तनं कृतम् । एतेन 'इष्टकामधुग्' 'इष्टान् भोगान्' इति काम्यकर्मकीर्तनं मोक्षानुपयोगित्वाद् अप्रकृतप्रक्रियेति कथनम् अपास्तम् प्रासङ्गिकत्वेन अदोषादिति ।।१६।।

अवतरणम्—'एवं प्रवर्तितं जगच्चक्रं केवलं कर्मयोगानुष्ठानप्राप्यां ज्ञानयोगनिष्ठाम् अप्राप्तेन अनात्मविदैव अनुवर्तनीयम् । न तु ज्ञानयोगनिष्ठां प्राप्तेन आत्मविदापि' इत्येवं शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थं "यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः" (बृह० ३।४।१) "योऽशनायापिपासे शोकं मोहं जरां मृत्युम् अत्येति एतं वै तम् आत्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति" (बृह० ३।५।१) इतिश्रुतेः 'अयमहमस्मि परं ब्रह्म' इत्येवमात्मानं ज्ञात्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा=मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषाम् आत्मज्ञाननिष्ठाव्यतिरेकेण अन्यत् कार्यम् अस्ति' इत्येवमर्थम् इह गीताशास्त्रे प्रतिपिपादयिषितम् आविष्कुर्वन् श्रीभगवानाह द्वाभ्याम्—यस्तु इति ।

व्याख्या—यस्तु मानवः, सांख्य आत्मज्ञाननिष्ठः आत्मरतिरेव स्यात्, आत्मनि एव रतिर्न विषयेषु यस्य सः स्यात् । आत्मतृप्तश्च स्यात् । आत्मनैव तृप्तो न अन्नरसादिना स्यात् । आत्मन्येव च संतुष्टः स्यात्, सर्वतो वीततृष्णः स्यात् । संतोषो हि बाह्यार्थलाभेऽनात्मज्ञस्य भवति । बाह्यार्थलाभानपेक्षः स्यात् । तस्य ईदृशस्य आत्मविदः, कार्यं कर्तव्यं, न विद्यते । इन्द्रियारामो हि स्रक्चन्दनवनितादिषु रतिम् अनुभवति । मनोज्ञान्नपानादिषु

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥**
**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥१९॥**

---

तृप्तिम्, पशुपुत्रहिरण्यादिलाभेन रोगाद्यभावेन च संतुष्टिम् अनुभवति। रतितुष्टितृप्तयो मनोवृत्तिविशेषाः साक्षिसिद्धाः। लब्धपरमात्मानन्दस्तु द्वैतदर्शनाऽभावात् विषयसुखं न कामयते। य एवंभूतः प्राप्तपरमात्मानन्द-स्तस्य अविद्यारूपस्य अधिकारहेतोरभावात् किमपि कार्यं लौकिकं वैदिकं वा नास्तीत्याशयः ॥१७॥

तस्य कार्यं न विदयते इति. यदुक्तं, तदेव विवृणोति—नैव तस्ये-त्यादि। तस्य परमात्मरते मानवस्य, इह लोके कृतेन कर्मणा, अर्थः प्रयोजनं नैवास्ति। स्वर्गादौ लिप्साया अभावात्। मोक्षस्य तु अक्रियासाध्यत्वादिति भावः। अकृतेन अकरणेन कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानि-लक्षणो वा, अनर्थोऽपि अस्य नास्ति। विधिनिषेधाधिकारहेत्वभावादित्या-शयः। च=किञ्च। अस्य आत्मविदः, सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चित् स्वल्पोऽपि अर्थव्यपाश्रयः प्रयोजनसंबन्धो नास्ति। कंचिद् भूतविशेष-माश्रित्य क्रियासाध्यः कश्चिदर्थोऽस्य नास्ति। येन तदर्था क्रिया अस्या-नुष्ठेया स्यात्। यस्तु इति तु शब्दः पूर्वत्र प्रकृतम् अनात्मविदं व्यवच्छिनत्ति। इह मानवपदेन कृतकृत्यस्य तत्त्वज्ञस्य मानवमात्रस्यैव भरतऋषभादिवद् विक्षेपपरिहारार्थं कर्मसंन्यासेऽधिकारो न ब्राह्मणत्वयुक्तस्यैवेति सूचितम्। किन्तु लिङ्गधारणभिक्षाचर्यसहितस्य कर्मसंन्यासस्य ब्राह्मणानामेव वर्णानाम् अधिकार इति भाष्यादितः सिद्धयति ॥१८॥

अवतरणम्—सम्यग्दर्शननिष्ठत्वाऽभावे स्वकर्माऽनुष्ठानम् आवश्यक-मित्याह—तस्मादिति।

व्याख्या—तस्माद्—यस्मात् त्वं सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने न वर्तसे-तस्मात्, त्वम्, असक्तः सङ्गवर्जितः सन् फलाभिलापरहितः सन् इति यावत्। कार्यं करणीयं नित्यं नैमित्तिकं च कर्म सततं व्यभिचाररहितं यथा स्यात् तथा समाचर निर्वर्तय। हि यस्माद् असक्तः सन् फलाभिलापरहितः

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥२०॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

---

सन् केवलम् ईश्वरार्थम् ईश्वरप्रसादनार्थम् कर्म आचरन् कुर्वन् पूरुषः पुरुषः परं मोक्षम् आप्नोति लभते सत्त्वशुद्धिद्वारेणेतिशेषः ॥१९॥

अवतरणम्—अत्र दृष्टान्तं कारणान्तरं चाह—कर्मणैवेति ।

व्याख्या—हि, यस्माद्, जनकादयः जनकाश्वपतिप्रभृतयः । पूर्वं क्षत्रियाः कर्मणैव, यदि तावत् ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैव, कर्मसंन्यासे प्राप्तेऽपि असंन्यस्यैव कर्म 'गुणा गुणेषु वर्तन्ते' इति ज्ञानेनैव संसिद्धिं मोक्षम् आस्थिता गन्तुं प्रवृत्ताः । इत्यर्थः । अथ ते जनकादयो न प्राप्तसम्यग्दर्शनास्तदा कर्मणा सत्त्वशुद्धि-साधनभूतेन क्रमेण (विद्वांसो भूत्वा) संसिद्धिं मोक्षम् आस्थिता इति व्याख्येयम् । पक्षान्तरमाह—लोकसंग्रहमेवापीति । अपिशब्दाद् अथ मन्यसे पूर्वैरपि जनकादिभिरपि अजानद्भिरेव कर्तव्यं कर्म कृतम् तावता नावश्यम् अन्येन (मया) कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथापि प्रारब्धकर्माऽऽयत्तस्त्वं लोकसंग्रहमेव लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तम् एव तमेव केवलं प्रयोजनं संपश्यन् । कर्तुम् कर्मानुष्ठातुम् अर्हसि योग्यो भवसि ॥२०॥

अवतरणम्—लोकसंग्रहं कः कर्तुमर्हति कथं च ? इत्युच्यते—यदिति ।

व्याख्या—श्रेष्ठः येषु येषु वर्गेषु प्रधानभूतः । यद्यत्कर्म आचरति करोति । इतरो जनः तेषु तेषु वर्गेषु तदनुगतो जनः, तत्तदेव कर्म आचरति । आचारे श्रेष्ठानुसारित्वम् इतरजनस्य दर्शयित्वा प्रतिपत्तावपि तद् दर्शयति—स यत्प्रमाणम् इत्यादि । (किञ्च) सः श्रेष्ठो जनः, यत् कर्म लौकिकं वैदिकं वा प्रमाणं कुरुते प्रमाणत्वेन मन्यते प्रामाणिकं मन्यते । लोकः अप्रधानो-जनः । तत् तदेव अनुवर्तते प्रमाणी करोति प्रामाणिकं मन्यते इत्यर्थः ॥२१॥

अवतरणम्—कृतार्थेनापि लोकमर्यादास्थापनार्थं विहितं कर्म कर्तव्यम् इत्यत्र अहमेव दृष्टान्तोऽस्मीत्याह त्रिभिः—न मे इत्यादि ।

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

---

व्याख्या—हे पार्थ, त्रिषु त्रिष्वपि, लोकेषु भूर्भुवः स्वरिति ख्यातेषु लोकेषु । सकलेष्वपि लोकेषु इत्यर्थः । किञ्च न किञ्चिदपि मे मम वासुदेवस्य कर्तव्यं नास्ति । (यतो) मम अवाप्तव्यम् प्राप्तव्यम्, अनवाप्तम् अप्राप्तं नास्ति । आप्तसमस्तकामोऽस्मीभिप्रायः ॥ (तथापि अहम्) कर्मणि वर्त एव च । कर्म करोम्येवाहमित्यर्थः । तथापिशब्दस्यार्थे चकारः ॥२२॥

अवतरणम्—ननु लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वाद् इत्याशङ्क्याह—यदीति ।

व्याख्या—यदि हि पुनरहं जातु कदाचित् कर्मणि अतन्द्रितः सन् अनलसः सन् न वर्तेय कर्म न कुर्याम् । तर्हि हे पार्थ, मनुष्याः श्रेष्ठस्य मम वर्त्म मार्गम् अनुवर्तन्ते अनुवर्तेरन् सर्वशः सर्वैः प्रकारैः कर्म न कुर्वीरन् इत्यर्थः ॥ लिङोऽर्थे लट् प्रत्ययः ॥२३॥

अवतरणम्—ततश्च को दोषः स्याद् ? अत आह—उत्सीदेयुरिति ।

व्याख्या—चेत् यदि, अहम् ईश्वरः, कर्म न कुर्याम् (तर्हि) इमे सर्वे लोकाः पृथिव्यादिभूतानि उत्सीदेयुर्विनश्येयुः । ईश्वरस्य कर्मणि अप्रवृत्तौ मन्वादीनां तदनुवर्तिनामपि कर्मानुपपत्ते र्लोकस्थितिनिमित्तस्य कर्मणोऽभावात् पृथिव्यादिभूतानां विनाशप्रसङ्ग इत्यर्थः । च किञ्च, यदि अहं कर्म न कुर्यां तर्हि संकरस्य वर्णसंकरस्य च कर्ता प्रवर्तकः स्याम् । वर्णाश्रमव्यवस्थाऽनुपपत्तेरित्याशयः । (तेन कारणेन) अहम् इमाः प्रजाः उपहन्याम् । प्रजानाम् अनुग्रहाय प्रवृत्तस्य अवतीर्णस्य मम ईश्वरस्य प्रजोपहननम् अननुरूपम् आपद्येत इत्यभिप्रायः ॥२४॥

अवतरणम्—विदुषः कृतार्थत्वात् स्वानुग्रहार्थं कर्तव्याऽभावेऽपि परानुग्रहार्थमेव तेन कर्म कर्तव्यम् प्रारब्धकर्मवशादित्याह—सक्ता इति ।

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥
न बुद्धिभेदं जनयेद् अज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥२६॥
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥२७॥

---

व्याख्या--हे भारत, यथा (केचिद्) अविद्वांसोऽनात्मज्ञाः कर्मणि सक्ताः सन्तः 'अस्य मम कर्मणः फलं मम भविष्यति' इति कर्तृत्वाऽभिमानं फलाऽभिसंधिं च कुर्वन्तः सन्तः कर्म कुर्वन्ति तथा विद्वान् आत्मविद् लोक-संग्रहं लोकमर्यादास्थापनं चिकीर्षुः कर्तुमिच्छुः (कर्माणि) असक्तः सन् असक्त एव सन् कर्तृत्वाभिमानं फलाऽभिसन्धिञ्च अकुर्वन् एव सन् कर्म कुर्यात् प्रारब्धकर्मायत्तत्वात् ॥२५॥

अवतरणम्—प्रारब्धफलककर्मायत्तत्वाद् लोकसंग्रहं चिकीर्षो विदुष इदम् उपदिश्यते—नेति ।

व्याख्या—विद्वान् आत्मविद् अज्ञानाम् अनात्मविदाम्, कर्मसङ्गिनां कर्माणि कर्तृत्वाऽभिमानेन फलाभिसन्धिना च कुर्वताम् । बुद्धिभेदम् 'मयेदं कर्म कर्तव्यम् अस्य कर्मणः फलं स्वर्गादि मया भोक्तव्यं च' इति निश्चित-रूपायास्तेषां बुद्धेर्भेदम् तादृशबुद्धेः सकाशात् तेषां चालनम्, न जनयेद् न उत्पादयेत् । अकर्त्रात्मोपदेशेनेति शेषः । ईदृशोपदेशानधिकारिणां कर्मसङ्गि-नाम् अकर्त्रात्मोपदेशेन बुद्धिविचालने कृते सति कर्मसु श्रद्धाया निवृत्ते ज्ञानस्य च अनुत्पत्तेरुभयतस्तेषां भ्रंशः स्याद् इति कृत्वा तेषाम् अनधिकारिणां बुद्धिभेदं न जनयेदित्यभिप्रायः । (अपि तु) विद्वान् (प्रारब्धकर्मायत्तत्वात् लोकसंग्रहं चिकीर्षुः) युक्तोऽभियुक्तः सन् (स्वयं) सर्वकर्माणि समाचरन् कुर्वन् तैरपि सर्वकर्माणि जोषयेत् सेवयेत् कारयेदित्यर्थः ॥२६॥

अवतरणम्—सक्ताः कर्मणीत्यत्र अविदुषः कर्मसक्तत्वम् विदुषस्तु कर्माऽसक्तत्वमुक्तम् तत् कथम् ? अत आह द्वाभ्याम् भगवान्—प्रकृतेरित्यादि ।

व्याख्या—प्रकृतेः-प्रकृतिः प्रधानम् सत्त्वरजस्तमसां गुणानां साम्या-वस्था । 'देवात्मशक्तिं स्वगुणैर्निगूढाम् ।' इति श्रुतिप्रसिद्धा पारमेश्वरी शक्ति र्मायाख्या । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।' इति श्रुतेः ।

तत्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥

---

तस्या गुणै विकारैः कार्यकरणरूपेण परिणतैः शरीरेन्द्रियैरिति यावत् (कर्तृभिः) क्रियमाणानि अनुष्ठीयमानानि, सर्वशः सर्वैः प्रकारैरुपलक्षितानि कर्माणि लौकिकानि वैदिकानि च, अहङ्कारविमूढात्मा-कार्यकरणसंघाते (पृथिव्यप्तेजोवाय्वाकाश-गन्धरसरूपस्पर्शशब्दानां कार्याणाम्, करणानां च मनोबुद्ध्यहङ्कारचित्तश्रोत्रत्वक्चक्षुर्जिह्वानासिकाहस्तपादपायूपस्थवाचाम् संघातः समूहो देहेन्द्रियरूपः तत्र) आत्मप्रत्ययोऽहङ्कारस्तेन, विविधं नानाविधं मूढः स्वरूपविवेकहीनः आत्मा अन्तः करणं यस्य सः । अविद्यया कार्यकरणधर्मा कार्यकरणाऽभिमानी देही अविद्ययैव अहंपदवाच्ये सच्चिदानन्दे आत्मनि निर्विकारे कर्तृत्वभोक्तृत्वादिरहिते कार्यकरणगतं कर्तृत्वम् अध्यस्य तत्तत्कर्मणाम् अहं कर्ता कर्तुं शीलं यस्य सोऽस्मि इति मन्यते अभिमन्यते । 'कर्ता', ईति शीले तृन् प्रत्ययः । 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम् (पा. सू.) इति षष्ठीनिषेधात् कर्माणीति द्वितीयान्तम् । 'सर्वस्य द्वे' इति पाणिनीयसूत्रे 'द्रव्यप्रकाराऽवयवकार्त्स्न्यरूपंवृत्तिः सर्वशब्दः' इति कैयटोक्तेरत्र सर्वश इति सर्वप्रकारवाची सर्वशब्दस्तस्मा त्कर्मकारकवाचका च्छस् प्रत्ययः । अविद्वान् अविद्यया कर्तृत्वं भोक्तृत्वं च आत्मनि निर्विकारे निष्क्रिये अभिमन्यमानः सन् तदभिमानरूपं सङ्गं कर्मणि कुरुते इति कर्मणि सज्जते अविद्वान् इत्यर्थः ॥२७॥

अवतरणम्—अविदुषः कर्मसक्तिप्रकारमुक्त्वा विदुषः कर्मासक्तिमाह—तत्त्वेति ।

व्याख्या—हे महाबाहो, गुणकर्मविभागयो—स्तत्ववित् तु-विभागश्च विभागश्च विभागौ । गुणाश्च कर्माणि चेति गुणकर्माणि, तेभ्यो विभागौ गुणकर्मविभागौ तयो स्तत्त्वं याथात्म्यम् वेत्तीति तत्त्ववित् । विभागो विश्लेषः । कस्येत्याकाङ्क्षायाम् प्रत्यासत्त्या 'आत्मनः' इति लभ्यते । तथा च 'नाहं कार्यकरणसंघातरूपगुणात्मकः' इत्येवम् आत्मनो गुणविभागस्य याथात्म्यज्ञानम् । 'न मे कर्माणि' इत्येवम् आत्मनः कर्मविभागस्य याथात्म्यज्ञानम् । तद्वांस्तु इत्यर्थः । तु शब्दः पूर्वोक्ताहङ्कारविमूढात्मसकाशाद् भिन्नताया द्योतकः । 'गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते न तु अहमात्मा' इति

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तान् अकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९॥
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशी निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

---

मत्वा विज्ञाय, न सज्जते न कर्तृत्वभोक्तृत्वाऽभिमानं करोति । लोकसंग्रहार्थे कर्मणीतिशेषः । गुणानां परिणामोऽपि गुण एवेति गुणा गुणेषु इत्युक्तम् ॥२८॥

अवतरणम्--विद्वान् अविद्वांश्चेत्युभौ प्रकृत्य विदुषः कर्मणि असक्तिम् अविदुषस्तु कर्मणि सक्तिम् उपपाद्य विद्वान् अज्ञानां बुद्धिभेदं न जनयेदिति यदुक्तं तदधुना उपसंहरति--प्रेति ।

व्याख्या—(ये पुनः) प्रकृते भगवन्मायायाः, गुणसंमूढाः गुणैः सत्त्वरजस्तमोभिः संमूढाः सम्यग् मूढाः संमोहिताः स्वरूपविवेकाऽसमर्थीकृताः सन्तः गुणकर्मसु गुणानां देहादीनां कर्मसु व्यापारेषु देहादीन् एव आत्मतया मन्यमानाः सज्जन्ते-'वयं कर्म कुर्मः फलाय' इति कर्तृत्वभोक्तृत्वलक्षणां दृढतरां स्वकीयबुद्धिं कुर्वन्ति । तान् कर्मसङ्गिनः अकृत्स्नविदः कर्मतत्तत्फलमात्रदर्शिन आत्मज्ञानशून्यान् मन्दान् मन्दबुद्धीन्, कृत्स्नविद् आत्मवित् (स्वयं) न विचालयेत् कर्मनिष्ठातो न प्रच्यावयेत् । अकर्त्रात्मोपदेशेनेति शेषः । तेषां ज्ञानानधिकारिणाम् उभयभ्रष्टत्वापत्तेरिति भावः ॥२९॥

अवतरणम्--कथं पुनर्मुमुक्षुणा कर्मणि अधिकृतेन अनात्मज्ञेन कर्म कर्तव्यम् ? अत आह--मयीति ।

व्याख्या—मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि । सर्वाणि नित्यनैमित्तिकानि कर्माणि क्रियमाणानि, अध्यात्मचेतसा 'अहं कर्म ईश्वराय करोमि भृत्यवत्' इत्यनया बुद्ध्या (विवेकबुद्ध्या) संन्यस्य निक्षिप्य, समर्प्य, (अपि च) निराशीः फलप्रार्थनाहीनः सन् निर्ममः निर्गतो ममभावो यस्य सः । शरीरपुत्रादिषु वित्तेषु च लब्धेषु कर्मणि च क्रियमाणे ममताशून्यो, भूत्वा, विगतज्वरः विगतसंतापो विगतशोकः सन् युद्ध्यस्व उपलक्षणतया स्वधर्माचरणं कुरुष्वेत्यर्थः ॥३०॥

अवतरणम्--फलाऽभिसन्धिराहित्येन भगवदर्पणसाहित्येन च शास्त्रविहितनित्यनैमित्तिककर्मानुष्ठानम् ईश्वरप्रसादसत्त्वशुद्धिज्ञानप्राप्तिक्रमेण मुक्तिफलकम् इत्याह--ये मे इति ।

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥

---

व्याख्या--ये मानवाः, मे मम वासुदेवस्य परमेश्वरस्य, इदं पूर्वोक्तं मतम् 'फलाभिसन्धिराहित्येन भगवदर्पणसाहित्येन च नित्यनैमित्तिकं शास्त्रविहितं कर्म अनुष्ठेयम्' इत्येवम्, श्रद्धावन्तः श्रद्दधानाः, अनसूयन्तः मयि-वासुदेवे असूयाम् अकुर्वन्तश्च नित्यं सदा अनुतिष्ठन्ति अनुवर्तन्ते तेऽपि मानवाः कर्मभिः धर्माधर्माख्यैः बन्धनैः मुच्यन्ते मुक्ता भवन्ति ईश्वरप्रसादसत्त्वशुद्धिज्ञानप्राप्ति क्रमेणेति शेषः । अपि शब्दाद् ये शुद्धसत्त्वा ज्ञाननिष्ठास्ते तु मुच्यन्त एव, इति किम् वक्तव्यम् इत्यर्थः ॥३१॥

अवतरणम्--एवं भगवन्मतानुवर्तने गुणम् उक्त्वा तद्वैपरीत्ये दोषमाह--ये तु इति ।

व्याख्या--ये तु तद्विपरीताः । तुशब्दो वैपरीत्यं द्योतयति । (अतः) श्रद्धाहीनाः एतत् पूर्वोक्तं मे मतम् अभ्यसूयन्तः गुणेषु दोषाविष्करणम् असूया ताम् अभितः कुर्वन्तः, न अनुतिष्ठन्ति नाऽनुवर्तन्ते । तान् मानवान् सर्वज्ञानविमूढान् सर्वेषु ज्ञानेषु कर्मज्ञाने सगुणब्रह्मज्ञाने निर्गुणब्रह्मज्ञाने च विविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढान् मूर्खान् अचेतसः विवेकशून्यान् नष्टान् स्वर्गापवर्गाभ्यो भ्रष्टान् (च) त्वं विद्धि जानीहि ॥३२॥

अवतरणम्--कस्मात् पुनः कारणात् केऽपि त्वदीयं मतं नाऽनुतिष्ठन्ति ? सर्वेऽपि स्वधर्मं नानुवर्तन्ते ? त्वप्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात् ? तत्राह--सदृशमित्यादि ।

व्याख्या--सर्वो जन्तुः ज्ञानवानपि शास्त्रजशाब्दबोधवान् अपि, किं पुनः मूर्खः, स्वस्याः आत्मीयायाः प्रकृतेः स्वभावस्य, सदृशम् अनुरूपम्, चेष्टते करोति । सदृशमेव चेष्टते इत्यर्थः 'सर्वं वाक्यं सावधारणम्' इति न्यायात् ।

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥३४॥

---

'प्रकृति र्नाम पूर्वकृतधर्माऽधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिः' इति भाष्यम् । 'धर्माऽधर्मादीत्यादिपदेन ज्ञानेच्छादि संगृह्यते' इत्यानन्दगिरिः । (तस्माद्) भूतानि प्राणिमात्राणि सर्वजन्तवः, प्रकृतिं यथोक्तां, यान्ति अनुसरन्ति । तत्र निग्रहः शासनं (मम वा अन्यस्य वा) किं करिष्यति ? न किमपि करिष्यतीत्यर्थः । उत्कटरागादिना शास्त्रस्य गुरोरन्यस्य वा शासनं जनोऽतिक्रामति । इति भावः ॥३३॥

अवतरणम्—ननु यदि सर्वो जन्तुः स्वप्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्यः कश्चिदस्ति । तर्हि पुरुषप्रयत्नस्य स्वतन्त्रविषयाऽनुपपत्तेः शास्त्राऽऽनर्थक्यं प्राप्तम् । विधिनिषेधमोक्षशास्त्राणाम् अकिञ्चित्करत्वप्रसङ्गाद् इति चेन् तत्राह—इन्द्रियस्येति ।

व्याख्या—इन्द्रियस्येन्द्रियस्येति वीप्सायां द्विर्वचनम् प्रत्येकं सर्वेषामिन्द्रियाणामित्यर्थः । अर्थे शब्दादौ विषये रागद्वेषौ 'इष्टेऽर्थे रागः, अनिष्टेऽर्थे द्वेषः' इत्येवं व्यवस्थितौ अवश्यंभाविनौ स्तः । अशास्त्रदृष्टे र्जनस्येति शेषः । तत्रायं पुरुषप्रयत्नस्य शास्त्रार्थस्य च विषय उच्यते—(शास्त्रार्थे प्रवृत्तः पुरुषः पूर्वमेव) तयोः रागद्वेषयो र्वशं नागच्छेदिति । या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति । तदा पुरुषेण स्वधर्मपरित्यागः प्रतिषिद्धानुष्ठानं च क्रियते । यदा तु पुरुषस्तौ रागद्वेषौ शास्त्रदृष्ट्या तत्प्रतिपक्षेण विवेकविज्ञानेन निवारयति तदाऽसौ शास्त्रदृष्टिरेव भवति न प्रकृतिवशः शास्त्रानुसारमेव व्यवहरतीत्यर्थः । तस्मात्पुरुषस्तयोः रागद्वेषयो र्वशं नागच्छेत् । शास्त्रार्थं दृष्ट्वा प्रकृतेः कार्यकरणे सहकारिणौ रागद्वेषौ पूर्वमेव निवारयेद् इति भावः । हि यस्मात्कारणात् । अस्य—पुरुषस्य तौ रागद्वेषौ परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविव भवतः । विषये शब्दादौ पुरुषं विक्षोभ्य श्रेयोमार्गात् पातयत इत्यभिप्रायः ॥३४॥

अवतरणम्—तत्र रागद्वेषप्रयुक्तो जनः शास्त्रार्थमपि अन्यथा मन्यते—'परधर्मोऽपि धर्मत्वाद् अनुष्ठेय एव स्वधर्मवद्' इत्येवम् । तद् असदिति बोधयितुमाह—श्रेयानिति ।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

अर्जुन उवाच--

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥

---

व्याख्या—अत्र अपिशब्दत्रयं वाक्यमर्यादया लभ्यते 'विगुणोऽपि, स्वनुष्ठितादपि, निधनमपीति । विगुणोऽपि किञ्चिदङ्गहीनोऽपि अनुष्ठीयमानः, स्वधर्मः आत्मीयो धर्मः, यथा ब्राह्मणस्य शमदमादिः, क्षत्रियस्य शौर्यतेजःप्रभृतिः, वैश्यस्य कृष्यादिः शूद्रस्य परिचर्येति । स्वनुष्ठितादपि साद्गुण्येन संपादितादपि, परधर्माद् यथा ब्राह्मणस्य क्षत्रियादिधर्मः, क्षत्रियस्य ब्राह्मणादिधर्मः तस्मात् । श्रेयान् प्रशस्यतरः, अस्तीतिशेषः । (किञ्च) स्वधर्मे (स्थितस्य) निधनं निधनमपि मरणमपि परधर्मे स्थितस्य जीवितात् श्रेयः प्रशस्यम् (यतः) परधर्मः ब्राह्मणस्य क्षत्रियादिधर्मः क्षत्रियस्य ब्राह्मणादिधर्म एवं वैश्यशूद्रयोरपि । भयावहः नरकादिलक्षणं भयम् आवहतीति । 'चोदनालक्षणोऽर्थो धर्मः' (वेदप्रतिपाद्योऽर्थो धर्मः) इतिन्यायाद् धर्मस्य शास्त्रैकगम्यत्वाद् यो यस्य वर्णस्य विहितः स एव तस्य धर्मः । अन्यस्य तु स ह्यधर्म एव । अतः स्वधर्मम् अवधूय परधर्मम् अनुतिष्ठतः स्वधर्मातिक्रमणजन्यपापान्नरकप्राप्तिरित्यानन्दगिरिः । एवं च परधर्मस्य परं प्रति प्रशस्यत्वेऽपि स्वं प्रति प्रशस्यत्वाऽभावात् श्रेयान् इत्यस्य स्वार्थ ईयसुन्प्रत्ययेन प्रशस्य इत्येवार्थः । 'प्रशस्यतरः' इति भाष्ये यद् विवरणं तदपि 'अल्पाच्तरम्' 'कनीयान्' इत्यादिवत् स्वार्थे एव तरप्प्रत्ययेनेत्यलम् ॥३५॥

अवतरणम्—यद्यपि 'ध्यायतो विषयान्पुंसः' (२।६२) इत्यादिना—'रागद्वेषौ ह्यस्य परिपन्थिनौ' (३।३४) इत्यनेन च पुरुषस्य अनर्थमूलम् उक्तम् । तथापि 'तद् न संक्षिप्तम्, न च अवधारितम् उक्तम् । अतः संक्षिप्तम् अवधारितञ्च इदमेव अनर्थमूलम् इति ज्ञातुम् इच्छया, ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्याम् इति कृत्वा --अर्जुन उवाच अथेति ।

व्याख्या—वार्ष्णेय, वृष्णिकुलप्रसूत, (पापं कर्तुं स्वयम् अनिच्छन्नपि अकामयमानोऽपि अयं पूरुषः, बलात् हठाद् नियोजितइव, भृत्य इव, राजा

श्री भगवान् उवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

---

प्रवर्तित इव केन प्रयुक्तः केन प्रयोजककर्त्रा प्रयुक्तः प्रेरितः सन्, पापं दुष्कृतं चरति करोति ? अथेति नूतन वाक्यारम्भद्योतकम् ॥३६॥

अवतरणम्—अत्रोत्तरं कर्तुम् श्रीभगवान, उवाच—काम इति ।

व्याख्या—अत्र भाष्ये—"श्रीभगवानुवाच—'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ॥' (विष्णु० ६।५।७४) ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यम् अप्रतिबद्धत्वेन सामस्त्येन च वर्तते । उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' (विष्णु० ६।५।७८) उत्पत्यादिविषयं विज्ञानं यस्य स वासुदेवो वाच्यो भगवान् इति ।" इत्युक्तम् । स उवाच । शृणुत्वम् तं वैरिणम् यं पृच्छसि । एषः, येन प्रयुक्तः स्वयम् अनिच्छन्नपि अयं पुरुषः पापं चरति, स एषः । रजोगुणसमुद्भवः रजोगुणात्समुद्भवो यस्य सः । समुद्भवउत्पत्तिः । रजोगुणस्य वा समुद्भव उत्पादकः । कामो हि उद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति । "तृष्णया हि अहं कारितः' इति दुःखितानां रजः कार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते ।" इति भाष्यम् । महाशनः महद् अशनं भोजनं यस्य सः । महद् दातुम् अपारणीयम् अशनं भोजनं विषयरूपं यस्येत्यर्थः । यथोक्तम्—'न जातु कामः कामानाम् उपभोगेन शाम्यति हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते' इति । 'यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वम् इति मत्वा शमं व्रजेत् ।' इति च । अत एव महापाप्मा महान् पाप्मा पापं प्रयोज्यत्वेन यस्यास्ति सः । कामस्तृष्णा । अस्तीति शेषः । कामेन प्रयुक्तः पुरुषः पापं चरतीत्यर्थः । एष कामः केनचित् प्रतिहतः क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष काम एवास्ति । (अतः) एनं कामम्, इह संसारे वैरिणं सर्वानर्थप्रयोजकम्, विद्धि त्वं जानीहि । ननु स्वयम् अनिच्छन्नपीति प्रश्ने विशेषणात्, काम इच्छात्मा पापं प्रयोजयतीत्युत्तरं कथं संगच्छते ? किञ्च इच्छां विना न काऽपि प्रवृत्ति र्दृष्टा । अतः स्वयम् अनिच्छन्नपीति विशेषणम् असंगतं प्रतिभाति । इति चेत्सत्यम् । यथा पापात्मकं कर्म कर्तुं भृत्यस्य आस्तिकस्य राजाज्ञायाः पूर्वम् इच्छा न भवति ।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥

---

पश्चाद् राजाज्ञायां जातायाम् अकरणे राज्ञः सकाशात् तात्कालिकानर्थ-संभावनया तात्कालिकानर्थनिवारणाय तत्करणे भृत्यस्येच्छा जायते। अथ च तत्करणे भृत्यः प्रवर्तते एव। तथैवात्र आस्तिकस्य उत्कटरागप्राप्तेः पूर्वम् पापाचरणे इच्छाया अभावेऽपि पश्चात् प्राप्तेन उत्कटरागेण राज्ञेव बला-त्प्रेरितः पुरुषो भृत्य इव तात्कालिकवैकल्यनिवारणाय पापाचरणद्वाराऽपि विषयभोगं कामयते। अथ च तत्र पापाचरणे प्रवर्तते। एवञ्च कालभेदात् उभयम् अनिच्छा इच्छाचेति सम्भवद् न परस्परविरुद्धम्। अनिच्छन्निति वर्त-मानसमीपभूतकालविहितलटः स्थाने शत्रादेशः। महाशनो महापाप्मेति विशेषणाभ्यां नायं वैरी सामदानभेदैरुपायैः साध्यः किन्तु वक्ष्यमाण क्रमेणायं हन्तव्य एवेति सूचितम् ॥३७॥

अवतरणम्—कामः कथं वैरीति दृष्टान्तैर्बोधयति—धूमेनेति।

व्याख्या—यथा वह्निः प्रकाशात्मकः, धूमेन सहजेन अप्रकाशात्मकेन आव्रियते आच्छाद्यते। च (यथाच) आदर्शो दर्पणो मलेन आगन्तुकेन आव्रि-यते। यथा (च) उल्वेन गर्भवेष्टनेन जरायुणा गर्भः आवृतः सर्वतो निरुद्धय आच्छादितः भवतीति शेषः। तथा प्रकारत्रयेणापि तेन, कामेन, इदम् उत्तर-श्लोके वक्ष्यमाणम् ज्ञानम् आवृतम् अच्छादितं भवतीति शेषः। अनेक-दृष्टान्तोपादानं प्रतिपत्तिसौकर्यार्थम् इत्यानन्दगिरिः। धूमेन आवृतोऽपि वह्नि दाहादिकं स्वकार्यं कथंचित् करोति। मलेनावृत आदर्शः प्रतिबिम्ब-ग्रहणलक्षणं स्वकार्यं न करोति किन्तु स्वरूपात उपलभ्यते। उल्वेनावृतस्तु गर्भो न हस्तपादादिप्रसारणरूपं स्वकार्यं करोति न च स्वरूपात उपलभ्यते इति विशेषः। इतिश्रीमधुसूदनसरस्वती ॥३८॥

अवतरणम्—'तेनेदमावृतम्' इति विवृण्वन् कामस्य वैरित्वं द्रढयति—आवृतमिति।

व्याख्या—कौन्तेय हे कुन्तीपुत्रार्जुन, ज्ञानिनो विवेकिनो नित्यवैरिणा सर्वदा शत्रुणा एतेन कामेन तृष्णया ज्ञानम् अन्तःकरणं विवेकविज्ञानं वा

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

---

आवृतम् आच्छादितं, भवतीति शेषः। ज्ञानी हि कामस्य प्रसङ्गावस्थायामेव जानाति अनेन अहम् अनर्थे प्रयुक्त इति। दुःखी च भवति नित्यमेव, कामस्योत्पत्तिकाले कार्यकाले च अतोऽसौ ज्ञानिनो नित्यवैरी। न तु मूर्खस्य नित्यवैरी कामः। मूर्खो हि कामं तत्प्रसङ्गकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते सति जानाति तृष्णयाऽहं दुःखीकृत इति। न तु दुःखप्राप्तेः पूर्वमेव। अतो ज्ञानिन एव नित्यवैरी नतु मूर्खस्य॥ किं रूपेण नित्यवैरिणा? कामरूपेण। काम इच्छैव रूपम् अस्येति कामरूपस्तेन। दुष्पूरेण दुःखेन पूरणम् अस्येति दुष्पूरस्तेन। अनलेन च। नास्य अलं पर्याप्ति विद्यते इत्यनलस्तेन। पर्याप्तिः सीमा। 'न जातु कामः' इत्याद्युक्तस्मृतेः, यत्पृथिव्याम्' इत्याद्युक्तस्मृतेश्चेति ॥३९॥

अवतरणम्--कामस्य किम् अधिष्ठानम्? ज्ञाते हि शत्रोरधिष्ठाने शत्रुः सुखेन हन्तुं शक्यते अत आह--इन्द्रियाणीति।

व्याख्या--इन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षुर्जिह्वानासिकानामकानि। गमनादानवचनविसर्गानन्दजनकानि पादहस्तवाक्पायूपस्थनामकानि च। मनः संकल्पात्मकम्। बुद्धिरध्यवसायात्मिका। (च) अस्य कामस्य अधिष्ठानम् आश्रय उच्यते। एष कामः, एतैराश्रयैर्दर्शनादिव्यापारवद्भिरिन्द्रियैः करणकारकभूतैः, ज्ञानं विवेकविज्ञानम् आवृत्य आच्छाद्य देहिनं शरीरिणम्। विमोहयति विविधं मोहयति ॥४०॥

अवतरणम्—यत एवम्--तस्मादिति।

व्याख्या—तस्मात् यस्मात्कामः स्वाधिष्ठानै र्ज्ञानमावृत्य देहिनं विमोहयति तस्मात् कारणात्। हे भरतर्षभ भरतवंशश्रेष्ठार्जुन, त्वम् आदौ पूर्वम् इन्द्रियाणि उपलक्षणतया इन्द्रियमनोबुद्धीः, नियम्य वशीकृत्य, पाप्मानं पापाचारं, ज्ञानविज्ञाननाशनम् ज्ञानम्-शास्त्रत आचार्यतश्च आत्मादीनाम् अवबोधः। विज्ञानं विशेषतस्तदनुभवः, तयोः श्रेयःप्राप्ते हेत्वो र्नाशनम्, एनं

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥३॥

---

वैरिणं कामम्, प्रजहिहि प्रकर्षेण परित्यज। यद्वा प्रकर्षेण हि स्फुटम् जहि मारय। गिरिदुर्गादीन् स्वायत्तीकृत्य तत्र स्थितं शत्रुं राजानो यथा घ्नन्ति तथेति भावः। ज्ञानं शास्त्राचार्योपदेशजन्यं शाब्दबोधरूपं परोक्षम्। विज्ञानं तन्निदिध्यासनपरिपाकजं मानसं प्रत्यक्षम् इति विशेषः। प्रत्यक्षमेव ज्ञानं मोक्षसाधनं साक्षात्, प्रत्यक्षात्मकस्य भ्रमस्य प्रत्यक्षात्मकेनैव यथार्थज्ञानेन निवर्तनीयत्वादिति बोध्यम् ॥४१॥

अवतरणम्—तत्र किमाश्रयः कामं जह्यादित्याह द्वाभ्याम्—इन्द्रियेति।

व्याख्या—इन्द्रियाणि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि स्थूलं बाह्यं परिच्छिन्नं जडं च देहम् अपेक्ष्य सूक्ष्मत्वाद्, अन्तरस्थत्वाद्, व्यापकत्वात् प्रकाशकत्वाच्च पराणि प्रकृष्टानि आहुः पण्डिताः। (तथा) इन्द्रियेभ्यः परं प्रकृष्टं मनः संकल्पविकल्पात्मकम् आहुरिन्द्रियाणां प्रवर्तकत्वात्। "मनः संकल्पविकल्पात्मकम्" इति भाष्यम्। मनसस्तु परा प्रकृष्टा बुद्धिर्निश्चयात्मिकाऽन्तःकरणरूपा पण्डितैरुच्यते इतिशेषः। निश्चयोत्तरमेव मनसः प्रवृत्तेः। (तथा) यो बुद्धेरपि परतः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरत्वाद् द्रष्टृत्वाच्च प्रकृष्टः श्रेष्ठोऽस्ति सः प्रकृतो देही। अस्तीति शेषः। यं देहिनम् इन्द्रियादिभिराश्रयैः युक्तः कामो ज्ञानावरणद्वारेण विमोहयतीत्युक्तम्। देही आध्यासिकसंबन्धेन देहवान् आत्मा परमाऽऽत्माऽस्तीत्यर्थः ॥४२॥

इन्द्रियादिसमाधानपूर्वकाद् आत्मसाक्षात्कारात् कामजयो भवतीत्युपसंहरति-एवमिति। महाबाहो हे अर्जुन, आत्मना संस्कृतेन मनसा स्वेनैव आत्मानं मनः संस्तभ्य सम्यक् मनसः स्तम्भनं कृत्वा मनः सम्यक् समाधायेत्यर्थः। एवम् अनेन पूर्वोक्तेन प्रकारेण, बुद्धेः परम् बुद्ध्यन्तेभ्यः सर्वदृश्येभ्यः श्रेष्ठम् परमात्मानम् आत्मानम् बुद्ध्वा साक्षात्कृत्य कामरूपं कामाकारं दुरासदं

दुःखेन आसद आसादनं प्राप्ति र्यस्य तम्। दुर्विज्ञेयानेकविशेषं प्रबलं, शत्रुं वैरिणं जहि समूलं नाशय। अयमर्थः—यावत् काममूलसंकल्पमूलस्य अज्ञानस्य उच्छेद आत्मसाक्षात्कारेण न क्रियते तावत्पर्यन्तं कामस्य समूलोच्छेदो न भवतीति कृत्वा बुद्ध्यन्तसर्वदृश्येभ्यः परं परमात्मानं साक्षात्कृत्यैव कामः समूलघातं हन्तव्यः। परमात्मसाक्षात्कारे तु मनसः समाधानं कारणम्। मनसः समाधाने स्वयं मन एव संस्कृतं सत्कारणं भवतीति कृत्वा कर्मयोगेन मनः संस्कृत्य, संस्कृतेन स्वेनैव मनसा स्वं मनः समाधाय आत्मसाक्षात्कारं कृत्वा सर्वानर्थप्राप्तिमूलं सर्वलोकस्य शत्रुं कामं समूलघातं हत्वा (अविद्यारूपं मूलं च काममूलसंकल्पेन सहितं हत्वा) ब्रह्मानन्दसुखम् अनुभवनीयम् इति॥ तदेवम् अनेन तृतीयाध्यायेन उपायभूत कर्मनिष्ठाया आधिक्येन निरूपणम् उपेयभूतज्ञाननिष्ठायाः संक्षेपेण निरूपणं कृतम्॥ आराध्य कर्मयोगेन श्रीकृष्णं तत्प्रसादतः। साक्षात्कृत्य तमेवाऽयं परमब्रह्मतां व्रजेत्॥४३॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रसंपादितायां शाङ्करभाष्यानुसारिण्यां तृतीयोऽध्यायः॥३॥

श्रीकृष्णार्पणमस्तु॥३॥



# अथ चतुर्थोऽध्यायः

श्रीभगवान् उवाच

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥
एवं परम्पराप्राप्तमिमं राजर्षयोऽविदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥२॥

---

अवतरणम्--ज्ञानात्मनो योगस्य कर्माख्यो योगश्चित्तशुद्धिद्वारा हेतुः । अत उपेयोपायभूतं ज्ञाननिष्ठाकर्मनिष्ठाद्वयम्, पूर्वाभ्यामध्यायाभ्याम् उक्तम् । तत्रैव निवृत्तिलक्षणः प्रवृत्तिलक्षणश्च वेदार्थः परिसमाप्तः । गीतासु च सर्वासु अयमेव कर्मयोगोपायकज्ञानयोगो विवक्षितो भगवता, स चोक्तः । अतः प्रवक्तव्यशेषाऽभावात् समाप्तं वेदार्थं मन्वानस्तं योगं तस्य कृत्रिमत्वशङ्का-निवृत्तये विद्यावंशकथनेन स्तौति श्रीभगवान् द्वाभ्याम्--इममिति ।

व्याख्या--अहम् आदि कर्ता नारायणो भगवान् इमम् पूर्वेण अध्याय-द्वयेन उक्तम् अव्ययम् अव्ययमोक्षफलकम्, अव्ययवेदमूलकञ्च, योगम्, युज्यते ब्रह्मणा अनेनेति योगस्तम् कर्मयोगोपायकं ज्ञाननिष्ठालक्षणम् विवस्वते आदित्याय सर्गादौ प्रोक्तवान् स च विवस्वान् मनवे स्वपुत्राय प्राह । स च मनुः इक्ष्वाकवे स्वपुत्राय आदिराजाय, अब्रवीद् उक्तवान् ॥१॥

एवम् उक्तप्रकारेण परम्पराप्राप्तम् आदित्यमारभ्य गुरुशिष्यपरम्परया आगतम् इमं कर्मयोगरूपोपायलभ्यम् ज्ञानयोगम्, राजर्षयः राजानश्च ते ऋषयश्च इति सूक्ष्मार्थदर्शनक्षमा निमिप्रमुखाः क्षत्रियाः, अविदुः ज्ञातवन्तः । लङि रूपम् । योगबलेनयुक्ताः समर्था भवन्ति जगत् परिपालयितुम् इति क्षत्रियाणाम् बलाद्याधानाय मया आदिकर्त्रा प्रचारितोऽयं योग इत्याशयः । परंतप हे शत्रुतापन । स योगः कर्मयोगोपायकः सम्यग्दर्शनरूपज्ञानयोगः, महता दीर्घेण कालेन, इह इदानीम् आवयोः संव्यवहारकाले द्वापरान्ते नष्टः विच्छिन्नसंप्रदायः संजातः । अत्र सूक्ष्मार्थनिरीक्षणक्षमत्वम् ऋषित्वमित्यानन्द-गिरिः । संप्रदायो विद्यावंशः । गुरुशिष्यपरम्परेति यावत् ॥२॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद् विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥

---

अवतरणम्—सर्गादिकालमारभ्य अर्जुनेन सह संव्यवहारकालं यावन्महता कालेन व्यवधाने सति दुर्बलान् अजितेन्द्रियान् कामक्रोधादिप्रधानान् अनधिकारिणः प्राप्य कामक्रोधादिभिरभिभूयमानतया योगमिमं विच्छिन्नसम्प्रदायम् उपलभ्य लोकश्च योगाद् ऋते अपुरुषार्थसम्बन्धिनम् उपलभ्य भक्ताय सख्येऽर्जुनाय तमेव योगं भगवान् प्रोक्तवान् इत्याशयेनाह—स एवेति ।

व्याख्या—अद्य तत्सम्प्रदाये विच्छिन्ने सति पुनश्चेदानीम्, स एव य एवम् पूर्वमुपदिष्टोऽपि अधिकार्यभावाद् विच्छिन्नसंप्रदायोऽभूत् । यं विना च पुरुषार्थो न लभ्यते, स एव अयं पुरातनोऽनादिवेदमूलकगुरुपरम्परागतो योगः कर्मयोगोपायकज्ञानयोगः. मया आदिनारायणावतारेण वासुदेवेन ते तुभ्यम् अर्जुनाय प्रोक्तः । कस्मात्कारणाद् अयं योगोऽन्यस्मै कस्मैचिद् नोक्तो भगवता ? इत्याशङ्क्य आह—भक्तोऽसीति । त्वं मे मम भक्तोऽसि भक्तिः शरणबुद्धया प्रीतिस्तया युक्तोऽसि । सखा समानवयाः स्निग्धः सहायश्च असि भवसि इत्यतस्तुभ्यमेव प्रोक्त इत्यर्थः । भक्तिसख्याधिकारवन्तं प्रत्येव अस्य योगस्य वक्तव्यत्वे हेतुमाह—रहस्यं हीति । हि यस्मात्कारणाद् एतद् योगरूपं कर्मोपायकं ज्ञानम् उत्तमं रहस्यम् अति गोप्यम्, अस्तीति शेषः । तस्माद् अनधिकारिणे न वक्तव्यमित्याशयः । तथा च श्रीमद्भागवते—'ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत' इति ॥३॥

अवतरणम्—'भगवता विप्रतिपिद्धमुक्तम्' इति स्यात् लोकस्य कस्यचिद् बुद्धिरिति । तत्परिहारार्थम् लोकदृष्ट्या मनुष्यशरीरेऽवस्थितस्य भगवतो विवस्वन्तं प्रति योगोपदेशस्य असंभवं पश्यन् अर्जुनः पृच्छति—अर्जुन उवाचेति ।

व्याख्या - भवतः श्रीकृष्णस्य वासुदेवस्य, जन्म शरीरग्रहणम्, अपरम् अर्वाचीनम् वसुदेव गृहे, अस्तीतिशेषः । विवस्वतो जन्म परं प्राचीनं सर्गादौ ।

श्रीभगवान् उवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥५॥

अजोऽपि सन् अव्ययात्मा भूतानाम् ईश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥६॥

---

तत् कथमेतद् अविरुद्धार्थतया अहं विजानीयाम् य एव त्वम् आदौ विवस्वते इमं योगं प्रोक्तवान् स एव त्वम् इदानीं मह्यं प्रोक्तवान् असीति ? ॥४॥

अवतरणम्—या वासुदेवे अनीश्वरत्वाऽसर्वज्ञत्वाशङ्का मूर्खाणाम्, तां परिहरति श्रीभगवान् यदर्थो ह्यर्जुनस्य प्रश्नः—श्रीभगवानिति ।

व्याख्या—हे अर्जुन, मे मम जन्मानि बहूनि व्यतीतानि अतिक्रान्तानि । तव जन्मानि च बहूनि व्यतीतानि । तानि सर्वाणि आवयोरतिक्रान्तानि जन्मानि, अहम् ईश्वरः सन् नित्यशुद्धबुद्धमुक्तस्वभावत्वाद् अनावरणज्ञानशक्तिरिति वेद जानामि । हे परंतप, त्वं पुनर् अनाद्यविद्यया धर्माऽधर्मादिप्रतिबद्धज्ञानशक्तिरिति तानि न वेत्थ न जानीषे । अहं सर्वज्ञ ईश्वरोऽस्मि । अतो देहान्तरेण सर्गादौ विवस्वते इमं योगं प्रोक्तवान् अस्मीति सर्वं जानामि । स एवाहं सम्प्रति देहान्तरेण युक्तस्तुभ्यं प्रोक्तवान् अस्मीति न कश्चिद् विरोधः । देहभेदेऽपि देहस्वामी स एवाहम् इत्यभिप्रायः ॥५॥

अवतरणम्—कथं तर्हि नित्येश्वरस्य तव धर्माऽधर्माऽभावेऽपि जन्म ? तत्राह—अज इति ।

व्याख्या—अजोऽपि सन् न जात इति अजः सोऽपि जन्म-रहितोऽपि सन् (तथा) अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन् भूतानाम् ब्रह्मादिस्तम्बपर्यन्तानाम् ईश्वरोऽपि ईशनशीलोऽपि सन्, स्वां स्वकीयाम् वैष्णवीम् प्रकृतिं मायाम् त्रिगुणात्मिकाम् यस्या वशे सर्वं जगद् वर्तते । यया मोहितं सद् जगत् स्वम् आत्मानं वासुदेवं न जानाति तां स्वां प्रकृतिम् अधिष्ठाय वशीकृत्य आत्ममायया वशीकृतया तया प्रकृत्या स्वकीयया अहं संभवामि वशवर्तिन्या आत्मनो मायया शक्तिविशेषरूपया देहवान् इव जात इव च दृष्टो भवामि । अत्र 'न परमार्थतो लोकवद्' इति भाष्यम् । अविद्यावृतज्ञानवतो लोकस्य जन्मादिविषये यथा परमार्थत्वाऽभिमानस्तथा नास्ति

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥८॥

---

मम अनावृतज्ञानस्य ईश्वरस्येति तदाशय आनन्दगिरीये व्याख्यातः। प्रकृतिं स्वाम् अधिष्ठायेति स्वस्य धर्माऽधर्मादिपारतन्त्र्यं परिहृतम्। जीवापेक्षया वैलक्षण्यञ्च दर्शितम्। संभवाम्यात्ममाययेति न वस्तुतः संभवामि किन्तु तथा अविद्याधीनजनै र्दृष्टो भवामीति भावः ॥६॥

अवतरणम्--तादृशं तव जन्म कदा कदा भवति किमर्थश्च भवतीत्यत आह-द्वाभ्याम् यदेति।

व्याख्या—हे भारत भरतवंशोद्भव, यदा यदा हि यस्मिन् यस्मिन्नेव काले धर्मस्य वेदविहितस्य प्राणिनाम् अभ्युदयनिःश्रेयससाधनस्य नित्यनैमित्तिककाम्यकर्मप्रवृत्तितन्निवृत्तिसाध्यस्य ब्राह्मणाद्यै र्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठेयस्य, ग्लानि र्हानि र्भवति किञ्च यदा यदैव अधर्मस्य वेदनिषिद्धस्य कर्मणः पापाचारस्य वर्णाश्रमाचारविरुद्धस्य नानाविधदुःखप्रयोजकस्य धर्मविरोधिनः, अभ्युत्थानं वृद्धिरुद्भवो भवति, तदा-तदा तदा, अहं सर्वेश्वरः, आत्मानं सृजामि मायया जन्मवन्तमिव दर्शयामि ॥७॥

तत् किमर्थम्? इत्यत आह--'परित्राणायेति। साधूनां सन्मार्गस्थानाम्, परित्राणाय परिरक्षणाय, दुष्कृताम् पापकारिणां विनाशाय च निग्रहाय च (किञ्च) धर्मसंस्थापनार्थाय धर्मस्य यथोक्तस्य संस्थापनमेव अर्थः प्रयोजनं तस्मै। युगे युगे प्रतियुगम् संभवामि माययाऽवतरामि मायया आत्मनो लीलाविग्रहं परिदर्शयामि। इदमुपलक्षणम्--परमहंसानां भक्तियोगविधानार्थम् विषयिणां मुमुक्षूणाञ्च श्रवणस्मरणार्हरूपगुणकर्मप्रदर्शनार्थं मर्त्यानां शिक्षणार्थञ्च भगवतोऽवतार इति ध्येयम् ॥ यत्तु अत्र केचिद् व्याचक्षते--बहूनि मे व्यतीतानि जन्मानीति श्लोके--'अनेन जन्मनः सत्यत्वमुक्तम्' इति। तथा अजोऽपि सन्निति श्लोके 'आत्ममायया आत्मीयया मायया माया वयुनं ज्ञानम्' इति (वे. नि.) इति ज्ञानपर्यायोऽत्र मायाशब्दः। आत्मीयेन ज्ञानेन सत्यसंकल्पेनेत्यर्थः।' इति। तद् उभयम् अपि पण्डितैरुपेक्ष्यम्।

जन्मकर्म च मे दिव्यमेवं यो वेत्तितत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
वहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

---

जन्मनः सत्यत्वे अजोऽपि सन् इति अजत्वेन विरोधात्। 'देहीवाभाति मायया' इति श्रीमद्भागवतविरोधाद् नित्यत्वभङ्गादीश्वरत्वाऽभावप्रसङ्गाच्चेतिदिक्। एवम् 'आत्मीयेन ज्ञानेन' इत्यत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्या विरोधः । अपि च मायाशब्दस्य ज्ञानार्थकत्वेऽपि संकल्पार्थताया असिद्धेः सत्यसंकल्पेनेत्यर्थ इति अनुपपन्नम्। इत्यलं श्रीधरस्वामिमधुसूदनसरस्वतीश्रीहर्षाऽभिनवगुप्तभामतीकारसिद्धान्तलेशकारादिविद्वन्मूर्धन्यसमादृतचरणानां भगवच्छङ्कराचार्याणां प्रातिकूल्ये प्रवृत्तस्य कुतर्कस्य परीक्षया ॥८॥

अवतरणम्—भगवतो दिव्यं जन्म कर्म च यथोक्तरूपेण तत्त्वतो जानतः श्रेयः प्राप्तिरित्याह—जन्मेति ।

व्याख्या—हे अर्जुन. मे मम नित्यसिद्धस्येश्वरस्य जन्म लीलाविग्रहग्रहणम् कर्म च साधुपरित्राणादि, एवम्—अजोऽपि सन् इत्यादिना श्लोकत्रयेण अजत्वादिसहितं-मायारूपम् यथोक्तम् तथा दिव्यम्, अप्राकृतम् अलौकिकम्, ऐश्वरम् तत्त्वतो याथात्म्येन यो वेत्ति जानाति। एवमित्यस्य दिव्यमित्यत्र तत्त्वतः इत्यत्र च अन्वयः सामर्थ्यात्। स प्रारब्धान्ते देहं स्थूलं सूक्ष्मं कारणं च त्यक्त्वा पुनर्जन्म न एति न प्राप्नोति। (यतः) माम् परमात्मानम् एति अभेदेन प्राप्नोति—आत्मनोऽपि तत्त्वस्य स्फुरणादित्यर्थः। यस्तु अतत्त्वतो जानाति स विपर्ययज्ञानात् संसारे भ्रमत्येवेति भावः ॥९॥

अवतरणम्—नैष मोक्षमार्ग इदानीम् एव प्रवृत्तः किन्तु पूर्वमपी त्याह प्ररोचनाय—वीतेति ।

व्याख्या—वीतरागभयक्रोधाः, रागश्चभयं च क्रोधश्च वीता ये भ्यस्ते। वीताः विगताः। मन्मयाः ब्रह्मविदः, ईश्वराऽभेददर्शिनः, मामुपाश्रिताः, मामेव परमेश्वरम् उप समीपे आश्रिताः केवलज्ञाननिष्ठाः, बहवः बहुसंख्यकाः ज्ञानतपसा ज्ञानमेव परमात्मविषयम् तपः। तेन पूताः परां शुद्धिं गताः सन्तः,

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥

---

मद्भावम् मम ईश्वरस्य भावं कैवल्यम् मोक्षम् = आगताः प्राप्ताः इतरतपो - निरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गम् ज्ञानतपसेति विशेषणम् ॥१०॥

अवतरणम्—तव तर्हि रागद्वेषौ स्तो येन ज्ञानपूतेभ्य एव मोक्षं ददासि नेतरेभ्योऽपीत्यत आह—ये यथेति ।

व्याख्या—ये मनुष्याः, यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया, मां वासुदेवम्, प्रपद्यन्ते शरणम् आगच्छन्ति तान् मनुष्यान् तथैव तत्फलप्रदानेनैव अहम् भजामि अनुगृह्णामीत्यर्थः । ज्ञानपूतेभ्य इतरे प्रपन्नाः न मोक्षार्थिनः, अतस्तेभ्यो मोक्षं न ददामीति भावः । न ह्येकस्य मुमुक्षुत्वं धनादिफलार्थित्वं च युगपत् संभवति । अतो ये मोक्षेतरफलार्थिनः काम्यं कर्म कुर्वन्तो मां प्रपद्यन्ते तान् तत्फलप्रदानेन अनुगृह्णामि । ये निष्कामनित्यनैमित्तिककर्मकारिणस्तान् ज्ञानप्रदानेन । ये ज्ञानिनः संन्यासिनो मुमुक्षवस्तान् मोक्षप्रदानेन तथा आर्तान् आर्तिहरणेन इत्येवम् ये यथा मां प्रपद्यन्ते तांस्तथैवाहम् अनुगृह्णामीत्यर्थः । न पुनारागद्वेषाभ्यां मोहेन वा कंचिद्-भजामीति भावः । हे पार्थ पृथापुत्र, मनुष्याः सर्वशः सर्वैः प्रकारैः ज्ञानरूपेण प्रकारेण, कर्मरूपेण प्रकारेण देवतान्तरभजनप्रकारेण च मम-सर्वावस्थस्य इन्द्रादिदेवतान्तररूपेणापि स्थितस्य ममैव, वर्त्म मार्गं ज्ञानकर्मभजनरूपम् अनुवर्तन्ते अनुसरन्ति । देवतान्तररूपेणाऽपि अहमेव भजनविषयस्तथा तत्फलानां प्रदाताऽस्मि । अतस्तांस्तथैव भजाम्यहम् इति भावः । मनुष्या इति मनुष्याणामेव शास्त्रतः कर्मण्यधिकारादुच्यते ॥११॥

अवतरणम्—यदि तवेश्वरस्य रागादिदोषाऽभावात् सर्वप्राणिषु तुल्यायाम् अनुजिघृक्षायां सर्वफलप्रदानसामर्थ्ये च सति 'वासुदेवः सर्वम्' इति ज्ञानेनैव सर्वे मुमुक्षवः सन्तः कस्मात् त्वामेव सर्वे न प्रपद्यन्ते अन्यां देवतामाश्रयन्ति ? इतिचेच्छृणु तत्र कारणम्—काङ्क्षन्त इति ।

व्याख्या—इह अस्मिन् लोके कर्मणां वर्णाश्रमाद्यधिकारिकर्मणां सिद्धिं फलनिष्पत्तिं काङ्क्षन्तः अभीप्सन्तो जनाः, देवता इन्द्राग्न्याद्याः, यजन्ते

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥

---

पूजयन्ति काम्यं कर्म कुर्वन्तीत्यर्थः । यष्टृ-यष्टव्यविभागदर्शिनोऽनात्मज्ञाः स्वर्गादिफलकामनया इन्द्रादि देवतान्तरं पूजयन्तीति बृहदारण्यकश्रुतिरप्याह—'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृह. १।४।१०) इति । (तेषां हि इन्द्रादिदेवतान्तरयाजिनां स्वर्गादिफलाकाङ्क्षिणाम्) मानुषे लोके हि यस्मात् कर्मजा कर्मणो जाता सिद्धिः फलनिष्पत्तिः क्षिप्रं शीघ्रं भवति । शास्त्राधिकारादिति शेषः सामर्थ्यात् । आत्मज्ञानस्य अति दुर्लभत्वाद् ज्ञानजा मोक्षरूपा सिद्धिः शीघ्रं न भवतीति भावः । मानुषे लोके इति विशेषणाद् अन्येष्वपि लोकेषु कर्मजा सिद्धिर्भवति किन्तु वर्णाश्रमाद्यधिकारिकर्माऽतिरिक्तकर्मजा भवति अतो विलम्बेन भवतीति सूचितम् भगवता । लोकान्तरेषु वर्णाश्रमाऽधिकाराऽभावात् । इह तु मनुष्यलोके शास्त्राऽधिकारात् वर्णाश्रमादिकर्माधिकार इति विशेषात् कर्मजा सिद्धिः क्षिप्रं भवतीति भावः । मनुष्यलोके कर्मफलशैध्र्यात् तदभिमुखानां सकामानां चित्तशुद्धेरभावाद्, ज्ञानमार्गतो वैमुख्यान्मुमुक्षव इव ते न मामेव साक्षान्मोक्षार्थं प्रपद्यन्ते इति वाक्यार्थः ॥१२॥

अवतरणम्—मानुषे लोके वर्णाश्रमादिप्रविभागोपेता मनुष्या मम वर्त्मानुवर्तन्ते सर्वश इत्युक्तम् । कस्मात्पुनः कारणात् तवैव वर्त्माऽनुवर्तन्ते नाऽन्यस्य ? अपि च मानुषे एव लोके वर्णाश्रमादिकर्माधिकारो नान्येषु लोकेषु इति नियमः किंनिमित्तकः ?—इत्येतत्प्रश्नद्वयं परिहरति चातुरिति ।

व्याख्या—मया ईश्वरेण चातुर्वर्ण्यम् चत्वार एव वर्णाश्चातुर्वर्ण्यम् । 'चतुर्वर्णादिभ्यः स्वार्थे उपसंख्यानम्' (का. वा.) इति स्वार्थे ष्यञ् । गुणकर्मविभागशः गुणाः सत्त्वरजस्तमांसि, कर्माणि शमदमादीनि, शौर्यतेजआदीनि, कृषिगोरक्ष्यादीनि, शुश्रूषा चेति । तेषां विभागः—"तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणि । सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि, तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म—इत्येवम्" इति भाष्यम् । तेन तेन करणेनेति 'संख्यैकवचनाच्च वीप्सायाम्' (पा.सू.) इति एकवचनात्करणकारकाद् वीप्सायां शस् । गुणकर्मविभागशः, सृष्टम्

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभि र्न स बध्यते ॥१४॥**

---

उत्पादितम् । 'ब्राह्मणोऽस्य मुखमासीद्' इत्यादि श्रुतेः । "तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु अतो मानुषे लोके इति विशेषणम् (पूर्वश्लोके)" इति भाष्यम् । अत्र भाष्यादेवं प्रतिभाति--ब्राह्मणे तमोगुणापेक्षया रजोगुणस्याधिक्यम् रजोगुणापेक्षयाऽपि सत्त्वस्याधिक्यम् । क्षत्रिये तमोऽपेक्ष्य सत्त्वमधिकम्, सत्त्वं चाऽपेक्ष्य रजसआधिक्यम् । वैश्ये सत्त्वादधिकामात्रा तमसः, तमसः सकाशादधिका मात्रा रजसः । शूद्रे सत्त्वादधिका रजसो मात्रा, रजसश्चाधिका मात्रा तमसो भवतीति । सर्वत्र त्रैगुण्यस्य सद्भावात् । ईश्वरेण मनुष्यलोक एव वर्णाश्रमयोस्तदव्यापारस्य च सृष्टत्वाद् मनुष्यलोक एव वर्णाश्रमादि-कर्माऽधिकारो नान्येषु लोकेषु । युक्तश्च वर्णाश्रमादिप्रविभागोपेतैः स्वस्रष्टु-रीश्वरस्य वर्त्माऽनुवर्तनम् इति भावः । नन्वेवं तर्हि चातुर्वर्ण्यसर्गादेः कर्मणः कर्तृत्वात् तत्कर्मफलेषु त्वं युज्यसे । अतो न त्वं नित्यमुक्तो नित्येश्वर इति ? तत्राह—तस्येति । तस्य चातुर्वर्ण्यस्य सर्गादेः कर्मणो मायासंव्यवहारेण कर्तार-मपि सन्तं मां परमार्थतोऽकर्तारं विद्धि जानीहि । (अत एव) अव्ययम् असं-सारिणम् (च) मां विद्धि । अत्र "माया संव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतोऽकर्तारं विद्धि" इति भाष्याद् मूल-भगवद्वाक्याच्च सृष्ट्यादौ विवर्तवाद एव भगवतोऽभिप्रेत इति स्पष्टम् ॥१३॥

अवतरणम्—ईश्वरस्य परमार्थतः कर्तृत्वभोक्तृत्वयोरभावे कर्मतत्फलो-भयसंबन्धराहित्यं फलतीत्याह—नेति ।

व्याख्या—कर्माणि चातुर्वर्ण्यसृष्ट्यादीनि माम् ईश्वरं न लिम्पन्ति न संस्पृशन्ति देहेन्द्रियाद्यारम्भकतया न निबध्नन्तीत्यर्थः । तेषु कर्मसु 'अहं कर्ता' इति मम अहङ्काराऽभावादितिशेषः । न (च) कर्मफले—कर्मणां तेषां फले मे मम स्पृहा तृष्णा, अस्तीतिशेषः । कर्मसु कर्तृत्वाऽभिमानस्याऽभावात् तत्फले स्पृहाया अभावाच्च ईश्वरं कर्माणि न लिम्पन्तीत्यर्थः । येषां तु संसारिणाम् 'अहं कर्ता' इति अभिमानः कर्मसु स्पृहा च तत्फले स्तः, तान् एव कर्माणि लिम्पन्तीति युक्तम्, तदभावात्तु मां कर्माणि न लिम्पन्ति । इति इत्येवम्, योऽन्योऽपि, माम् अभिजानाति—'सोऽहम् कर्मणाम् अकर्ता, अकर्म-फलतृष्णश्च' इति आत्मत्वेन मम अभिज्ञां करोति, सः, सोऽपि अभिजानन्

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥

---

विद्वान् कर्मभिः कर्माभासैर्न बध्यते, न बन्धनं प्राप्नोति । तस्याऽपि विदुषः कर्माणि वस्तुतः कर्माऽभासा देहाद्यारम्भकाणि न भवन्तीत्यर्थः ॥१४॥

अवतरणम्—एतदेव शिष्टाचारप्रदर्शनपूर्वकं ग्राहयति—एवमिति ।

व्याख्या—एवं ज्ञात्वा पूर्वैरपि मुमुक्षुभिः कर्म कृतम्, तस्मात् पूर्वैः पूर्वतरं कृतं कर्मैव त्वं कुरु इत्यन्वयः । एवम्—'नाहं कर्ता न मे कर्मफले स्पृहा' इत्येवम्, ज्ञात्वा, पूर्वैरपि अतिक्रान्तैरपि, मुमुक्षुभिः अनात्मज्ञैर्ययातियदुप्रभृतिभिर्मोक्षमिच्छद्भिः कर्म स्वाधिकारेण शास्त्रविहितं कृतं निर्वर्तितम् । तस्मात्=पूर्वैरपि अनुष्ठितत्वात्, त्वम् (यदि अनात्मज्ञस्तदा चित्तशुद्ध्यर्थम्, यदि तत्त्ववित् तदा प्रारब्धशेषवशाल्लोकसंग्रहार्थम्) पूर्वैर्जनकादिभिर्विवेकविज्ञानवद्भिरपि पूर्वतरं पूर्वेभ्यो जनकादिभ्योऽपि पूर्वतः प्राप्तम्, वेदोक्तत्वाद् अनादिपरम्पराऽऽगतम्, न तु अधुनातनम्, कृतम् निर्वर्तितम् । अतश्च अतिप्रामाणिकं कर्मैव, कुरु, न तु तूष्णीम् आसनं नापि संन्यासं कुरु इत्यर्थः । तत्रैकं पूर्वैरिति विशेषणं मुमुक्षुविशेष्यकतयाऽनात्मज्ञविशेष्यकम् । द्वितीयं तु पूर्वैरिति विशेषणम् आत्मज्ञ-जीवन्मुक्तजनकादिविशेष्यकम् इति न पुनरुक्तम् ॥१५॥

अवतरणम्—ननु त्वद्वचनादेव कर्म करिष्याम्यहं यदि तत् कर्तव्यम् । किं विशेषितेन 'पूर्वैः पूर्वतरं कृतम्' इति ? इति चेच्छृणु-कर्मणि महतो वैषम्यस्य सद्भावेन पूर्वैः पूर्वतरं कृतम् इति विशेषितत्वे तत्र प्रवृत्तिस्तव सुकरा स्यादिति युक्तं तद् विशेषणम् । कथं कर्मणि महद् वैषम्यम् ? तत्राह—किमिति ।

व्याख्या—किं कर्म ? किञ्च अकर्म ? इत्यत्र इत्यस्मिन् कर्माऽकर्मविषये कवयोऽपि मेधाविनोऽपि मोहिताः मोहं गता भवन्ति । 'विज्ञानवतामपि कर्मादिविषये व्यामोहोपपत्तेः सुतरामेव तव तद्विषये व्यामोहसंभवात् तदपोहार्थम् आप्तवाक्याऽपेक्षणाद् अस्ति कर्मणि महद् वैषम्यम् इत्युत्तराशयः'

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

---

इत्यानन्दगिरिः । तत् तस्मात् कारणाद् अर्थात् मेधाविनामपि यथोक्ते विषये व्यामोहस्य सत्त्वात् "ते तुभ्यमहं कर्म अकर्म च प्रवक्ष्यामि" इति भाष्यम् 'तत्ते कर्म इत्यत्र (तन्त्रेण) अकारप्रश्लेषोऽपीति भाष्याशयः' इत्यानन्दगिरिः । यत् कर्म अकर्म च ज्ञात्वा विदित्वा त्वम् अशुभात् संसाराद् मोक्ष्यसे मुक्तो भविष्यसि । कर्माऽकर्मज्ञानस्य ब्रह्मज्ञानाङ्गतयेत्याशयः ॥१६॥

अवतरणम्— न च एतत् त्वया मन्तव्यम् कर्म नाम देहादिचेष्टा लोकप्रसिद्धम् । अकर्म देहाद्यक्रिया, तूष्णीम् आसनम् । किं तत्र बोद्धव्यम् इति । कुतः ? इत्यपेक्षायाम् आह कर्मेति ।

व्याख्या—हि यस्मात्, कर्मणोऽपि शास्त्रविहितस्यापि, बोद्धव्यम् ज्ञातव्यम् (अस्ति) तत्त्वं, याथात्म्यम् इतिशेषः । विकर्मणः शास्त्रप्रतिषिद्धस्य च, तत्त्वं बोद्धव्यम् बोधयोग्यम् (अस्ति), अकर्मणश्च तूष्णींभावस्य च तत्त्वं बोद्धव्यम् अस्ति । अस्तीति त्रिष्वपि अध्याहारः कर्तव्यः । (यस्मात्) कर्मणः इत्युपलक्षणार्थं कर्मादीनां कर्माकर्मविकर्मणां गति याथात्म्यं तत्त्वम् गहना विषमा दुर्ज्ञाना अस्तीत्यर्थः ॥१७॥

अवतरणम्—किं पुनः कर्मादेस्तत्त्वं यद् बोद्धव्यम् इति ? प्रवक्ष्यामीति च प्रतिज्ञातम् ? तत्राह - कर्मेति ।

व्याख्या--प्रवक्ष्यामीति यत्प्रतिज्ञातं तत् प्रवक्ति—कर्मणीति । अत्र शरीरेन्द्रियाश्रयं कर्म आत्मनि सच्चिदानन्दे निष्क्रिये कूटस्थे ब्रह्मणि अध्यस्य 'अहं कर्ता ममैतत्कर्म' इति, 'मयाऽस्यफलं भोक्तव्यम्' इति च अभिमन्यते मूढदृष्टिर्लोकः । तथा शरीरेन्द्रियाश्रयमेव व्यापारोपरमं तत्कृतञ्च अन्तःकरणाश्रयं सुखित्वम् तद्रहिते आत्मनि चिदानन्दे कूटस्थे ब्रह्मणि सच्छब्दवाच्ये अध्यारोप्य 'न करोमि किञ्चित् तूष्णीं सुखी अस्मि' इत्यभिमन्यते लोको मूढदृष्टिः । किञ्च प्रवृत्तिरिव निवृत्तिरपि कर्तृतन्त्रत्वेन साध्यत्वात् कर्मैवास्ति । न च निवृत्तेर्वस्तु(आत्म)तन्त्रत्वेन साध्यत्वाऽभावान्न कर्मत्वमिति-वाच्यम् सर्व एव हि क्रियाकारकादिव्यवहारो वस्तु (आत्मतत्त्वम्) अप्राप्यैव

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥**

---

अविद्याभूमावेव भवतीति सिद्धान्तात् । 'अहं तूष्णीं भवामि' इत्यहङ्काराऽभिसंधिहेतुत्वाद् निवृत्तिरूपमपि कर्म बन्धकमेव भवति मूढस्य । तस्माद् मूढदृष्टेर्लोकस्य एतद्विपरीतदर्शनद्वयं भ्रमात्मकं निराकर्तुं श्रीभगवानाह—कर्मण्यकर्मेत्यादि । कर्मणि अकर्मणि चेति विषयसप्तम्यौ । कर्मविषये कर्माऽभावं पश्यति अकर्मविषये च कर्म पश्यतीत्यर्थः । कर्मणि, क्रियतेइति कर्म व्यापारमात्रम्, शास्त्रविहितं शास्त्रनिषिद्धं तटस्थं चेति । तस्मिन् कर्मणि विषये शरीरेन्द्रियाश्रये मूढेन आत्मनि चिदानन्दे कूटस्थे निष्क्रिये अविक्रियेऽध्यस्तत्वाद् आत्मसमवेततया मूढलोकस्य प्रसिद्धे नौस्थस्य नावि गच्छन्त्यां नदीकूलस्थे नगे अगतिके अध्यस्तायां स्वप्रतिकूलगताविव, य आत्मज्ञः कूटस्थे आत्मनि चिदानन्दे अकर्म कर्माऽभावं यथाभूतं नदीकूलस्थनगे यथाभूतं गत्यभावमिव पश्येत् पश्यति, च = तथा यः आत्मज्ञः, अकर्मणि व्यापारोपरमे शरीरेन्द्रियाश्रये, मूढेन आत्मनि चिदानन्दे अध्यारोपिते, दूरस्थमार्गे गच्छत्सु चक्षुषोऽसन्निकृष्टेषु चैत्रमैत्रादिषु अध्यस्ते गत्यभाव इव, कर्म चैत्रमैत्रादिषु दूरवर्तिषु गच्छत्सु गतिमिव यथाभूतां शरीरेन्द्रियेषु निवृत्तिरूपं कर्म यथाभूतं पश्येत् पश्यति । स एवं कर्माऽकर्मविभागज्ञो यथाभूतदर्शी मनुष्येषु बुद्धिमान् पण्डितः । अस्तीति शेषः । (तथा) स युक्तः योगी, कृत्स्नकर्मकृत् सकलकर्मकृच्च, अस्तीति शेषः । सकलकर्मफलानां ज्ञानफलेऽन्तर्भावात् । सोऽशुभात्संसारान्मोक्षितः कृतकृत्यो भवतीत्यर्थः । 'आत्मा निष्क्रियः' 'कर्म च सदैव शरीरेन्द्रियादौ जायते' इति हि सम्यग्दर्शनम् । अत्र प्रथमचरणेन कर्मविकर्मणोस्तत्त्वं द्वितीयचरणेन अकर्मणस्तत्त्वं प्रोक्तम् । एवञ्च 'तत् ते कर्मप्रवक्ष्यामि' इति प्रतिज्ञा पूरिता ॥१८॥

अवतरणम्—तदेतत्, सम्यग्दर्शनरूपम् कर्मण्यकर्मदर्शनं स्तौति षड्भिः प्ररोचनाय—यस्येति ।

व्याख्या—यस्य यथोक्तस्य सम्यग्दर्शिनः सर्वे समारम्भाः समारभ्यन्त इति समारम्भाः सर्वाणि कर्माणि, कामसंकल्पवर्जिताः कामैस्तत्कारणभूतैः संकल्पैश्च वर्जिताः रहिताः भवन्तीतिशेषः । कामः फलतृष्णा । संकल्पः फलेच्छाकारणीभूतं फले इष्टत्वज्ञानम् । मुधैव चेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेन चेल्लोकसंग्रहार्थम् निवृत्तेन चेद् जीवनमात्रार्थम् । तम् कामसंकल्पवर्जित-

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥२०॥

---

सर्वसमारम्भवन्तं,ज्ञानाग्निदग्धकर्माणं कर्मादौ अकर्मादिदर्शनं ज्ञानम् तदेवाग्निस्तेन दग्धानि शुभाऽशुभलक्षणानि कर्माणि यस्य तम् बुधाः ब्रह्मविदः परमार्थतः पण्डितम् आहुः कथयन्ति । यथोक्तविज्ञानविरहिणामपि पण्डितत्वप्रसिद्धिं वैशेषिकादीनामाशङ्क्य तेषां पण्डिताभासत्वं विवक्ष्य भगवता भाष्यकृता 'परमार्थतः' इति विशेषणं भगवत्तात्पर्यविदा प्रोक्तम् ॥१९॥

अवतरणम्—यस्तु अकर्मादिसम्यग्दर्शी सोऽकर्मादिसम्यग्दर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्तते वर्णाश्रमाधिकार विहितादौ, यद्यपि प्राग्विवेकविज्ञानोत्पत्तेः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन् उत्तरकालम् उत्पन्नात्मविवेकविज्ञानः स्यात् । स कर्मणि प्रयोजनम् अपश्यन् प्रारब्धमपि कर्म ससाधनं परित्यजत्येव । स कुतश्चित् कारणात् कर्मपरित्यागाऽसंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाऽभावाल्लोकसंग्रहार्थं पूर्ववत् कर्मणि प्रवृत्तोऽपि 'नैव किञ्चित्करोति, ज्ञानाग्निदग्धकर्मत्वात् । तदीयं कर्म अकर्मैव संपद्यते । इत्येतमर्थं दर्शयिष्यन् श्रीभगवान् आह—त्यक्त्वेति ।

व्याख्या कर्मफलासङ्गं त्यक्त्वा कर्माणि च फलानि च तेषु आसङ्गम् कर्मसु कर्तृत्वाऽभिमानं तत्फलेषु च तृष्णाम् त्यक्त्वा 'नाऽहं करोमि नाहञ्च तत्फलभोक्ता' इत्येवं बुद्ध्यमानः, नित्यतृप्तः यथोक्तेन ज्ञानेनैव नित्यं तृप्तः निराकङ्क्षो विषयेषु इत्यर्थः । निराश्रयः दृष्टाऽदृष्टेष्टफलसाधनार्थम् आश्रयणीयेन रहितः। आश्रयो नाम यम् आश्रित्य पुरुषार्थं सिषाधयिषति सः । यथा राजाश्रयेण कश्चिद् अर्थरूपं पुरुषार्थं सिषाधायिषति । स्वप्रयोजनाऽभावात् प्राप्तेऽपि ससाधनकर्मपरित्यागे प्रारब्धफलककर्मशेषप्राबल्याल्लोकसंग्रहचिकीर्षया पूर्ववज्, ज्ञानविवेकोदयात् प्रागवस्थायामिव लोकदृष्ट्या कर्मणि अभितः प्रवृत्तोऽपि आत्मज्ञदृष्ट्या स किञ्चिन्नैव करोति निष्क्रियात्मदर्शनसम्पन्नत्वाद् इत्यर्थः ॥२०॥

अवतरणम्—यः पुनः सम्यग्दर्शी लोकसंग्रहादिनिरपेक्षः प्रागेव कर्मारम्भाद् ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनो दृष्टाऽदृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनम् अपश्यन् ससाधनं

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥२१॥

कर्म संन्यस्य शरीरयात्रामात्रचेष्टो भवति स यति र्ज्ञाननिष्ठः सम्यग्दर्शी विक्षेपककर्माऽभावात् सुतरां विमुच्यते इत्येतमर्थं दर्शयितुम् आह श्रीभगवान्-निरेति ।

व्याख्या—निराशीः निर्गता आशिषः स्पृहा यस्मात्सः । यतचित्तात्मा चित्तम् अन्तःकरणम्, आत्मा बाह्यः कार्यकरणसंघातः, तौ उभौ अपि यतौ संयतौ येन सः । त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहो येन सः । शारीरम् शरीरस्थितिमात्रप्रयोजनकम् केवलम् तत्रापि 'अहं करोमि' इति कर्तृत्वाऽभिमानवर्जितम् कर्म भिक्षाटनादिकम् लोकदृष्टा कुर्वन्, 'किल्बिषं संसारम् न आप्नोति (न प्राप्नोति)' एवं भूतस्य यतेः किल्बिषशब्दवाच्यस्य पापस्य प्राप्तेर् असंभवात् तन्निषेधवैयर्थ्यात् तात्पर्यानुपपत्तिपूर्विकया लक्षणया किल्बिषशब्दस्येह संसाररूपोऽर्थः । किञ्च पूर्वोक्तया लक्षणयैव किल्बिषम् अनिष्टरूपं पापं धर्मश्च न प्राप्नोतित्यर्थः । "किल्बिषं अनिष्टरूपं पापं धर्मश्च न आप्नोति न प्राप्नोति । धर्मोऽपि मुमुक्षोः किल्बिषमेव बन्धापादकत्वात् ।" इति भाष्यकारः । "एवं भूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात् किल्बिषं संसारं न आप्नोति । ज्ञानाग्निदग्धकर्मत्वाद् अप्रतिबन्धेन मुच्यते एवेति ।" इति च भगवान् भाष्यकारः ॥ ससाधनसर्वकर्मसंन्यासे कृते शरीरस्थितिरपि कथम् ? अत आह-शारीरमिति । ननु शरीरस्थितिमात्रप्रयोजनकचेष्टानिविष्टचेतस्तया सम्यग्ज्ञानर्बहिर्मुखस्य कुतो मुक्तिरित्याशङ्क्याह-निराशीरिति । शरीरस्थितिमात्रप्रयोजनकचेष्टायामपि अनादरान्नैवम्, किन्तु निराशीर्ज्ञाननिष्ठइत्याशयः । विदुषो निराशीर्भावे हेतुमाह-यतचित्तात्मेति । यतचित्तात्मत्वे सति अर्थसिद्धम् अर्थमाह-त्यक्तसर्वपरिग्रह इति । परिग्रहः संगृहीतसामग्री । सर्वपरिग्रहत्यागे पुनर्देहस्थितिः कथम् इत्यत आह-शारीरमिति । ज्ञानाग्निदग्धसर्वकर्मत्वाद् अप्रतिबन्धेन सम्यग्दर्शी मुच्यते एवेति भावात् पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः । लोकसंग्रहिणः सत्यपि विक्षेपके कर्मणि कूटस्थात्मानुसन्धानस्य सिद्धे कैवल्यहेतुत्वे लोकसंग्रहनिरपेक्षस्य सर्वकर्मसंन्यासिन आत्मज्ञस्य विक्षेपककर्माऽभावे सुतरां कूटस्थात्मानुसंधानस्य कैवल्यहेतुत्वसिद्धिरित्यभिप्रायः ॥२१॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥२२॥

---

अवतरणम्—त्यक्तसर्वपरिग्रहस्य यतेः शरीरस्थिति हेतोरन्नादेः परिग्रहस्याऽभावात् याचनादिनाऽपि शरीरस्थितेः कर्तव्यतायां प्राप्तायां तत्र नियमाय 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' (बौधा० स्मृ० २१।८।१२) इत्यादिना वचनेन अनुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारम् अविष्कुर्वन्नाह -यदृच्छेति ।

व्याख्या—यदृच्छालाभसंतुष्टः अप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः संजाताऽलंप्रत्ययः । एतेन 'भिक्षाटनेऽपि याचनादिप्रयत्नो न कर्तव्यः' इति सूचितम् । तथा च 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' (बौधा० स्मृ० २१।८।१२) इति स्मृत्या एकवाक्यता भवति । द्वन्द्वातीतः "द्वन्द्वैः शीतोष्णादिभिर्हन्यमानोऽपि अविषण्णचित्तो द्वन्द्वातीत उच्यते" इति भाष्यम् । विमत्सरो विगतमत्सरः निर्वैरबुद्धिः । सिद्धौ असिद्धौ च यदृच्छालाभस्य सिद्धौ असिद्धौ च समस्तुल्यः । अन्नादेः शरीरस्थितिहेतोर्लाभाऽलाभयो र्हर्षविषादरहितत्वेन समस्तुल्यः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः शरीर स्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये 'नैव किंचित्करोम्यहम्' गुणा गुणेषु वर्तन्ते' इत्येवं सदा परिसंचक्षाण आत्मनः कर्तृत्वभोक्तृत्वाऽभावं पश्यन् नैव किंचिद् भिक्षाटनादिकं कर्म करोति । लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति । भिक्षाटनादिचेष्टास्वपि अकर्तृत्वाद्यनुसन्धानमेव विदुषः । अन्नादिपदेन स्नानाचमनभोजनादि गृह्यते । स्वानुभवेन तु शास्त्रप्रमाणादिजनितेन अकर्ता एव सः । एवंभूतः स पराध्यारोपितकर्तृत्वकं शरीरस्थितिमात्रप्रयोजनकं भिक्षाटनादिकं कर्म कृत्वाऽपि न निबध्यते, बन्धनं न प्राप्नोति, बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निनाऽस्य दग्धत्वाद् इत्येपोऽपि अनुवाद एव 'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्' इत्यादावुक्तस्येति । 'अन्नादेरित्यवतरणभाष्यस्य 'अन्नादेरित्यादिशब्देन पादुकाच्छादनादि गृह्यते' इत्यानन्दगिरिः । 'कौपीनयुगलं वासः कन्थां शीतनिवारिणीम् । पादुके चापि गृह्णीयात् कुर्यान्नाऽन्यस्य संग्रहम् ॥' इत्यादिशास्त्रनियतमेव वस्तु भिक्षया ग्राह्यम् नान्यदिति श्रीमधुसूदनसरस्वती भाष्योत्कर्षकृद्धनपतिश्च ॥२२॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥

---

अवतरणम्—'त्यक्त्वा कर्मफलासङ्ग' (४।२०) इत्यनेन श्लोकेन यस्य ब्रह्मविदः कर्माऽभाव उक्तः—"यः प्रारब्धकर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शन-सम्पन्नः स्यात् तदा तस्य कर्तृ-कर्म-प्रयोजनाऽभावदर्शिनः (क्रियाकारकफला-ऽभावदर्शिनः) कर्मपरित्यागे प्राप्तेऽपि कुतश्चित् कारणात् तदसंभवे सति पूर्ववत् तस्मिन् कर्मणि अभिप्रवृत्तोऽपि 'नैव किञ्चित्करोति सः'" इत्येवम् । तस्य अधुना समग्रकर्मबन्धनप्रविलयम् आह—गतेति ।

व्याख्या—गतसङ्गस्य सर्वतो निवृत्तासक्तेः, मुक्तस्य निवृत्तपूर्वकृतधर्मा-ऽधर्मादिबन्धनस्य, ज्ञानावस्थितचेतसः ज्ञाने एव अवस्थितं चेतो यस्य तस्य, यज्ञाय यज्ञनिर्वृत्त्यर्थम्, ज्योतिष्टोमादियज्ञसंरक्षणार्थम्, ज्योतिष्टोमादौ यज्ञे श्रेष्ठाचारत्वेन लोकप्रवृत्त्यर्थम्, विष्णवे विष्णुप्रीत्यर्थम् इति वा आचरतः कुर्वतः कर्म यज्ञदानादिकम्, समग्रं सह अग्रेण कर्मफलेनवर्तते इति समग्रं कर्म तत् समग्रं प्रविलीयते प्रार्पेण तत्त्वदर्शनात् कारणोच्छेदेन विलीयते विनश्यती-त्यर्थः । संसारबन्धनरूपं फलं तस्मै न ददातीति यावत् । यद्यपि विष्णोः प्रीति-स्तत्प्रीतिफलं च ज्ञानं प्रागेव प्राप्तम्, तथापि प्रारब्धशेषवशाद् लोकसंग्रहे प्रवृत्तस्य तस्य स्वभावो भजनं हरे र्भवति । अत्रोत्तरोत्तरविशेषणस्य पूर्वपूर्व-विशेषणहेतुत्वेन अन्वयो द्रष्टव्यः । यथा-गतसङ्गत्वे हेतुर्मुक्तत्वम्, मुक्तत्वे च ज्ञानावस्थितचेतस्त्वं हेतुरिति श्रीमधुसूदनसरस्वती ॥२३॥

अवतरणम्—कस्मात्पुनः कारणात् क्रियमाणं कर्म स्वफलारम्भम् अकुर्वत् समग्रं प्रविलीयते ब्रह्मविदः ? इत्यत, आह—ब्रह्मेति ।

व्याख्या—(यस्मात्) ब्रह्मेति 'अर्पणम्' इति च असमस्ते पदे । अर्पणम्-अर्पयति अनेनेति अर्पणं स्रुवादिकम् । येन करणेन ब्रह्मविद् अग्नौ हविरर्पयति तत् स्रुवादिकम् । ब्रह्म, अस्य ब्रह्मविदो ब्रह्मैवास्ति । लोके यत् स्रुवादिकमिति गृह्यते तद् ब्रह्मैवास्तीति ब्रह्मविल्लश्यतीत्यर्थः । (तथा) हवि-र्ब्रह्म । लोके यद् हविरिति गृह्यते तद् अस्य ब्रह्मविदो ब्रह्मैवास्तीत्यर्थः । ब्रह्म-व्यतिरेकेण द्वैतप्रपञ्चस्य ब्रह्मविदोऽनुभवे अभावादिति सर्वत्र हेतुः । (तथा)

ब्रह्माग्नौ, ब्रह्मैवाग्निर्ब्रह्माग्निस्तस्मिन्, ब्रह्मणा हवनकर्त्रा यजमानेन हुतम् हवनक्रिया (अपि) ब्रह्मैव अस्यास्तीत्यर्थः। एव शब्दस्य सर्वत्रान्वयः। एवम् मध्यदीपन्यायेन तन्त्रेण आवृत्त्या वा ब्रह्मैव इत्यस्य हुतम् इत्यत्र गन्तव्यम् इत्यत्र चान्वयः। लोके यद् अग्निरिति बुद्धया गृह्यते यत्र हूयते तदपि तथा हवनकर्ताऽपि, तथा हवनक्रियाऽपि अस्य ब्रह्मविदो ब्रह्मैवास्तीत्यर्थः। ब्रह्म-कर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन् समाधिश्चित्तवृत्तिनिरोधो यस्य तेन। तेन ब्रह्मविदा, तेन हुतेन कर्मणा (च) गन्तव्यं प्राप्तव्यं फलम् अपि ब्रह्मैव अस्तीति शेषः। एवं लोकसंग्रहं चिकीर्षुणा क्रियमाणे यज्ञे सर्वेषां साध्यसाधनादीनां क्रियाकारकफलानां ब्रह्मत्वे उक्ते ब्रह्मविदा क्रियमाणं कर्माऽपि परमार्थतोऽकर्मैवाऽस्ति, ब्रह्मबुद्धया उपमर्दितत्वात्। तदेवं(लोकसंग्रहं चिकीर्षुणा सम्यग्दर्शनवता क्रियमाणे यज्ञे सर्वेषां साध्यसाधनादीनां ब्रह्मत्वे उक्ते सति) निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्यैव केवलस्य हवनादिरूपतया यज्ञत्वं संपादितं भवति अनेन ब्रह्मार्पण मन्त्रेण। अन्यथा सर्वस्यैव ब्रह्मत्वे अर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानं निरवकाशं स्यात्। इदं सम्यग्दर्शनस्य यज्ञत्वसम्पादनं यज्ञान्तरापेक्षयाऽस्य ज्ञानयज्ञस्य श्रेयस्त्व-बोधनरूपायाः स्तुतेः सिद्ध्यर्थम्--'श्रेयान् द्रव्यमयाद् यज्ञाद् ज्ञानयज्ञः परन्तप' (४।३३) इति। लोके हि अधिद्रव्ययज्ञं यदर्पणादि प्रसिद्धं तत्सर्वम् अस्य सर्व-संन्यासिनः सम्यग्दर्शिनोऽध्यात्मं प्रकाशमानं ब्रह्मैवास्तीति सुतराम् अस्य सम्यग्दर्शनं यज्ञोऽस्तीति सम्यग्दर्शनस्य यज्ञत्वं संपाद्यतेऽनेन ब्रह्मार्पणमन्त्र-श्लोकेन तस्माद् 'ब्रह्मैवेदं सर्वम्' इत्यभिज्ञानवतो विदुषः सर्वकर्माऽभावः सिद्धः। कारकबुद्धयभावाच्च। न हि कारकबुद्धिरहितं किमपि कर्म दृष्टम्। सर्वमेव कर्म अग्निहोत्रादिकं शब्दसमर्पितदेवताविशेषसम्प्रदानादिकारकबुद्धि-मत् कर्तृत्वाऽभिमान-फलाऽभिसन्धिमच्च दृष्टम्। न उपमृदितक्रियाकारक-फलभेदबुद्धिमत् कर्तृत्वाभिमान-फलाभिसन्धिरहितञ्च दृष्टम्। इदं तु ब्रह्म-बुद्धयुपमृदितार्पणादिकारकक्रियाफलभेदबुद्धिमत् कर्म। अतोऽकर्मैव तत् सम्यग्दर्शिनो लोकसंग्रहे प्रवृत्तस्य। तथा च दर्शितं भगवता 'कर्मण्यकर्म यः पश्येत्' (४।१८) कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः' (४।२०) 'गुणा-गुणेषु वर्तन्ते' (३।२८) 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' (५।९) इत्यादिभिः। तथा दर्शयंस्तत्र तत्र क्रियाकारकफलभेदबुद्धयुपमर्दं करोति भगवान्। अतश्चेष्टामात्रेण कर्माऽपि विदुषोऽकर्मैव संपद्यते। अत उक्तं समग्रं प्रविलीयते' इति ॥२४॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयान् अन्ये इन्द्रियाग्निषु जुह्वति ॥२६॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥२८॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥२९॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥

---

अवतरणम्—ब्रह्मार्पणमन्त्रेण सम्यग्दर्शनस्य यज्ञत्वं संपाद्य यज्ञान्तराऽपेक्षया तस्य श्रेयस्त्वबोधनरूपां स्तुतिं करिष्यमाणस्तेन सह अन्यानपि एकादश यज्ञान् तस्य सङ्कलनया द्वादश यज्ञान् उपक्षिपति षड्भि दैवमिति—

व्याख्या—तत्र सर्वस्य श्रेयःसाधनस्य यज्ञत्वं मुख्यगौणवृत्तिभ्यां दर्शयन् आदौ यज्ञद्वयं दर्शयति–दैवमिति । अपरे केचिद् योगिनः कर्मिणः, दैवम् एव, देवा इन्द्रवरुणादय इज्यन्ते पूज्यन्ते येन यज्ञेन असौ दैवो यज्ञः, तम् एव यज्ञं दर्शपौर्णमासज्योतिष्टोमादिरूपम् पर्युपासते कुर्वन्ति । एवकारेण इन्द्रादिषु तेषां ब्रह्मबुद्धिरहितत्वं दर्शितम् । अपरे अन्ये ब्रह्मविदो ब्रह्मात्मैक्यदर्शननिष्ठा इति यावत् । ब्रह्माग्नौ "ब्रह्मशब्देन, 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति० २।१) 'विज्ञानमानन्दं ब्रह्म' (बृह० ३।९।२८) 'यत्साक्षादपरोक्षाद्-ब्रह्म य आत्मा सर्वान्तरः' (बृह० ३।४।१ ) इत्यादिविधिमुखवचनोक्तम् ( तथा ) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युम् अत्येति' ( बृह० ३।५।१ ) 'अथात आदेशो नेति नेति' ( बृह० ४।४।२२ ) इत्यादिनिषेधमुखवचनोक्तम् (अत्रादिपदाद् 'अस्थूलजनणु' (बृह० ३।३।८) इति निषेधमुखवचनोक्तम् इत्यर्थः ) अशनायापिपासादिसर्वसंसारधर्मवर्जितम् निरस्ता-

शेषविशेषं गृह्यते ।" इति भाष्यम् । तत्रानन्दगिरिः परपृष्ठे द्रष्टव्यः । ब्रह्म च तद् अग्निश्च सः होमाधिकरणत्वविवक्षयेति ब्रह्माग्निस्तस्मिन् । यज्ञम् 'यज्ञशब्दवाच्य आत्मा । आत्मनामसु यज्ञशब्द पाठात्' इति भाष्यम् । यज्ञशब्द आत्मनामसु यास्केन पठित इति श्रीमधुसूदनसरस्वती । तम्, आत्मानं यज्ञं, परमार्थतः परमेव ब्रह्म सन्तम्, बुद्ध्याद्युपाधिसंयुक्ततया अध्यस्तसर्वोपाधिधर्मकम्, आहुतिरूपम् यज्ञेनैव आत्मनैव, इत्थं भूतलक्षण-तृतीयया अशनायादिसर्वसंसारधर्मवर्जितनिर्विशेषस्वरूपेणैव इत्यर्थः । उपजुह्वति प्रक्षिपन्ति । "सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद् दर्शनं स तस्मिन् होमस्तं कुर्वन्तीत्यर्थः ।' सोऽयं सम्यग्दर्शनलक्षणो यज्ञो दैवयज्ञादिषु यज्ञेषु उपक्षिप्यते 'ब्रह्मार्पणम्' इत्यादिभिः श्लोकैः 'श्रेयान् द्रव्य-मपाद्यज्ञाज् ज्ञानयज्ञः परं तप' (४।३३) इत्यादिना स्तुत्यर्थम् ।" इति भाष्यम् । ननु ब्रह्मार्पणमित्यादिना श्लोकेनैव सम्यग्दर्शनस्य यज्ञत्वं संपादितमिति पुनर् दैवमेवापरे इत्यादिना श्लोकेन तस्य यज्ञत्वसम्पादनं किमर्थम् ? इति चेत् सत्यम् द्विर्बद्धं सुबद्धमितिन्यायात्सम्यगदर्शनरूपस्य यज्ञस्य सुयज्ञत्वं सूच्यते । किञ्च दैवयज्ञादिषु तस्य पाठेन तत्सहिता द्वादश यज्ञा भवन्ति । तेषु द्वादशसु अयं ज्ञानयज्ञः श्रेष्ठ इति श्रेयान् द्रव्यमयादित्यनेन वक्ष्यते । तत्र सुखप्रति-पत्त्यर्थम् अयं पठितः पुनरपि भगवता । किञ्च ब्रह्मार्पणश्लोके सम्यग्दर्शनै-कदेशस्य स्पष्टतया यज्ञत्वे संपादितेऽपि ब्रह्मात्मैक्यज्ञानस्य सम्यग्दर्शन-मुख्यघटकस्य स्पष्टतया यज्ञत्वं न सम्पादितम् इति पुनर्दैवमित्यादिना श्लोकेन कृतम् तत् । "ब्रह्माऽग्नौ सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति० २।१) 'विज्ञानमानन्दं ब्रह्म' (बृह० ३।९।२८) 'यत्साक्षादपरोक्षाद ब्रह्म' (बृह० ३।४।१) 'य आत्मा सर्वान्तरः' (बृह० ३।४।१)" इत्यादि भाष्ये आनन्दगिरिः—"सम्यग्ज्ञानाख्यं यज्ञं विभजते—ब्रह्माग्नाविति । तत्र ब्रह्मशब्दार्थं श्रुत्यवष्टम्भेन स्पष्टयति सत्यमिति । यद् अजम् अनृतविपरीतम् अपरिच्छिन्नं ब्रह्म, तस्य परमानन्दत्वेन परमपुरुषार्थत्वमाह—विज्ञानमिति । तस्य ज्ञानाधिकरणत्वेन ज्ञानत्वमौपचा-रिकमित्याशङ्क्य आह-यत्साक्षादिति । जीवब्रह्मविभागे कथम् अपरिच्छिन्न-त्वमित्याशङ्क्य विशिनष्टि य आत्मेति । परस्यैवात्मत्वम् सर्वस्माद् देहा देरव्याकृतान्ताद् आन्तरत्वेन साधयति सर्वान्तर इति ।" इत्याह ।। "यज्ञेनैव आत्मनैवोक्तलक्षणेन" इतिभाष्ये इत्थंभूतलक्षणां तृतीयामेव व्याकरोति उक्तेति इत्यानन्दगिरि ।।२५।।

यज्ञान्तरमाह श्रोत्रादीनित्यादि । अन्ये योगिनः प्रत्याहाररूपयोगाङ्गा-नुष्ठानपराः श्रोत्रादीनि इन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वानासिकारूपाणि

ज्ञानजनकानि इन्द्रियपदवाच्यानि, संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यते इति बहुवचनम् संयमा एव अग्नयस्तेषु जुह्वति इन्द्रियसंयममेव यज्ञं कुर्वन्तीत्यर्थः। शब्दादिविषयेभ्यः श्रोत्रादीनां निवर्तनरूपो यः प्रत्याहारस् श्रेयस्करत्वेन यज्ञसादृश्याद् यज्ञः, तं कुर्वन्तीति यावत्। अन्ये योगिनो रागद्वेषरहिताः (प्रारब्धफलककर्मवशात्प्राप्तान्) शब्दादीन् विषयान् इन्द्रियाग्निषु ज्ञानेन्द्रियाण्येव अग्नयस्तेषु जुह्वति। श्रोत्रादिभिः शास्त्राऽविरुद्धशब्दादिविषयग्रहणं तत्र होमं मन्यन्ते। अनेनाऽपि श्लोकेन यज्ञद्वयं दर्शितम् ॥२६॥

यज्ञान्तरं कथयति–सर्वाणीन्द्रियकर्माणीत्यादि। अपरे अन्ये च योगिनः, सर्वाणि इन्द्रियकर्माणि इन्द्रियाणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानाम् ज्ञानेन्द्रियाणाम् वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां च कर्माणि यथाक्रमं शब्दस्पर्शरूपरसगन्धग्रहणात्मकानि वचनादानविहरणोत्सर्गानन्दात्मकानि च (तथा) प्राणकर्माणि 'प्राणस्य आध्यात्मिकवायोः कर्माणि आकुञ्चनप्रसारणादीनि' इति भाष्यम्। शरीरान्तर्वर्तिनाम् प्राणाऽपानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयनामकानां प्राणवायूनां दशानामिह ग्रहणम् इति टीकाकृतः। भाष्ये तु जातौ एकवचनम् इति तद्भावः। प्राणानां दशानां कर्माणि प्राणस्य बहिर्गमनम्। अपानस्य अधोनयनम्, व्यानस्य व्यानयनाकुञ्चनप्रसारणादि, समानस्य अशितपीतादीनां सम्यग् उन्नयनम्, उदानस्योर्ध्वनयनम्, उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः। कृकरः क्षुतकृज् ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं चापि सर्वव्यापी 'धनञ्जयः।' इत्येवंरूपाणीति श्रीधरस्वामी। ज्ञानदीपिते विवेकविज्ञानेन उज्वलभावं–गमिते स्नेहेनेव प्रदीपिते, आत्मसंयमयोगाग्नौ आत्मनि अन्तःकरणे संयम एव योगाग्निः, तस्मिन्। 'आत्मनि संयमो धारणाध्यानसमाधिलक्षणः इत्यानन्दगिरिः। 'त्रयमेकत्र संयमः' इति पातञ्जलयोगसूत्रञ्च। जुह्वति प्रक्षिपन्ति, प्रविलापयन्तीत्यर्थः। इह चित्तसमाधाने यावन्मात्रं विवेकविज्ञानम् अपेक्षितम् तावन्मात्रं विवेकविज्ञानं गृह्यते ज्ञानशब्देन। न सम्यग्दर्शनरूपम्, सम्यग्दर्शिनश्चित्तसमाधानस्य पूर्वसिद्धत्वेन धारणाध्यानसमाधिलक्षणसंयमस्य अनुपयोगात्। अत एव भाष्यं व्याचक्षाण आनन्दगिरिराह-"सर्वमपि व्यापारं निरुद्ध्य आत्मनि चित्तसमाधानं कुर्वन्तीत्याह–विवेकेति।" इति। अत्र भाष्ये-"ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेन उज्ज्वलभावम् आपादिते प्रविलापयन्ति इत्यर्थः।" इत्युक्तम् ॥२७॥

एवं दैवमेवापरे यज्ञम् इत्यादिभिस्त्रिभिः श्लोकै र्यज्ञपञ्चकम् उक्त्वा वक्ष्य-

माणेन एकेन श्लोकेन अपरान् पञ्च यज्ञानाह —द्रव्ययज्ञा इत्यादि। तथा अपरे संशितव्रता:-सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते, यतयः यतनशीला:, द्रव्ययज्ञा: तीर्थेषु द्रव्यविनियोगं यज्ञबुद्धया ये कुर्वन्ति ते द्रव्ययज्ञा: सन्ति। (तथा अपरे संशितव्रता यतय:) तपोयज्ञा:, तप: कृच्छ्रचान्द्रायणपञ्चाग्निसेवनादि, एव यज्ञो येषां ते तपस्विनो भवन्ति। (तथा अपरे संशितव्रता यतय:) योगयज्ञा:-यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिलक्षणो योग एव यज्ञो येषां ते भवन्ति (तथा अपरे संशितव्रता यतय:) स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायो-यथाविधि ऋगादीनाम् अभ्यासो यज्ञो येषां ते भवन्ति। (तथा अपरे संशितव्रता यतय:) ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञो येषां ते भवन्तीत्यर्थ: ॥२८॥ एकादशं प्राणायामाख्यं यज्ञमाह अपाने जुह्वतीत्यादि। तथा अपरे अन्ये प्राणायामपरायणा: सन्त: अपाने अपानवायुवृत्तौ, प्राणं-प्राणवायुवृत्तिं जुह्वति प्रक्षिपन्ति, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थ:। (तथा) प्राणे प्राणवायुवृत्तौ अपानम् अपानवायुवृतिं जुह्वति। रेचकाख्यं च प्राणायामं कुर्वन्तीत्यर्थ: (तथा) प्राणाऽपानगती-प्राणश्च अपानश्च तयोर्गती। "मुखनासिकाभ्यां वायो र्निर्गमनं प्राणस्य गति:। तद्विपर्ययेण अधो गमनम् अपानस्य, ते प्राणापानगती एते। रुद्ध्वा निरुध्य प्राणायामपरायणा: प्राणायामतत्परा:, कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थ:" इति भाष्यम्। 'प्राणापानयोर्गती श्वासप्रश्वासौ निरुध्य कुम्भकं कुर्वन्तीत्यर्थ:' इत्यानन्दगिरीये ॥२९॥

द्वादशं यज्ञमाह–अपरे नियताहारा इत्यादि। (किञ्च) अपरे अन्ये नियताहारा: नियत: 'द्वौ भागौ पूरयेद् अन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थम् अवशेषयेत् ॥' इत्येवमुक्तो नियत आहारो येषां ते इति श्रीधरीये ॥ परिमित आहारो भोजनं येषां ते सन्त:, प्राणान् दशानां वायुभेदानां मध्ये अजितान् प्राणादीन् वायुभेदान्, प्राणेषु जितेषु वायुभेदेषु प्राणादिषु जुह्वति। अत्र भाष्यम्–"यस्य यस्य वायोर्जय: क्रियते इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति ते तत्र प्रविष्टा इव भवन्ति।" इति। अत्रानन्दगिरि:-'प्राणापानगतिनिरोधरूपं कुम्भकं कृत्वा पुन: पुनर्वायुजयं कुर्वन्तीत्यर्थ:। आहारस्य परिमितत्वं मेध्यत्वहितत्वोपलक्षणार्थम्। प्राणानां प्राणेषु होममेव विभजते यस्येति। जितेषु वायुभेदेषु अजितानां तेषां होमप्रकारं प्रकटयति ते तत्रेति।' इत्याह। तथा च यस्य यस्य वायोर्जय: क्रियते तस्मिन् तस्मिन् वायौ अजितान् इतरान् वायुभेदान् जुह्वति प्रवेशयन्तीवेति शब्दार्थ:। प्रकृतान् यज्ञान्

यज्ञशिष्टाऽमृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥

---

उपसंहरति-सर्वेऽप्येते इत्यादि । सर्वेऽप्येते, द्वादशविधाः, यज्ञविदः-यज्ञान् विदन्ति विन्दन्ति वेति यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्चेत्यर्थः । 'विद् ज्ञाने' 'विद्लृलाभे' ततः क्विप् । यज्ञक्षपितकल्मषाः यज्ञैर्यथोक्तैः क्षपितो नाशितः कल्मषः पापं येषां ते, भवन्तीति शेषः ।।३०।।

अवतरणम्—यथोक्तयज्ञानुष्ठानानन्तरं क्षीणे कल्मषे किं स्यात् ? अत आह—यज्ञेति ।

व्याख्या—(एवं यथोक्तान् यज्ञान् निर्वर्त्य) यज्ञशिष्टामृतभुजः "यज्ञाना शिष्टं यज्ञशिष्टम्, यज्ञशिष्टं च तद् अमृतञ्चेति यज्ञशिष्टाऽमृतम्, तद्भुञ्जते इति । यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधि चोदितमन्नम् अमृताख्यं भुञ्जते इति यज्ञशिष्टाऽमृतभुजः" इति भाष्यम् । सनातनं चिरन्तनं ब्रह्म यान्ति गच्छन्ति । अत्र "मुमुक्षवश्चेत् कालातिक्रमाऽपेक्षयेति सामर्थ्याद् गम्यते" इति भाष्यम् । 'ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥' इत्युक्तं द्वादशसु द्वितीयं यज्ञं सम्यग्दर्शनरूपं कुर्वाणा जीवन्मुक्तास्तु साक्षादेव प्रारब्धान्ते ब्रह्मत्वं गच्छन्ति । तस्मादितरान् एकादश तु यज्ञान् कृत्वा साधकाः मुमुक्षवश्चेत् चित्तशुद्धिद्वारा कालान्तरे सम्यग्दर्शनं प्राप्येति क्रमेण मुक्तिं लभन्ते, इति भाष्यस्य तात्पर्यं सामर्थ्याद् गम्यते । एवम् अधिकसंख्यका याज्ञिकास्तु क्रमेणैव मुक्तिं लभन्ते इति तानेवापेक्ष्य कालातिक्रमापेक्षयेति भाष्योक्तिः 'छत्रिणो यान्ति' इतिवत् ॥ यज्ञविहीनं निन्दति भगवान्—नायमिति । अयज्ञस्य यथोक्तानां यज्ञानां मध्ये एकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्य । अयं लोकः सर्वप्राणिसाधारणोऽपि नास्ति । अन्यो लोकः स्वर्गापवर्गौ तु अस्य कुतः स्याताम् ? अयज्ञस्य मरणादूर्ध्वं मर्त्यलोकेप्यस्मिन् मनुष्यभावो न स्यात् । विशिष्टसाधनसाध्यं लोकान्तरं तु तस्य बहुदूरं निरस्तं स्यादित्यर्थः । कुरुसत्तमेति संबोधयन् भगवान् अस्य ब्रह्मभावप्राप्तियोग्यतां सूचयति ॥३१॥

अवतरणम्—उक्तानां यज्ञानां वेदमूलकत्वं वदन् अप्रामाण्यशङ्कां निरस्यति—एवमिति ।

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान् विद्धि तान् सर्वान् एवं ज्ञात्वा विमोक्ष्यसे ।।३२।।
श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते ।।३३।।

---

व्याख्या—एवम् यथोक्ता बहुविधा बहुप्रकारा यज्ञा ब्रह्मणो वेदस्य मुखे द्वारे वितता विस्तीर्णाः, सन्तीति शेषः। वेदद्वारेण अवगम्यन्ते इत्यर्थः। तद्यथा—'वाचि ह् प्राणं जुहुमः, प्राणे वा वाचम्। यो ह्येव प्रभवः स एवाप्ययः' इत्यादयः। तान् सर्वान् यज्ञान् कर्मजान् कायिकवाचिकमानस-कर्मोद्भवान् (एव) विद्धि जानीहि, न त्वात्मजान्। निर्व्यापारो हि आत्मा। (अतः) एवम्—'न मद्व्यापारा इमे। निर्व्यापारोऽहम् उदासीनः' इत्येवम्, ज्ञात्वा अनेन सम्यग्दर्शनरूपेण ज्ञानयज्ञेन पूर्वं प्रोक्तेन, त्वम् विमोक्ष्यसे—अशुभात् संसारबन्धनाद् विमुक्तो भविष्यसीत्यर्थः ।।३२।।

अवतरणम्—ब्रह्मार्पणम् इत्यादि श्लोकमन्त्रेण सम्यग्दर्शनस्य यज्ञत्वं यदर्थं संपादितम्, यदर्थश्च बहवो यज्ञा उपदिष्टाः सिद्धपुरुषार्थप्रयोजनाः। तां सम्यग्दर्शनस्य ज्ञानयज्ञशब्दितस्य स्तुतिं सम्प्रति करोति—श्रेयानिति। सिद्धपुरुषार्थ प्रयोजनाः सिद्धपुरुषापेक्षितप्रयोजना इत्यर्थः। पुरुषेण अर्थ्यते इति पुरुषार्थः बाहुलकात् कर्मणि कृत्प्रत्ययः।

व्याख्या—हे परन्तप शत्रुतापन, द्रव्यं प्रकृतं प्राचुर्येण प्रस्तुतं यस्मिन् स द्रव्यमयः, 'तत्प्रकृतवचने मयट्' (पा. सू.) इति मयट्। तस्माद्, द्रव्यसाधन-साध्यात्। "द्रव्यसाधनसाध्यादिति स्वाध्यायादेरपि उपलक्षणम्। ततोऽपि ज्ञानयज्ञस्य श्रेयस्त्वाऽविशेषाद् द्रव्यमयादियज्ञेभ्यो ज्ञानयज्ञस्य प्रशस्यतरत्वं प्रपञ्चयति–द्रव्यमयो हीति" इत्यानन्दगिरिर्भाष्यटीकाकृत्। अतो द्रव्यमयादे-रित्यर्थः। यज्ञात् स्वेतरेभ्यः सर्वेभ्यो यज्ञेभ्यः, ज्ञानयज्ञः ज्ञानयज्ञशब्दितः। सम्यग्दर्शनरूपो यज्ञः श्रेयान् प्रशस्यतरः। अत्र भाष्यम्—"'द्रव्यमयो हि यज्ञः फलस्य आरम्भकः, ज्ञानयज्ञो न फलारम्भकः अतः प्रशस्यतरः। कथम्? यतः सर्वं समस्तम्, अखिलम् अप्रतिबद्धम् असंकुचितम् निरवशेषम् (यज्ञप्रकरणात् कर्मणां संकोचो माभूदिति सर्वशब्दः) कर्म पार्थ ज्ञाने मोक्ष-साधने सर्वतः संप्लुतोदकस्थानीये परिसमाप्यते। अन्तर्भवतीत्यर्थः। 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्चित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद।' (छा० ४।१।४) इति श्रुतेः।" इति।

तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥

---

अत्र भाष्येऽपि आनन्दगिरिरीत्योपलक्षणत्वाद् द्रव्यमयो हि इत्यस्य द्रव्यमयादिर्हि इत्यर्थः 'सर्वमखिलमिति–पदद्वयोपादानम्' असंकोचार्थम्'इत्यानन्दगिरीये भाष्योत्कर्षे च । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति हेतुवचनेनाऽपि स्फुटमेतद्भवति यत् कर्मात्मकाः सर्वे यज्ञा ज्ञानयज्ञेऽन्तर्भवन्तीति । अतः स्वेतरेभ्यः सर्वेभ्यो यज्ञेभ्यः कर्मात्मकेभ्यः सम्यग्दर्शनयज्ञः श्रेयान् इति भगवतोऽभिप्रायोस्तीति । 'ज्ञानयज्ञो न फलारम्भकोऽतः श्रेयान्' इति भाष्ये "न फलारम्भको न कस्यचित् फलस्योत्पादकः किन्तु नित्यसिद्धस्य मोक्षस्याभिव्यञ्जक इत्यर्थः ।" इत्यानन्दगिरिः ॥३३॥

अवतरणम्—तदेतद् विशिष्टं ज्ञानं तर्हि केन विधिना प्राप्यते? इत्युच्यते—तदिति ।

व्याख्या—(येन विधिना तदेतद् विशिष्टं ज्ञानं प्राप्यते तं विधिं शृणु) प्रणिपातेन 'आचार्यान् अभिगम्य प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारः । तेन । परिप्रश्नेन 'कथं बन्धः कथं मोक्षः ? का विद्या ? का च अविद्या ? इत्यादिरूपेण परितः प्रश्नेन । सेवया गुरुशुश्रूषया, उपलक्षणतया 'एवमादिना प्रश्रयेण' इति भाष्यम् । तत्र 'आदि पदेन शमादयो गृह्यन्ते । प्रश्रयो भक्तिश्रद्धापूर्वको निरतिशयो नतिविशेषः' इत्यानन्दगिरिः । आवर्जिताः (प्रसादिताः) सन्तः इतिशेषः । तत्त्वदर्शिनः सम्यग्दर्शिनः, ज्ञानिनः शास्त्रार्थपरिज्ञानवन्तः । ते तुभ्यम् तद् ज्ञानम् यथोक्तविशेषणम् उपदेक्ष्यन्ति कथयिष्यन्ति । इत्येवं प्रणिपातादिभिरुपायैः तद् विज्ञानं त्वं विद्धि जानीहि लभस्वेत्यर्थः गुरुभ्य इति शेषः । अत्र भाष्यम् —'ज्ञानिनः-ज्ञानवन्तोऽपि केचिद् यथावत् तत्त्वदर्शनशीलाः, अपरे न, अतो विशिनष्टि-तत्त्वदर्शिन इति । ये सम्यग् दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरद् इति भगवतो मतम् ।' इति । अत्र ज्ञानिनः पदवाक्यन्यायविचारपूर्वकशास्त्रार्थपरिज्ञानरूपपरोक्षज्ञानवन्तः । तत्त्वदर्शिनस्तु शास्त्रजन्याऽपरोक्षज्ञानवन्त इति भेदः । तत्त्वदर्शिनोऽपि केचित्पदवाक्यन्यायविचारपूर्वकतत्त्वबोधनकुशला अपरे नेति ज्ञानिन इति विशेषणं तुल्यन्यायात् कृतमिति वयम् । अतएव भाष्योत्कर्षदीपिकाकारेणोक्तम्—'पदवाक्यप्रमाणज्ञैः सम्यक्तत्त्वविवेकिभिः । उक्ताज्ज्ञानाद् भवेत्कार्यम् नान्यैरिति हरेर्मतम् ॥' इति । बहुवचनम् आदरार्थम् ॥३४॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥३७॥

---

अवतरणम्—ज्ञानिभिस्तत्त्वदर्शिभिरुपदिष्टे कार्यक्षमे ज्ञाने प्राप्ते सति इदमपि वचनं समर्थं भवति—यदिति ।

व्याख्या—हे पाण्डव, यद् ज्ञात्वा तैरुपदिष्टं यद् ज्ञानम् अधिगम्य प्राप्य पुनर्भूयो मोहम् अविवेकम् एवं यथेदानी गतोऽसि तथा न यास्यसि न गमिष्यसि । (किञ्च) येन ज्ञानेन ब्रह्मसाक्षात्काररूपेण भूतानि चराचराणि अशेषेण ब्रह्मादिस्तम्बपर्यन्तानि आत्मनि प्रत्यगात्मनि द्रक्ष्यसि साक्षात्करिष्यसि 'मत्स्थानि इमानि भूतानि' इति । अथो अपि मयि वासुदेवे परमेश्वरेऽपि इमानि भूतानि साक्षात्करिष्यसि—'मदभिन्नपरमेश्वरसंस्थानीमानि भूतानि सन्ति' इति सर्वोपनिषत्प्रसिद्धं क्षेत्रज्ञेश्वरैकत्वं साक्षात्करिष्यसि इत्यर्थः ॥३५॥

अवतरणम्—इदञ्च एतस्य ज्ञानस्य माहात्म्यम्—अपीति ।

व्याख्या—चेद् यदि सर्वेभ्यः पापेभ्यः, पापम् अस्ति अस्येति पापः, तेभ्यः । 'अर्शआदिभ्योऽच्' (पा. सू.) इत्यच् । कृत्स्नेभ्यः पापकृद्भ्यः पापकृत्तमः अतिशयेन पापकृत् पापकृत्तमः,असि भवेः । संभावनायां चेदितिशब्दः । अपि तथापि, सर्वम् अखिलम् वृजिनं पापं ज्ञानप्लवेन एव-ज्ञानं ब्रह्मात्मैक्यसाक्षात्कारः स एव प्लवः पोतस्तेनैव अर्णवमिव संतरिष्यसि सम्यक् तद् उत्तीर्णो भविष्यसि । 'धर्मोऽपि इह मुमुक्षोः पापम् उच्यते' इति भाष्यम् । ज्ञानमाहात्म्यात् धर्माऽधर्मौ समुत्तीर्य मोक्षं गमिष्यसीतिभावः॥३६॥

अवतरणम्—ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमाह—यथेति ।

व्याख्या—हे अर्जुन, यथा समिद्धः सम्यग् इद्धः संदीप्तः, अग्निर्वह्निः, एधांसि काष्ठानि भस्मसान् कुरुते कृत्स्नानि भस्मी कुरुते 'विभाषासातिः कार्त्स्न्ये' (पा.सू.) इति सातिः । तथा तेन प्रकारेण ज्ञानाग्निः ज्ञानमेव अग्नि र्नाशकत्वाद्

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥

---

अग्निरिवेति, ज्ञानाग्निः ज्ञाने अग्निव्यपदेशो लक्षणया। सर्वकर्माणि ज्ञानिनः इति शेषः। भस्मसात् कुरुते 'निर्वीजी करोतीत्यर्थं' इति भाष्यम्। ज्ञानरूपस्य अग्नेरिन्धनानामिव कर्मणाम् भस्मीकारस्याऽयोगादिह भस्मसादिव करोतीत्यर्थेन निर्वीजीकरणे एवाऽभिप्राय इत्याशयः। "सामर्थ्याद् येन कर्मणा शरीरमारब्धं तत् प्रवृत्तफलत्वाद् उपभोगेनैव क्षीयते। अतो यानि अप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि च अतीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात्कुरुते।" इति चात्र भाष्यम्। ज्ञानोत्पत्तेरुत्तरत्र कृतानां कर्मणां तु श्लेप एव न भवतीति तत्र भस्मीभावस्य नावश्यकता इति भाष्यस्य तात्पर्यम्। तथा चात्र ब्रह्मसूत्राणि–'तदधिगम उत्तरपूर्वाघयोरश्लेपविनाशौ तद्व्यपदेशात्' 'इतरस्याप्येवम् अश्लेपः पाते तु' 'भोगेन तु इतरे क्षपयित्वा संपद्यते' 'अनारब्धकार्ये एव पूर्वे तदवधेः' इति। श्रुतिश्च–'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' इत्यादिः ॥३७॥

**अवतरणम्**—तादृशेन सम्यग्दर्शनेन तुल्यम् अन्यदपि पावनकरं किमपि अस्ति नवा? तच्च ज्ञानं केन कियता कालेन, कुत्र अधिष्ठाने, केन च करणेन लभ्यते? इत्यत आह—नेति।

**व्याख्या**—इह व्यवहारभूमौ, ज्ञानेन सम्यग्दर्शनेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरं न हि नैव विद्यते। यतः क्षणादेव अनेकजन्मसंचितसंचीयमानसकलकिल्विपाणां नाशं करोति अविद्यामलञ्च अपाकरोति ज्ञानम्। अतस्तत्सदृशं पवित्रं नास्तीत्यभिप्रायः। 'तद् ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यताम् आपन्नो मुमुक्षुः कालेन महता आत्मनि विन्दति लभते इत्यर्थः॥' इति भाष्यम्। "स्वयमेव स्वप्रयत्नेनैव योगसंसिद्धः स्वयमेव विन्दतीति वा। आत्मविषयसाक्षात्कारस्य स्वेनैव लभ्यत्वात्। गुर्वादेः परोक्षज्ञाने एव उपयोगात्।" इति भाष्योत्कर्षदीपिका ॥३८॥

**अवतरणम्**—अथ येनोपायेन एकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते—श्रद्धेति।

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाधिगच्छति ॥३९॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥

---

व्याख्या—'कर्मयोगेन समाधियोगेन च सम्पन्नस्य—साक्षात्कारोत्पत्तौ अन्तरङ्गं साधनम् उपदिशति-श्रद्धावान् इती'त्यानन्दगिरिः। श्रद्धावान् शास्त्राचार्योपदेशे 'इदम् इत्थमेव' इतिप्रमारूपास्तिक्यबुद्धिः श्रद्धा। 'गुरुवेदान्तवाक्येषु 'इदमित्थमेवेति प्रमारूपास्तिक्यबुद्धिः श्रद्धेतिमधुसूदनसरस्वती। तद्वान्, श्रद्धालुः। श्रद्धालुत्वेऽपि भवति कश्चिन्मन्दप्रयत्नः, इत्यत आह तत्पर इति। तत्परः ज्ञानलाभोपाये शास्त्रगुरूपासनादौ अभियुक्तः। श्रद्धावान् तत्परोऽपि अजितेन्द्रियो माभूदत आह—संयतेन्द्रिय इति। संयतानि विषयेभ्यो निवर्तितानि इन्द्रियाणि यस्य सः (एवंभूतो जिज्ञासुः) ज्ञानं लभते। 'य एवंभूतः श्रद्धावांस्तत्परः संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते। प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति मायावित्वादिसंभवाद् न तु तथा तच्छ्रद्धावत्त्वादौ इत्येकान्ततो ज्ञानलब्ध्युपायः।' इति भाष्यम्। ज्ञानलाभस्य फलमाह—ज्ञानं लब्ध्वेति। ज्ञानं लब्ध्वा ब्रह्मात्मैक्यसाक्षात्कारं कृत्वा, परां मोक्षाख्यां शान्तिं सुखम् अचिरेण क्षिप्रमेव अधिगच्छति। 'सम्यग्दर्शनात् क्षिप्रं मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः॥' इति भाष्यम्। अत्रानन्दगिरिः—'शास्त्रशब्देन 'तमेव विदित्वा' 'ज्ञानादेव तु कैवल्यम्' इत्यादि विवक्षितम्। न्यायस्तु ज्ञानादज्ञाननिवृत्तेः रज्ज्वादौ प्रसिद्धत्वाद् आत्मज्ञानादपि निरपेक्षाद् अज्ञानतत्कार्यप्रक्षयलक्षणो मोक्षः स्यादित्येवंलक्षणः॥' इत्याह॥३९॥

अवतरणम्—यथोक्तसाधनवान् उपदेशम् अपेक्ष्य अचिरेण ब्रह्म साक्षात्करोति। साक्षात्कृतब्रह्मत्वे अचिरेणैव मोक्षं प्राप्नोतीत्येतस्मिन्नर्थे सर्वशास्त्रन्यायप्रसिद्धे सुनिश्चिते संशयो न कर्तव्यः। पापिष्ठो हि संशयः। कथम्? इत्यत आह—अज्ञेति।

व्याख्या—अज्ञश्च—अज्ञोऽनात्मज्ञः, स च। अश्रद्दधानश्च—गुरुवेदान्तवाक्यार्थे 'इदम् एवं न भवत्येव' इति विपर्ययरूपा नास्तिक्यबुद्धिरश्रद्धा, तद्वान् अश्रद्दधानः स च। संशयात्मा (च), अत्रापि चकारोऽध्याहार्यः

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४१॥

---

सामर्थ्यात् । भाष्ये तथा पाठात् । 'इदम् एवं भवति न वा' इति सर्वत्र संशयाक्रान्तचित्तः संशयात्मा । संशयः सार्वकालिकतया आत्मा आत्मेव यस्य सः इति व्युत्पत्तेः । स च । विनश्यति । चकारेण अनुकर्षणात् प्रत्येकं संबन्धः । अज्ञश्च विनश्यति, अश्रद्दधानश्च विनश्यति संशयात्मा च विनश्यतीति । विनश्यति पुरुषार्थाद् भ्रष्टो भवति । "अज्ञाऽश्रद्दधानौ यद्यपि विनश्यतस्तथापि न तथा यथा संशयात्मा । संशयात्मा तु पापिष्ठः सर्वेषाम् कथम् ? नायं साधारणोऽपि लोकोऽस्ति तथा न परो लोको न सुखं तत्रापि संशयोपपत्तेः संशयात्मनः संशयचित्तस्य । तस्मात् संशयो न कर्तव्यः ।" इति भाष्यम् । अज्ञस्य अश्रद्दधानस्य च परो लोको नास्ति, मनुष्यलोके भोजनादिसुखं तु वर्तते एव । संशयात्मा तु सर्वत्र संशयप्रवृत्ते र्लोकसाधन-परलोकसाधन सुखसाधन कर्मणि अप्रवृत्तेस्त्रितयहीनत्वेन सर्वेषां पापिष्ठोऽस्तीत्यतः संशयात्मता न युक्तेति भावः ॥४ ॥

**अवतरणम्**—यद्यपि संशयः सर्वानर्थहेतुरिति सर्वत्र न कर्तव्यो भवति तथापि निवर्तकाऽभावे उत्थापकसत्त्वे च स्थाणुर्वा पुरुषो वेत्यादिः संशयः क्वचिद् असंशयशीलस्यापि भवत्येव । अत्रापि अध्यात्मविषये अज्ञानत उत्थापितः संशयो निवर्तकाऽभावे कथं निवर्तेत ? इत्याशङ्कां समादधदेव सकलाध्यायविस्फारितमर्थं संक्षिप्याह —योगेति ।

**व्याख्या**—'पाठक्रमादर्थक्रमस्य बलीयस्त्वाद् आदौ द्वितीयं पादं व्याचक्षीते'त्यानन्दगिरिः । ज्ञानसंछिन्नसंशयम् ज्ञानेन आत्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नाः संशयाः -आत्मा देहाद्यभिन्नो देहादिभिन्नोवा ? देहादिभिन्नोऽपि अविभु र्विभुर्वा ? विभुरपि कर्ता अकर्ता वा ? अकर्ताऽपि भोक्ता अभोक्ता वा ? अभोक्ताऽपि एकोऽनेको वा ? एकोऽपि सगुणो निर्गुणो वा ? (सविशेषो निर्विशेषो वा ?) निर्विशेषज्ञानात् कर्मसमुच्चिताद् मोक्षः केवलाद्वा ? केवलज्ञाननिवर्त्यः प्रपञ्चः सत्यो मिथ्याभूतो वा, ज्ञानमपि परोक्षं मुक्तिजनकम् अपरोक्षं वा ? आत्मा ब्रह्मैव तदन्यो वा ?--इत्येवमादयो यस्य स ज्ञानसंछिन्नसंशयः, तम् । संसयरहितस्याऽपि कर्माणि अनर्थहेतवो भवन्तीत्याशङ्क्याह--योगेति । अत्रानन्दगिरिः "तच्च परमार्थदर्शनम् वैधसंन्यासपक्षे परोक्षम् । फलसंन्यास पक्षे तु अपरोक्षम् इति विवेकः ।" इत्याह । योगसंन्यस्तकर्माणम् योगेन परमार्थदर्शनलक्षणेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माऽधर्माख्यानि तम् । विषयपरवशस्य पुंसः परमार्थदर्शनयोगस्याऽयोगात्कथं

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥४॥

---

योगसंन्यस्तकर्मत्वम् इत्याशङ्क्याह-आत्मवन्तमिति । आत्मवन्तम् अप्रमत्तम् । कर्माणि गुणचेष्टारूपेण दृष्टानि लोकसंग्राहकानि वा शरीरस्थितिमात्रार्थानि वा अतीतानेकजन्मसंचितानि वा ज्ञानोदयात्प्रागतीतानि वा ज्ञानसहभावीनि वा इत्येवमादीनि कर्माणि न निबध्नन्ति, न अनिष्टेष्टमिश्ररूपं फलम् आरभन्ते । हे धनञ्जय । श्रुतियुक्तिप्रयुक्तम् आत्मेश्वरैकत्वज्ञानं संशयनिवर्तकं भवति । परमार्थदर्शनतः सर्वसंशयोच्छेदे तदुच्छेदकज्ञानमाहात्म्यादेव कर्मणां च निवृत्तौ अप्रमत्तस्य प्रातिभासिकानि कर्माणि बन्धहेतवो न भवन्तीति भावः ॥४१॥

अवतरणम् —सम्प्रति एतदध्यायार्थमुपसंहरति—तस्मादिति ।

व्याख्या—तस्माद्—यस्मात्कर्मयोगानुष्ठानाद् अशुद्धिक्षयहेतुकज्ञान-संछिन्नसंशयो न निबध्यते कर्मभिर्ज्ञानाग्निदग्धकर्मत्वादेव । यस्माच्च ज्ञान-कर्माऽनुष्ठानविषये संशयवान् विनश्यति—तस्मात् । अज्ञानसंभूतम् अज्ञानाद् अविवेकाद् जातम् हृत्स्थम् हृदि बुद्धौ स्थितम् (नत्वात्मनिष्ठम्) आत्मनः आत्म-विषयकम्, एनम् स्वविनाशहेतुभूतम् संशयम्, ज्ञानासिना शोकमोहादिदोष-हरं सम्यग्दर्शनरूपं ज्ञानमेव असिः खड्गस्तेन छित्वा नाशयित्वा योगम् सम्यग्दर्शनोपायं कर्मानुष्ठानम्, आतिष्ठ कुरु । उत्तिष्ठ (इदानीं युद्धाय) भार-तेति ॥ हे भारतेति संबोधयन् क्षत्रियस्य युद्धकरणं स्वधर्म इति स्मारितवान् । छित्वा—तादृशेन प्रापणीयेन अपरोक्षेण ज्ञानेन सर्वांशतश्छेत्तुम् अधुना कर्म-योगानुष्ठानविषये अंशतो जायमानं संशयं छित्वा अपरोक्षपरमार्थदर्शनो-पायम् कर्मयोगम् कर्मानुष्ठानं कुरु इत्यर्थः । तदनेनाध्यायेन योगस्य कृत्रि-मत्वं भगवतोऽनीश्वरत्वं च निराकृत्य कर्मादौ अकर्मादिदर्शनाद् आत्मनः सम्यग्दर्शनात् प्रणिपातादिबहिरङ्गसाधनेन श्रद्धाद्यन्तरङ्गसाधनेन उद्भूताद् अशेषानर्थनिवृत्त्या ब्रह्मभावम् अभिदधता सर्वयज्ञेषु श्रेष्ठे तस्मिन् असंशया-नस्य अधिकारात् संशयं हित्वा उत्तमाधिकारिणो ज्ञाननिष्ठाऽन्यस्य कर्म निष्ठेति स्थापितम् । रागवैराग्यभेदाभ्यां कर्मज्ञानमयी द्विधा । निष्ठोक्ता येन भक्तेभ्यः श्रेयसे नौमि तं हरिम् ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्कर-भाष्यानुसारिण्यां चतुर्थोऽध्यायः श्रीकृष्णार्पणमस्तु ।

## ॥ अथ वंशीव्याख्यायां पञ्चमोऽध्यायः ॥

अवतरणम्—अतीते चतुर्थे 'कर्मण्यकर्म यः पश्येत्' इत्यारभ्य कर्मण्य-कर्मदर्शनमुक्त्वा 'स युक्तः कृत्स्नकर्मकृत्' इति तत्प्रशंसा प्रसारिता। 'ज्ञानाग्नि-दग्धकर्माणम्' इति ज्ञानफलभूतं संन्यासं विवक्षन् विविदिषोः साधनरूपमपि संन्यासं भगवान् विवक्षितवान्। विविदिषुः संजातविविदिष इत्यर्थः। शुद्ध-बुद्धिरिति यावत्। "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतौ यज्ञादिना विविदिषां जनयन्ति इत्यर्थः। तत्रापि सामान्यतः विविदिषायाः पूर्वतः सत्वेऽपि उत्कटविविदिषां कार्यकरणक्षमां जनयन्तीत्यर्थः कार्यः। 'निराशीर्यतचित्तात्मा' इत्यारभ्य 'शारीरं केवलं कर्म कुर्वन्' इत्यपि द्विविधं संन्यासं सूचितवान्। 'यदृच्छालाभसंतुष्टः' इत्यादावपि संन्यासः सूचितस्तद्धर्म-फलायोपदेशात्। 'ब्रह्मार्पणं ब्रह्महविः' इति ज्ञानस्य यज्ञत्वसम्पादनपूर्वकं प्रशंसावचनादपि कर्मसंन्यासो दर्शितो ज्ञाननिष्ठस्य। 'कर्मजान् विद्धि तान् सर्वान्' इति वचनादपि विविदिषोः सर्वकर्मसंन्यासेऽधिकारो दर्शितः। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यपि जिज्ञासोः सर्वकर्मसंन्यासेऽधिकारः सूचितः। 'ज्ञानाग्निः सर्वकर्माणि' इत्यपि ज्ञानार्थिनः संन्यासेऽधिकारो दर्शितः। 'योग-संन्यस्तकर्माणम्' इत्यनेनापि द्विविधः संन्यासो भगवतोक्तः। तत्र भग-वता कर्मसंन्यासस्य कर्तव्यत्वेन विवक्षितत्वात्प्राधान्यमस्ति। अन्तरेण च कर्तारं संन्यासस्य कर्तव्यत्वाऽसंभवाद, अर्थापत्तिन्यायेन पक्षे शुद्धबुद्धिः पक्षे च अशुद्धबुद्धिरपि कर्ता प्राप्तोऽनुद्यते एव। न पुनः शुद्धबुद्धिकर्तृकत्वमेव संन्यासस्येति विवक्ष्यते। विवक्षाद्वये कर्त्रन्तरपर्युदासः संन्यासविधिश्चेति अर्थभेदे वाक्यभेदप्रसङ्गात्। सामान्यवैराग्यमात्रेण अपि अशुद्धबुद्धेरपि संन्यासविधेर्दर्शनाच्च। तथा 'छित्त्वैनं संशयं योगमातिष्ठ' इत्यनेन वचनेन कर्मानुष्ठानलक्षणं योगं प्रोक्तवान्। तयोरुभयोश्च कर्मानुष्ठानकर्म-संन्यासयोः स्थितिगतिवत्परस्परविरोधादेकेन पुरुषेण सह कर्तुमशक्यत्वात् कालभेदेन च अनुष्ठानविधानाऽभावाद् अर्थादेनयोरन्यतरस्य कर्तव्यताप्राप्तौ सत्यां यत्प्रशस्यतरम् एतयोः कर्मानुष्ठानकर्मसंन्यासयोस्तत्कर्तव्यं नेतरद् इत्येवम् मन्वानः प्रशस्यतरबुभुत्सया—भगवन्तं सर्वज्ञं प्रति अर्जुन उवाच।

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ।।१।।

श्रीभगवान् उवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ।।२।।

---

व्याख्या—हे कृष्ण सच्चिदानन्द सर्वज्ञ, कर्मणां शास्त्रीयाणाम् अनुष्ठानविशेषाणाम् संन्यासं परित्यागं शंससि कथयसि । कर्मण्यकर्म इत्यादिना । पुनर्योगं तेषामेव अनुष्ठानं च अवश्यकर्तव्यं शंससि—छित्त्वैनमित्यादिना । अतो मे कतरच्छ्रेय इति संशयः । किं कर्मानुष्ठानं श्रेयः ? किंवा तद्धानम् इति ? प्रशस्यतरं च अनुष्ठेयम् अतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसंन्यासकर्मानुष्ठानयोर्यदनुष्ठात् श्रेयोऽवाप्तिर्मम स्यात् इति मन्यसे तदेकम् अन्यतरत् सहैकपुरुषानुष्ठेयत्वाऽसंभवान्मे ब्रूहि सुनिश्चितम् अभिप्रेतं तवेति ।।१।।

अवतरणम्—एवं प्रश्ने प्रवृत्ते तन्निर्णयाय कर्मयोगस्य सौकर्यम् अभिप्रेत्य प्रशस्यतरत्वमभिधित्सुः—श्रीभगवान् उवाच ।

व्याख्या—संन्यासः कर्मणां परित्यागः । कर्मयोगश्च कर्मणाम् अनुष्ठानं च । उभौ तौ द्वावपि, (यद्यपि) निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते अशुद्धबुद्धेश्चित्तशुद्धिद्वारा ज्ञानोत्पत्तिहेतुत्वात् (तथापि) तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात् केवलात् कर्मयोगो विशिष्यते । ज्ञानसहायस्य कर्मसंन्यासस्य कर्मयोगाऽपेक्षया विशिष्टत्वविवक्षया केवलादिति कर्मसंन्यासस्य विशेषणं कृतं भाष्ये । केवलात् ज्ञानरहितादित्यर्थः । तत्र अयं भावः—अत्र भाष्ये उक्तम्—"आत्मतत्त्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न संभावयितुं शक्यते यस्मात्तस्माद्, अनात्मवित्कर्तृकयोरेव संन्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात् पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसंन्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयाद् यमनियमादिसहितत्वेन च दुरनुष्ठेयात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाऽभिधानम् । इत्येवं प्रतिवचनवाक्यार्थनिरूपणेनाऽपि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयते।" इत्युक्तम् । अत्रानन्दगिरिः—"ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते । कथं तस्मात्कर्मयोगस्य उत्कृष्टत्ववाचो युक्तिर्युक्ता ? इति । तत्राह—पूर्वोक्तेति ।

वैलक्षण्यमेव स्पष्टयति सत्येवेति । स्वाश्रमविहितश्रवणादौ कर्तृत्वविज्ञाने सत्येव पूर्वाश्रमोपात्तकर्मैकदेशविषयसंन्यासात् कर्मयोगस्य श्रेयस्त्ववचनं 'नैतादृशं ब्राह्मणस्यास्तिवित्तम्' इत्यादिस्मृतिविरुद्धम् इत्याशङ्क्याह–यमनियमादीति। आनृशंस्यं क्षमा सत्यम् अहिंसा दम आर्जवम्। प्रीतिः प्रसादो माधुर्यम् अक्रोधश्च यमा दश ॥ दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥ इत्युक्तैर्यमनियमैरन्यैश्चाश्रमधर्मैर्विशिष्टत्वेन अनुष्ठातुम् अशक्यत्वात् उक्तसंन्यासात् कर्मयोगस्य विशिष्टत्वोक्तिर्युक्तेत्यर्थः । न हि कश्चिदितिन्यायेन कर्मयोगस्य इतराऽपेक्षया सुकरत्वाच्च तस्य विशिष्टत्ववचनं श्लिष्टम् इत्याह -सुकरत्वेनचेति। प्रतिवचनवाक्यार्थालोचनात् सिद्धमर्थमुपसंहरति–इत्येवमिति ।" इत्याह । 'पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयते' इति भाष्ये पूर्वोक्तादेन प्रथमश्लोकाऽवतरणेऽस्मिन् अध्यायेऽस्माभिः प्रष्टुराशयः प्रकटीकृतः स ज्ञातव्यः । ततः पूर्वमपि भाष्ये प्रपञ्चितम्— "अत्रोच्यते—आत्मविदो निवृत्तमिथ्याऽज्ञानत्वाद् विपर्ययज्ञानमूलस्य कर्मयोगस्य असंभवः स्यात् । जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियम् आत्मानम् आत्मत्वेन यो वेत्ति तस्यात्मविदः सम्यग्दर्शनाद् अपास्तमिथ्याऽज्ञानस्य निष्क्रियात्मस्वरुपावस्थानलक्षणसर्वकर्मसंन्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलककर्तृत्वाऽभिमानपुरःसरस्य सक्रियात्मस्वरूपाऽवस्थानलक्षणस्य कर्मयोगस्येहशास्त्रे तत्रतत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्-ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावः प्रतिपाद्यते यस्मात्तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलः कर्मयोगो न संभवतीति युक्तमुक्तं स्यात् ।" इति । एतस्यानन्तरं भाष्ये "केषु केषु पुनरात्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माऽभावः प्रतिपाद्यते इति ? अत्रोच्यते—'अविनाशि तु तद्विद्धि' इति प्रकृत्य 'य एनं वेत्ति हन्तारम्' 'वेदाऽविनाशिनं नित्यम्' इत्यादौ तत्र तत्र आत्मविदः कर्माऽभाव उच्यते ।" इत्युक्तम् । एतत्परतश्चोक्तं भाष्ये — 'सम्यग् ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् —'ज्ञानयोगेन सांख्यानाम्' इत्यनेन सांख्यानाम् आत्मतत्त्वविदाम् अनात्मवित्कर्तृककर्मयोगनिष्ठातो निष्क्रियात्मस्वरूपावस्थानलक्षणाया ज्ञानयोगनिष्ठायाः पृथक्करणात् कृतकृत्यत्वेन आत्मविदः प्रयोजनान्तराऽभावात् 'तस्य कार्यं न विद्यते इति कर्तव्यान्तराऽभाववचनाच्च 'न कर्मणामनारम्भात्' 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।' इत्यादिवचनाच्च आत्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात् 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाऽभाववचनात् शारीरं

ज्ञेयः स नित्यसंन्यासी, यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ।।३।।

केवलं कर्म' इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात् 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यनेन च शरीरस्थितिमात्र-प्रयुक्तेष्वपि दर्शनश्रवणादिकर्मसु आत्मयाथात्म्यविदः करोमीतिप्रत्ययस्य समाहितचेतस्तया सदाऽकर्तव्यत्वोपदेशाद् आत्मतत्त्वविदः सम्यग्दर्शनविरुद्धो-मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न संभावयितुं शक्यते ।" इति । तस्मात् 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इत्यत्र केवलात् 'ज्ञानरहितात्' कर्मसंन्यासादित्यर्थः कार्य एव सामर्थ्यादित्यलम् । ज्ञानरहितादित्यत्र ज्ञानं शुद्धबुद्धित्वमपीत्यलम् । अत एव संन्यासस्य द्वैविध्यम् विविदिषुसंन्यासो । विद्वत्संन्यासश्चेति ।।२।।

अवतरणम्—ननु कर्म हि बन्धकारणमिति प्रसिद्धम् । तत्कथं निःश्रेयसकरं स्यात् ? कथं वा कर्मत्यागात् कर्मानुष्ठानं विशिष्येत ? अतआह—ज्ञेय इति ।

व्याख्या—स कर्मयोगी, नित्य संन्यासी, इति ज्ञेयः ज्ञातव्यः । नित्यं सर्वदा, अकर्त्रात्मविज्ञानात् प्रागपि, संन्यासी इति मुख्यसंन्यासिसादृश्यादित्यर्थः । यो न द्वेष्टि दुःखं दुःखसाधनं च । न काङ्क्षति सुखं सुखसाधनं च । एवंविधः कर्मणि वर्तमानोऽपि नित्यसंन्यासीति ज्ञेय इत्यर्थः । अतो नित्यसंन्यासित्वात् तस्य कर्म न बन्धकमिति भावः । हि यस्मात् कारणात्, हे महाबाहो, निर्द्वन्द्वो रागद्वेषादिद्वन्द्वान्निर्गतः, बन्धात् संसारलक्षणात् सुखम् अनायासेन प्रमुच्यते प्रमुक्तो भवति । सत्त्वशुद्धिद्वारा ज्ञानप्राप्तेरिति शेषः । यो रागद्वेषौ न करोति स सर्वदा अकर्त्रात्मविज्ञानात्प्रागपि सादृश्यात् संन्यासीति मन्तव्यः । यथा आत्मविदं मुख्यसंन्यासिनं कर्माणि न निबध्नन्ति, तेषां कर्माणि ज्ञानाग्निना दह्यन्ते, तथैव अनभिसंहितफलानि नित्यनैमित्तिक-कर्माणि अनुष्ठीयमानानि कर्मयोगिनमपि न निबध्नन्ति । कर्मयोगद्वारा समभ्यर्चितस्येश्वरस्य प्रसादेन निवर्तयन्ति च कर्मयोगिनः सर्वाणि दुरितानि । ततश्च वेदान्तवाक्यविचारादिना आत्मसाक्षात्कारं प्राप्य अनायासेनैव कर्मयोगी मुच्यते । आत्मज्ञानरहित आत्मज्ञानयोग्यतारूपतीव्रवैराग्यरहितश्च गौणसंन्यासी तु यमनियमाद्यनुष्ठानसापेक्षतया बहुक्लेशेन साक्षात्कारं प्राप्य प्रमुच्यते इति भावः ।।३।।

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यग् उभयोर्विन्दते फलम् ॥४॥**

अवतरणम्—मुख्यसंन्यासेन आत्मज्ञानसहकृतेन निःश्रेयसं प्राप्यते इति निर्विवादम् । किन्तु मुख्यसंन्यास-कर्मयोगयो 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इत्युक्तदिशा विभिन्नपुरुषानुष्ठेयत्वात् विरुद्धयोः फलेऽपि विरोधो युक्तः । कथं कर्मयोगस्य निःश्रेयसकरत्वम् ? इत्यत आह—सांख्येति ।

व्याख्या—बालाः शास्त्रार्थविवेकशून्याः सांख्ययोगौ, सांख्यम् ज्ञानसंयुक्तः संन्यासः, योगः ज्ञानोपायभूतं समबुद्धित्वादियुक्तं कर्म, कर्मयोग इति यावत् । तौ सांख्ययोगौ, पृथग् विरुद्धभिन्नफलौ प्रवदन्ति । पण्डिताः शास्त्रार्थविवेककुशलाः सांख्ययोगौ पृथग् न प्रवदन्ति । पण्डितास्तु उभयोरेकमेव अविरुद्धं फलं मोक्षाख्यं प्रवदन्तीति भावः । कथम् ? इत्यत आह–एकमपीति । सांख्ययोगयोर्मध्ये एकम्–अपि यथाधिकारं सांख्यं वा योगं वा आस्थितः सम्यग् अनुष्ठितवान् इत्यर्थः । उभयोः फलं विन्दते लभते । उभयोस्तदेव हि निःश्रेयसं फलम् । अतो न फले विरोधोऽस्ति इति भावः । एकमप्यास्थितः–अत्रेदं द्रष्टव्यम्–यथा मधुसूदनीये–'यत्सांख्यैः प्राप्यते स्थानम्' इति वक्ष्यमाणे पञ्चमपञ्चमे श्लोके—"अयं भावः–येषां संन्यासपूर्विका ज्ञाननिष्ठा दृश्यते तेषां तयैव लिङ्गेन प्राग्जन्मसु भगवदर्पितकर्मनिष्ठाऽनुमीयते, कारणमन्तरेण कार्योत्पत्त्ययोगात् । तदुक्तम्—'यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत् । यत्कृत्यं पुरुषेणेह नाऽन्यथा ब्रह्मणि स्थितिः ॥' इति । एवं येषां भगवदर्पितकर्मनिष्ठा दृश्यते तेषां तयैव लिङ्गेन भाविनी संन्यासपूर्वकज्ञाननिष्ठाऽनुमीयते सामग्र्याः कार्याऽव्यभिचारित्वात् । तस्मादज्ञेन मुमुक्षुणाऽन्तःकरणशुद्धये प्रथमं कर्मयोगोऽनुष्ठेयो न तु संन्यासः । स तु वैराग्यतीव्रतायां स्वयमेव भविष्यतीति ।" इत्युक्तम् । तथा यथाधिकारम् एकस्मिन्काले एकमेव संन्यासं वा योगं वाऽनुतिष्ठेत् । कालभेदे तु पर्यायेण मोक्षं प्रति द्वयोरेवाऽनुष्ठानं कर्तव्यं भवतीति । एकमित्यस्याऽभिप्रायः ॥ अपि शब्दाद् पूर्वं यदि द्वयं-योगं ततः सांख्यम् इति क्रमेण हेतुहेतुमद्भावात् कालभेदेन आस्थितस्तर्हि उभयोः फलं विन्दते इति किमुवक्तव्यमित्यर्थः । एकदा द्वयन्तु आस्थातुं न शक्यते विरुद्धत्वादिति भावः ॥ "ननु संन्यासकर्मयोगशब्दाभ्यां प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथमिह अप्रकृतं ब्रवीति ? नैष दोषः । यद्यपि अर्जुनेन केवलं संन्यासं कर्मयोगञ्च अभिप्रेत्य प्रश्नः कृतस्तथापि भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतञ्च विशेषं

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥५॥**

---

तत्र संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ-सांख्ययोगाविति । तौ एव हि संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगाविति भगवतो मतम् । अतो न अप्रकृतप्रक्रिया ।" इति भाष्यम् ॥ अर्थात्—केवलस्य संन्यासस्य ज्ञानद्वारैव निःश्रेयसकरत्वम् । केवलस्य कर्मयोगस्य च समबुद्धित्वादिसंयुक्तस्यैव सत्त्वशुद्धिद्वारा निःश्रेयसकरत्वं स्यादिति सांख्ययोगयोर्निःश्रेयसैकफलकत्वे उक्ते अर्जुनाभिप्रेतसंन्यासकर्मयोगयोरपि ज्ञानद्वारा निःश्रेयसरूपैकफलकत्वम् उक्तं भवतीति न अपृष्टाभिधानमित्याशयः ॥ इदमत्र बोध्यम्—संन्यासो द्विविधः—विद्वत्कर्तृकः, विविदिषुकर्तृकश्चेति । विविदिषुकर्तृकोऽपि द्विविधः-पूर्णविरक्तकृतोऽपूर्णविरक्तकृतश्चेति । तत्र विद्वत्कर्तृकस्य संन्यासस्य साक्षादेव मोक्षजनकत्वम् । विविदिषुपूर्णविरक्तकृतस्याऽपि अचिरेण ज्ञानप्राप्तिद्वारा जीवन्मुक्तताजनकत्वम् । अपूर्णविरक्तविविदिषुकृतस्य तु बहुक्लेशेन ज्ञानप्राप्तेर्मुक्तिजनकत्वम्, अस्य चित्तशुद्धेरभावात् । एददपूर्णविरक्तविविदिषुकृतसंन्यासापेक्षयैव कर्मयोगस्यविशिष्टत्वाऽभिधानं सौकर्यमपेक्ष्य कृतं भगवतेति ॥४॥

अवतरणम्—सांख्ययोगयोरेकस्याऽपि सम्यगनुष्ठानादुभयोः फलं कथं विन्दते इति स्पष्टी करोति भगवान्—यदिति ।

व्याख्या—सांख्यैर्ज्ञानिष्ठैः संन्यासिभिः, यत्स्थानं मोक्षाख्यं, प्राप्यते, तद् योगैरपि योगिभिरपि, ज्ञानप्राप्त्युपायत्वेन ईश्वरे समर्प्य कर्माणि आत्मनः फलम् अनभिसंधाय येऽनुतिष्ठन्ति ते योगिनस्तैरपि, परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यते प्राप्यते । अतो यः सांख्यं च योगं च एकम्, एकफलकम्, पश्यति, स पश्यति, स सम्यक् पश्यतीत्यर्थः । एवञ्च अर्जुनस्य प्रश्नाऽनुरूपं ज्ञानरहित—ज्ञानयोग्यतारूपतीव्रवैराग्यरहितसंन्यासाऽपेक्षयैव सौकर्येण कर्मयोगस्य विशिष्टत्वाभिधानप्रतिवचनम् । विज्ञानसहितस्तु विज्ञानयोग्यतारूपतीव्रवैराग्यसहितश्च संन्यास एव कर्मयोगाद् विशिष्ट इति स्थितम् । 'ज्ञेयः स नित्यसंन्यासी'ति गौणसंन्यासित्वविधानात् 'यत्सांख्यैः प्राप्यते स्थानम्' इति यच्छब्दयोगाच्च बहूक्तबहुवक्ष्यमाणग्रन्थाच्च तथैव प्रतीतेरित्यलम् ॥५॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ।।६।।
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ।।७।।

---

अवतरणम्—एवं तर्हि योगात् संन्यास एव विशिष्यते । कथं तर्हि इदमुक्तम् 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इति ? शृणु तत्र कारणम् । त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं च अभिप्रेत्य तयोरन्यतरः कः श्रेयान् ? तदनुरूपं प्रतिवचनं मया उक्तं कर्मसंन्यासात् कर्मयोगो विशिष्यते इति, ज्ञानम् अनपेक्ष्य । सांख्यम् इति मया ज्ञानापेक्षस्तु संन्यासोऽभिप्रेतः । परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिकः, स तादर्थ्याद् योगः संन्यास इति च उपचर्यते । कथं तादर्थ्यम् ? इत्युच्यते—संन्यासस्तु-इति ।

व्याख्या—हे महाबाहो, संन्यासस्तु पारमार्थिकः, सम्यग्दर्शनसहित इति यावत् । अयोगतः कर्मयोगं विना आप्तुं प्राप्तुम्, दुःखम् कठिनः । योगयुक्तः वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः मुनिः "मननादीश्वरस्वरूपस्य मुनिः ।" "ब्रह्म परमात्मज्ञानलक्षणत्वात् प्रकृतः संन्यासो ब्रह्म उच्यते । 'न्यास इति ब्रह्म ब्रह्म हि परः' (ना. उ. १।७८) इति श्रुतेः । ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणम्, न चिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति । अतो ज्ञानरहित—ज्ञानयोग्यतारूप-तीव्रवैराग्यरहितकर्मसंन्यासापेक्षया क्षिप्रपरमार्थसंन्यासप्रापकत्वात् कर्मयोगस्य श्रेयस्त्वाऽभिधानं मया कृतम् इति वाक्यार्थः ।। अत्र श्रीधरस्वामी "अतश्चित्तशुद्ध्यै प्राक् कर्म योग एव संन्यासाद् विशिष्यते" इति पूर्वोक्तं सिद्धम् । तदुक्तं वार्तिककृद्भिः-'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ।।' इति ।" इत्युक्तवान् ।।६।।

अवतरणम्—ननु कर्मयोगयुक्तः कदा जीवन्मुक्तो भवति ? अत-आह—योगेति ।

व्याख्या—(यदा पुनरयं पुरुषः सम्यग्दर्शनप्राप्त्युपायेन योगेन युक्तः) योगयुक्तः, विशुद्धात्मा विशुद्धान्तःकरणः, विजितात्मा विजितदेहः, जितेन्द्रियः, जितबाह्यकरणः (च सन्) सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन्, शृण्वन्,स्पृशन्, जिघ्रन्, अश्नन्, गच्छन्, स्वपन्, श्वसन्।।८।।
प्रलपन् विसृजन्, गृह्णन् उन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ।।९।।

---

स्तम्बपर्यन्तानां भूतानाम् आत्मभूत आत्मा प्रत्यक् चेतनो यस्य सः, सम्यग्दर्शी इत्यर्थः। (भवति, तदा स तत्र एवं वर्तमानो लोकसंग्रहाय कर्म) कुर्वन् अपि, न लिप्यते, न कर्मभिर्बध्यते इत्यर्थः। तदा जीवन्मुक्तो भवतीत्यभिप्रायः ।।७।।

अवतरणम्—न चासौ सम्यग्दर्शी परमार्थतः किञ्चित्करोति। अत-उच्यते—नैवेति ।

व्याख्या—तत्त्वविद् आत्मनो याथात्म्यं तत्त्वम्, तद् वेत्तीति तत्त्ववित परमार्थदर्शी, युक्तः सन् समाहितः सन्, पश्यन्, शृण्वन्, स्पृशन्, जिघ्रन्, अश्नन्, गच्छन्, स्वपन्, श्वसन्, प्रलपन्, विसृजन्, गृह्णन्, उन्मिषन् निमिषन् अपि। अपेः सर्वत्र संबन्धः। शरीरस्थितिमात्रप्रयुक्तानि दर्शनादिकर्माणि कुर्वन्, अपि, इन्द्रियाणि प्राणादेरपि अस्योपलक्षणार्थतया इन्द्रियादीनि चक्षुरादीनि (एव) इन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते। नत्वहम् आत्मा, इति धारयन् इत्यवधारयन् 'अहं नैव किञ्चित् करोमि' इति मन्येत चिन्तयेत्। तत्र दर्शन-श्रवणस्पर्शनघ्राणाशनानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां पञ्चानां ज्ञानेन्द्रियाणां व्यापाराः। गतिः पादयोः, प्रलापो वाचः, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोरिति पञ्चकर्मेन्द्रियव्यापाराः। श्वासः प्राणस्य। श्वसन् इति प्राणादि वायुपञ्चकव्यापारोपलक्षणम्। उन्मेषनिमेषणे कूर्माख्यप्राणस्य। इदञ्च नागादिवायुपञ्चकव्यापाराणामुपलक्षणम्। स्वपन् इति बुद्धेर्व्यापारः। इदञ्-चोपलक्षणम् अन्तःकरणचतुष्टयस्य व्यापाराणाम्। क्रमस्तु मूले अविवक्षितः। एवञ्च असौ आत्मभूतस्तत्त्ववित् परमार्थतः किञ्चित् 'नैव करोति। अतो नैव किञ्चित् करोमि' इति युक्तं तस्य चिन्तनम्। अत्र भाष्ये—"यस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव पश्यतः सम्यग्दर्शिनः (नैव किञ्चत्करो-मीतिचिन्तनम्) तस्य सर्वकर्मसन्यास एवाधिकारः कर्मणोऽभावदर्शनात्। न हि मृगतृष्णिकायाम् उदकबुद्धया पानाय प्रवृत्त उदकाऽभावज्ञाने (जाते) अपि तत्रैव पानप्रयोजनाय प्रवर्तते इत्युक्तम् ।।८-९।।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥
कायेन मनसा बुद्धया केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥११॥
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥

---

अवतरणम्—ननु यस्य 'करोमी'त्यभिमानोऽस्ति, अविशुद्धचित्तत्वेन तत्त्वज्ञानस्याऽप्राप्तेः। संन्यासोऽपि नास्ति, किन्तु कर्मणि प्रवृत्तस्तस्य किं कर्मलेपो दुर्वारः ? अत आह—ब्रह्मेति ।

व्याख्या—यः कर्मयोगी अतत्त्ववित् कर्माणि शास्त्रविहितानि ब्रह्मणि ईश्वरे आधाय 'ईश्वरार्थं करोमि भृत्यइव स्वाम्यर्थम्' इत्येवं निक्षिप्य सङ्गं मोक्षेऽपि फले प्रीतिं त्यक्त्वा करोति, स सोऽपि पापेन बन्धनेन, मुमुक्षुं प्रति पुण्यस्याऽपि बन्धकत्वात् अम्भसा जलेन पद्मपत्रमिव, न लिप्यते. न संबध्यते ॥१०॥

अवतरणम्—ननु यो हि अतत्वविद् ब्रह्मण्याधाय सङ्गं त्यक्त्वा कर्म करोति, तस्य कर्मणः किं फलं स्यात् ? अत आह—कायेति।

व्याख्या—(केवलं सत्त्वशुद्धिमात्रफलमेव तस्य कर्मणः स्यात्, यस्मात्) योगिनः कर्मिणः सङ्गं फलविषयां प्रीतिं त्यक्त्वा, (केवलेन) 'ईश्वरायैव करोमि न मम फलाय' इति ममत्वबुद्धिरहितेन) कायेन देहेन, (केवलेन) मनसा, (केवलया) बुद्धया, केवलैः 'ईश्वरायैव कर्म करोमि, न मम फलाय' इति ममत्वबुद्धिरहितैः. इन्द्रियैः ज्ञानकर्मेन्द्रियैः' अपि, च, कर्म शास्त्रविहितम् आत्मशुद्धये सत्त्वशुद्धये कुर्वन्ति। 'केवलशब्दः कायादिभिरपि प्रत्येकं संबद्ध्यते सर्वव्यापारेषु ममतावर्जनाये'ति भाष्यम्। यस्माद् अज्ञस्य ईश्वरार्पणबुद्धयाऽनुष्ठितं कर्म बुद्धिशुद्धिफलकम् तस्मात् तत्रैव तवाधिकार इति कुरु कर्मैवेति वाक्यार्थः ॥११॥

अवतरणम्—इतश्च त्वया फलसङ्गं त्यक्त्वा कर्मानुष्ठानं कर्तव्यम् इत्याह—युक्त इति ।

व्याख्या—युक्तः समाहितः सन् कर्मफलं त्यक्त्वा 'ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं बुद्ध्वा (शास्त्रीयं कर्म कुर्वाणः) "नैष्ठिकीं

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥१३॥

---

निष्ठायां भवां शान्ति मोक्षाख्याम् आप्नोति प्राप्नोति सत्त्वशुद्धिज्ञानप्राप्ति-सर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः" इति भगवान् शङ्कराचार्यः। अयुक्तः असमाहितः (तु) कामकारेण कामप्रेरिततया फले 'मम फलायेदं कर्म-करोमि' इत्येवं सक्तः बुद्धि कुर्वन् निबध्यते। अतस्त्वं युक्तो भवेत्यर्थः ॥१३॥

अवतरणम्—एवं तावत् चित्तशुद्धिशून्यस्य केवलात्संन्यासात् कर्म-योगो विशिष्यते इति प्रपञ्चितम्। इदानीं शुद्धचित्तस्य परमार्थदर्शनयोग्यता-रूपतीव्रवैराग्यसम्पन्नस्य प्राप्तपरमार्थदर्शनस्य च सर्वकर्मसंन्यास एव श्रेयान् इत्याह—सर्वेति।

व्याख्या—(यस्तु परमार्थदर्शी सः) वशी जितेन्द्रियः। एतेन कार्यकरण-संघातपारवश्यं पर्युदस्तम्। देही देहसम्बन्धाऽभिमानाभासवान्, सर्वकर्माणि नित्यनैमित्तिककाम्यप्रतिषिद्धानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या कर्मादौ अकर्मसंदर्शनेन हेतुना संन्यस्य संत्यज्य, नैव कुर्वन् (स्वयम्) न कार-यन्, न (च) देहेन्द्रियादीनि क्रियासु प्रवर्तयन्, नवद्वारे—सप्त शीर्षण्यानि विषयोपलब्धिद्वाराणि, द्वे अधस्तने मूत्रपुरीषविसर्जनार्थे द्वारे, इति नवद्वाराणि सन्ति यस्मिन् तस्मिन्। पुरे पुरमिव पुरम्, तस्मिन्, शरीरे आत्मैकस्वामिके तदर्थप्रयोजनैश्च इन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरै-रिवाऽधिष्ठिते सुखम् आस्ते तिष्ठति त्यक्तवाङ्मनःकायचेष्टो यतिर्निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजनो भवतीति सुखम् आस्ते इत्युच्यते। यद्यपि सर्वो हि देही संन्यासी असंन्यासी वा देहे एव आस्ते तथापि न अनर्थकं विशेषणम्। यस्तु अज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी, स 'गेहे भूमौ आसने वा आस्ते' इत्यभिमन्यते। न हि तस्य 'देहे आसेऽहम्' इति प्रत्ययः संभवति। तस्य देह एवात्मेति भानात्। देहादिसंघातव्यतिरिक्तात्म-दर्शिनस्तु 'देहे आसेऽहम्' इति प्रत्यय उपपद्यते। देहादिकर्मणाम् आत्मनि अविद्ययाऽध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यासश्च तस्योप-पद्यते। उत्पन्नसम्यग्दर्शनस्य सर्वकर्मसंन्यासिनोऽपि जीवन्मुक्तस्य प्रारब्ध-फलककर्मसंस्कारशेषानुवृत्त्या देहे आसनं भवति। देह एव प्रारब्धकर्मफल-शेषभोगोपपत्तेः प्रारब्धफलककर्मणां भोगादेव क्षयो न ज्ञानादिति न्यायस्य ब्रह्मसूत्रे उपपादितत्वात्। एवञ्च 'देहे (पुरे) आस्ते' इति विशेषणफलम्

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

---

अस्त्येव विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् । यद्यपि 'सर्वकर्माणि मनसा संन्यस्य' इत्यनेनैव 'कार्यकरणकर्माणि सर्वाणि 'नाहं तेषां कर्ता' इत्येवं विवेकज्ञानेन संत्यज्य' इत्यर्थकेन प्रयोज्यप्रयोजकसर्वविधकर्मणां परित्यागस्य बोधः सिद्ध एवेति नैव कुर्वन् न कारयन् इति पुनर्विशेषणं व्यर्थम् तथापि परसमवायि-व्यापाराणां त्यागेऽपि आत्मसमवायि तु कर्तृत्वं कारयितृत्वञ्च स्याद् इति कस्यचिदाशङ्का स्यात्, तां वारयितुं पुनस्तद्विशेषणद्वयम् कृतम् । नास्ति आत्मनः स्वतः कर्तृत्व कारयितृत्वं चेत्याशयः । उक्तं हि 'अविकार्योऽयमुच्यते' इति । 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति च । 'ध्यायतीव लेलायतीव' (बृह० ४।३।७) इति श्रुतिश्च । उपाधिगतैव सर्वा विक्रिया नात्मनः स्वतोऽस्तीति सिद्धान्तः । अत्राभिनवगुप्ताचार्याः—"यथा वेश्मान्तर्गतस्य पुंसो न गृहगतैर्जीर्णत्वादिभिर्योगः । एवं मम चक्षुरादिच्छिद्रगवाक्षनवकालङ्कृत-देहगेहगतस्य न तद्धर्मयोगः" इति ॥१३॥

अवतरणम्—यदुक्तम्-आत्मनः स्वतः कर्तृत्वं कारयितृत्वं च नास्तीति तत्प्रपञ्चयति—नेति ।

व्याख्या—प्रभुर्देहादिस्वामी, देही, आत्मा, लोकस्य लोक्यते प्रकाश्यते इति लोको दृश्यो देहादिसंघातः, तस्य कर्तृत्वं न सृजति 'कर्म कुरु' इत्येवं देहेन्द्रियादि न प्रेरयति । एतेन आत्मनः कारयितृत्वं नास्तीति उक्तम् । तस्य कर्तृत्वमपि नास्तीत्याह—न कर्माणीति । न, न च, कर्माणि (लोकस्य) क्रियन्ते इति कर्माणि, ईप्सिततमानि रथघटप्रासादादीनि वस्तूनि, तानि (स्वयम्) सृजति उत्पादयति करोति । 'अतो नैव कुर्वन् न कारयन्' इति यदुक्तं तत् तथैव । ननु प्रभुत्वेन स रथादिकृतवतो लोकस्य जडवर्गस्य देहादे रथादि-फलेन संबन्धं सृजेद् ? नेत्याह—न कर्मफलेति । न, न च, कर्मफलसंयोगं कर्म-फलभोगम् सृजति । अनेन भोजयितृत्वम् अपि आत्मनो वारितम् । उपलक्षण-मेतत् भोक्तृत्वनिषेधस्याऽपि । नाऽपि आत्मा स्वयं कर्मफलं भुङ्क्ते इत्यर्थः । ननु यदि देही स्वतः किमपि न करोति, न च कारयति तर्हि कः कुर्वन् कारयंश्च प्रवर्तते ? इत्यत आह—स्वभावस्तु प्रवर्तते इति । "स्वभावस्तु स्वो भावः स्वभावः । अविद्यालक्षणा प्रकृतिर्माया प्रवर्तते 'दैवी ह्री'त्यादिना (७।१४)

**ना दत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥१५॥**

---

वक्ष्यमाणा ।" इति भाष्यम् ॥ ननु "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यो उन्निनीषत, एष एवाऽसाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते ।" इति श्रुत्या ईश्वरस्य कारयितृत्वं प्रसज्यते इति चेद्—अस्याऽपि स एव परिहारस्तन्त्रेण—न कर्तृत्वमित्यादि । प्रभुरीश्वरो जीवलोकस्य कर्तृत्वादिकं न सृजति किन्तु जीवस्यैव स्वभावोऽविद्यैव कर्तृत्वादिरूपेण प्रवर्तते । अनाद्यविद्याकामवशात् प्रवृत्तिस्वभावो जीवलोको जडवर्गः परमेश्वराऽभिन्नात्मसत्तामात्रेण हेतुना स्वयमेव प्रवर्तते इति सिद्धान्तः । अतो न वैषम्यनैर्घृण्ये ईश्वरस्येति ब्रह्मसूत्रे विस्तरः । सत्तामात्रेण ईश्वरस्य स्फूर्तिप्रदायित्वं सूर्यस्येव घटादिप्रकाशकत्वमभिप्रेत्य तु तथा व्यपदेशः श्रुतौ । परमार्थतस्तु भगवानेव तथा तथा भाति अविद्यामोहितस्येति सिद्धान्तः ॥१४॥

अवतरणम्—ननु परमेश्वराऽभिन्ने आत्मनि कर्तृत्व-कारयितृत्व-कर्मफलसंयोजकत्वाऽभावेऽपि ईश्वरात्मनि समर्पितःसमस्तव्यापारो येन तस्य ईश्वरैकशरणस्य भक्तस्य भगवान् सुकृतं दुष्कृतं वा तदनुग्रहार्थम् आददीत ? इति कस्यचिच्छङ्का स्यात् । तन्निर्णयाय भगवान् आह—नादत्ते इति ।

व्याख्या—विभुः परमेश्वरः, कस्यचित् स्वभक्तस्याऽपि किं पुनरभक्तस्य । पापं दुष्कृतं, नादत्ते न गृह्णाति । सुकृतं पूजादिकं यागदानहोमादिकं च, नैव आदत्ते, नैव गृह्णाति । परमार्थतस्तु इति शेषः । 'ध्यायतीव लेलायतीव' इति श्रुतेः परमात्मनः सर्वक्रियाशून्यत्वात् । किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यते ? इत्यत आह—अज्ञानेनेति । अज्ञानेन आवृतमिति आवरणकथनाद् उत्तरत्र ज्ञानेन अज्ञान नाशितम् इत्युक्तेश्च अज्ञानस्य ज्ञानाऽभावरूपत्वं वारितम् । न हि अभावः किमपि आवृणोति । न च अभावस्य स्वप्रतियोगिना प्रध्वंसो भवतीति । अज्ञानेन अविद्यया भगवन्मायया ज्ञानं विवेकविज्ञानं जन्तूनाम् आवृतं तिरोहितम् । तेन ज्ञानतिरोधानेन हेतुना, जन्तवः संसारिणोऽविवेकिनो, मुह्यन्ति । (करोमि कारयामि, भोक्ष्ये भोजयामि' इत्येवं मोहं भ्रमं गच्छन्ति । पूजादिकयागादिकसर्वव्यवहारो जन्तूनां पूजायागादिजन्यधनपुत्रादिफललाभादिः सकलव्यवहारश्च मायाकारित एवेति भावः । सा च माया परमेश्वरस्यैव बहिरङ्गा शक्तिरिति न विस्मर्तव्यम् । तया च अनादिकालादेव मोहितोऽयं पुरुषः

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषाम् आदित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

---

स्वात्मानं सच्चिदानन्दं नावधारयति। यदा तु ईश्वरानुग्रहादेव स्वात्मानं मायामुक्तम् अवधारयति तदा आनन्दमात्रोऽवशिष्यते। तथोक्तम्—'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजम्, अनिद्रम्, अस्वप्नम् अद्वैतं बुध्यते तदा॥' इति॥ अतस्तस्यास्तरणाय परमेश्वरः शरणीकरणीय एव जन्तुभिरित्यपि ध्येयम् ॥१५॥

अवतरणम्—ननु तर्हि अनादिमायावृतविवेकविज्ञानवतां कथं संसारनिवृत्तिः ? तत्राह—ज्ञानेति।

व्याख्या—येषां तु जन्तूनाम्, आत्मनोऽन्तःकरणस्य, तद् ज्ञानावरणकरम्, अज्ञानम् अविद्यालक्षणम् आत्मनः परमात्मनो ज्ञानेन तत्त्वविज्ञानेन नाशितम्, तेषां ज्ञानं तत्त्वविज्ञानम्, आदित्यवत् सूर्यो यथा स्वोदयमात्रेण सहकारिकारणान्तरनिरपेक्षतया घटपटादि प्रकाशयति तथैवं 'अहमस्मि परं ब्रह्म'ेति तत्त्वविज्ञानमपि स्वोदयमात्रेण सहायान्तरनिरपेक्षतयैव तत् श्रुत्यादौ प्रसिद्धम्—सत्यज्ञानानन्तादिरूपम्। परं परमार्थतत्त्वं परं ब्रह्म 'आत्मतत्त्वं प्रकाशयति अभिव्यनक्ति। ततस्तेषां संसारनिवृत्तिरिति भावः ॥१६॥

अवतरणम्—विदुषां विविदिषूणाञ्च अन्तरङ्गाणि विद्यापरिपाकसाधनानि उपदिदिक्षुराह—तदिति।

व्याख्या—तद्बुद्धयः तस्मिन् परमार्थतत्त्वे परब्रह्मणि बुद्धिर्येषां ते। तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते। तन्निष्ठाः तस्मिन् परब्रह्मणि निष्ठा अभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य परब्रह्मण्येव अवस्थानं येषां ते। तत्परायणाः तदेव परं ब्रह्म परम् अयनं परा गतिर्येषां ते। केवलात्मरतय इत्यर्थः। ज्ञाननिर्धूतकल्मषाः ज्ञानेन ब्रह्मतत्त्वज्ञानेन निर्धूतो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते। यतय इत्यर्थः। अपुनरावृत्तिम् अपुनर्देहसंबन्धं गच्छन्ति प्राप्नुवन्ति। तद्बुद्धित्व-तदात्मत्व-तन्निष्ठत्व-तत्परायणत्वानि विद्यापरिपाकेऽन्तरङ्गसाधनानि सन्तीत्युपदेशोऽत्र फलति। "तस्मिन्परमार्थ-

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥**

तत्त्वे परस्मिन् ब्रह्मणि वाह्यं विषयम् अपोह्य गता प्रवृत्ता श्रवणमनन-निदिध्यासनैरसकृदनुष्ठितैर्बुद्धिः साक्षात्कारलक्षणा येषां ते तथेति प्रथम-विशेषणार्थः । वोद्धा जीवो वोद्धव्यं ब्रह्मेति वोद्धृवोद्धव्यत्वं कल्पितं, वस्तुतस्तु न भेदोऽस्तीति तदात्मान इति विशेषणम् । देहादौ आत्मत्वाऽभिमानं दूरीकृत्य ब्रह्मण्येव अवस्थानम् 'अहमस्मि परं ब्रह्मे'ति तत्तदनुष्ठीयमानकर्मप्रति-बन्धान्न सिद्धयतीति शङ्कासमाधानाय तन्निष्ठा इति विशेषणम् । सर्वकर्माणि संन्यस्य तत्संभवतीत्याशयात् । तथापि पुरुषार्थान्तराऽपेक्षाप्रतिवन्धात्कथं यथोक्ते ब्रह्मण्येवावस्थानं सिद्धयेत् ? तत्राह—तत्परायणा इति । यथोक्ता-नाम् अधिकारिणां परमपुरुषार्थस्य परब्रह्माऽनतिरेकाद् नाऽन्यत्राऽपेक्षेति केवलात्मरतय इत्यर्थः । आश्रमान्तरेषु उक्तविशेषसंपत्त्या मोक्षफलशालि-त्वम् असंभावितमिति मन्वानो (भगवान् भाष्यकारो) विशिनष्टि—"यतय इत्यर्थं इति ॥" इत्यानन्दगिर्यनुसारिणी व्याख्याऽत्र ॥१७॥

अवतरणम्—येषां ज्ञानेन आत्मनोऽज्ञानं नाशितं ते पण्डितास्तत्त्वं कथं पश्यन्ति ? इत्युच्यते—विद्येति ।

व्याख्या—विद्याविनयसम्पन्ने—विद्या च विनयश्च, विद्या वेदार्थ-ज्ञानम्, विनय उपशमः, ताभ्याम् सम्पन्नो विद्वान् विनीतश्च तस्मिन्, उत्तम-संस्कारवति, सात्त्विके, ब्राह्मणे विप्रे, गवि संस्कारहीनायाम्, मध्यमायां राजस्यां गवि, हस्तिनि, शुनि चैव श्वपाके च, अत्यन्तमेव केवलतामसे हस्त्यादौ च, पण्डिताः, येषामज्ञानमात्मनो नाशितं ज्ञानेन ये मोक्षगामिनस्ते । समदर्शिनः, समम् एकम्, सत्त्वरजस्तमोभिर्गुणैस्तज्जैः संस्कारैश्च अत्यन्तमे-वाऽस्पृष्टम्, अविक्रियं, ब्रह्म, द्रष्टुं शीलं येषां ते भवन्ति ॥ कूटस्थम् अद्वि-तीयम्, असङ्गं च ब्रह्म सर्वत्र ये पश्यन्ति, सत्ये तादृशब्रह्मण्येवाधिष्ठाने मिथ्याभूतं सर्वं जगद् मूढैरविद्ययाऽध्यारोपितमेवास्ति । वस्तुतस्तु ब्रह्मैव एकं कूटस्थं सर्वमस्तीति ये पश्यन्तीति यावत् । त एव पण्डिताः सन्तीति मन्तव्यम् इत्यर्थः ॥१८॥

अवतरणम्—ननु संस्कारगुणाऽपेक्षया विषमेषु ब्राह्मणगवादिषु सम-दर्शिनः पण्डिता दोषवन्तः स्युः ? तथा च अभोज्यान्नाः स्युः ? 'तस्यान्नम् अभोज्यम्' इत्युपक्रम्य 'समाऽसमाभ्यां विषमसमे पूजातः' (गौ. स्मृ. १७।२०)

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥१९॥
न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत्प्राप्य चाऽप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥२०॥

---

इति स्मृतेरितिचेद् मैवम् । न ते दोपवन्तः सन्ति । कथम् ? अतआह—इहैवेति ।

व्याख्या--येषां मनोऽन्तःकरणम् साम्ये सर्वभूतेपु समभावे ब्रह्मणि स्थितं निश्चलीभूतं तैः समदर्शिभिः पण्डितैरिहैव जीवद्भिरेव सर्गो जन्म जितो वशीकृतः । हि यस्मात् कारणात् । ब्रह्म आत्मा । निर्दोपम्-दोपवतामपि श्वपाकादीनां दोपैरस्पृष्टं समम् एकम् । अस्तीतिशेपः । नाऽपि श्वपाकादीनां स्वस्वगुणभेदैर्भिन्नम्—निर्गुणत्वाद्, आत्मतत्त्वस्य । 'अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः' इति वक्ष्यमाणत्वात् । नापि दर्शनान्तरस्वीकृता अन्त्या विशेपा आत्मनः प्रतिशरीरं भेदकाः, तेपां सत्त्वे प्रमाणाऽभावाद् । अतो ब्रह्म निर्दोपमेव । तस्मात्, सर्वत्र निर्दोपैकब्रह्मदर्शनात्, ते समदर्शिनः पण्डिताः, ब्रह्मणि ब्रह्मण्येव स्थिताः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेर्ब्रह्मभूतास्ते । तस्मात् पण्डितान् दोपगन्धमात्रमपि न स्पृशति । 'समासमाभ्यां विपमसमे पूजातः' (गौ. स्मृ. १७।२०) इति सूत्रं तु कर्मिविपयं, न ज्ञानिविपयं, 'पूजातः' इति विशेपणात् । इदञ्च समदर्शनं सर्वकर्मसंन्यासिविपयं प्रस्तुतम्—'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।' (५।१३) इत्यारभ्य आ अध्यायपरिसमाप्तेः । अतो विपयभेदान्न विरोधः । तथाहि—'तस्यान्नम् अभोज्यम्' इत्युपक्रम्य गौतमः स्मरति 'समाऽसमाभ्यां विपमसमे पूजातः' (१७।२०) इति । अत्र समासमाभ्यामिति चतुर्थीद्विवचनान्तम् । विपमसमे इति समाहारद्वन्द्वे एकवद्भावेन सप्तम्येकवचनम् । पूजात इति हेत्वर्थपञ्चम्यन्तात् तसिल् । तथा च अध्ययनादिभिः समाय विपमे पूजाप्रकारे कृते, असमाय समे पूजाप्रकारे कृते तादृशपूजाहेतोः पूजयिता दोपवान् अभोज्यान्नो भवतीत्यर्थः । एवञ्च कर्मिविपयमिदं सूत्रमिति स्पष्टम् ॥१९॥

अवतरणम्--यस्मान्निर्दोपं समं ब्रह्म आत्मा तस्माद्—नेति ।

व्याख्या—ब्रह्मविद् यथोक्तः, ब्रह्मणि स्थितः अकर्मकृत्संन्यासीत्यर्थः । प्रियम् इष्टम् प्राप्य लब्ध्वा । न प्रहृष्येत् प्रहर्पं न गच्छेत् । अप्रियम् अनिष्टं

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥२१॥

---

प्राप्य लब्ध्वा च न उद्विजेत् उद्वेगं न गच्छेत् । परस्मैपदम् आर्षम् । देहमात्रात्मदर्शिनां हि प्रियाऽप्रियप्राप्ती हर्षविषादयोः स्थाने भवतः । न केवलात्मदर्शिनः, तस्य प्रियाऽप्रियप्राप्त्यसंभवात् । (किञ्च) स्थिरबुद्धिः सर्वभूतेषु एकः समो निर्दोष आत्मा इति स्थिरा बुद्धिर्यस्य सः (स्यात्) असंमूढः संमोहवर्जितः (च) स्यात् । जीवन्मुक्तस्य स्वाभाविकमेव चरितं मुमुक्षुणा प्रयत्नपूर्वकमनुष्ठेयम् इति सूचयितुं लिङ्प्रत्ययौ । किञ्च जीवन्मुक्तविषये संभावनायां लिङ्, तस्य हर्षोद्वेगयोः सभावना नास्तीत्यर्थः । मुमुक्षुविषये तु विधौ लिङ्प्रत्यय इति विवेकः । अपि च 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इति द्वितीये जीवन्मुक्तचरितत्वेन प्रोक्तमपि पूर्वार्द्धम् इह पुनरुक्तम् मुमुक्षोरावश्यकत्वद्योतनार्थम् ॥२०॥

अवतरणम्—ब्रह्मणि स्थितस्य विशेषान्तरमाह—बाह्येति ।

व्याख्या—(किञ्च) ब्रह्मणि स्थित इति पूर्वश्लोकादनुवर्तते । ब्रह्मणि ब्रह्मण्येव स्थितः अकर्मकृत् संन्यासी, बाह्यस्पर्शेषु—स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः । बाह्याश्च ते स्पर्शाश्चेति तेषु, असक्तात्मा असक्त आत्मा अन्तः करणं यस्य स विषयेषु प्रीतिवर्जितः सन्, आत्मनि प्रत्यगात्मनि यत् सुखम् स्वरूपभूतम् ( अस्ति तत्सुखम् ) विन्दति लभते । विषयेषु रागरूपम् अन्तःकरणस्याऽऽवरणं यावद्यावद्, निवर्तते तावन् तावद् आत्मस्वरूपाऽभिन्नं सुखम् अन्तःकरणे अभिव्यक्तं भवतीत्यर्थः । न केवलं बाह्यस्पर्शेष्वसक्तात्मा सन् शमवशादेव परिमितमेव स्वरूपसुखं विन्दति किन्तु ब्रह्मसमाधिना समाहितान्तःकरणः सन् समाधानाधीनसम्यग्ज्ञानद्वारा स्वरूप-सुखम् अनन्तं प्राप्नोतीत्याह—स ब्रह्मेति । ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिः तेन युक्तः समाहितः, तस्मिन् व्यापृत आत्माअन्तः करणं यस्य सः सन्, स ब्रह्मविद् ब्रह्मसाक्षात्कारवान् ब्रह्मणि स्थितः अक्षय्यं पूर्णम् अनन्तम् निरतिशयम् सुखम् आत्मस्वरूपभूतम् आनन्दम् अश्नुते अनुभवति । ब्रह्मसमाधानाधीनसम्यग्ज्ञानद्वारा निरतिशयं ब्रह्मानन्दसुखम् उपलभते इत्यर्थः । तस्माद् बाह्यविषयप्रीतेः क्षणिकायाः सकाशाद् इन्द्रियाणि निवर्तयेद् आत्मनि अक्षयसुखार्थीति भावार्थः ॥२१॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥
शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

---

**अवतरणम्**—इतश्च विषयप्रीतेरिन्द्रियाणि निवर्तयेद् अदुःखार्थी--ये हीति ।

**व्याख्या**--हे कौन्तेय, हि यस्माद्, ये भोगा भुक्तयः, संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्योजाताः, ते भोगाः, (अविद्याकृतत्वाद) दुःखयोनयं एव, दुःखाणां कारणानि एव, दृश्यते हि (आध्यात्मिकाधिभौक्तिकाधिदैविकानि) सर्वाणि दुःखानि विषयेन्द्रियसंस्पर्शजभोग-कृतान्येव । यथोक्तं भगवता पतञ्जलिना-'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।' इति । सर्वं सर्वमपि विषयसुखं, दृष्टम् आनुश्रविकञ्च विवेकिनः परिज्ञातक्लेशादिस्वरूपस्य दुःखमेव । परिणामतापसंस्कारात्मकदुःखैरनुविद्धत्वात् सुखदुःखमोहात्मकसत्त्वरजस्तमोगुणवृत्तिविरोधाच्चेत्यन्यत्रविस्तरः । दुःखयोनय एवेति एव शब्दात् यथेह लोके तेषां दुःखयोनित्वमेव तथा परलोकेऽपि तेषां दुःखयोनित्वमेवेति गम्यते । संसारे सुखस्य गन्धमात्रमपि नास्तीति बुद्ध्वा मृगतृष्णिकाया इन्द्रियाणि निवर्तयेदिति च गम्यते । न केवलं दुःखयोनयएवेति किन्तु आद्यन्तवन्तश्च ते । आदिर्विषयेन्द्रियसंयोगो भोगानाम्, अन्तश्च तद्वियोग एव । अत आद्यन्तवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः । (तस्माद्) बुधः विवेकी अवगतपरमार्थतत्त्वः, तेषु संस्पर्शजभोगेषु, न रमते न रतिं प्राप्नोति । "अत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम्" इति भाष्यम् । वाशिष्ठेऽप्युक्तम् —'सम्पदः प्रमदाश्चैव तरङ्गोत्सङ्गभङ्गुराः । कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः ॥' इति ॥ २२ ।

**अवतरणम्**--अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः कामक्रोधोद्भवो वेगः । सर्वानर्थप्राप्तिहेतुर्दुर्निवार्यश्च, तस्मात् तत्परिहारे यत्नाधिक्यं कर्तव्यं मुमुक्षुणा इत्याशयेनाह--शक्नोतीति ।

**व्याख्या**—यो नरः शरीरविमोक्षणात् शरीरत्यागाद् मरणात् प्राक् पूर्वकालं, यावदिति शेषः । इहैव अस्मिन्नेव लोके जीवन्नेव, कामक्रोधोद्भवं कामश्च क्रोधश्च तौ उद्भवौ कारणे यस्य वेगस्य तम्, वेगम्, अन्तःकरणप्रक्षोभरूपं, सोढुं प्रसहितुं शक्नोति उत्सहते, स नरः, युक्तः योगी, समाहितः, सुखी

योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥२५॥

---

मोक्षसुखभाक् (च) भवतीत्यर्थः । इष्टे विषये या तृष्णा स कामः । प्रतिकूले विषये यो द्वेषः स क्रोधः । 'रोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपो कामोद्भवो वेगः । गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः।' इति भाष्यम् । 'मरणसीमाकरणं जीवतोऽवश्यं भावी हि कामक्रोद्भवो वेगः । अनन्तनिमित्तवान् हि स इति । यावद् मरणं तावद् न विश्रम्भणीय इत्यर्थः ।' इति च भाष्यम् ॥ २३ ॥

अवतरणम्—कथं भूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोति ? अत आह—योऽन्त इति ।

व्याख्या—यो योगी समाहितः पुरुषः, अन्तः सुखः अन्तर् आत्मनि एव सुखं यस्य सः । तथा अन्तरारामः अन्तर् आत्मन्येव आराम आक्रीडा यस्य सः । तथा अन्तर्ज्योतिः अन्तर् आत्मैव ज्योतिः प्रकाशो यस्य सः । एव शब्दस्य तथा शब्दस्य च सामर्थ्यात् प्रत्येकम् अन्वयः । सुखक्रीडाप्रकाशेषु बाह्यविषयनिरपेक्ष इत्यर्थः । स यथोक्तविशेषणो योगी समाहितः ब्रह्मभूतो जीवन्नेव ब्रह्मभावं प्राप्तो ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं निर्वृतिं निरतिशयानन्दरूपं मोक्षम् अधिगच्छति प्राप्नोतीत्यर्थः । "अन्तर् आत्मनि सुखमिति बाह्यविषयनिरपेक्षत्वं विवक्षितम् । अन्तरारामत्वञ्च स्त्र्यादिविषयापेक्षामन्तरेण क्रीडाप्रयुक्तफलभाक्त्वम् अभिमतम् । इन्द्रियादिजन्यप्रकाशशून्यत्वम् आत्मज्योतिष्ट्वमिष्टम् ।" इत्यानन्दगिरिः । अन्तरितिशब्दोऽत्र श्लोके प्रत्यगात्मपरः ॥ २४ ॥

अवतरणम्—मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह—लभन्ते इति ।

व्याख्या—क्षीणकल्मषाः क्षीणपापादिदोषाः छिन्नद्वैधाः छिन्नसंशयाः, यतात्मानः संयतेन्द्रियाः, सर्वभूतहिते रताः सर्वेषां भूतानां हिते आनुकूल्ये रता अहिंसका इत्यर्थः । एवंभूताः ऋषयः सम्यग्दर्शिनः संन्यासिनः ब्रह्मनिर्वाणं मोक्षं लभन्ते । पूर्वंकृताद् यज्ञादिनित्यनैमित्तिककर्मानुष्ठानात् पापादिलक्षणकल्मषाणां नाशे श्रवणाद्यावृत्तेः सम्यग्दर्शनं जायते । श्रवणाद्यावृत्तेरेव संशयनिरसनं कार्यकरणसंघातनियमनम् अहिंसकत्वञ्च सम्यग्ज्ञानप्राप्तौ कारणं भवति । ततश्च मुक्तिप्राप्तिरिति ॥ २५ ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥

---

अवतरणम्--पूर्वं कामक्रोधयोर्वेगौ सोढव्यौ इति दर्शितम् । सम्प्रति कामक्रोधौ एव त्याज्यौ इत्याह--कामेति ।

व्याख्या--(किञ्च) कामक्रोधवियुक्तानाम्, कामक्रोधाभ्यां रहितानाम् यतचेतसां संयतान्तःकरणानाम् यतीनां संन्यासिनाम् विदितात्मनां विदितो ज्ञात आत्मा येषां तेषां सम्यग्दर्शिनाम् इत्यर्थः । अभितः उभयतः जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते ॥ २६ ॥

अवतरणम्--सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यो मुक्तिरुक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेण मोक्षायेति भगवान् पदे पदेऽब्रवीद् वक्ष्यति च । अथेदानीं ध्यानयोगम् सम्यग्दर्शनस्य अन्तरङ्गं हि साधनम् विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति--स्पर्शान् इत्यादि ।

व्याख्या--बाह्यान् बहिर्भवान्, स्पर्शान् शब्दादीन् विषयान्, बहिः कृत्वा--बाह्या एव शब्दादयो विषयाः श्रोत्रादिद्वारेण अन्तर्बुद्धौ प्रवेशितास्तान् अचिन्तयतो बहिरेवकृता भवन्ति । तान् एवं बहिःकृत्वा-अचिन्तयन् इत्यर्थः । चक्षुश्चैव भ्रुवोरन्तरे मध्ये कृत्वेत्यनुपज्यते । भ्रुवोर्मध्यं पश्यन्नित्यर्थः । (तथा) नासाभ्यन्तरचारिणौ प्राणापानौ श्वासप्रश्वासौ समौ कृत्वा कुम्भकेन निरुध्येत्यर्थः । यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनो बुद्धिश्च यस्य

सः मोक्षपरायणः मोक्ष एव परम् अयनं परा गतिर्यस्य सः, विगतेच्छाभय क्रोधः इच्छा च भयं च क्रोधश्च ते विगता यस्मात्सः। य एवंभूतः सन् मुनिः ईश्वरस्वरूपस्य मननकर्ता (भवेत्) स सम्यग्दर्शी संन्यासी सदा मुक्त एव। अस्तीति शेषः। न तस्य मोक्षोऽन्यः कर्तव्योऽस्तीत्यर्थः ॥२७-२८॥ एवं समाहितचित्तेन मुनिना किं विज्ञेयम्? इत्युच्यते-भोक्तारमिति। यज्ञतपसां यज्ञानां तपसाञ्च कर्तृरूपेण देवतारूपेण च सोपाधिकेन भोगकर्तारं पालकं च 'भुज, पालनाभ्यवहारयोः' सर्वलोकमहेश्वरम् सर्वेषां लोकानां महान्तम् ईश्वरम्। हिरण्यगर्भादिव्यवच्छेदार्थं महान्तमिति। सर्वभूतानां सर्वप्राणिनाम् सुहृदं प्रत्युपकारनिरपेक्षतया उपकारिणम्, सर्वभूतानां हृदयेशयम् सर्वकर्मफलाध्यक्षम्, सर्वप्रत्ययसाक्षिणम्, मां नारायणं ज्ञात्वा साक्षात्कृत्य शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोतीति। अत्र "त्वां पश्यन् अपि कथं नाहं मुक्तः? इत्याशङ्कानिराकरणाय विशेषणानि। उक्तरूपेणैव मम ज्ञानं मुक्तिकारणम् इति भावः" इति श्रीमधुसूदनसरस्वती। तदेवं कर्मयोगस्य अमुख्यसंन्यासाऽपेक्षया प्रशस्तत्वेऽपि मुख्यसंन्यासस्य कर्मयोगादाधिक्यात् तद्वतो बुद्धिशुद्ध्यादियुक्तस्य कामक्रोधोद्भवं वेगं सोढुं शक्तस्य शमदमादिमतो योगाधिकृतस्य त्वंपदार्थाऽभिज्ञस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिर्भवतीति सिद्धम् ॥२९॥

समुच्चयं विकल्पं च त्याजयन् सांख्ययोगयोः।
उपेयोपायभूतत्वं प्राह तं नौमि माधवम् ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां पञ्चमोऽध्यायः ॥५॥

श्रीकृष्णार्पणमस्तु ॥५॥



## ॥ अथ गीतावंश्यां षष्ठोऽध्यायः ॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

---

अवतरणम्--अतीतपञ्चमाध्यायान्ते सम्यग्दर्शनं प्रति अन्तरङ्गसाधनस्य ध्यानयोगस्य सूत्रभूतास्त्रयः श्लोकाः 'स्पर्शान् कृत्वा बहि'रित्यादय उपदिष्टाः । तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते । तस्य ध्यानयोगस्य बहिरङ्गसाधनं कर्मयोगः प्रोक्तः पूर्वत्र । यतोऽन्तःकरणस्याऽशुद्धौ ध्यानयोगारोहणेच्छैव न जायते, अतोऽन्तःकरणाऽशुद्ध्यां वैराग्यस्याऽभावेन यावद्ध्यानयोगाऽऽरोहणेऽसामर्थ्यं तावद् गृहस्थेन अधिकृतेन कर्तव्यं कर्म अन्तःकरणशुद्धये । कर्मयोगस्य यावद्ध्यानयोगारोहणाऽसमर्थस्तावदिति सीमाकरणं वक्ष्यते--'आरुरुक्षोर्मुनेर्योगमि'त्यादिना श्लोकेन । इत्यतः कर्मयोगं तावत् स्तौति--अनाश्रित इति ।

व्याख्या--योऽधिकृतः कर्मफलम् अनाश्रितः कर्मफलतृष्णारहितः सन्, कार्यं कर्म कर्तव्यं नित्यं नैमित्तिकं च अग्निहोत्रादिकं काम्यातिरिक्तं कर्म करोति निर्वर्तयति । स कर्मफलसंन्यासी कर्मयोगी, संन्यासीं च संन्यासः परित्यागोऽस्ति यस्येति स च, योगी योगश्चित्तसमाधानं यस्यास्तीति स च । मन्तव्य इति शेषः । न निरग्निः, न केवलं निरग्निरेव, न चाक्रियः, न च केवलम् अक्रिय एव संन्यासी योगी च मन्तव्य इत्यर्थः । निरग्निः-निर्गता अग्नयः कर्माङ्गभूता यस्मात्सः । अक्रियः--अनग्निसाधना अपि क्रियास्तपोदानादिका अविद्यमाना यस्य स अक्रियः । इह 'न केवलं निराग्निरेव, न च केवलम् अक्रिय एवेति केवलपदस्य एवेति पदस्य चाऽध्याहारः सामर्थ्याद्भवति, न हि एकेनैव वाक्येन कर्मफलासङ्गसंन्यासस्तुति श्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते । न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान् । स्ववचनविरोधाच्च । 'सर्वकर्माणि मनसा संन्यस्य' 'नैव कुर्वन् न कारयन्' 'मौनी सन्तुष्टो येन केनचित्' 'अनिकेतः स्थिरमतिः' 'विहाय कामान् यः सर्वान्

**यं संन्यासमितिप्राहुर्, योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥**

पुमांश्चरति निःस्पृहः' 'सर्वारम्भपरित्यागी' इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि। तैर्विरुद्ध्येत चतुर्थाश्रमप्रतिषेधः। अतो न केवलं निरग्निरेव, अक्रिय एव च संन्यासी च योगी च मन्तव्यः किन्तु फलाकाङ्क्षारहितः सन् कर्मी अपि संन्यासीति योगीति च मन्तव्यः, फलाकाङ्क्षासहितकर्मकार्यन्तराऽक्षया स विशिष्टोऽस्तीति स्तूयते इति ॥ १ ॥

अवतरणम्—ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु संन्यासित्वं योगित्वञ्च प्रसिद्धम्। तत् कथमिह साग्नेः सक्रियस्य संन्यासित्वं योगित्वञ्च अप्रसिद्धम् उच्यते? नैष दोषः। कयाचिद् गुणवृत्त्या उभयस्य संपिपादयिषितत्वात्। अतस्तदुभयं गौणम् इह विवक्षितम्। कर्मफलसंकल्पसंन्यासात् संन्यासित्वं योगाङ्गत्वेन च कर्माऽनुष्ठानात् कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद् योगित्वञ्चेति। न पुनर्मुख्यं संन्यासित्वं योगित्वञ्च अभिप्रेतम् साग्नेः सक्रियस्येत्येतमर्थं दर्शयितुमाह—यमिति।

व्याख्या—यं सर्वकर्मतत्फलोभयपरित्यागरूपं संन्यासं परमार्थसन्यास इति प्राहुः श्रुतिस्मृतिविदः। 'संन्यास एवात्यरेचयत्' इति 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्येवम्। योगम् कर्माऽनुष्ठानलक्षणम् योगम्। तं विद्धि परमार्थसन्यास इति प्रोच्यमानम् जानीहि। ननु प्रवृत्तिलक्षणं योगं वैपरीत्याद् निवृत्तिलक्षणं परमार्थसंन्यासं कथं जानीयाम्? इत्यत आह—न हीति। हि यस्माद् असंन्यस्तसंकल्पः न संन्यस्तः न परित्यक्तः फलविषयकः संकल्पोऽभिसन्धिर्येन सः, कश्चन एकोऽपि कर्मी कश्चिद् योगी समाधानवान् न भवति न संभवति। फलसंकल्पस्य चित्तविक्षेपहेतुत्वात्। तस्माद् यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत् सः योगी, समाधानवान् अविक्षिप्तचित्तो भवेत् फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः। एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं साम्यम् अस्तीति परमार्थसंन्यासतुल्यत्वाद् गुणवृत्त्या कर्मयोगं (परमार्थ) संन्यास इति विद्धि इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम् ॥२॥

अवतरणम्—ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो वहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वा अधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति भगवान्—आरुरुक्षोरिति।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥

---

व्याख्या—मुनेः कर्मफलसंन्यासिन इत्यर्थः। यद्यपि ईश्वरस्वरूपस्य मननात्सम्यग्दर्शनसम्पन्न एव मुनिस्तथापि पूर्ववत् तत्सादृश्यात्कर्मफलसंन्यासी एव गुणवृत्त्यामुनिरिह कथ्यते। योगं ध्यानयोगं वक्ष्यमाणम्, आरुरुक्षोः भावप्रधाननिर्देशाद् आरुरुक्षत्वस्येत्यर्थः। अग्रे आरूढस्येत्यस्य 'आरूढत्वस्य साधनम्' इति भाष्ये आरूढत्वपदेन विवरणाद् इहापि तथैव विवरणीयत्वात्। ततश्च आरोढुं तीव्रेच्छायाः प्राप्तौ इत्यर्थः फलति। कर्म कर्मयोगः कारणं चित्तशुद्धिद्वारा साधनम् उच्यते कथ्यते शिष्टैः। तस्यैव, यः पूर्वं योगारोहणेच्छायास्तीव्रायाः प्राप्त्यर्थं कर्म करोतिस्म, तस्यैव कर्मफलसंन्यासिनो गौणमुनेः योगारूढस्य, पूर्ववद्भावप्रधाननिर्देशाद् योगारूढत्वस्येत्यर्थः। योगारोहणस्य, शम एव सर्वकर्मभ्यो निवृत्तिरेव। अत्रापि एव शब्दस्य संबन्धस्तन्त्रेण मध्यमणिन्यायाद् एव शब्दान्वयः। कारणम् साधनम् उच्यते। शिष्टैरित्यर्थः ॥ यावद् यावत्कर्मभ्य उपरमते तावत्तावद् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते। तथा सति स झटिति योगारूढो भवति। तथा चोक्तं व्यासेन 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥' (महा० शाति० १७५।३७) इति ॥ तत्रैकता सर्वभूतेषु एकब्रह्मप्रतिपत्तिः, समता सर्वेषु भूतेषु औपाधिके वैषम्ये सत्यपि स्वतः साम्यधीः। सत्यता सर्वभूतानां हितवचनम्। शीलं स्वभावसाधुत्वम्। स्थितिः स्थैर्यम्, दण्डनिधानम् अहिंसनम्, आर्जवम् अवक्रत्वम्, क्रियाभ्यः सर्वाभ्यः उपरमः संनिवृत्तिश्चेति सर्वं ब्राह्मणस्य पुमर्थसाधनाय निरतिशयं वित्तमस्तीत्यर्थः। 'यावद्ध्यानयोगारोहणाऽसमर्थस्तावद् गृहस्थेन अधिकृतेन कर्म कर्तव्यम्' इति कर्मणः सीमाकरणम् इह कृतं भगवता। अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कर्मणः। आरुरुक्षोरारूढस्येति कर्मतन्निवृत्तिरूपशमयोर्विषयभेदेन विभागकरणादिति प्रागुक्तं न विस्मर्तव्यम् ॥३॥

अवतरणम्—अथेदानीं कदा योगारूढो भवतीत्युच्यते- यदेति।

व्याख्या—यदा यस्मिन्काले यस्यां समाधानावस्थायाम्, हि, शब्दादिषु कर्मसु च अनुषङ्गस्य योगारोहणप्रतिबन्धकत्वात् तदभावस्य तदुपायत्वं

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥

---

प्रसिद्धमिति द्योतयितुं हीत्युक्तम् । इन्द्रियार्थेषु इन्द्रियाणाम् अर्थेषु श्रोत्रादीनां शब्दादिविषयेषु, कर्मसु 'कर्मसु चेति भाष्यम् । नित्यनैमित्तिककाम्यप्रतिषिद्धेषु कर्मसु च (प्रयोजनाऽभावबुद्धया) न अनुषज्जते अनुषङ्गं कर्तव्यताबुद्धिं न करोति । सर्वसंकल्पसंन्यासी, सर्वान् संकल्पान् इहामुत्रार्थकामहेतून् मनोवृत्तिविशेषान् संन्यसितुं शीलम् अस्य सः । सर्वसंकल्पसंन्यासी (च भवति, समाधीयमानचित्तो योगाभ्यासी) तदा हि तस्यां समाधानावस्थायां हि 'योगारूढः' योगारूढः प्राप्तयोगः । इत्युच्यते शिष्टैः । अत्र भाष्ये—"सर्वसंकल्पसंन्यासीति वचनात् सर्वांश्च कामान् सर्वाणि च कर्माणि संन्यसेदित्यर्थः" संकल्पमूला हि सर्वे कामाः—संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।' (मनु० २।३) 'काम जानामि ते मूलं संकल्पात् त्वं हि जायसे । न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि ॥' (महा. शान्ति. १७७।२५) इत्यादिस्मृतेः । सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति । (स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' (बृह. ४।४।५) इत्यादिश्रुतिभ्यः । (यद् यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम् ॥' (मनु. २।४) इत्यादिस्मृतिभ्यश्च । न्यायाच्च । न हि सर्वसंकल्पसंन्यासे कश्चिन् स्पन्दितुमपि शक्तः । (नित्यनैमित्तिककर्मानुष्ठानं तु तस्य दूरं निरस्तम्) । तस्मात् सर्वसंकल्पसंन्यासीति वचनात् सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान् ॥" इत्युक्तम् ॥४॥

अवतरणम्—यदा एवं योगारूढस्तदा तेन आत्मा आत्मना उद्धृतो भवति संसारादनर्थव्रातात् अतः—प्राह—उद्धरेदिति ।

व्याख्या—आत्मना स्वेन, आत्मानं स्वम्, (संसारसागरे निमग्नम्) उद् ऊर्ध्वं हरेत् कुर्यात् । संसारबन्धनाद् मोक्षं प्रापयेदित्यर्थः, योगारूढो भूत्वेति शेषः प्रकरणात् । साधक इति कर्तृपदम् अध्याहार्यम् । आत्मानं स्वम् न अवसादयेत् अधो न नयेत् न अधो गमयेत् । योगारोहणाद् औदासीन्यादिति शेषः । ननु आत्मीयो बन्धुरुद्धरिष्यतीति चेद्-नैवम् इत्याह-आत्मैवेति । हि यस्माद् आत्मनः स्वस्य बन्धुः सहायकः आत्मैव स्व एव । "न ह्यन्यः कश्चिद् बन्धुर्यः संसारमुक्तये भवति । बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात् । तस्माद् युक्तम् अवधारणम् आत्मैव ह्यात्मनो बन्धुरिति (तथा)

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥

---

आत्मनो रिपुः शत्रुरात्मैव । योऽन्योऽपकारी बाह्यः शत्रुः, सोऽपि आत्मप्रयुक्त एवेति युक्तमवधारणम् आत्मैव रिपुरात्मन इति ।" इति भाष्यम् ॥५॥

अवतरणम्—ननु एकस्यैवात्मनो मिथो विरुद्धं बन्धुत्वं रिपुत्वं च कथम् अत आह—वेति ।

व्याख्या—येन आत्मना जीवेन देवदत्तादिना, आत्मा एव, कार्यकरण-संघातरूपः स्वशरीरेन्द्रियसमुदाय एव, नान्यो जितो वशीकृतः, यो जितेन्द्रियोऽस्तीत्यर्थः। तस्य जितेन्द्रियस्य आत्मनो जीवस्य देवदत्तादेः, आत्मा स्वः ( स्वं प्रति ) बन्धुर्मित्रम् । अस्तीति शेषः । स्ववशीकृतकार्यकरणसंघातस्य विक्षेपाऽसंभवाद् उपपन्नम् स्वं प्रति स्वस्य बन्धुत्वम् । इतरस्य तु विक्षेपोपपत्तेरात्मनि समाधानाऽयोगात् स्वं प्रति स्वस्य शत्रुत्वम् इत्याह–अनात्मनस्तु अजितेन्द्रियस्य तु शत्रुत्वे शत्रुभावे आत्मैव स्व एव स्वं प्रति शत्रुवत् वर्तेत । यथा स्वभिन्नः शत्रुः स्वस्य अपकारी वर्तते तथा स्वोऽपि स्वस्यापकारे वर्तते । अन्योऽपि शत्रुरजितेन्द्रियस्य स्वप्रयुक्त एव भवतीति मुख्यं शत्रुत्वं स्वस्यैव स्वं प्रति भवतीतिभावः ॥६॥

अवतरणम्—कथं वशीकृतकार्यकरणस्य बन्धुरात्मा ? इत्यत आह—जितेति ।

व्याख्या -जितात्मनः जित आत्मा कार्यकरणसंघातो येन तस्य । प्रशान्तस्य प्रशान्ताऽन्तःकारणस्य, परमात्मा भगवान् ईश्वरः, समाहितः साक्षाद् आत्मभावेन वर्तते इत्यर्थः । न केवलं परमात्मा साक्षाद् आत्मभावेन-तस्य वर्तते किन्तु शीतोष्णादिभिरप्यसौ न चाल्यते इत्याह—शीतोष्णसुख-दुःखेषु नियताऽनियतसुखदुःखविषये, तथा मानापमानयोः माने पूजायाम् अपमाने परिभवे च, समाहितः समाधानवान् । तन्त्रेण समाहित इत्यस्य उभयत्र संबन्धोऽर्थद्वयं च हर्षविषादरहितो भवतीत्यर्थः ॥७॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥
योगी युञ्जीत सततम् आत्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

---

(किञ्च) ज्ञानविज्ञानतृप्तात्मा—ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्। विज्ञानं शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम्। ताभ्यां तृप्तः संजातालं-प्रत्यय आत्मा अन्तःकरणं यस्य सः। कूटस्थोऽप्रकम्प्यः। विजितेन्द्रियः विशेषेण जितानि इन्द्रियाणि यस्य सः। एवं भूतो भवतीत्यर्थः। यद्यपि जितात्मन इत्येव विजितेन्द्रियत्वं बोध्यते तथापि द्विर्बद्धंसुबद्धमितिन्यायाद् अत्यावश्यकत्वद्योतनाय शब्दान्तरेण पुनरुपादानम्। (किञ्च) समलोष्टा-श्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः, भवतीतिशेषः। (एवंभूतः) योगी ध्यानयोगी 'युक्तः' समाहितः, प्राप्तयोगः, योगारूढः इत्युच्यते ॥८॥

अवतरणम्—सर्वेषां योगारूढानां मध्ये विशिष्टमाह— सुहृदिति।

व्याख्या—सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु- सुहृत् प्रत्युपकारम् अनपेक्ष्य उपकर्ता। मित्रं स्नेहवान्। अरिः शत्रुः। उदासीनः यो न कस्यचित्पक्षं भजते सः। मध्यस्थो यो विरुद्धयोर्द्वयोर्हितैषी विद्यते स.। द्वेष्यः अप्रियः, बन्धुः सम्बन्धी। एतेषु (तथा) साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्ध-कारिषु (सर्वेषु एतेषु) समबुद्धिस्तुल्यबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिर्योगा-रूढः, विशिष्यते योगारूढानां सर्वेषां मध्ये अत्युत्तम इत्यर्थः। 'विमुच्यते इति वा पाठान्तरम्' इति भाष्यम् ॥९॥

अवतरणम्—एवं योगारूढस्य लक्षणं फलं चोक्त्वा एवमुत्तमफल-प्राप्तये योगानुष्ठानाय प्रयतनीयम् इति तस्य साङ्गं योगं विधत्ते 'योगी युञ्जीत' इत्यारभ्य 'स योगी परमो मतः' इत्यन्तैस्त्रयोविंशत्या श्लोकैः—योगीति।

व्याख्या—(विमुक्तिफलकयोगारूढत्वप्राप्तये—) योगी ध्यायी, रहसि एकान्ते गिरिगुहादौ, 'गिरिगुहादौ इत्यादिशब्देन योगप्रतिबन्धकदुर्जनादिविधुरो देशो गृह्यते' इत्यानन्दगिरिः। एकाकी असहायः, स्थितः आसीनः। 'रहसि स्थित एकाकी चेति विशेषणात् संन्यासं कृत्वेत्यर्थः।' इति भाष्यम्। यतचित्तात्मा यतो संयतो चित्तम् अन्तः करणम्, आत्मा देहश्च यस्य सः, निराशीर्वीततृष्णः, अपरिग्रहः परिग्रहरहितः सन् संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् अर्थात्

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्, योगमात्मविशुद्धये ॥१२॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥

---

कौपीनाच्छादनादिष्वपि सक्तिरहितः सन् सततं सर्वदा । 'सर्वदे'ति भाष्यम् 'आदरदीर्घकालयोरुपलक्षणम्' इत्यानन्दगिरिः । आत्मानम् अन्तःकरणं 'प्रत्यगात्मानं व्यावर्तयति अन्तःकरणमिति' इतिचानन्दगिरिः । युञ्जीत समादध्यात् ॥१०॥

अवतरणम्—अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगलक्षणं तत्फलादि च, इत्यत आरभ्यते । तत्र आसनमेव तावत्प्रथममुच्यते—शुचाविति ।

व्याख्या—शुचौ शुद्धे स्वभावतः संस्कारतो वा विविक्ते, देशे स्थाने, स्थिरम् अचलम्, नात्युच्छ्रितम् न अतीव उन्नतम्, नातिनीचम् नापि अतीव नीचम्, चैलाजिनकुशोत्तरम् चैलम्, अजिनं कुशाश्च उत्तरे उपरिवर्तिनो यस्मिन् तद् । 'पाठक्रमाद् विपरीतोऽत्र क्रमश्चैलादीनाम्' इति भाष्यम् । स्थण्डिलस्योपरि कुशाः, कुशानामुपरि अजिनं मृगचर्म, अजिनस्योपरि चैलं वस्त्रं कम्बलादिकम् इति क्रमोऽत्र विवक्षितः । आत्मनः स्वस्य, आसनम्, आस्यतेऽस्मिन् इति आसनम् प्रष्ठिाप्य प्रतिष्ठितं कृत्वा, तत्र तस्मिन् आसने उपविश्य आसीनो भूत्वा, मनः एकाग्रं कृत्वा सर्वविषयेभ्य उपसंहृत्य एकस्मिन् ध्येये परमात्मनि समाधाय, यतचित्तेन्द्रियक्रियः यताः संयताः चित्तं च इन्द्रियाणि च तेषां क्रिया यस्य सः । (एवं भूतः सन्) आत्मविशुद्धये अन्तःकरणस्य विशुद्धयर्थम् योगं ध्यानं युञ्ज्यात् अभ्यसेत् ॥११-१२॥

अवतरणम्—बाह्यम् आसनम् उक्तम्, अधुना शरीरधारणं कथं भवेद् ? इत्याह—सममिति ।

व्याख्या—स्थिरः स्थिरो भूत्वा समं सरलम् । अचलम् (च), कायशिरोग्रीवम् कायश्च शिरश्च ग्रीवा च तद् । कायशब्देन शरीरमध्यभागो विवक्षितः । कट्यधोभागस्योपवेशने सरलत्वाऽयोगात् । मूलाधारादारभ्य शिरःपर्यन्तं सरलम् अचञ्चलञ्च धारयन् इत्यर्थः । सरलत्वेऽपि चलनं संभाव्यते तद्वारणायाह—

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

---

अचलमिति । स्वम् आत्मीयम्, नासिकाग्रं नासिकाया अग्रम्, संप्रेक्ष्य संप्रेक्ष्येव अर्धनिमीलितनेत्र इत्यर्थः । "इवशब्दो लुप्तो द्रष्टव्यः । न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम् । किं तर्हि चक्षुषोर्दृष्टिसंनिपातः । स च अन्तःकरणसमाधानापेक्षो विवक्षितः । स्वनासिकाग्रसंप्रेक्षणमेव चेद् विवक्षितं, मनस्तत्रैव समाधीयेत, न आत्मनि, आत्मनि हि मनसः समाधानं वक्ष्यति– 'आत्मसंस्थं मनः कृत्वा' इति । तस्माद् इवशब्दलोपेन अक्ष्णोर्दृष्टिसन्निपात एव संप्रेक्ष्य इत्युच्यते ।" इति भाष्यम् ॥ दिशश्चानवलोकयन् दिशां च अवलोकनम् अन्तरा अकुर्वन् इत्यर्थः ॥१३॥

(किञ्च) प्रशान्तात्मा प्रकर्षेण शान्त आत्मा अन्तःकरणं यस्य सः, विगतभीः, विगता भीर्यस्य सः । ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यगुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन् स्थितः, व्युत्थानकाले तद् आचरन्, मनः संयम्य मनसो वृत्तीरुपसंहृत्य मच्चित्तो मयि परमेश्वरे चित्तं यस्य सः । युक्तः समाहितः सन्, मत्परः–अहं परमेश्वर एव परः श्रेष्ठो यस्य सः–आसीत उपविशेत् । भवति कश्चिद् रागी स्त्रीचित्तः किन्तु स्त्रियमेव परत्वेन न गृह्णाति । अपि तु राजानं महादेवं वा । अयन्तु मच्चित्तो मत्परश्च स्यादित्याशयः ॥१४॥

अवतरणम्—अथेदानीं ध्यानयोगस्य अन्तःकरणशुद्धिद्वारकं प्रधानफलमाह—युञ्जन्निति ।

व्याख्या—योगी ध्यायी नियतमानसः नियतं संयतं मानसं मनो यस्य सः सन् एवं यथोक्तेन विधानेन सदा आत्मानं युञ्जन् सर्वदा स्वान्तःकरणस्य परमात्मनि समाधानं कुर्वन्, मत्संस्थाम् मदधीनां मदात्मिकामित्यर्थ इत्यानन्दगिरिः । निर्वाणपरमाम्-निर्वाणं मोक्षस्तत् परमा निष्ठा यस्यास्ताम् शान्तिम् उपरतिम्, सुखम्, अधिगच्छति प्राप्नोति ॥१५॥

अवतरणम्—अथेदानीं योगाभ्यासनिष्ठस्य आहारादिनियममाह द्वाभ्याम्—नातीति ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

---

व्याख्या—अत्यश्नतस्तु आत्मसंमितम् अन्नपरिमाणम् अतीत्य भोजनं कुर्वतस्तु योगो ध्यानं न अस्ति । एकान्तम् अत्यन्तमेव, अनश्नतश्च भोजनम् अकुर्वाणस्य च योगो नास्ति । 'यदुह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति' 'यद् भूयो हिनस्ति तद्, यत्कनीयो न तदवति' इति (शतपथ) श्रुतेः । तस्माद् योगी न आत्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयात् । अथवा योगिनो योगशास्त्र-परिपठितादन्नपरिमाणाद्, अतिमात्रम् अश्नतो योगो नास्ति । उक्तं हि योग-शास्त्रे—"अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥" इति परिमाणम् । अति स्वप्नशीलस्य अतिनिद्राशीलस्य च, योगो नास्ति । नैव च अतिमात्रं जाग्रतो योगो भवति हे अर्जुन ॥१६॥

अवतरणम्—कथं पुनर्योगो भवतीत्याह–युक्तेत्यादि ।

व्याख्या—युक्ताहारविहारस्य, आह्रियते इत्याहारोऽन्नम् । विहरणं विहारः पादक्रमः । तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारस्तस्य, (तथा) कर्मसु क्रियासु युक्तचेष्टस्य युक्ता चेष्टा यस्य तस्य, नियतपरिमाण-चेष्टस्य (तथा) युक्तस्वप्नाऽवबोधस्य युक्तौ नियतमात्रौ स्वप्नश्च अवबोधश्च यस्य तस्य । योगिनो ध्यानसाधकस्य योगो ध्यानं दुःखहा, दुःखानि सर्वाणि-हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृद्, भवतीत्यर्थः । विशुद्धविज्ञानद्वारेति शेष इत्यानन्दगिरिः ॥१७॥

अवतरणम्—अथाऽधुना कदा युक्तो भवतीति 'यदा हि नेन्द्रियार्थेषु' इत्यादिनोक्तमपि विशेषान्तरविवक्षया पुनरुच्यते—यदेति ।

व्याख्या—यदा यस्यां समाधानावस्थायाम्, विनियतं विशेषेण नियतं संयतम् एकाग्रतामापन्नमित्यर्थः । चित्तम् अन्तःकरणम्, आत्मनि एव चिदानन्दे वाह्यचिन्तां हित्वा केवले स्वात्मनि अवतिष्ठते स्थितिं लभते । सर्वकामेभ्यो-दृष्टाऽदृष्टसर्वविषयेभ्यो निःस्पृहः निर्गता स्पृहा तृष्णा यस्य सः (भवति) तदा तस्यां समाधानावस्थायाम् स योगाभ्यासी युक्त इत्युच्यते । समाहित इति कथ्यते ॥१८॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
सुखमात्यन्तिकं यत् तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति, यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥२१॥

---

अवतरणम्—यत् चित्तं योगिनः समाहितं तस्य चित्तस्य उपमा (उपमानम्) उच्यते—यथेति ।

व्याख्या—आत्मनः परमात्मनः योगम् समाधिम् युञ्जतोऽनुतिष्ठतो योगिनः समाधिभाजो जनस्य यतचित्तस्य यतं संयतं चित्तम् अन्तःकरणम् यत् तस्य । यथा येन प्रकारेण निवातस्थो निवाते वातवर्जिते देशे स्थितो दीपः प्रदीपो, न इङ्गते न कम्पते, सा निवातस्थनिष्कम्पप्रदीपरूपा उपमा उपमीयतेऽनयेति उपमा उपमानं, स्मृता कथिता योगज्ञैः ॥१९॥

अवतरणम्—(अत्रानन्दगिरिः—) "द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्च । ध्येयैकाकारसत्त्ववृत्तिभेदेन कथंचिज्ज्ञायमाना संप्रज्ञातः समाधिः । कथमपि पृथग् अज्ञायमाना सैव सत्त्ववृत्तिरसंप्रज्ञातः समाधिः । तत्र सामान्येन समाधिलक्षणमभिधाय असंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षन्नाह—एवमिति ।" "एवं योगाऽभ्यासबलाद् एकाग्रीभूतं निवातप्रदीपकल्पं सत्–" (इति भाष्ये) यत्रेति ।

व्याख्या—यत्रेत्यादीनां यच्छब्दानां तं विद्यादिति चतुर्थेनाऽन्वयः । यत्र यस्मिन् आत्मस्वरूपमात्रावस्थानरूपे आत्मावस्थाविशेषे सति, योगसेवया योगानुष्ठानेन निरुद्धं सर्वतो निवारितप्रचारं चित्तम् उपरमते उपरतिं गच्छति निर्वृत्तिकं भवति । यत्र च यस्मिंश्च आत्मस्वरूपमात्रावस्थानरूपे आत्मावस्थाविशेषे आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यज्योतिःस्वरूपं पश्यन् उपलभमानः आत्मनि स्वे एव तुष्यति तुष्टिं भजते ॥२०॥

चकिञ्च, यत्र आत्मावस्थाविशेषे सति बुद्धिग्राह्यम् बुद्धया एव इन्द्रियनिरपेक्षया ग्रहीतुं शक्यम्, अतीन्द्रियम् इन्द्रियविषयातीतम् रूपरसादिविषयाऽजनितमित्यर्थः । आत्यन्तिकम् अत्यन्तमेव भवतीत्यात्यन्तिकम् अनन्तमित्यर्थः ।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥२२॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥

---

यत् सुखम् अस्तीति शेषः । तत् सुखं वेत्ति अनुभवति साक्षात्करोति ॥ च = किञ्च, यत्र यस्मिन् आत्मावस्थाविशेषे सति आत्मस्वरूपे स्थितोऽयं विद्वान् तत्त्वतस्तस्मात् तत्त्वस्वरूपाद् न चलति न प्रच्यवते ॥२१॥

च = किञ्च, यम् आत्मस्वरूपमात्रावस्थानरूपम् आत्मावस्थाविशेषम्, आत्मलाभं लब्ध्वा प्राप्य अपरं लाभं विषयप्राप्तिरूपं, ततोऽधिकं न मन्यते । (किञ्च) यस्मिन् आत्मावस्थाविशेषे सति, स्थितः आत्मस्वरूपे स्थितोऽयं विद्वान् गुरुणाऽपि महताऽपि दुःखेन शस्त्रनिपातादिलक्षणेन न विचाल्यते तत्त्वस्वरूपान्न पृथक् क्रियते ॥२२॥

दुःखसंयोगवियोगम् दुःखैः संयोगो दुःखसंयोगस्तस्माद् वियोगस्तम् । तम् आत्मस्वरूपमात्रावस्थानरूपम् 'यत्रोपरमते इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्टम् आत्मावस्थानविशेषम् दुःखसंयोगवियोगमपि सन्तं विपरीतलक्षणेन योगसंज्ञितम् योग इत्येवं सञ्ज्ञितम् विद्याद् विजानीयादित्यर्थः ॥ योगस्य फलम् उक्तप्रकारेण उपसंहृत्यापि निश्चयाऽनिर्वेदयोर्योगसाधनत्वविधानाय पुनर्योगस्य कर्तव्यतामाह स इति । स यथोक्तफलो योगो निश्चयेन अध्यवसायेन सह अनिर्विण्णचेतसा, न निर्विण्णम् अनिर्विण्णम् चेतस्तेन निर्वेदरहितचेतसा सोत्साहेन चित्तेनेत्यर्थः । योक्तव्यः कर्तव्यः । इह जन्मनि जन्मान्तरे वा सेत्स्यत्येवेत्येवं निश्चयोऽध्यवसायस्तेन सह । निर्वेदो योगाद् विरक्तिस्तद्रहितेन चित्तेन योगः कर्तव्य इत्यर्थः ॥२३॥

अवतरणम्—अथ 'केन क्रमेण योगः कर्तव्यः' इत्यपेक्षायाम् आह—संकल्पेति ।

व्याख्या—(योगाभ्यासी) संकल्पप्रभवान् संकल्पः शब्दादिविषयग्रहणे इष्टसाधनत्वज्ञानम्, स प्रभवो जनको येषां तान्, सर्वान् सकलान् कामान् विषयग्रहणविषयकेच्छाभेदान् अशेषतः निर्लेपेन, सवासनान् इत्यर्थः । त्यक्त्वा

शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

---

परित्यज्य संकल्पनिरोधादिति शेषः। एतेन योगसाधनत्वेन अन्तरिन्द्रियनिग्रह-रूपः शमो विहितः। मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्दियसमूहं वाह्य-मिति भावः। समन्ततः सर्वविषयेभ्यः, नियम्य प्रत्याहृत्य। एतेन योगसाधन-तया वाह्येन्द्रियनिग्रहरूपो दमो विहितः॥२४॥

कामत्यागद्वारेण इन्द्रियाणि अन्तर्वाह्यानि प्रत्याहृत्य ततः किं कुर्यादि-त्यत आह-शनैरिति। शनैः शनैर्न सहसा, धृतिगृहीतया धृतिर्धैर्यम् अत्वरा, तया गृहीतया युक्तया, बुद्धया अन्तःकरणविशेषरूपया उपरमेत् उपरतिं कुर्यात्। उपरतिं मनसो व्यावृत्तिं कुर्यादित्यर्थः। अत्रानन्दगिरीये "सहसा उपरमे क्रियमाणे मनः स्वस्थं न संभवतीत्याह-शनैः शनैरित्ति। भूम्यादिधारणप्रवि-लापनक्रमेणेत्यर्थः। 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' (७।४) इति वक्ष्यमाणासु प्रकृतिषु पूर्वपूर्वत्र मनसो धारणं कृत्वा पूर्वपूर्वमुत्तरोत्तरत्र प्रविलाप्य अहङ्काररूपम् अव्यक्तम् आत्मनि प्रविलापयेदिति भावः। शनैः शनैरुपरमे साधनं धैर्ययुक्ता बुद्धिरेवे-त्याह बुद्धयेति। अव्यक्तम् आत्मनि प्रविलाप्य आत्ममात्रनिष्ठं मनो विधाय चिन्तयितव्याऽभावाद् अतिस्वस्थो भवेदित्याह-आत्मसंस्थमिति।" इति। तदेवम् इतरसर्वविषयेभ्यो निवारितं मनः आत्मसंस्थं कृत्वा आत्मनि संस्था सम्यक् स्थितिर्यस्य तत् कृवा-"आत्मैव सर्वं, न ततोऽन्यत् किञ्चिदस्ति" इत्येवं कृत्वा 'आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्ति' इत्याकारकं मनः कृत्वेत्यर्थः। न किञ्चिदपि चिन्तयेत्। आत्मसंस्थमेव यथोक्तरूपेण मनः कृत्वा तिष्ठेद्। "एष योगस्य परमो विधिरिति भगवान् शङ्कराचार्यः॥ एष एव असम्प्रज्ञात-समाधिरिति आनन्दगिरीये॥२५॥

अवतरणम्—ननु मनसश्चञ्चलत्वेन अस्थिरस्य कथम् आत्मसंस्थत्वम् नैश्चिन्त्यं च संभवतीत्यत आह—यत इति।

व्याख्या—(योगप्रारम्भे पूर्वोक्तप्रकारेण मन आत्मसंस्थं कर्तुं प्रवृत्तो योगी) चञ्चलं मिथ्याज्ञानाधीनरागादिस्वाभाविकदोषाद् अत्यर्थं चलम्

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८॥

---

(अतएव) अस्थिरम् स्थैर्यरहितम् मनो यतो यतो यस्माद् यस्माद् निमित्ताच्छब्दादेर्निश्चरति आत्मतत्वाद् निर्गच्छति, ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्ताद् नियम्य (याथात्म्यनिरूपणेन वैराग्यभावनया शब्दादि तत्तन्निमित्तम् आभासीकृत्य) पृथक् कृत्वा, एतद् मनः, आत्मनि एव चिदानन्दे आत्मतत्त्वे एव, वशं नयेत् वश्यतां प्रापयेत् स्थापयेदित्यर्थः। शब्दादेर्याथात्म्यनिरूपणं क्षयिष्णुत्व-दुःखसंमिश्रत्व मिथ्यात्वाद्यालोचनम्। निमित्ताभासीकरणं निमित्तखण्डनम्। "एवं योगाभ्यासबलाद् योगिन आत्मन्येव प्रशाम्यति मनः" इति भाष्यम् ॥ योगाभ्यासो मनोनिग्रहप्रकारस्यावृत्तिरिति ॥२६॥

अवतरणम्—एवं योगाभ्यासेन कृताया मनःप्रशान्तेः फलमाह—प्रशान्तेति ।

व्याख्या—प्रशान्तमनसं प्रशान्तं मनो यस्य तम्। 'प्रशान्तं निर्वृत्तिकतया निरुद्धं संस्कारमात्रशेषं मनो यस्य तम्' इति श्रीमधुसूदनसरस्वती। प्रशान्तम् आत्मनि विलीनम् इति आनन्दगिरीये। 'आत्मन्येव प्रशाम्यति मनः' इति भाष्यात्। प्रशान्तमनस्त्वे हेतुगर्भं विशेषणमाह शान्तरजसं, शान्तं रजो यस्य तम् प्रक्षीणमोहादिक्लेशरूपरजोगुणम्। मोहोऽविवेकः। तन्मूलकत्वमेव इतरेषां क्लेशानाम्। उपलक्षणतया प्रक्षीणतमोगुणमपि, अकल्मषम्, संसारहेतुधर्माऽधर्मादिवर्जितम्ः (अतएव) ब्रह्मभूतम् जीवन्मुक्तम् 'ब्रह्मैवेदं सर्वम्' इत्येवं निश्चयवन्तम्, एवं योगिनम् उत्तमं निरतिशयम् सुखम् आनन्दः उपैति उपगच्छति हि। मनस्तद्वृत्तीनाम् अभावे स्वरूपभूतसुखाविर्भावस्य प्रसिद्धिं द्योतयति हि शब्दः। सुषुप्तौ निद्रावृत्तिसत्त्वेऽपि वृत्यन्तरनिरोधेन स्वरूपसुखाविर्भावः सकललोकप्रसिद्धः। निद्रासहितसमस्तवृत्तीनां निरोधे तु किमपि अलौकिकमेव स्वरूपसुखमाविर्भवेदिति ॥२७॥

अवतरणम्—योगिनं कर्मीभूतम् उत्तमं सुखं कर्तृभूतमुपैतीति उत्तमं सुखं योगिनो भवतीत्युक्तं तदेव स्फुटयति—युञ्जनिति ।

व्याख्या—एवम् यथोक्तेन क्रमेण 'संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः' (६।२४) इत्याद्युक्तेन क्रमेणेत्यर्थः। आत्मानं सदा युञ्जन् सर्वदा

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।। २९।।
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।।३०।।

---

स्वान्तःकरणं समाहितं कुर्वन् (अतएव) विगतकल्मषः विगतपापपुण्यो, योगी ध्यायी 'योगान्तरायवर्जितः' इति भाष्यमत्र। तत्र योगान्तरायो रागद्वेषादिरित्यानन्दगिरिः । तैर्वर्जितो रहितः । 'व्याधिस्त्यानसंशयप्रमादालस्याऽविरतिभ्रान्तिदर्शनालब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः' 'दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ।' इति योगसूत्रे। तैरन्तरायै रहितः। सुखेन-अनायासेन। ब्रह्मसंस्पर्शम् ब्रह्मणा परेण संस्पर्शो यस्य तद् ।। संस्पर्शस्तादात्म्यम् ब्रह्माऽभिन्नमित्यर्थः । अत्यन्तम् अन्तमतीत्य वर्तमानम् उत्कृष्टं निरतिशयं सुखम् अश्नुते प्राप्नोति ।।२८।।

अवतरणम्—इदानी ध्यानयोगस्य यत्फलं ब्रह्मात्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्शयति—सर्वेति ।

व्याख्या—योगयुक्तात्मा समाहितःन्तःकरणः, सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु भूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयकं दर्शनं ज्ञानं यस्य सः (सन्) आत्मानम् परमात्माभिन्नप्रत्यगात्मानं स्वम् सर्वभूतस्थं सर्वेषु भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु स्थितम् ईक्षते पश्यति। सर्वभूतानि च ब्रह्मादीनि स्तम्बपर्यन्तानि च आत्मनि परमात्माभिन्ने प्रत्यगात्मनि स्वस्मिन् (एकतां गतानि) ईक्षते पश्यति ।। अत्रानन्दगिरिः—"सर्वभूतान्यपि तद्विशेषणत्वेन पश्यति चेन्न शुद्धं वस्तु (ब्रह्म) ज्ञानमिति न अविद्यानिवृत्तिरित्याशङ्क्याह—सर्वभूतानीति । उक्ते दर्शने चित्तसमाधानम् उपायं दर्शयति योगेति। विषमेषूपाधिषु तदनुरोधाद् विषममेव दर्शनं तदुपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति-सर्वत्रेति ।" इत्याह ।। इदञ्चात्रबोध्यम्—'ब्रह्मविद् द्वयं पश्यति, आत्मानं सर्वभूतस्थम्, मायाकल्पितसर्वभूताधिष्ठानम् पश्यति, सर्वभूतानि आत्मनि च अधिष्ठाने कल्पितानि पश्यति। सर्वभूतानाम् आत्मनि अधिष्ठाने अविद्यया कल्पितत्वात्परस्परविरुद्धमपि तस्य दर्शनद्वयं सम्यगुपपद्यते । नात्र वास्तविक आधाराधेयभावो विवक्षित इत्यलम् ।।२९।।

अवतरणम्—एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते—यो मामीति।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

---

व्याख्या—यः समाहितान्तःकरणः सिद्धः, मां वासुदेवं सर्वस्यात्मानं, सर्वत्र सर्वेषु भूतेषु आत्मरूपेण स्थितं पश्यति साक्षात्करोति । सर्वञ्च किञ्च सर्वं ब्रह्मादिस्तम्बपर्यन्तं भूतजातम् मयि वासुदेवे अधिष्ठाने स्थितम् आरोपितं पश्यति साक्षात्करोति । तस्य एवम् आत्मैकत्वदर्शिनः सिद्धस्य अहम् ईश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति । तस्य मम चैकत्वात् । सर्वात्मैक्यदर्शी मदभिन्नोऽस्तीत्यर्थः । अत्रभाष्ये—"तस्य च मम चैकात्मकत्वात् । स्वात्मा हि नाम आत्मनः प्रिय एव भवति । यस्माच्च अत एव सर्वात्मैक्यदर्शी ।" इत्युक्तम् ॥३०॥

अवतरणम्—पूर्वश्लोकार्थं सम्यग्दर्शनं पूर्वार्द्धेन अनूद्य उत्तरार्द्धेन तत्फलं मोक्षमभिधत्ते—सर्वेति ।

व्याख्या—यः समाहितान्तःकरणः सर्वभूतस्थितं प्रत्यग्रूपेण सर्वेषु ब्रह्मादिभूतेषु स्थितं मां वासुदेवं परमात्मानम् एकत्वम् 'अहमेव वासुदेवः' इत्येवं रूपम् आस्थितः सम्यग् अपरोक्षीकृतवान् सन् भजति स योगी सम्यग्दर्शी सर्वदा सर्वप्रकारैर् (याज्ञवल्क्यादिवत् सर्वकर्मसंन्यासेन वा वसिष्ठजनकादिवद् विहितकर्मानुष्ठानेन वा दत्तात्रेयादिवद् निषिद्धकर्माचरणेन वा) कोष्ठान्तर्गतव्याख्या मधुसूदनीये नीलकण्ठीये च कृता, न भाष्ये इति द्रष्टव्यम् । वर्तमानोऽपि व्युत्थानदशायां व्यवहरन्नपि मयि ईश्वरे परमात्मनि वैष्णवे परमे पदे वर्तते । नित्यमुक्त एव सः । न मोक्षं प्रति केनचित् कर्मादिनाऽसौ प्रतिबध्यते इत्यर्थः । "रागादिरहितस्य यमनियमादिसंस्कारवतः सम्यग्दर्शिनः स्वैरप्रवृत्तेरसंभवेऽपि ताम् अङ्गीकृत्य ज्ञानं स्तौति-सर्वथा वर्तमानोऽपी" त्यानन्दगिरिः । 'दत्तात्रेयादीनां वस्तुतो निषिद्धकर्माऽभावेऽपि लोकानामेव अदृष्टविशेषेण तत्प्रतिभासाल्लोकबुद्धिविषयत्वेन तदङ्गीकृत्य 'सर्वथा वर्तमानोऽपीत्याह भगवान्'इति गूढार्थतत्त्वालोके श्रीधर्मदत्तः ॥३१॥

अर्जुन उवाच—

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥**

---

अवतरणम्—सर्वयोगिनां मध्ये श्रेष्ठं योगिनमाह—आत्मेति ।

व्याख्या—हे अर्जुन, यो योगी सम्यग्दर्शननिष्ठः समाहितान्तःकरणः सर्वत्र सर्वप्राणिषु आत्मौपम्येन, उपमीयते सादृश्येन परिच्छिद्यते उपमेयम् अनयेति उपमा उपमानम् सादृश्यप्रतियोगी पदार्थः। उपमाया भाव औपम्यम् । आत्मन औपम्यम् आत्मौपम्यम् । आत्मशब्दोऽत्र आत्मगतसुखदुःखयोर्लाक्षणिकः । आत्मन इति षष्ठ्या निष्ठत्वमर्थः। औपम्येनेति तृतीयाया निरूपकत्वमर्थः। तस्य च सममितिसमपदार्थैक देशे तुल्यत्वे स्वरूपसंबन्धेनाऽन्वयः। समं तुल्यम् सुखं वा सुखं च। यदि वा दुःखम् दुःखं च यत् तत् । वा शब्दश्चार्थे इति भाष्यम् । यदि शब्दस्य यदित्यर्थश्च भाष्ये कृतः। पश्यति व्युत्थानकाले इति शेषः। आत्मगतसुखदुःखनिष्ठप्रतियोगितानिरूपकसादृश्यविशिष्टे सर्वप्राणिगतसुखदुःखे यः पश्यति साक्षात्करोति इति शाब्दोऽर्थः। यथा मम सुखम् अनुकूलतया इष्टम् तथा सर्वप्राणिनां तदनुकूलतया इष्टम् । यथा च मम दुःखं प्रतिकूलतया अनिष्टम् तथा सर्वप्राणिनामेव तद् अनिष्टम् इत्येवम् अनुभवति। अतो न कस्यचित्प्रतिकूलम् आचरति अहिंसक इति भावार्थः। स योगी य एवम् अहिंसकः स सम्यग्दर्शननिष्ठः परमः सर्वयोगिनां मध्ये उत्कृष्टो मया मतः मया ज्ञायते ममाऽभिप्रेतः ॥३२॥

अवतरणम्—एतस्य सम्यग्दर्शनलक्षणस्य योगस्य यथोक्तस्य दुःसम्पादयतामालक्ष्य ध्रुवं तल्लाभोपायं श्रोतुकामः सन्—अर्जुन उवाच ।

व्याख्या—हे मधुसूदन, त्वया भगवता वासुदेवेन, साम्येन समत्वेन उपलक्षितः सर्वत्र समसुखदुःखदृष्टिलक्षणः सर्वत्र ब्रह्मात्मैकत्वदर्शनलक्षणश्च योऽयं योगः प्रोक्तः। एतस्य योगस्य मनसश्चञ्चलत्वात् स्थिराम् अचलां स्थितिं सत्ताम् अहं न पश्यामि नोपलभे ॥ मनसश्चञ्चलत्वं हि प्रसिद्धमित्याह चञ्चलं हीति। "कृष्णेति कृषतेर्विलेखनार्थस्य रूपम् भक्तजनपापादिदोषाकर्षणात् कृष्णः।" इति भाष्यम् । 'कृष विलेखने' इत्यस्माद् नक् प्रत्यय औणादिकः। हीति प्रसिद्धमेतदित्यर्थः। मनः चञ्चलम् अत्यर्थंचलम्, न केवलं चञ्चलम् अपि तु प्रमाथि प्रमथ्नाति शरीरमिन्द्रियाणि चेति तच्छीलम्। शरीरेन्द्रिय-

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

श्रीभगवान् उवाच—

अशंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥३५॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥

---

परवशीकरणशीलम् । (किञ्च) बलवद् न केनचिद् नियन्तुं शक्यम् । (किञ्च) दृढम् तन्तुनागवद् अच्छेद्यम् । 'तन्तुनागो वरुणपाशशब्दितो जलचारी पदार्थोऽत्यन्तदृढतया छेत्तुम् अशक्यत्वेन विवक्षितं' इत्यानन्दगिरिः । अभिप्रेताद् विषयाद् आक्रष्टुम् अशक्यमित्यर्थः । अस्तीतिशेषः । तस्यैवं भूतस्य मनसो निग्रहं निरोधं वायोरिव सुदुस्करम् अहं मन्ये । यथा वायोर्निरोधः सुदुष्करस्तथा मनसोऽपि निरोधः सुदुष्करः, इत्यहं मन्ये इत्यभिप्रायः ॥३४॥

अवतरण्—मनसो दुर्निग्रहत्वमङ्गीकृत्यैव तन्नियमनोपायं प्रतिवक्ष्यन्—श्रीभगवानुवाच ।

व्याख्या—हे महाबाहो, मनश्चलम् (अतएव) दुर्निग्रहं दुःखेन निग्रहीतुं शक्यम्, इति अशंशयम् अस्ति निश्चितमस्ति । अत्र संशयो नास्ति । एवमेतद् यथा त्वं ब्रवीषि । तु किन्तु हे कौन्तेय, अभ्यासेन, अभ्यासो नाम कस्याञ्चित् चित्तभूमौ (कस्मिंश्चिद् ध्येयविषये विजातीयप्रत्ययानन्तरिता समानप्रत्ययस्यावृत्तिश्चित्तस्येति । तेन । वैराग्येण च, वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाऽभ्यासात् वैतृष्ण्यम् । तेन च । मनो गृह्यते निगृह्यते निरुध्यते प्रमाणविपर्ययविकल्पनिद्रास्मृतिनामकवृत्तिपञ्चकरहितम् अविक्षिप्तं क्रियते इत्यर्थः ॥३५॥

अवतरणम्—योगोपदेशं सम्प्रति उपसंहरति—असंयतेति ।

व्याख्या—असंयतात्मना-अभ्यासवैराग्याभ्यां संयत आत्मा अन्तःकरणं यस्य स संयतात्मा, न संयतात्मा इति असंयतात्मा तेन । योगः सर्वत्र-

अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते ॥३९॥

---

ब्रह्मात्मैकत्वदर्शनरूपः, दुष्प्रापः दुःखेन प्राप्यते । वश्यात्मना, तु यः पुनर्वश्यात्मा अभ्यासवैराग्याभ्यां वशीकृतान्तःकरणः, तेन तु यतता यतमानेन अन्तःकरणस्य स्ववश्यत्वे जातेऽपि भूयोऽपि प्रयत्नं कुर्वता पूर्वोक्तो योगः सर्वत्र ब्रह्मात्मैकत्वदर्शनरूपः, उपायतो यथोक्तादुपायाद्, वैराग्यादिपूर्वकमनोनिरोधरूपाद् अवाप्तुं प्राप्तुं शक्यः इति मे मम वासुदेवस्य मतिरस्ति ॥३६॥

अवतरणम्—तत्र योगाभ्यासाङ्गीकरणेन परलोकैतल्लोकप्राप्तिनिमित्तानि कर्माणि येन संन्यस्तानि । किन्तु प्रयत्नशैथिल्याद योगसिद्धिफलं मोक्षसाधनं सम्यग्ज्ञानं न प्राप्तम्, इति स योगी मरणकाले योगमार्गाच्चलितचित्तः संजातस्तस्य नाशमाशङ्क्य प्रच्छति—अयतिरिति ।

व्याख्या—हे कृष्ण अयतिर्योगमार्गे अप्रयत्नवान् श्रद्धया आस्तिक्यबुद्ध्या उपेतो युक्तश्च, योगाच्चलितमानसः—योगमार्गाद् अन्तकालेऽपि चलितं मानसं यस्य सः भ्रष्टस्मृतिरिह (अतः) योगसंसिद्धिं योगफलम् सम्यग्दर्शनम् अप्राप्य कां गतिं गच्छति ? ॥३७॥

प्रश्नमेव विवृणोति कच्चिदिति । हे महावाहो, उभयविभ्रष्टः योगाऽभ्यासे लग्नत्वात् कर्ममार्गाद् विभ्रष्टः, अन्तकाले योगमार्गाच्चलितमानसत्वाद् योगमार्गाच्च विभ्रष्टः (अत एव) ब्रह्मणःपथि ब्रह्मप्राप्तिमार्गे विमूढः सन्, अप्रतिष्ठो निराश्रयो (भवन्) छिन्नाभ्रमिव वायुना छिन्नं विशकलितम् अभ्रं मेघो यथा नश्यति तद्वत् कच्चित् किं वा न नश्यति ? ॥३८॥

यथोपदर्शित संशयस्याऽपाकरणाय प्रेरयन्नाह—एतदिति । हे कृष्ण मे मम एतम् संशयम् अशेषतः समस्ततः, छेत्तुम् अर्हसि योग्योऽसि । त्वदन्यः त्वत्तोऽन्यः कश्चिद्, ऋषिर्वा देवो वा अस्य मम संशयस्य छेत्ता अपाकर्ता, न

श्रीभगवान् उवाच—

पार्थ नैवेह नाऽमुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ॥४०॥
प्राप्य पुण्यकृतां लोकान् उषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

---

हि उपपद्यते न हि संभवति । अतस्त्वमेव मम संशयं छिन्धि । यतस्त्वं परमेश्वरोऽसीत्याशयः ॥३९॥

अवतरणम्—अत्रोत्तरं श्रीभगवानुवाच—

व्याख्या—हे पार्थ, नैव इह, अस्मिन् लोके, न (च) अमुत्र परलोके, तस्य योगभ्रष्टस्य विनाशो विद्यते । विनाशो नाम पूर्वस्माद्, जन्मनो हीनस्य उत्तरजन्मनः प्राप्तिः । स योगभ्रष्टस्य नैवास्ति 'एवेति निश्चये' हि यस्माद् हे तात 'तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते । पितैव पुत्र इति पुत्रोऽपि तात उच्यते । शिष्योऽपि (पुत्रतुल्यत्वात्) पुत्र उच्यते ।' इति भाष्यम् । कल्याणकृत् शुभकृत् कश्चित् कश्चिदपि योगभ्रष्टो योगाऽभ्रष्टो वा दुर्गतिं कुत्सितां गतिं न गच्छति न प्राप्नोति । 'उभयभ्रष्टस्याऽपि श्रद्धेन्द्रियसंयमादेः-सामिकृतश्रवणादेश्च सत्त्वाद् उपपन्नं शुभकृत्त्वमि'त्यानन्दगिरिः ॥४०॥

(किन्तु योगमार्गे प्रवृत्तः सर्वकर्मसंन्यासी योगभ्रष्टो भूतपूर्वयोगप्रवृत्तिबलात्) पुण्यकृताम् अश्वमेधादियाजिनां लोकान् स्वर्गादीन् प्राप्य (तत्र च) शाश्वतीः समाः बहून् वत्सरान् उषित्वा वासम् अनुभूय तद्भोगक्षये शुचीनां शास्त्रविहितकर्मकारिणाम् श्रीमतां विभूतिमतां गेहे गृहे अभिजायते ॥४१॥

'अल्पकालाभ्यस्तयोगभ्रंशे गतिरियम् उक्ता । चिराभ्यस्तयोगभ्रंशे तु पक्षान्तरमाह—अथवेति'इति श्रीधर स्वामी । "अथवा श्रीमतां कुलाद् अन्यस्मिन् धीमतां ब्रह्मविद्यावतां योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतद्धि जन्म यद्दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखेन लभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशम् । यथोक्तविशेषणे कुले ।" इति भाष्यम् । 'योगिनामिति कर्मिणां ग्रहणं माभूदिति विशिनष्टि धीमतामिति । ब्रह्मविद्या-

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥

---

वतां शुचीनां दरिद्राणां कुले जन्म दुर्लभादपि दुर्लभं प्रमादकारणाऽभावादित्याह --एतद्धीति' इत्यानन्दगिरिः ॥४२॥

अवतरणम् यज्जन्मा दुर्लभतरमुक्तं तस्य उत्तमतरत्वेन हेतुमाह— तत्रेति ।

व्याख्या --तत्र योगिनां कुले जातः सन् पौर्वदेहिकम् पूर्वस्मिन् देहे भवम्, बुद्धिसंयोगम् बुद्ध्या आत्मविषयया सह संयोगम् सम्यक् संबन्धं लभते प्राप्नोति। ततो भूयस्तस्मात् पूर्वकृतात् संस्काराद् बहुतरम्, संसिद्धौ योगसंसिद्धिनिमित्तम्, यतते प्रयत्नं करोति च। यावती योगभूमिः पूर्वजन्मनि जिता, तत्र च यावान् बुद्धिलाभो जातस्तावन्तं बुद्धिसंयोगम् अल्पेनैव अभ्यासेन पूर्वाऽभ्यासयत्नाल्लभते। तस्मादपि भूयस्यां संसिद्धौ तदूर्ध्वभूमिलाभाय प्रयत्नं करोति चेत्यर्थः। 'प्रयत्नः श्रवणाद्यनुष्ठानविषयः' इत्यानन्दगिरिः। हे कुरुनन्दनेति संबोधयन् कुरुं स्मारयति भगवान् ॥४३॥

अवतरणम्--कथं पूर्वदेहबुद्धिसंयोग इति ? तदुच्यते—पूर्वेति ।

व्याख्या—हि यस्मात् तेनैव पूर्वाभ्यासेन यः पूर्वजन्मनि कृतोऽभ्यासस्तेनैव बलवता सता अवशोऽपि कुतश्चिदन्तरायाद् अनिच्छन्नपि सः विद्यावतां योगिनां कुले जातश्चिराऽभ्यस्तयोगभ्रष्टः। ह्रियते योगं प्रति आकृष्यते। विषयेभ्यः परावर्त्य ब्रह्मनिष्ठः क्रियते। अत्र भाष्ये-'यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाऽभ्यासस्तेनैव बलवता ह्रियते हि यस्मादवशोऽपि स योगभ्रष्टो न कृतं चेद् योगाभ्याससंस्काराद् बलवत्तरम् अधर्मादिलक्षणं कर्म तदा, योगाभ्यासजनितेन संस्कारेण ह्रियते। अधर्मश्चेद् बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव। तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्याऽपि विनाशस्तस्यास्तीत्यर्थः।' इति। ननु पूर्वतराऽनेकजन्मकृतकर्मकाण्डफलप्राबल्यान् समनन्तरैकपूर्वजन्मकृतयोगाभ्याससंस्कारस्य नाश एव किं न स्यात ? इति चेन्, तत्राह-जिज्ञासुरिति। योगस्य ध्यानयोगस्य ज्ञानयोगस्य च सम्यग्दर्शनलक्षणस्य, जिज्ञासुरपि, स्वरूपं ज्ञातुमिच्छन् योग-

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥

---

मार्गे प्रवृत्तः संन्यासी योगभ्रष्टोऽपि, शब्दब्रह्म वेदोक्तकर्मकाण्डानुष्ठानफलम् अतिवर्तते अपाकरिष्यति। अपिशब्दात् किमुत बुद्ध्वा यो योगम् तन्निष्ठोऽभ्यासं कुर्यात् सोऽतिवर्तते कर्मकाण्डफलमिति वक्तव्यम् ? अतः प्राक्तनकर्मानुष्ठानफलेन पूर्वतराऽनेकजन्मकृतेनापि समनन्तरैकपूर्वजन्मकृतस्यापि योगाभ्याससंस्कारस्य नैव नाशः संभवतीत्याशयः ॥४४॥

अवतरणम्—योगनिष्ठस्य श्रेष्ठत्वे हेत्वन्तरमाह—प्रेति ।

व्याख्या—प्रयत्नाद् यतमानस्तु अधिकं यतमानस्तु इत्यर्थः । योगविषये प्रयत्नाऽतिरेके सति । योगी ध्यानयोगी ज्ञानयोगी च, योगमहिम्ना संशुद्धकिल्बिषः व्यपगतसम्यग्ज्ञानोत्पत्तिप्रतिबन्धकपापः । अनेकजन्मसंसिद्धः जन्मनि जन्मनि किञ्चित् किञ्चत् संस्कारजातम् उपचित्य अनेकस्मिन् जन्मनि सति बहुषु जन्मसु जातेषु उपचितेन अनेकजन्मकृतेन संस्कारजातेन संसिद्धः प्राप्तसम्यग्दर्शनः, सन् ततः प्राप्तात् सम्यग्दर्शनात् परां प्रकृष्टां गतिं मोक्षाख्यां याति प्राप्नोति ॥४५॥

यस्मादेवं तस्मात्—तपस्विभ्य इत्यादि । योगी ध्यानयोगी, तपस्विभ्यः कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्यः अधिकः श्रेष्ठः । ज्ञानिभ्योऽपि, ज्ञानमत्र शास्त्रार्थपाण्डित्यम् तद्वद्भ्योऽपि अधिकः श्रेष्ठो मतो ज्ञातः । कर्मिभ्यश्च कर्म अग्निहोत्रादि, तद्वद्भ्यश्च, अधिकः श्रेष्ठो मतः । तस्माद् यस्माद् योगी तपस्विप्रभृतिभ्यो विशिष्टस्तस्मात्कारणात् त्वं योगी ध्यानयोगी भव । हे अर्जुन ! ननु शास्त्रपाण्डित्यात्कथं ध्यानयोगस्य विशिष्टत्वम् यावत् सम्यग्दर्शनं प्रति शास्त्रार्थपाण्डित्यस्य अतीव प्रत्यासन्नत्वम् ? 'औपनिषदः पुरुषः' 'नावेदविन्मनुते' 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि श्रुतिवचनानि हि शास्त्रपरिज्ञानेनैव मोक्षं बोधयन्तीति चेत्, सत्यम् । ध्यानयोगेऽपि शास्त्रपाण्डित्यस्य अधिकारिविशेषणतयाऽऽवश्यकत्वात् । शास्त्रपाण्डित्यप्राप्त्युत्तरमेव ध्यानयोगस्याऽऽरम्भणीयत्वाद् अन्यथा शास्त्रपरिज्ञानाऽभावे केन रूपेण आत्मा ध्येयः स्यादिति ? अतः शास्त्रपाण्डित्यं प्राप्य स चित्तशुद्धिं बिना

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥६॥

---

अपरोक्षज्ञानस्याऽनुदयात् चित्तशुद्धयर्थं यतमानो योगाभ्यासी तदर्थम् अयतमानेभ्यः श्रेष्ठ इति न विरोधः ॥ अपरोक्षज्ञानादेव मुक्तिरिति प्रागुक्तं न विस्मरणीयम् । तदर्थं चित्तशुद्धेरपेक्षणात् चित्तशुद्धयर्थश्च ध्यानयोगस्यापेक्षा शास्त्रपरिज्ञानात्परत एवास्ति, न ततः पूर्वमेव, तदा ध्यातव्यस्य अपरिज्ञानात् ॥४६॥

अवतरणम्—अधुना ध्यानयोगमुपसंहरन्नाह—योगिनामिति ।

व्याख्या--योगिनामपि रुद्रादित्यादिध्यानपराणां मद्ध्यानपराणाञ्च सर्वेषां मध्ये श्रद्धावान् सन् यो योगी ध्यायी मद्गतेन मयि वासुदेवे गतेन समाहितेन अन्तरात्मना अन्तःकरणेन मां वासुदेवं परमात्मानं सगुणं निर्गुणं वा भजते सेवते चिन्तयति स्मरति, स योगी ध्यानयोगी मे मम ईश्वरस्य वासुदेवस्य युक्ततमोऽतिशयेन युक्तः श्रेष्ठयोगी मत इष्टः । नहीश्वरस्य अभिप्रायोऽन्यथा भवितुमर्हतीति भावः । तदेवम् अनेन अध्यायेन कर्मयोगस्य संन्यासहेतोः सीमां दर्शयता साङ्गं च योगं विवृण्वता योगभ्रष्टस्य नाशशङ्कावकाशं शिथिलयता ब्रह्मात्मैकत्वसाक्षात्कारस्य मोक्षसाधकत्वं कथयता ब्रह्मात्मैकत्वसाक्षात्कारं प्रति ध्यानयोगस्यान्तरङ्गसाधनत्वं प्रकाशयता 'तत् त्वमसि' इति वाक्यघटकस्य त्वंपदार्थस्य निरूपणं समापितम् । अतः परं श्रद्धावान् भजते यो माम् इति सूत्रितां भक्तिं भजनीयं वासुदेवं च तत्पदार्थभूतं निरूपयितुम् द्वितीयषट्कं वक्ष्यते ॥६॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां षष्ठोऽध्यायः ॥ इति प्रथमषट्कं संपूर्णम् ॥
श्रीकृष्णार्पणमस्तु



## ॥ अथ गीतावंश्यां सप्तमोऽध्यायः ॥

श्रीभगवान् उवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥
ज्ञानं तेऽहं सविज्ञानम् इदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥

---

अवतरणम्—एवं प्रथमषट्केन 'तत् त्वमसि' इति महावाक्यार्थघटकं त्वंपदार्थं निरूप्य मध्यमषट्केन तत्पदार्थं निरूपयितुमारभते। तथाऽतीत-षष्ठाध्यायान्ते 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥' इति प्रागुक्तस्य भगवद्वचनस्य व्याख्यानाय सप्तमोऽध्याय आरभ्यते। तत्र कीदृशं भगवतस्तत्त्वम् ? कथं च तद्गतान्त-रात्मा स्यादिति प्रश्नबीजसद्भावाद् अर्जुनेन प्रष्टव्यमेतद्द्वयं परमकारुणि-कतया अपृष्टमपि स्वयमेव प्रतिवक्तुम्, इच्छन् भक्तवत्सलः—श्रीभगवान् उवाच—

व्याख्या—हे पार्थ, योगं ध्यानयोगज्ञानयोगरूपम् मनःसमाधानं कुर्वन् (अतः) मदाश्रयः 'अहमेव परमेश्वर आश्रयः साधनं यस्य सः, (अतश्च) मय्या-सक्तमनाः मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं विषयान्तरपरिहारेण निविष्टं मनो यस्य सः, त्वं मां परमेश्वरम्, समग्रं समस्तैविभूतिबलशक्त्यैश्व-यादिगुणसंपन्नं यथा येन प्रकारेण, असंशयम् अविद्यमानः संशयो यस्मिन् ज्ञाने तद् यथा स्यात् तथा, 'एवमेव भगवान्' इति ज्ञास्यसि तत् तं प्रकारं ज्ञानस्य शृणु मया उच्यमानम् अवधारय ॥ यो हि कश्चिन् केनचित्पुरुषार्थेन अर्थी भवति स तत्साधनं कर्म अग्निहोत्रादि तपो दानं वा किञ्चिद् आश्रयं प्रति-पद्यते। योगं युञ्जन् त्वं तु मामेव आश्रयं प्रतिपद्यसे हित्वाऽन्यत्साधनान्तरम्। अतो मय्यासक्तमनास्त्वम् श्रोतुमर्हसीति भावः ॥१॥

अवतरणम्—श्रोतुरभिमुखीकरणाय विवक्षितं तज्ज्ञानं स्तौति—ज्ञानमिति।

व्याख्या—अहं वासुदेवः कृष्णः इदं पूर्वश्लोकनिर्दिष्टम्, स्वविषयकं ज्ञानम् शास्त्रजन्यम्, सविज्ञानम् स्वाऽनुभवसहितम्। ते तुभ्यम्। अशेषतः

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥

---

समस्ततः, वक्ष्यामि कथयिष्यामि । यज्ज्ञानं ज्ञात्वा लब्ध्वा इह अस्मिन् लोके भूयः पुनः, अन्यज्ज्ञातव्यं ज्ञानयोग्यम् पुरुषार्थसाधनं न अवशिष्यते नाऽवशिष्टं भवति । मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वाद् मज्ज्ञानं दुर्लभम् अस्तीत्याशयः ॥२॥

अवतरणम्—त्वत्तत्त्वज्ञानं कथं दुर्लभम् ? इत्युच्यते—मनुष्याणामिति ।

व्याख्या—मनुष्याणाम् असंख्यातानां जीवानां मध्ये मनुष्यव्यतिरिक्तानां श्रेयसि प्रवृत्तिरेव नास्ति । मनुष्याणां तु सहस्रेषु असंख्यातेषु इत्यर्थः । 'शतं सहस्रं लक्षं च सर्वमक्षय्यवाचकम्' इत्युक्तेः । अक्षय्यमित्यस्य असंख्यातमित्यर्थात् । मध्ये, कश्चित् प्रकृष्टपुण्यवशात् कश्चिदेकः सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्तये यतति प्रयत्नं करोति । यततां यतमानानाम् ततश्च सिद्धानाम् अपि शुद्धान्तःकरणानाम् अपि बहूनां मध्ये कश्चिदेको मां परमात्मानं तत्त्वतो यथावद् वेत्ति जानाति ॥३॥

अवतरणम्—इत्येवं श्रोतारं प्ररोचनेन अभिमुखीकृत्य ज्ञातव्यमाह—भूमिरिति ।

व्याख्या—भूमिरिति पृथिवीतन्मात्रं गन्धरूपमिह विवक्षितम् । न स्थूला पृथिवी, 'भिन्ना प्रकृतिरष्टधा' इतिवचनात् । तथा अबादयोऽपि तन्मात्राण्येवात्र विवक्षितानि । स्थूलानां भूम्यादीनां केवलविकृतित्वेन प्रकृतित्वाऽभावात् । तथा मन इह प्रकृतिप्रसङ्गान्मनसः कारणम् अहङ्कारो गृह्यते । बुद्धिशब्देन अहङ्कारस्य कारणं समष्टिबुद्धिरूपं महत्तत्त्वमिह गृह्यते । अहङ्कार इह अविद्यात्मकम् अव्यक्तम् । यथा विषसंयुक्तम् अन्नम् विषम् उच्यते एवम् अहङ्कारवासनावद् अव्यक्तं मूलकारणम् अहङ्कार इत्युच्यते । अहङ्कार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । अतः प्रवर्तकत्वाद् मूलकारणम् अव्यक्तम् अहङ्कारशब्दितं भवति । सत्येवाहङ्कारे ममकारो भवति, तयोश्च भावे सर्वा प्रवृत्तिरिति प्रसिद्धम् । तथा च सूक्ष्मा भूमिर्गन्धमात्रा । सूक्ष्मा आपो रस-

अपरेयम्, इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥५॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥

---

मात्राः । सूक्ष्मोऽनलो रूपमात्रः सूक्ष्मो वायुः स्पर्शमात्रः । सूक्ष्मं खम् आकाशं शब्दमात्रम् । अहङ्कारो महत्तत्त्वम् समष्टिबुद्धिरूपम् । अविद्यारूपम् अव्यक्तञ्च-इतीयं यथोक्ता मे मम ईश्वरस्य ऐश्वर्योपाधिभूता अष्टधा अष्टभिः प्रकारैर्भिन्ना भेदम् आगता । प्रकृतिः प्रक्रियते महदाद्याकारेणेति प्रकृतिर्माया नाम शक्तिर्जगद्रचनायाम् उपादानम् अस्तीत्यर्थः । 'इयम् इति अपरोक्षा साक्षिदृश्येति यावद्' इत्यानन्दगिरिः ॥४॥

अवतरणम्—एवम् अचेतनवर्गस्य स्वस्मिन् कल्पितत्वं बुबोधयिषन् स्वकीयशक्तिरूपप्रकृतेरष्टधा विवर्तम् अभिधाय विकारावच्छिन्नकार्यकल्पस्य चेतनवर्गस्य स्वस्मिन् कल्पितत्वं बुबोधयिषन् स्वकीयात्मभूतचैतन्यस्याऽपि अविद्यावच्छिन्नस्य प्रकृतित्वं दर्शयति उक्तां प्रकृतिम् अनुवदन् -अपरेति ।

व्याख्या—हे महाबाहो, इयम् अनन्तरोक्ता प्रकृतिः, अपरा न परा अपरा निकृष्टा अशुद्धा अनर्थकरी संसारबन्धनकारिणी अस्तीतिशेषः । इतोऽस्याः प्रकृतेरनन्तरोक्ताया अन्यां भिन्नां, तु अत्यन्तविलक्षणाम्, मे मम ईश्वरस्य आत्मभूतां परां विशुद्धां प्रकृष्टां, प्रकृतिं, जीवभूताम् क्षेत्रज्ञलक्षणाम् सकलप्राणिप्राणधारणनिमित्तभूतां विद्धि जानीहि । यया परया प्रकृत्या अन्तः प्रविष्टया जगद् धार्यते । न हि जीवरहितं जगद्, ध्रियेत इत्यभिप्रायः ॥ तथा च श्रुतिः-'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.) इति ॥५॥

अवतरणम्—'सर्वाणि भूतानि चेतनाऽचेतनरूपपराऽपरप्रकृतिकानि, चेतनाऽचेतनात्मकत्वात् । यथा मृदात्मको घटो मृत्प्रकृतिकः' इति कार्यलिङ्गकम् अनुमानम् उक्तप्रकृतिद्वये प्रमाणयन् तत्प्रकृतिद्वयस्वामितया स्वस्य अभिन्ननिमित्तोपादानत्वं प्रदर्शयति -एतदिति ।

व्याख्या—सर्वाणि भूतानि चेतनाऽचेतनात्मकजातवस्तूनि, एतद्योनीनि एते पराऽपरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनी कारणे येषां तानि । सन्तीति उपधारय इत्येवं जानीहि । एते प्रकृती योनीति नीलघटो घटः इतिवत् । यतो

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥
रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥

---

उभे सर्वभूतकारणे प्रकृती मम वर्तेते अतोऽहं वासुदेवः कृत्स्नस्य समस्तस्य जगतः प्रभवः उत्पत्तिस्थानम् तथा प्रलयः विनाशस्थानम् । अस्मीति शेषः । स्वप्रकृतिद्वयद्वारेण अहमेव सर्वज्ञ ईश्वरो जगतोऽभिन्ननिमित्तोपादानमस्मीत्यर्थः ॥६॥

अवतरणम्—यस्माद् अहमेव स्वप्रकृतिद्वयसाचिव्येन सर्वजगतः कारणम् अस्मि तस्मात्—मत्त इति ।

व्याख्या—हे धनञ्जय, मत्तः परमेश्वरात् परतरं प्रकृष्टतरम् अन्यत् भिन्नं स्वतन्त्रं किञ्चित्कारणं नास्ति । (यस्मात्) (तस्मात्) इदं सर्वं चेतनाऽचेतनं जगत् मयि परमेश्वरे सूत्रे मणिगणा इव हारनिर्माणयोग्यतन्तौ मणिगणवद् (दीर्घतिर्यक्तन्तुषु पटवच्च) प्रोतम् अनुगतम्, अनुविद्धम् ग्रथितम् अस्तीत्यर्थः । यथा दीर्घेषु तिर्यक्षु च तन्तुषु पटः प्रोतो भवति तद्वद् यथा च—मणयः सूत्रे अनुस्यूता स्तेनैव सूत्रेण ध्रियन्ते तद्धारणाऽभावे विप्रकीर्यन्ते तथा मयैव आत्मभूतेन सर्वं जगद् ध्रियते । मत्कृतधारणाऽभावदशायां तु सर्वं जगन्महाप्रलये प्रलीयते एव । अतोऽहं सर्वजगतः प्रभवः प्रलयश्चेति भावः ॥७॥

अवतरणम्—ननु केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमस्ति ? इति । तत्राह—रसोहमिति ।

व्याख्या—हे कौन्तेय, अहम् अप्सु जलेषु रसोऽस्मि । अपां यः सारः स रसः, सोऽस्मि । तस्मिन् रसभूते मयि आपः प्रोताः सन्तीत्यर्थः । एवं सर्वत्रार्थः । (तथा) शशिसूर्ययोः प्रभाऽस्मि । प्रभाभूते मयि शशिसूर्यौ प्रोतौ स्तः । (तथा) सर्ववेदेषु अहं प्रणवः सर्ववेदसारभूत ओङ्कारोऽस्मि । प्रणवभूते मयि सर्वे वेदाः प्रोताः सन्ति । (एवम्) खे आकाशे अहं शब्दः आकाशस्य सारभूतोऽस्मि । तस्मिन् मयि खं प्रोतमस्ति । (तथा) नृषु पुरुषेषु अहं पौरुषं पुरुषस्य भावः, यतः पुंबुद्धिर्नृषु भवति सोऽस्मि । तस्मिन्मयि पुरुषाः प्रोताः सन्तीत्यर्थः ॥८॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥

---

अवतरणम्—(किञ्च)—पुण्य इति ।

व्याख्या—पृथिव्यां च किञ्च पृथिव्याम् अहं पुण्यः सुरभिर्गन्धोऽस्मि । पुण्यगन्धभूते मयि पृथिवी प्रोताऽस्ति । पृथिव्यां गन्धस्य स्वाभाविकं पुण्यत्वं दर्शितम् । तद् जलादिषु रसादेरपि स्वाभाविकपुण्यत्वस्योपलक्षणम् । प्रथमोत्पन्नाः पश्चाऽपि शब्दादयो गुणाः पुण्या एव, सिद्धादिभिरेव भोग्यत्वादिति भावः । अपुण्यत्वन्तु गन्धादीनां संसारिप्राणिनाम् अविद्यापापाद्यपेक्षं भूतविशेषसंसर्गनिमित्तं भवति । विभावसौ अग्नौ तेजश्च दीप्तिश्च अस्मि । तेजो भूते मयि विभावसुः प्रोतोऽस्ति । सर्वभूतेषु सर्वप्राणिषु जीवनम् 'येन-जीवन्ति सर्वाणि भूतानि तद् जीवनम्' इति भाष्यम् । तद् अस्मि । जीवन-भूते मयि सर्वाणि भूतानि प्रोतानि । तपस्विषु वानप्रस्थादिषु तपश्च द्वन्द्वसहनादिसामर्थ्यरूपं च अहम् अस्मि । "तपश्चेति चकारेण आन्तरं चित्तैकाग्र्यं बाह्यञ्च जिह्वोपस्थादिनिग्रहलक्षणं धर्मजातं संगृह्यते ।" इति मधुसूदनीये तपो भूते मयि तपास्विनः प्रोता इत्यर्थः ॥९॥

अवतरणम्—ननु सर्वाणि भूतानि स्वस्वबीजे प्रोतानि । त्वयि कथम् ? तत्राह—बीजमिति ।

व्याख्या—हे पार्थ, मां वासुदेवं सर्वभूतानां सनातनं चिरन्तनं बीजं प्ररोहकारणं विद्धि जानीहि । सनातनबीजभूते मयि सर्वाणि स्थावरजङ्गमानि भूतानि प्रोतानि । (तथा) बुद्धिमताम् अन्तःकरणनिष्ठविवेकशक्तिमताम्, बुद्धिरन्तःकरणस्य विवेकशक्तिरस्मि । बुद्धिरूपे मयि बुद्धिमन्तः प्रोताः । (तथा) तेजस्विनाम् तेजः प्रागल्भ्यम्, तद्वतां तेजोऽस्मि । तेजोभूतेमपि तेज-स्विनः प्रोताः ॥१०॥

तथा हे भरतर्षभ, बलवतां-बलं सामर्थ्यम् ओजस्तद्वताम्, कामरागविवर्जितम् कामस्तृष्णा असन्निकृष्टेषु विषयेषु । रागो रञ्जना प्राप्तेषु विषयेषु । ताभ्यां विवर्जितम् रहितम् देहादिधारणमात्रार्थं बलं सामर्थ्यम् ओजोऽस्मि ।

बलं बलवतामस्मि कामरागविवर्जितम् ।
धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥१२॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगद् ।
मोहितं नाऽभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

---

न तु यत् संसारिणां तृष्णारागकारणम् । कामरागविवर्जितवलभूते मयि वलवन्तः प्रोताः । (तथा) भूतेपु धर्माऽविरुद्धः धर्मेण शास्त्रार्थेन अविरुद्धो यः कामो यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः सोऽस्मि । शास्त्रार्थाऽविरुद्ध-कामभूते मयि शास्त्रार्थाऽविरुद्धकामवन्तः प्राणिनः प्रोताः ॥११॥

अवतरणम्--(किञ्च)--

व्याख्या--ये चैव किञ्च ये एव भावाः पदार्थाः सात्त्विकाः सत्त्वगुण-निर्वृत्ताः ये च राजसा रजोगुणनिर्वृत्ताः, ये च तामसास्तमोगुणनिर्वृत्ताः सन्ति । ये केचिद् भावाः प्राणिनां स्वकर्मवशाद् जायन्ते तान् भावान् मत एव मत्सकाशादेव जायन्ते इत्येवं त्वं विद्धि जानीहि । (तथापि) अहं तेपु भावेपु नास्मि तद्भावाधीनो नास्मि, यथा संसारिणः सन्ति । ते पुनर्भावाः मयि मद-धीनाः सन्ति । मम परमेश्वरत्वादिति भावः ॥१२॥

अवतरणम्--एवं भूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्व-भूतात्मानं निर्गुणं संसारदोपबीजप्रदाहकारणं मां नाऽभिजानाति जगद् । अहो कष्टं खलु तद्अनुभवति' इति करुणां दर्शयन् तद् अज्ञानं जगतः किं निमित्तम् इति दर्शयति--त्रिभिरिति ।

व्याख्या--एभिरनन्तरोक्तैः सात्त्विकराजसतामसैर्गुणमयैर्गुणविकारैः रागद्वेपमोहादिप्र।रैस्त्रिभिर्भावैः पदार्थैर्मोहितम् अविवेकिताम् आपादितं-सद् इदं दृश्यमानं सर्वं जगत् प्राणिजातम् एभ्यो यथोक्तेभ्यो गुणेभ्यः परम् व्यतिरिक्तं विलक्षणम् अव्ययं व्ययहीनं जन्मादिसर्वभावविकारवर्जितं मां परमात्मानं न अभिजानाति न परिचिनोति, न साक्षात्करोति–'सोऽहम्' इति ॥१३॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥**

---

अवतरणम्—कथं पुनर्दैवीमेतां त्रिगुणात्मिकां मायाम् अतिक्रामन्ति ? इत्युच्यते--दैवीति ।

व्याख्या --"दैवी देवस्य मम ईश्वरस्य विष्णोः स्वभूता" अत्र 'स्वभूता' इति भाष्यस्य धनभूतेत्यर्थः । ऊहश्च ईश्वरो देवस्तस्याः स्वामिभूत इत्यर्थः । भूतशब्दप्रयोगान्मायाया वास्तविकं धनत्वं नास्तीत्यर्थः । तस्या अपि कल्पितत्वात् । हि, भ्रमोपादानत्वेन अर्थापत्तिप्रमाणेन प्रसिद्धा, एषा 'मामहं न जानामीति साक्षिप्रत्यक्षानुभवेनापि सिद्धा, गुणमयी सत्त्वरजस्तमोरूपगुणत्रयात्मिका त्रिगुणरज्जुरिव दृढतया बन्धनकारिणी मम विष्णोरेव लीलयाऽवतीर्णस्य माया अनृतस्य प्रपञ्चस्य इन्द्रजालादेरिव प्रकाशिका शक्तिः दुरत्यया, दुःखेन अत्ययोऽतिक्रमणं यस्याः सा, अस्तीति शेषः । "तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं निर्गुणं प्रपञ्चातीतं ये प्रपद्यन्ते" मदेकशरणतया प्रत्यक्षतः प्रतिपद्यन्ते, ते त एव, मायामेतां सर्वभूतमोहिनीं, तरन्ति अतिक्रामन्ति । तत्त्वज्ञानेन अज्ञानरूपाया मायाया नाशेन संसाराद् मुच्यन्ते इत्यर्थः । कस्य देवस्येत्यपेक्षायामाह मूले ममेति ॥ अत्र सांख्यस्मृतिकल्पितस्य प्रधानस्येव मायायाः स्वातन्त्र्य निषेधयितुं दैवीति विशेषणम् । मामेवेत्येवकारेण मायायास्तत्कार्यस्य च वेद्यकोटिनिवेशाऽभावो विवक्ष्यते । अत एव 'सर्वधर्मान् परित्यज्य मामेव' इति भाष्यकारेण विवरणं कृतम् । 'संसारान्मुच्यन्ते' इति फलोक्त्या इह प्रपद्यन्ते इत्यस्य 'प्रत्यक्षतः प्रतिपद्यन्ते' इत्येवार्थः स्वीकृतः श्रीमता भाष्यकृता । 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' (७।१९) इत्यत्र 'प्रपद्यते' इत्यस्य 'प्रत्यक्षतः प्रतिपद्यते' इत्यर्थ एव भगवता भाष्यकारेण विहितः । अत्र नीलकण्ठः–'जीवेश्वरविभागशून्ये शुद्धे चिन्मात्रे कल्पितो मायादर्पणदिव्यप्रतिबिम्बरूपं जीवं वशीकृत्य बिम्बचैतन्यम् अनुरुध्य प्रचलति । अयस्कान्तमनुरुध्येव लोहशलाका । इदमेव ईश्वराधीनत्वं मायायाः । ईश्वरस्य च मायाद्वारा सर्वस्रष्टृत्वमपि । तथा च श्रुतिः–'तस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ।' इति ।' इत्याह । इदञ्चात्र बोध्यम् आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥
चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः ॥१७॥

---

नाश्रयो भवति नाऽपि गोचरः ।' इति वार्तिकोक्तेर्मायाजीवेश्वरविभागरहितं-स्वप्रकाशानन्दचैतन्यमेव केवलमाश्रयते आवृणोति च। सा च अनादिः स्वयमपि कल्पिता कल्पनान्तरस्य च हेतुः। अविद्यावद्भिर्जीवैरेव कल्पिता जीवकृतकल्पनान्तरस्य च हेतुः। अज्ञानेन यथा रज्जुरेव सर्परूपेण विवर्तते, तथैव मायया ब्रह्मैव जगद्रूपेण विवर्तते। अतएव 'ब्रह्म सत्यं जगन्मिथ्येति सिद्धान्तप्रवादः पण्डितानां प्रचलितः। मायायाः कल्पितत्वेऽपि नाऽन्योऽन्याश्रयोऽनादित्वादिति ॥१४॥

अवतरणम्—यदि त्वां साक्षात्कृतवन्तः पुरुषा मायामेतां तरन्ति, कस्मात्त्वां सर्वे न साक्षात्कुर्वन्ति इत्युच्यते—नेति ।

व्याख्या—दुष्कृतिनः पापकारिणो, मूढा मूर्खाः, मायया अपहृतज्ञानाः संमुषितज्ञानाः, 'आसुरंभावम्' असुरस्य स्वभावं 'हिंसाऽनृतादिलक्षणम्' आश्रिताः प्राप्ता नराधमा नरेषु मध्ये अधमाः निकृष्टाः, मां परमेश्वरं न प्रपदयन्ते न प्रत्यक्षतः प्रतिपद्यन्ते न साक्षात्कुर्वन्ति ॥१५॥

अवतरणम्—ये पुनर्नरोत्तमाः पुण्यकर्माणस्ते मां साक्षात्कुर्वन्ति-इत्याह—चतुर्विधा इति ।

व्याख्या—हे भरतर्षभ, आर्तो जन आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाऽभिभूत आपत्तिग्रस्तः जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति यः सः॥ अर्थार्थी धनकामः, ज्ञानी विष्णोस्तत्त्वविच्चेति चतुर्विधाश्चतुष्प्रकाराः सुकृतिनः पुण्यकर्माणो जना मां परमात्मानं भजन्ते सेवन्ते। तत्र ज्ञानी तु मां प्रपन्न एव। अन्येऽपि कालेन मां साक्षात्कुर्वन्तीति भावः ॥१६॥

अवतरणम्—किं सर्वेऽप्येते चतुष्प्रकारा भक्तास्तुल्या एव ? इति चेत् तत्राह—तेषामिति ।

व्याख्या—तेषां चतुर्विधानां भक्तानां मध्ये ज्ञानी तत्त्ववित् तत्त्ववित्त्वाद् हेतोर्नित्ययुक्तो भवति एकभक्तिश्च। नित्ययुक्तो भगवति प्रत्यगभिन्ने

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥

---

सदा समाहितचेता विक्षेपकाऽभावात् । एकभक्तिः एकस्मिन्नेव भगवति भक्तिरनुरक्तिर्यस्य सः । अन्यस्य भजनीयस्याऽदर्शनाद् । अतः स एकभक्तिः । विशिष्यते विशेषम् आधिक्यम् आपद्यते अतिरिच्यते श्रेष्ठो भवतीत्यर्थः । अत्र कारणमाह–प्रियो हीति । हि यस्माद्, अहं वासुदेवः परमात्मा ज्ञानिनस्तत्त्वविदोऽत्यर्थं प्रियः । यस्मादहं वासुदेवो ज्ञानिन आत्मा । यस्माच्च ज्ञानी माम् आत्मत्वेन जानाति । आत्मा च सर्वतः प्रियो भवतीति लोके प्रसिद्धम् । तस्मादहं ज्ञानिन आत्मत्वादत्यर्थं प्रियोऽस्मीत्यर्थः । सच ज्ञानी मम वासुदेवस्य आत्मैवेति मम चाऽत्यर्थं स प्रियो भवतीत्यर्थः ॥१७॥

अवतरणम्—ननु तर्हि आर्तादयस्त्रयो वासुदेवस्य प्रिया न सन्ति किम् ? इत्यत आह—उदारा इति ।

व्याख्या—(यद्यपि) एते सर्वे एव चत्वारोऽपि भक्ताः, उदारा उत्कृष्टाः सन्ति आर्तादयस्त्रयोऽपि मम प्रिया एव सन्तीत्यर्थः (तथापि) ज्ञानी तु तत्त्ववित्तु भक्तस्तेषां मध्येऽत्यर्थं प्रिय इत्यर्थः । तत् कस्मादित्यत आह—(यस्माद्) ज्ञानी तु तत्त्ववित्तु मे मम वासुदेवस्य आत्मैव । नान्यो मत्तः प्रवर्तते । इति मे मम मतम् निश्चयोऽस्ति । अत्र कारणमाह–हि यस्मात् स ज्ञानी युक्तात्मा 'अहं भगवान् वासुदेव एव नान्यस्तस्मादस्मि' इत्येवं समाहितचित्तः सन्, अनुत्तमाम् नास्ति उत्तमा यस्यास्ताम्, गतिं गन्तव्यं मां परं ब्रह्म परमात्मानम् एव आस्थितः गन्तुम्, आरोढुं प्रवृत्तोऽस्ति । अतो ज्ञानी तत्त्ववित् मत्स्वरूप इत्यर्थः ॥१८॥

अवतरणम्—ज्ञानी पुनरपि स्तूयते—बहूनामिति ।

व्याख्या—बहूनां बहुसंख्यकानाम् जन्मनाम् किञ्चित्किञ्चिज्ज्ञानार्थसंस्कारोपचयाश्रयाणाम् अन्ते समाप्तौ चरमे जन्मनि ज्ञानवान् प्राप्तज्ञानपरिपाकः सन् मां वासुदेवं प्रत्यगात्मानं परमात्मानं 'वासुदेवः सर्वम्' इति प्रपद्यते प्रत्यक्षतः प्रतिपद्यते । 'यदिदं सर्वं चराचरात्मकं भ्रान्त्या भाति,

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

---

तत्सर्वं वासुदेवादतिरिक्तं किमपि न भवति' इत्येवं साक्षात्करोतीत्यर्थः । तथा च श्रुतिः–'सर्वं खल्विदं ब्रह्म' (छा) इति । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा.) इति च । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिसूत्रञ्च । य एवं सर्वात्मानं मां वासुदेवं प्रतिपद्यते स महात्मा, अस्तीतिशेषः । न तत्समोऽन्योऽस्ति अधिको वा । अतः सुदुर्लभः, 'मनुष्याणां सहस्रेषु' (७।३) इत्युक्तम् । 'महत्सर्वोत्कृष्टमात्मशब्दितं वैभवमस्येति महात्मा' इत्यानन्दगिरिः ॥१९॥

अवतरणम्—किमित्ति तर्हि सर्वेषां प्रत्यग्भूते भगवति 'आत्मैव सर्वं वासुदेवः' इति प्रतिपत्तिर्नोदेति ? तत्रोच्यते —कामैरिति ।

व्याख्या—यद्यपि 'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराऽधमाः' (७।१५) इत्यत्र कारणमुक्तमेव तथाप्यत्र प्रकारान्तरेण कारणान्तरमाह—तैस्तैः कामैः पुत्रपशुस्वर्गादिविषयैरभिलाषैः, हृतज्ञानाः अपहृतविवेकविज्ञानाः, स्वया स्वकीयया प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियताः नियमिताः नराः तं तं नियमम् तत्तद्देवताराधने प्रसिद्धो यो यो नियमो जपोपवासपूजनप्रदक्षिणनमस्कारादिस्तं तम्, आस्थाय आश्रित्य अन्यदेवता वासुदेवाद् आत्मनोऽन्या भूतप्रेतयक्षादिदेवताः क्षुद्राः प्रपद्यन्ते प्राप्नुवन्ति । अतस्तेषां तथा प्रतिपत्तिर्नोदेतीति भावः ॥२०॥

अवतरणम्—ननु कामिनामपि तत्तद्देवताप्रसादात् सर्वात्मके वासुदेवे भक्तिः क्रमेण भविष्यति ? तत्राह—यो य इति ।

व्याख्या—कामैस्तैस्तैर्हृतज्ञानानां देवतान्तरप्रपत्तिकारिणां मध्ये यो यः कामी श्रद्धया (संयुक्तः) भक्तश्च सन् यां यां तनुं देवताया अर्चितुं पूजयितुम् इच्छति कामयते । तस्य तस्य कामिनः तामेव श्रद्धाम् ययैव श्रद्धया संयुक्तः पूर्वं स्वभावतः प्रवृत्तो देवताविशेषस्य पूजने । तस्य तस्य कामिनस्तामेव श्रद्धाम् अचलां स्थिराम् अहं वासुदेवः परमात्मा विद धामि करोमि । नातः कामिनामपि क्रमेण भगवति भक्तिरुदेति इति भावः ॥२१॥

स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥२२॥
अन्तवत्तु फलं तेषां तद् भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥

---

स कामी तया श्रद्धया मया स्थिरीकृतया युक्तः सन् तस्यास्तस्या देवतातन्वाः, राधनम् आराधनम् ईहते चेष्टते निर्वर्तयतीत्यर्थः । पूर्वश्लोके यां यामिति यच्छब्दनिर्दिष्टाया उत्तरश्लोके तस्या इति तच्छब्देन प्रतिनिर्देशो देवतातन्वा बोध्यः । च किञ्च स देवताविशेषभक्तस्तत्तत्कामी, ममैव सर्वज्ञेन परमेश्वरेण कर्मफलविभागज्ञाननिपुणेन तत्तद्देवताया अधिष्ठात्रा विहितान् निर्मितान् दत्तान् तान् कामान् यत्फलार्थितया प्रवृत्तस्तानि फलानि, ततस्तस्या आराधिताया देवतातन्वाः सकाशाद् लभते प्राप्नोति । हि यस्मात् तानि फलानि मयैव विहितानि अतस्तानि अवश्यं लभते इत्यर्थः । 'हितान् इति पदच्छेदे हितत्वं कामानाम् उपचरितं कल्प्यम् । न हि कामा हिताः कस्यचिद्' इति भाष्यम् । 'फलमतस्तदुपपत्तेः' इतिब्रह्मसूत्रे च स्पष्टमिदम् ॥२२॥

अवतरणम्—यद्यपि सर्वा अपि देवता ममैव मूर्तयः । अतस्तदाराधनमपि ममैवाराधनम् तत्तत्फलदाताऽपि चाहमेव तथापि साक्षान्मद्भक्तानां च तेषाञ्च वस्तुविवेकाऽविवेककृतं फलवैषम्यं भवति इत्याह—अन्तवदिति ।

व्याख्या—अल्पमेधसाम् अल्पप्रज्ञानाम् अल्पप्रज्ञतयैव अन्यदेवताभक्तानाम् तेषां तत् फलम् मया विहितमपि तत्तद्देवताविशेषाराधनजं फलम् अन्तवत् तु अन्तवदेव । विनाश्येव । तु शब्दोऽवधारणार्थ इत्यानन्दगिरि । 'यस्माद् अन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च ते अतः ।' इति भाष्यम् । मद्भक्तानां तु फलं न अन्तवत् किन्तु अनन्तं भवति । अनल्पमेधसो हि मद्भक्ता इति सामर्थ्याद् गम्यते । (यस्माद्) देवयजो देवान् इतरदेवान् भूतप्रेतयक्षादीन् ये यजन्ति ते. देवान् स्वस्वपूज्यमानान् भूतादीन् अन्तवत एव यान्ति प्राप्नुवन्ति । मद्भक्ता(स्तु)माम् अपि मामेव अनन्तं सच्चिदानन्दं यान्ति प्राप्नुवन्ति, ज्ञानिनस्तु साक्षादेव । आर्तादयः सकामा अपि त्रयः प्रथमं मत्प्रसादद्वाराऽभीष्टान् कामान् प्राप्नुवन्ति, ततो मदुपासनापरिपाकाद् ब्रह्मात्मैक्यज्ञानं मत्प्रसादात्प्राप्य मामपि यान्ति इत्यर्थः । अपिशब्दसामर्थ्यादियमर्थः प्रतीयते । एवं समानेऽपि पूजनाद्यायासे मामेव न प्रपद्यन्ते अनन्तफलाय । अहो खलु कष्टं वर्तन्ते इति करुणां दर्शयति भगवान् ॥२३॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥
वेदाऽहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥

---

अवतरणम्- एवं भगवद्भजनस्योत्तमफलकत्वेऽपि प्राणिनां प्रायेण तन्निष्ठत्वाऽभावे निमित्तं दर्शयति—अव्यक्तमिति।

व्याख्या— मम ईश्वरस्य अव्ययं व्ययरहितम्, अनुत्तमं न उत्तमं यस्मात् तम्, निरतिशयम्, परं भावं परमात्मस्वरूपम्, अजानन्तोऽनवधारयन्तो यतोऽबुद्धयो विवेकहीनास्ततो हेतो मां वासुदेवम् ईश्वरम् नित्यप्रसिद्धम् अपि सन्तम् अव्यक्तं व्यक्तिमापन्नम्, पूर्वम् अप्रकाशम् इदानीं प्रकाशं गतम् मनुष्यवद् उत्पत्तिमन्तं मन्यन्ते ॥२४॥

अवतरणम्—तेषां वासुदेवस्य अज्ञाने विवेकहीनत्वं कारणमित्यभिधाय कारणान्तरमपि तत्राह—नाहमिति ।

व्याख्या—यस्मादहं योगमायासमावृतस्तस्मादहं सर्वस्य लोकस्य प्रकाशो नास्मि । केषाञ्चिदेव (मद्भक्तानाम्) अहं प्रकाशः प्रत्यक्षज्ञानगोचरोऽस्मीत्यभिप्रायः । "योगः सत्त्वादीनां गुणानां युक्तिर्घटनम् । सैव माया योगमाया, तया समावृतः संछन्न इत्यर्थः ।" इति भाष्यम् । तस्मात्सर्वस्य लोकस्य अहं प्रकाशो नास्मीत्यर्थः । अत एव मूढोऽयं लोको माम् अजम् अजन्मानम् अव्ययं नाशरहितं सर्वेश्वरं नअभिजाति न परिचिनोति अयम् ईश्वर इति ॥२५॥

अवतरणम्—यया योगमायया समावृतं मां लोको नाऽभिजानाति सा योगमाया मम ईश्वरस्य मायाविनो मायापतेर्ज्ञानं न प्रतिबध्नातीत्याह—वेदेति ।

व्याख्या—हे अर्जुन' अहं भगवान् ईश्वरः परमात्मा वासुदेवः सर्वज्ञः समतीतानि समतिक्रान्तानि वर्तमानानि विद्यमानानि च भविष्याणि भविष्यन्ति च भूतानि चराचरजातानि वेद जानामि । मां तु किन्तु मांकश्चन

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥२७॥
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥

---

कश्चिदपि 'एकं मच्छरणं मद्भक्तं मुक्त्वा अन्यः' न वेद न अभिजानाति। (एकमित्यादेर् अध्याहारो भाष्येऽत्र) अतो मत्तत्त्वपरिज्ञानाऽभावादेव सर्वो लोको मां न भजते इति वाक्यार्थः ॥२६॥

अवतरणम्—केन पुनस्त्वत्तत्त्ववेदनप्रतिबन्धेन मूलाऽज्ञानाऽतिरिक्तेन अन्येन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि त्वां न विदन्ति ? इत्यपेक्षायाम् आह—इच्छेति।

व्याख्या—हे भारत, इच्छाद्वेष समुत्थेन इच्छा च द्वेषश्च, इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थस्तेन। द्वन्द्वमोहेन द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहस्तेन। तावेव इच्छाद्वेषौ द्वन्द्वम्, सुखदुःखतद्धेतुविषयकत्वात्। शीतोष्णादिवत् परस्परविरुद्धत्वाच्च। तत्र यदा इच्छाद्वेषौ सुखदुःखतद्धेतु-संप्राप्त्या लब्धात्मानौ भवतस्तदा तौ सर्वभूतानां प्रज्ञाया स्ववशापादनद्वारेण परमार्थतत्त्वविषयकज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः। न हि इच्छा-द्वेषवशीकृतचित्तस्य यथाभूतार्थविषयकज्ञानमुत्पद्यते बहिरपि। किं नु वक्तव्यम् ताभ्याम् आविष्टा बुद्धिर्यस्य तस्य संमूढस्य प्रत्यगात्मनि बहुभिः प्रतिबन्धैर् दुर्बोधे परमार्थतत्त्वे ज्ञानं नोत्पद्यते इति ? अतस्तेन इच्छाद्वेषसमुत्थेन द्वन्द्व-मोहेन सर्वभूतानि सर्गे जन्मनि उत्पत्तिकाले संमोहं-संमूढताम् अविवेकं यान्ति गच्छन्ति हे परन्तप। "जायमानानि सर्वभूतानि मोहवशान्येव जायन्ते। इत्यभिप्रायः।" इति भाष्यम्। यत एवम् अतस्तेन द्वन्द्वमोहेन प्रतिबद्ध-प्रज्ञानानि सर्वभूतानि माम् आत्मभूतमपि सन्तम् न जानन्ति। अत एव ते आत्मभावेन मां न भजन्ते इति वाक्यार्थः ॥२७॥

अवतरणम्—के पुनरनेन द्वन्द्वमोहेन निर्मुक्ताः सन्तस्त्वां यथाशास्त्रं विदित्वाऽऽत्मभावेन भजन्ते ? इत्यपेक्षितमर्थं दर्शयितुम् उच्यते—येषामिति।

व्याख्या—येषां तु पुण्यकर्मणाम् पुण्यं कर्म सत्त्वशुद्धिकारणं विद्यते येषां ते पुण्यकर्माणस्तेषाम्। जनानां, पापम् अन्तगतं समाप्तप्रायं क्षीणं भवति पुण्यकर्मवशात्। ते जना द्वन्द्वमोहनिर्मुक्ता द्वन्द्वमोहेन यथोक्तेन निर्मुक्ताः

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद् विदुः कृत्स्नम् अध्यात्मं कर्म चाखिलम् ॥२९॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥७॥

---

रहिताः (अतएव) दृढव्रताः, 'एवमेव परमार्थतत्त्वं यथा वेदान्तशास्त्रं वदति, नान्यथा' 'सर्वविक्रियाशून्यः सच्चिदानन्दः परमात्माऽहम्'—इत्येवं वेदान्तशास्त्रतः सुनिश्चितविज्ञानाः, इतरसर्वपरित्यागव्रतं दृढं येषां ते, मां परमात्मानं सच्चिदानन्दं प्रत्यगात्मभावेन भजन्ते ॥२८॥

अवतरणम्—ते किमर्थं त्वां भजन्ते ? इत्याशङ्क्य जरामरणमोक्षायेत्युच्यते—

व्याख्या—जरामरणमोक्षाय जरामरणादिसंसारदुःखमुक्तये, इदं पूर्वान्वयि 'भजन्ते मां दृढव्रताः' इतिपूर्वेण सह मध्यमणिन्यायेन अस्यान्वयः ! मध्यमाधिकारिणं प्रत्याह 'मामाश्रित्य यतन्ति' इत्यादि । ये जना मां सगुणं सप्रपञ्चं परमात्मानम् आश्रित्य, मयि परमात्मनि, सामर्थ्यात् सगुणे इति गम्यते । समाहितचित्ताः सन्तः, इत्यर्थः यतन्ति प्रयतन्ते, भगवन्निष्ठासिद्ध्यर्थं बहिरङ्गाणां यज्ञादीनाम् अन्तरङ्गाणां श्रवणादीनां च अनुष्ठानं कुर्वन्ति । ते जनाः, तद् ब्रह्म परं ब्रह्म, विदुर्जानन्ति कृत्स्नम् समस्तम् अध्यात्मं प्रत्यगात्मविषयं वस्तु विदुः अखिलं समस्तं कर्म च विदुर्जानन्ति ॥२९॥

अवतरणम्—मद्भक्तानाम् इदं च सिद्ध्यति—साधीति ।

व्याख्या—(किञ्च) मां सगुणं परमात्मानं साधिभूताधिदैवम्, अधिभूतं च अधिदैवञ्च ताभ्यां सह, साधियज्ञं च अधियज्ञेन सह च परमात्मानं ये विदुर्जानन्ति । ते युक्तचेतसः समाहितचित्ताः प्रयाणकालेऽपि च मरणकालेऽपि च पूर्वोपचितसंस्कारपाटवाद् मां परमात्मानं विदुर्जानन्ति । ततः संसाराद् मुच्यन्ते इत्यभिप्रायः ॥ इदन्तु बोध्यम् । 'जरामरणादिलक्षणसंसारनिवृत्त्यर्थं निर्गुणं निष्प्रपञ्चं परमात्मानं माम् उत्तमाधिकारिणो जानन्ति' इत्युक्तं 'मामेव

ये प्रपद्यन्ते' इत्यादौ। मध्यमाधिकरिणामनुग्रहाय सगुणस्य राप्रपञ्चस्य ध्येयत्वमाह 'मामाश्रित्य यतन्ति ये' इत्यादिना। प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः' इत्यनेन युक्तचेतसां मृत्युकालेऽपि भगवद्भावनावशाद् भगवत्तत्त्वज्ञानम् अप्रतिहतं तिष्ठतीत्याह। तदेवम् अनेन सप्तमाध्यायेन उत्तमाधिकारिणं प्रति ज्ञेयं निर्गुणं ब्रह्म निरूपयता निर्गुणब्रह्मज्ञानार्थमेव मध्यमाधिकारिणं प्रति ध्येयं सगुणं ब्रह्म निरूपयता च तत्पदलक्ष्यं तत्पदवाच्यं च 'तत् त्वमसि' इत्यत्रत्यं ब्रह्म दर्शितम् ॥३०॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां सप्तमोऽध्यायः ॥

श्रीकृष्णार्पणमस्तु।



# अथ वंशीव्याख्यायामष्टमोऽध्यायः

अर्जुन उवाच—

किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तम् अधिदैवं किमुच्यते ॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

---

अवतरणम्—पूर्वस्मिन् अध्याये मायोपबृंहितं ब्रह्म जगत्कारणमित्युक्तम् । तच्च उत्तमाधिकारिणाम् अनुपाधिकब्रह्मप्रतिपत्तौ उपलक्षणम् । मध्यमाधिकारिणां च तद् उपास्यम् । इति मत्वा प्रतिपत्तव्यं ब्रह्मेति तद्विषय एकः प्रश्नः । तस्य उपासनाविषयाश्च षट् प्रश्नाः । एवं सप्तानां प्रश्नानां विषयाः सूचिताः पूर्वाऽध्यायान्ते भगवता–'ते ब्रह्म तद् विदुः' इत्यादिना सार्धेन श्लोकेन । तद्वृत्तिरूपोऽयम् अष्टमोऽध्याय आरभ्यते । तत्रैवं प्रश्नबीजमुपलभ्य ब्रह्मादिशब्दानाम् अर्थं बुभुत्सुरर्जुनः पृच्छति—किमिति ।

व्याख्या—हे पुरुषोत्तम, भवता पूर्वत्र प्रोक्तास्तद्ब्रह्मादयः के सन्ति ? यदुक्तं 'ते तद् ब्रह्म विदुः' इति, तत्र तद्, ब्रह्म किं सोपाधिकम् ? किंवा निरुपाधिकम् ? ब्रह्मशब्दस्योभयत्रापि संभवान्मम संदेहः । यच्चोक्तं 'कृत्स्नमध्यात्मं विदुरिति, तत्र आत्मानं देहम् अधिकृत्य तस्मिन् अधिष्ठाने तिष्ठतीतिव्युत्पत्तिकेन अध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा, प्रत्यग्भूतं ब्रह्मैव वा विवक्षितम् ? इति मम संदेहः । यच्चोक्तं 'ते अखिलं कर्म विदुरिति । तत्र कर्म किं यज्ञरूपम् ? तदन्यद्वा ? 'विज्ञानं यज्ञं तनुते' 'कर्माणि तनुतेऽपि च' इति श्रुत्योर्द्वैविध्यश्रवणात् । इति मम सन्देहः । यच्चोक्तं 'साधिभूताधिदैवम्' इति । तत्र भूतम् अधिकृत्य तस्मिन् अधिष्ठाने तिष्ठतीतिव्युत्पत्तिकेन अधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्तमानं किञ्चिदेव गृह्यते ? किंवा समस्तमेव कार्यजातम् ? इति मम सन्देहः । यच्चोक्तम् 'अधिदैवम्' इति । तत्र दैवतविषयम् अनुध्यानं वा ? दैवतेषु आदित्यमण्डलादिषु वर्तमानं चैतन्यं वा विवक्षितम् ? इति मम सन्देहः ॥१॥ किञ्च यदुक्तं 'साधियज्ञम्' इति । तत्र

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमम्, स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञितः ॥३॥

---

अधियज्ञः कः ? यज्ञम् अधिकृतो विज्ञानात्मा वा ? परमात्मा वा ? स च केन प्रकारेण कथं चिन्तनीयः ? किं परब्रह्मत्वेन ? किंवा तादात्म्येन ? किंवा अत्यन्ताऽभेदेन चिन्तनीयः ? 'प्रयाणकाले च कथं ज्ञेयोऽसि' इति चकारेण ज्ञेय इति पदस्येहापकर्षणात् तदुपासनाप्रकारविषयोऽयम् अधियज्ञः कथमिति प्रश्नः । कथं ज्ञेयश्चिन्तनीय इत्यर्थः । 'कः' इति स्वरूपविषयकः प्रश्नः । 'कथं कः' इति मिलितः समुदायात्मक एक एव प्रश्नोधियज्ञविषयः । सर्वथाऽपि सोऽधियज्ञः किम् अस्मिन् देहे वर्तते ? ततो बहिर्वा ? देहे चेत् स कोऽत्र ? बुद्धयादिस्तद्व्यतिरिक्तो वेति मम सन्देहः । हे मधुसूदन, प्रयाणकाले मरण-काले च नियतात्मभिः समाहितचित्तैः कथं केन प्रकारेण ज्ञेयोऽसि ज्ञात-व्योऽसि ? मरणकाले करणग्रामस्य व्यग्रत्वात् चित्तसमाधानस्याऽनुपपत्तेः । एवं भवदुक्तेषु सप्तस्वपि ज्ञेयविषयेषु मम संदेहोऽस्ति । भवता च पुरुषोत्तमेन मधुसूदनेन च कृपया मम इमे सप्तविषयकाः सन्देहा उत्तरप्रदानेन निवार-णीयाः ॥२॥

अवतरणम् —क्रमेणकृतानां क्रमेणैव प्रतिवचनं कर्तुम्—श्रीभगवानुवाच ।

व्याख्या—प्रथमप्रश्ने तावन्निर्णयमाह—अक्षरमिति । परमं सर्वत उत्कृष्टं निरतिशयम्, अक्षरं न क्षरतीति न नश्यतीति, अश्नुते सर्वं व्याप्नो-तीति वा अक्षरम्, नित्यत्वसर्वव्यापित्वाभ्याम् पर आत्मा, ब्रह्म, ब्रह्मशब्देन उच्यते कथ्यते—श्रुतिज्ञैः—'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ० ३।८।९) इति श्रुतेः । परमम् निरतिशयम् इति विशेषणादिह अक्षरशब्दो न वर्णबोधको रूढ्या ग्रहीतुं शक्यः । 'ओमित्येकाक्षरं ब्रह्म' इत्यत्रापि 'तस्य वाचकः प्रणवः' इति योगस्मृतेर्, 'ओम' इत्येकाक्षरवाच्यं ब्रह्मेत्यर्थः । वर्णसमुदायस्य ओङ्का-रस्य परब्रह्मत्वाऽसंभवात् । ब्रह्मप्रतिपत्तिसाधनत्वाद् वा तत्र ब्रह्मत्वेन तस्य व्यपदेशः । एवञ्च 'ते तद् ब्रह्म विदुः' इत्यत्र निरुपाधिकं निर्गुणमेव ब्रह्म विवक्षितमिति प्रथमप्रश्ने निर्णयः ॥ द्वितीयप्रश्नोत्तरमाह—स्वभाव इति । स्वश्चासौ भावश्चेति कर्मधारयव्युत्पया स्वभावस्तस्यैव परस्य ब्रह्मणः प्रति-देहं प्रत्यगात्मभाव एवात्र अध्यात्मशब्देन 'आत्मानं देहमधिकृत्य तस्मिन्न-

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

---

धिष्ठाने तिष्ठती'ति व्युत्पत्तिवलाद् उच्यते। देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु इह अध्यात्मशब्देन अभिधीयते । न तु स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्राम इति निर्णयः ॥ तृतीय प्रश्नोत्तरमाह—भूतेति । भूतभावोद्भवकरः भूतानां ब्रह्मादिस्तम्बपर्यन्तानां स्थावरजङ्गमानां भावः सत्ता, तस्या उद्भवः उत्पत्ति करोति यः सः, विसर्गो देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागो यज्ञः, स एवेह कर्मसञ्ज्ञितः। कर्मशब्देनोच्यते इत्यर्थः। एतस्माद्धि बीजभूताद् वृष्टयादिक्रमेण स्थावरजङ्गमानि भूतानि उद्भवन्तीति निर्णयः ॥३॥ चतुर्थप्रश्नोत्तरमाह—अधिभूतमिति । अधिभूतम् भूतं प्राणिजातम् अधिकृत्य भवतीति व्युत्पत्त्या क्षरः क्षरतीति क्षरो विनाशी भावो, देहादिकं सर्वमेव जनिमद् वस्तु अधिभूतम् उच्यते इत्यर्थः। पञ्चमप्रश्नोत्तरमा—पुरुषश्चेति । च=किञ्च, पुरुषः पूर्णम् अनेन सर्वम् इति, पुरि शयनाद् वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानाम् अनुग्राहको यः सोऽधिदैवतम् इहोच्यते । न दैवताऽनुध्यानम् इति निर्णयः। षष्ठप्रश्नोत्तरमाह—अधियज्ञ इति । हे देहभृतां श्वर, अत्र देहे, जातावेकवचनम्, एषु देहेषु इत्यर्थः । अधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णुशब्दिता "यज्ञो वै विष्णुः" इति (शतपथ) श्रुतेः, स हि विष्णुरहमेवास्मि । यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणः, तस्याहम् अधिष्ठाता अधियज्ञ इति शब्दितोऽस्मि । 'यज्ञो वै विष्णुः' इत्यस्यापि यज्ञाधिष्ठाता विष्णुरित्यर्थः । देहे इत्यनेन देहाद् वहिरन्तर्वा इति संदेहोऽपाकृतः । अहमेव अधियज्ञ इत्युक्त्या सा अधियज्ञशब्दिता देवता परब्रह्मणः सकाशाद् अत्यन्ताऽभेदेन प्रतिपत्तव्या इत्युक्तम् । पूर्वत्र स्वस्य परब्रह्मतया प्रोक्तत्वात् । तस्य बुद्धयादिव्यतिरिक्तत्वञ्चोक्तं भवति ॥४॥ अधुना सप्तमप्रश्नस्य समाधानमाह—अन्तकाले चेति । अन्तकाले च मृत्युकाले च मामेव परमेश्वरं विष्णुं स्मरन् कलेवरं शरीरं मुक्त्वा परित्यज्य यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति प्राप्नोति । अत्र अस्मिन् अर्थे मद्भाव-

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदातद्भावभावितः ।।६।।

---

प्राप्ती संशयो वैष्णवं भावं प्राप्नोति न वेति संदेहो नास्ति । वैष्णवं भावं प्राप्नोत्येवेति निश्चयः खलु ज्ञेयः । अन्तकाले चेति चकारेण 'सदा तद्भाव-भावितः' इत्यर्थः । अत एव प्राणोत्क्रमणकाले करणग्रामवैयग्र्येऽपि तस्य सर्वदैव नैरन्तर्येण आदरधिया भगवति समर्पितचेतसा तदानीमपि कार्यकरण-ग्रामम् अगणयतः पूर्ववास ।वशादेव भगवदनुध्यानं सिध्यति । तस्य तस्मिन् शरीरे अहं ममाऽभिमानाऽभावान्न व्यग्रतेति भावः । 'ब्रह्मवेद ब्रह्मैव भवति' (मु०) इति श्रुतिमाश्रित्योक्तं नास्त्यत्र संशय इति । तत्रायं तु विशेषः--सगुणब्रह्मचिन्तकश्चेत् ब्रह्मलोकं गत्वा तत्रान्ते प्राप्तनिर्गुणज्ञानः क्रमेण पर-ब्रह्मभावं गच्छति । ब्रह्मसाक्षात्कारवान् ; निर्गुणब्रह्मचिन्तकस्तु सद्य एव परब्रह्म भवति (ब्रह्मैव सन् ब्रह्माप्येति' (बृह०) इति श्रुतेः । अत्र पक्षे कलेवरं मुक्त्वा प्रयातीति लोकदृष्ट्योक्तम् । 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' (बृह०) इति श्रुतेः 'मामेव' इत्येवकारेण' अन्तकाले अध्यात्मत्वादिविशिष्टस्य स्मरणं वारयति, विशिष्टस्मरणे चित्तविक्षेपात् प्रधानस्मरणस्य बाधापत्तेरिति दिक् ।।५।।

अवतरणम्--मरणकाले भगवच्चिन्तने भगवद्भावप्राप्तिरिति भगव-द्विषय एव केवलं न नियमः किन्तु यद् यदेव चिन्तयति तदानीं, तत्तद्भावं यातीत्युच्यते—यं यमिति ।

व्याख्या—हे कौन्तेय, सदा सर्वदा तद्भावभावितः, तस्मिन् भावो भावना, वासना, संस्कारस्तद्भावः, स भावितः स्मर्यमाणतया अभ्यस्तो येन सः सन्, यं यं वाऽपि भावम् देवताविशेषादिकं, स्मरन् चिन्तयन्, अन्ते प्राणवियोगकाले, कलेवरं शरीरं त्यजति प्राणी, तं तमेव स्वेन स्मर्यमाणं भावम् एति प्राप्नोति, नान्यं भावम् एति । वा शब्दः पक्षान्तरे । 'तद्भाव-भावितः' इत्येतेन अन्तकाले स्मरणोद्यमाऽसंभवेऽपि पूर्वाऽभ्यासजनिता वासनैव स्मृतिहेतुरित्युक्तं भवति । 'सदा सर्वदा तद्भावेन तद्भावनया तदनुचिन्तनेन भावितो वासितचित्तः इति श्रीधरमधुसूदनीययोर्विग्रहः । श्रुतिरपि पूर्वप्रज्ञया देहान्तरसंबन्धं दर्शयति 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्वव-

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥

क्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृह ४।४।२) इति ! 'अथवा हे कौन्तेय, प्राणी सदातद्भावभावितः सन् अन्ते यं यं वाऽपि भावं स्मरन् कलेवरं त्यजति तं तमेव एति।' इति संवन्धः ॥६॥

अवतरणम् –यस्माद् एवम् अन्त्या भावना देहान्तरप्राप्तौ कारणम् सततभावनाचान्त्य भावना हेतुः–तस्मादिति।

व्याख्या–तस्मात् अन्त्यभगवद्भावनालाभाय, सर्वेषु कालेषु आदर-नैरन्तर्याभ्यां सह, त्वं माम् सगुणं निर्गुणं वा परमात्मानम् अनुस्मर अनुचिन्तय यथाशास्त्रम्। युध्य च युध्यस्व च युद्धं च स्वधर्मं कुरु यथाशास्त्रमेव। (एवं) मय्यर्पितमनोबुद्धिः मयि वासुदेवे सगुणे निर्गुणे वा यथेष्टम् अर्पिते मनोबुद्धी मनः संकल्पात्मकं बुद्धिर्व्यवसायात्मिका यस्य तव स त्वम् मय्यर्पितमनो-बुद्धिः सन् मामेव सगुणं निर्गुणं वा यथास्मृतम् एष्यसि आगमिष्यसि। असंशयः न संशयोऽत्र विद्यते। अत्र श्रीधरस्वामी–'तस्मादिति। यस्मात् पूर्ववासनैव अन्त्यकाले स्मृतिहेतुः। न हि तदा विवशस्य स्मरणोद्यमः संभवति। तस्मात् सर्वदा माम् अनुस्मर अनुचिन्तय। संततस्मरणं च चित्त-शुद्धिं विना न भवति, अतो युध्य च युध्यस्व चित्तशुद्ध्यर्थं युद्धादिकं च स्वधर्मम् अनुतिष्ठेत्यर्थः। एवं मय्यर्पितं मनः संकल्पात्मकम् बुद्धिश्च व्यवसायात्मिका येन त्वया स त्वं मामेव प्राप्स्यसि। असंशयः संशयोऽत्र नास्ति॥' इति प्राह। श्रीमधुसूदनसरस्वत्यपि श्रीधरस्वामिवदेव व्याख्यातवान्। भाष्योत्कर्ष-दीपिकाकारः श्री धनपतिः 'यस्मादेवं सदाऽभ्यस्ता भावना अन्त्यकालेऽपि सैवोद्भूता स्वविषयप्राप्तिकरी तस्मात्सर्वेषु कालेषु आदरनैरन्तर्याभ्यां मां सगुणं निर्गुणं वा यथाशास्त्रम् अनुस्मर युध्य च युध्यस्व स्ववर्णधर्मं युद्धं च कुरु।' इत्यादि प्राह। अग्रेचाऽयं प्राह–'न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे। न हरति न च हन्ति किञ्चिदुच्चैःसितमनसं तमवेहि विष्णुभक्तम्॥' इति विष्णुपुराणे निजवर्णधर्मतोऽचलनं विष्णुभक्त-लक्षणमुक्तम्। भगवता च युध्य चेत्युक्तम्। तेनोपासना कर्म समुच्चयः।' इति। श्री नीलकण्ठोऽपि महाभारतव्याख्याता प्राह–'युध्य चेति चकारात् कर्मोपा-स्त्योः समुच्चयोऽत्र गम्यते। ज्ञानकर्मसमुच्चयकर्तरीव तदुभयानुष्ठातरि एकस्मिन्नेवाधिकारिणि कर्तृत्वाऽकर्तृत्वप्रत्ययकृतविरोधाऽभावात्।' इति। श्रीमानानन्दगिरिस्तु–'यस्मादेवम् अन्त्या भावना देहान्तरप्राप्तौ कारणं,

तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युद्धं च स्वधर्मं कुरु। मयि वासुदेवे अर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन् मामेव यथास्मृतम् एष्यसि आगमिष्यसि। असंशयो न संशयोऽत्र विद्यते ॥' इति भाष्यं व्याचक्षाणः प्राह—'सर्वेषु कालेषु अदरनैरन्तर्याभ्यां सहेति यावत्। भगवदनुस्मरणे विशेषणत्रयसाहित्यं यथाशास्त्रम् इति द्योत्यते। भगवदनुसंधानं कर्तव्यमुक्त्वा तेन सह स्वधर्ममपि कुरु युद्धम् इत्युपदिशता भगवता समुच्चयो ज्ञानकर्मणोरङ्गीकृतो भाति ? इत्याशङ्क्याह-मयीति। मनोबुद्धिगोचरं क्रियाकारकफलजातं सकलमपि ब्रह्मैवेति भावयन् युद्धयस्वेति ब्रुवता क्रियादिकलापस्य ब्रह्माऽतिरिक्तस्य अभावाऽभिलापाद् नात्र समुच्चयो विवक्षित इत्यर्थः।' इति ॥ एवञ्चात्र अयं निष्कर्षः—सगुणचिन्तको निर्गुणचिन्तकोवाऽशुद्धचित्तश्चेत् चित्तशुद्धिद्वारा चिन्तनसातत्यस्य सिद्धये स्वधर्माचरणं कुर्यात्। शुद्धचित्तश्चेल्लोकसंग्रहार्थं स्वधर्मं कुर्यात्। निर्गुणचिन्तकः प्राप्तसम्यग्दर्शनश्चेल्लोकसंग्रहार्थमेव सर्वं ब्रह्मात्मकं पश्यन्नेव स्वधर्माचरणं लोके प्रदर्शयेद् इति ॥ 'यथास्मृतमिति 'यथाशास्त्रम्' इति च भाष्याभ्यां तथैव निष्कर्षस्य प्रतीतेरिति वयम् ॥ अन्त्यभावना (मृत्युकालिकभावना)-विषये श्रीमधुसूदन सरस्वती-'इदञ्च सगुणब्रह्मचिन्तनम् उपासकानाम् उक्तम् तेषाम् (मुक्तेः) अन्त्यभावनासापेक्षत्वात्। निर्गुणब्रह्मज्ञानिनां तु ज्ञानसमकालमेव अज्ञाननिवृत्तिलक्षणाया मुक्तेः सिद्धत्वाद् न अन्त्यभावनाऽपेक्षेति द्रष्टव्यम्' इति प्राह। वाग्देवताऽवतारकाव्यप्रकाशकृन्मम्मट भट्टादिपूजितनामधेयानां श्रीमदाचार्याऽभिनवगुप्तमहोदयानामपि तदेव मतं विद्यते। तथाहि (यं यं वापि स्मरन् भावम्' इत्यादिश्लोके प्राहुस्ते—'सर्वथा मत्परम एव मत्प्रेप्सुः स्यादित्यत्र तात्पर्यम्। न तु यदेवान्ते स्मर्यते तदेवाऽवाप्यते इति। एवं हि सति ज्ञानिनोऽपि यावच्छरीरभाविधातुदोषविकलितचित्तवृत्तेर्जडतां प्राप्तस्य तामसस्येव गतिः स्यात्। न च अभ्युपगमोऽत्र युक्तः, प्रमाणभूतश्रुतिविरोधात्। अस्ति हि तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्। ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥' इति। 'तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा। ज्ञानसम्प्राप्तिसमये मुक्तोऽसौ विगतज्वरः ॥' इति च। तस्माद् एवं विध्यनुवादी-सदा येन भावितमन्तःकरणं तदेवान्ते प्रयाणानन्तरं प्राप्यते। तच्चस्मर्यते न वा इति नात्र निर्बन्धः। अन्वाचयश्च अयम् अपिशब्देन सूचितः। यं यं वापि इत्यत्र स्मरणस्य असर्वथाऽभावं वा शब्दः स्फुटयति। सदा च मत्परमो जनः सर्वथा स्यादिति तात्पर्यं मुनिरेव प्रकटयति ॥' इति ॥७॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८॥
कविं पुराणम् अनुशासितारम्,
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्य--रूपम्,
आदित्यवर्णं तमसः परस्तात् ॥९॥

---

अवतरणम्--एतदेव श्लोकत्रयेण विवृणोति । तत्रतावत्संततस्मरणस्य अभ्यासोऽन्तरङ्गसाधनमिति दर्शयन्नाह--अभ्यासेति ।

व्याख्या - हे पार्थ. अभ्यासयोगयुक्तेन चित्तसमर्पणविषयभूते मयि एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययाऽनन्तरितोऽभ्यासः, स एव योगस्तेन युक्तं तत्रैव व्यापृतं तेन । नान्यगामिना, न अन्यत्र विषयान्तरे गन्तुं शीलम् अस्येति नाऽन्यगामि, 'प्रामादिकं विषयान्तरपारवश्यम् अभ्यनुज्ञातुं ताच्छील्यप्रत्ययस्तेन तात्पर्याद् अपरामृष्टार्थान्तरेण परमपुरुपनिष्ठेन इत्यर्थः' इत्यानन्दगिरिः ! तेन । चेतसा मनसा परमं निरतिशयं पुरुषं मां परमात्मानम् अनुचिन्तयन् 'शास्त्राचार्योपदेशाऽनुसारम् अनुध्यायन् योगी' दिव्यं दिवि सूर्यमण्डले भवं सत्तावन्तं परमं निरतिशयं पुरुषं यथोक्तं मां परमात्मानं याति प्राप्नोति। 'तत्र विशेषतोऽभिव्यक्तिरेव भवनम् । अनुचिन्तयन् इत्यत्र अनुशब्दार्थं व्याचष्टे शास्त्रेति' इतिचानन्दगिरिः । "यश्चासावादित्ये" इति श्रुतिम् अनुसृत्याह भाष्य कृद् 'दिवि सूर्यमण्डले' इति । इतिचानन्दगिरिः ॥८॥

पुनः किंविशिष्टं पुरुषं याति ? इत्युच्यते कविमिति । कविं क्रान्तदर्शिनम् सर्वज्ञम्, पुराणं चिरन्तनम् अनुशासितारम् सर्वस्य जगतः प्रशासितारम्, अणोः सूक्ष्मादपि आकाशादेः, अणीयांसं सूक्ष्मतरम् । आकाशकालदिग्भ्योऽपि अतिसूक्ष्मतरम् इत्यर्थः । तदुपादानत्वादिति भावः । सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारम्, 'अचिन्त्यरूपम्' नास्य रूपं नियतं, विद्यमानमपि केनचिच्चिन्तयितुं शक्यते इत्यचिन्त्यरूपस्तम् । इति भाष्यम् । आदित्यवर्णम् आदित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तम्, तमसोऽज्ञानलक्षणाद् मोहान्धकारात् परस्तात् परम् । अनुस्मरेत् अनुचिन्तयेद् यः कश्चिन् पुरुषः, स अनुस्मरन् जनस्तं परमं पुरुषं

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्,
स तं परमपुरुषमुपैति दिव्यम् ॥१०॥

दिव्यं यातीति पूर्वेणैव संबन्धः। अत्र 'कविं क्रान्तदर्शिनं सर्वज्ञम्' इति भाष्यम् । तत्र 'क्रान्तिदर्शित्वम् अतीतादेरशेषस्य वस्तुनो दर्शनशालित्वम् तेन निष्पन्नमर्थमाह सर्वज्ञमिति' इत्यानन्दगिरिः । 'चिरन्तनमादिमतः सर्वस्य-कारणत्वाद् अनादि इत्यर्थः' इति 'पुराणं चिरन्तनम्' इति भाष्यव्याख्या-यामानन्दगिरिः। 'न हि परस्य किञ्चिदपि रूपादि वस्तुतोऽस्ति, अरूपवदेव हीति (ब्रह्मसूत्रदर्शित) न्यायात् । कल्पितमपि नाऽस्मदादिभिः शक्यते चिन्त-यितुमित्याह -नास्येति ।' इतिचानन्दगिरिः ॥९॥

कदा भगवदनुस्मरणे प्रयत्नाऽतिरेकोऽपेक्ष्यते ? कया च नाड्या उत्क्रामन् भगवन्तं यातीति ? तत्राह - प्रयाणकाले इति । प्रयाणकाले मरण-काले भक्त्या भजनं भक्तिः परमेश्वरविषयं परमं प्रेम, तया युक्तः, योगबलेन चैव, योगस्य चित्तवृत्तिनिरोधस्य बलं समाधिजन्यसंस्कारप्रचयजनितचित्त-स्थैर्यलक्षणं, तेन चैव युक्तः, भ्रुवोर्मध्ये सम्यक् प्राणमावेश्य, पूर्वं हृदयपुण्डरीके परमात्माऽभिव्यक्तिस्थाने चित्तं यत्नतो विषयेभ्यो विमुखीकृत्य स्ववशे स्थाप-यित्वा पश्चाद्—इडापिङ्गले वामदक्षिणे नाड्यौ हृदयान्निःसृते निरुध्य हृदया-दूर्ध्वगामिन्या-सुषुम्नानामनाड्या हृदये स्थितं प्राणं प्राणवायुम् हृदयादूर्ध्वं भूमिजयक्रमेण भ्रुवोर्मध्ये विशुद्धाख्यकण्ठस्थचक्रादुपरि आज्ञाचक्रे सम्यग् अप्रमत्तः सन् आवेश्य स्थापयित्वा (अतएव) अचलेन प्रचलनरहितेन मनसा यः कश्चित् परं दिव्यं पुरुषम् अनुस्मरेदिति प्रकृतेन संबन्धः । स तं कविं पुरा-णम् इत्याद्युक्तलक्षणम् दिव्यं द्योतनात्मकं पुरुषं परमात्मानम् 'उपैति प्रति-पद्यते' इति भाष्यम् । तत्र प्रतिपद्यते इत्यस्य उपगच्छतीत्यर्थ आनन्दगिरीये कृतः। भ्रुवोर्मध्ये प्राणमावेश्य सम्यग् इत्यतः परं ब्रह्मरन्ध्राद् विनिष्क्रम्य इति शेषोऽपि आनन्दगिरेर्मते बोध्यः । अत्र भाष्ये 'पूर्वं हृदयपुण्डरीके वशीकृत्य-चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थाप-यित्वा सम्यग् अप्रमत्तः सन् स एवं बुद्धिमान् योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषम् उपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥' इति। तत्र "भूमि-

**यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥**

---

जयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य तस्य भूतस्य स्वाधीनचेष्टावैशिष्ट्यं तद्द्वारेणेत्येतदुच्यते" इत्यानन्दगिरिः। नीलकण्ठस्तु-'भूमिकाजयक्रमेण प्रागेव मूलाधारादिब्रह्मरन्ध्रान्तस्थानेषु आरोहावरोहक्रमेण संचारितपवनोऽन्तकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्य सुषुम्नया नाड्या मूलाधारादुत्थापनपूर्वकं सम्यग् निवेश्य स्थापित्वा' इत्याह। मधुसूदनसरस्वती-'गुरूपदिष्टमार्गेण भूमिजयक्रमेण' इत्युक्तवान्। अत्रश्रुतिः-'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (कठो० २।३।१६) इति। तत्र "एका इति, एका च सुषुम्ना नाम" इति भाष्यम् ॥१०॥

अवतरणम् -अथ संक्षेपेण ब्रह्मणः प्राप्तेरुपायं प्रदर्शयितुं तथा केवलाद् अभ्यासयोगात् प्रणवाधारम् अभ्यासयोगम् अन्तरङ्गं विधित्सुः प्रतिजानीते--यदेति।

व्याख्या--वेदविदो वेदार्थज्ञाः यत् यदं पदनीयं गन्तव्यं ब्रह्म अक्षरमिति वदन्ति, न क्षरतीति अक्षरम् अविनाशि इति। अश्नुते वा सर्वम् इति अक्षरमिति सर्वव्यापकमित्यर्थः। 'तद् वा' एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' (बृह० ३।८।८) इति श्रुतेः। अथवा अक्षरं सर्वव्यापकम् अविनाशि पदं पदनीयं गन्तव्यं यद् ब्रह्म वेदविदो ब्राह्मणा ब्रह्मविदः सर्वविशेषरहितत्वेन वदन्ति 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृह०३।८।८) 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादिना न केवल विद्वदनुभवसिद्धं ब्रह्म प्रमाणकुशलैरेव प्रतिपन्नम् किन्तु वीतरागैर्यतिभिर्मुक्तैरुपसृप्यतया तेषामपि अनुभूतम् इत्याह-तद् यतयो यतनशीला वीतरागा विगतो रागो येषां ते येभ्यस्ते इति वा, विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यामिति शेषः। साधकानामपि सर्वो ब्रह्मचर्याचरणादिप्रयासस्तज्ज्ञानार्थ एवेत्याह-यद् ब्रह्म ज्ञातुम् इति वाक्यशेषः। इच्छन्तो ब्रह्मचर्यं गुरौ वासादिकं तपश्चरन्ति। तद् अक्षराख्यं पदं पदनीयं गन्तव्यं ब्रह्म ते तुभ्यम् संग्रहेण संक्षेपेण प्रवक्ष्ये प्रकर्षेण कथयिष्यामि, तत्प्राप्तेरुपायं संक्षेपेण कथयिष्यामीत्यर्थः ॥११॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥१३॥

---

अवतरणम्—श्रुतौ 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तमधिगच्छति' (प्रश्नो०५।५) इत्यादिना वचनेन 'सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि च यद् वदन्ति, यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' (कठो० १।२।१५) इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनाम् अधिकारिणाम् ओङ्कारद्वारा ब्रह्मप्रतिपत्तिसाधनं ब्रह्मोपासनम् कालान्तरमुक्तिफलकम्, 'कविं पुराणम्' इति 'यदक्षरं वेदविदो वदन्ति' इति च निर्दिष्टस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्तेरुपायभूतस्य ओङ्कारस्य द्वारेण कालान्तरमुक्तिफलकम् उपासनम्, ओङ्कारद्वारब्रह्मोपासनम् इति यावद् योगधारणासहितं, वक्तव्यम् प्रसक्तानुप्रसक्तं च यत्किञ्चिद् वक्तव्यम् इत्येवमर्थं उत्तरो ग्रन्थ आरभ्यते—कालान्तरमुक्तिफलकम् इत्यस्य देहान्ते पूर्वं कालं ब्रह्मलोकप्राप्तिस्तत्र च कालान्तरे द्विपरार्धाऽवसाने कार्यब्रह्मणो विनाशे प्राप्ते तेन सहैव निर्गुणकूटस्थब्रह्मज्ञानरूपसम्यग्दर्शनप्राप्तौ कूटस्थब्रह्मभावप्राप्तिरितिफलकम् उपासनमित्यर्थः। तथा च स्मर्यते-'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति। तत्र प्रवक्ष्ये इति प्रतिज्ञातम् उपायं साङ्गं प्रवक्तुमारभते सर्वेति।

व्याख्या--सर्वद्वाराणि सर्वाणि समस्तानि द्वाराणि उपलब्धौ करणानि इन्द्रियाणि संयम्य तेषां सम्यग यमनं कृत्वा विषयेभ्यो निवर्त्य चक्षुरादिभिर्बाह्यविषयग्रहणम् अकुर्वन्। मनोऽन्तः करणं हृदि हृदयपुण्डरीके निरुध्य निष्प्रचारमापाद्य अर्थात् बाह्यविषयग्रहणम् अकुर्वन् (तत्र हृदयपुण्डरीके वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्या सुषुम्नया ऊर्ध्वमारुह्य) इति शेषोऽत्र भाष्ये। आत्मनः प्राणं मूर्ध्नि मस्तके आधाय कृत्वा स्थापयित्वा योगधारणाम् योगाङ्गभूतां धारणाम् 'देशबन्धश्चित्तस्य धारणा' इति लक्षिताम् आस्थितः धारयितुं प्रवृत्तः सन् ॥१२॥

(मूर्धनि एव प्राणवायुं धारयन्) 'ओम्' इत्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतम् ओङ्कारम् व्याहरन् उच्चारयन्, तदर्थभूतं माम् ईश्वरम् अनुस्मरन्

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥**

---

अनुचिन्तयन् यः कश्चिद् देहं स्थूलशरीरं त्यजन् परित्यजन् प्रयाति म्रियते स परमां गतिं ब्रह्म निर्वाणरूपं मोक्षं याति प्राप्नोति गच्छति । वैकुण्ठगमन-क्रमेणेति शेषः। अत एवानन्दगिरिः-परमामिति गतिविशेषणं क्रममुक्तिविवक्ष-येति द्रष्टव्यम् इत्युक्तवान् । वैकुण्ठलोकः कैलासलोकश्चतुर्भुजब्रह्मलोकश्च सत्यलोक एवेति नीलकण्ठस्य मतं मम च। नीलकण्ठेन हि प्रयाणकाले इत्यादिश्लोके 'स तं परमपुरुषमुपैति दिव्यम् । इत्यस्य विवरणे 'स एवं कृत्वा-योगी कवि पुराणम् इत्युक्तलक्षणं परं पुरुषं हिरण्यगर्भाख्यं सर्वस्य भूतजातस्य जनयितारं नारायणादिशब्दप्रतिपाद्यम् उपैति समीपे प्राप्नोति । तल्लोकं प्राप्नोतीत्यर्थः । न हि पौराणिकानामिव वैदिकानां मते ब्रह्मविष्णुरुद्रलोकाना-मुपर्युपरिकल्पनास्ति । किं तर्हि सर्वे हिरण्यगर्भलोकाख्ये सत्यलोक एव अन्तर्भवन्ति । 'परा हि सोपासनकर्मार्जितिर्हिरण्यगर्भप्राप्यता' इति बृहदा-रण्यके तद्भाष्यादौ च स्पष्टम् (८।१०) ॥' इत्युक्तम् । ननु यः प्रयाती-त्युक्त्वा त्यजन् देहमिति ब्रुवता—पुनरुक्तिः कृता स्यादिति चेद् ? अत्र भाष्ये 'त्यजन् देहम् इति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणम् आत्मनो न स्वरूप-नाशेनेत्यर्थः' इत्युक्तम् ॥१३॥

अवतरणम्--अत्र भाष्ये अवतरणम् किञ्च अनन्येति ।' इत्युक्तम् तत्रानन्दगिरिः-'ननु वायुनिरोधविधराणाम् उदीरितया, रीत्या स्वेच्छाप्रयुक्तो-त्क्रमणाऽसंभवाद् दुर्लभा परमा गतिरापतेद् इति ? तत्राह-किञ्चेति । इतश्च भगवदनुस्मरणे प्रयतितव्यम् इत्यर्थः।' इत्याह । अनन्येति ।

व्याख्या अनन्यचेताः न अन्यविषये चेतो यस्य सोऽयम् अनन्यचेताः सन् यो मां वासुदेवम, परमेश्वरं नित्यशो यावज्जीवं सततं निरन्तरं स्मरति ध्यायति । 'सततमिति नैरन्तर्यमुच्यते । नित्यश इति दीर्घकालत्व-मुच्यते । न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवम् नैरन्तर्येण यो मां स्मरतीत्यर्थः ।' इति भाष्यम् । हे पार्थ ! नित्ययुक्तस्य सदा समाहितस्य तस्य अनन्यचेतसो योगिनः ध्यायिनः, अहं परमेश्वरः सुलभः सुखेन लभ्यः । सगुण-चिन्तकस्य क्रमेण निर्गुणचिन्तकस्य तु तत्त्वविज्ञानिनः सद्य एव प्रारब्ध-कर्मक्षये सतीति भावः । यत एवम् अतोऽनन्यचेताः सन् मयि सदा समाहितो भवेत् ॥' इति भाष्यम् ॥१४॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥१६॥

---

अवतरणम्—तव सौलभ्येन किं स्यात् ? इत्युच्यते शृणु तद् मम सौलभ्येन यद् भवति—मामिति ।

व्याख्या—महात्मानः महान् पूज्य आत्माऽन्तः करणं येषां ते, यतयः, माम् ईश्वरम् उपेत्य 'मद्भावम् आपद्य' इति भाष्यम् । परमां प्रकृष्टां निरतिशयां संसिद्धिं मोक्षाख्याम्, गताः प्राप्ता, सन्तः दुःखालयम् दुःखानाम् आध्यात्मिकाधिदैविकाधिभौतिकानाम् आलयम् आलीयन्ते यस्मिन्निति आलयम् आश्रयम् न केवलं दुःखालयमेव किन्तु अशाश्वतं (च) अनवस्थितस्वरूपं च, पुनर्जन्म पुनरुत्पत्तिम्, नाप्नुवन्ति न लभन्ते । 'ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते' इति भाष्यम् ॥१५॥

अवतरणम्—ये मां न प्राप्नुवन्ति ते इतरपुण्यविशेषेण ब्रह्मलोकादिकं गत्वापि पुनरावर्तन्ते इत्याह—आब्रह्मेति ।

व्याख्या—हे अर्जुन आब्रह्मभुवनाद् भवन्ति यस्मिन्भूतानि इति भुवनम् लोकः । ब्रह्मणो भुवनं ब्रह्मभुवनं ब्रह्मलोकः । ब्रह्मभुवनम् अभिव्याप्य आब्रह्मभुवनाद् ब्रह्मलोकसहिताः सर्वेऽपि भूप्रभृतयो ब्रह्मलोकपर्यन्ता लोकाः पुनरावर्तिनः पुनरावर्तनस्वभावाः, तत्र प्राप्तानामपि तद्भोगान्ते मर्त्यलोके पुनरावृत्तिर्भवति । तु किन्तु माम् एकम् परमेश्वरम् उपेत्य समीपमेत्य आगत्य मद्भावं प्राप्य वा स्थितस्य योगिनः पुनर्जन्म पुनरुत्पत्तिर्न विद्यते न भवति । हे कौन्तेय । 'यस्य स्वाभाविकी वंशप्रयुक्ता च शुद्धिस्तस्यैवोक्तेऽर्थे बुद्धिरुदेतीति मत्वा संबुद्धिद्वयम्' इत्यानन्दगिरिः । अत्रेयं व्यवस्था—ये मद्भक्ताः सम्यग्दर्शिनस्ते मां प्राप्ता न निवर्तन्ते इत्यत्र नैव संशयः । येऽपि क्रममुक्तिफलाभिर्मद्उपासनाभिर्ब्रह्मलोकं प्राप्तास्तेऽपि तत्रोत्पन्नसम्यग्दर्शना नावर्तन्ते । अश्वमेधादिकर्ममार्गेण तु ये ब्रह्मलोकं गतास्ते ब्रह्मलोकस्य (महाप्रलये) विनाशे पुनरावर्तन्ते इति । अतो 'ब्रह्मलोकम्-अभिसंपद्यते न च पुनरावर्तते' अनावृत्तिः शब्दात्' इति छान्दोग्यश्रुति-ब्रह्मसूत्रयोरुपपत्तिः । 'कर्मद्वारेण येषां

सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥
अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाऽव्यक्तसञ्ज्ञके ॥१८॥

---

ब्रह्मलोकप्राप्तिस्तेषां न मोक्षसिद्धिरिति परिनिष्ठितिरि'ति श्रीधरस्वामिमधुसूदनसरस्वतीभाष्योत्कर्षदीपिकाकृद्धनपतिमहाशयाः ॥१६॥

अवतरणम्---ब्रह्मलोकसहिताः सर्वे भूप्रभृतयो लोकाः कालपरिच्छिन्नत्वात् पुनरावर्तिनः कथं कालपरिच्छिन्नास्ते ? तत्राह---सहस्रेति ।

व्याख्या---यद् यस्मात्कारणाद् एवं कालपरिच्छिन्ना ब्रह्मलोकपर्यन्ताः सर्वलोकास्तस्मात् पुनरावर्तिनस्ते इत्यर्थः । कथम् ? इत्युच्यते--अहोरात्रविदः कालसंख्याविदस्ते प्रसिद्धाः पौराणिका जनाः 'ब्रह्मणः प्रजापतेर्विराजः' (इति भाष्यम्) अहर्दिनं सहस्रयुगपर्यन्तं सहस्रं युगानि पर्यन्तः पर्यवसानं यस्य दिनस्य तद् विदु जानन्ति (तथा) ब्रह्मणो रात्रिं युगसहस्रान्तां युगानां सहस्त्रम् अन्तो यस्या रात्रेस्तां विदुर्जानन्ति । अत्र युगशब्देन चतुर्युगम् उच्यते--'चतुर्युगसहस्त्रं तु ब्रह्मणो दिनमुच्यते' इति विष्णुपुराणात् ॥ तत्रायंकालगणनाप्रकारः--मनुष्याणां यद् वर्षं तद् देवानाम् अहोरात्रम् । तादृशैरहोरात्रैः पक्षमासादिकल्पनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति । चतुर्युगसहस्रं तु ब्रह्मणो दिनमेकम् । तावत्परिमाणैव तस्यैका रात्रिः । तादृशैश्चाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति । तत्र देवानां वर्षाणां चतुः सहस्रं कृतयुम् । त्रिसहस्रं त्रेता । द्विसहस्रं द्वापरम् । एकं सहस्रं कलिः । अष्टशतं कृतयुगस्य पूर्वोत्तरसंध्ये । षट्शतं त्रेतायाः । चतुः शतं द्वापरस्य । द्विशतं कलियुगस्य पूर्वोत्तरसन्ध्ये सन्तीति । द्विशतादीनां शब्दानां द्विगुणं शतं द्विशतम् इत्येवं विग्रहः ॥१७॥

अवतरणम्---प्रजापतेरहनि रात्रौ च यद् भवति तद् उच्यते--अव्यक्तेति ।

व्याख्या-अव्यक्ताद् अव्यक्तमिह प्रजापतेः स्वापावस्था, दैनन्दिनसृष्टिप्रलययोरिह प्रकृतत्वात् । इह नाऽव्यक्तशब्देन अव्याकृतावस्थोच्यते जगतः । तदा वियदादीनां सत्त्वात् । महाप्रलयकालान्ते एव वियदादीनामपि अव्याकृतरूपाद् अव्यक्ताद् व्यक्तिर्भवति । तस्मात्, प्रजापतेः स्वापावस्थायाः, सर्वा व्यक्तयः व्यज्यन्ते इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः अहरागमे

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
राज्यागमेऽवशः पार्थ, प्रभवत्यहरागमे ॥१९॥
परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

अह्न आगमस्तस्मिन्, ब्रह्मणः प्रबोधकाले, प्रभवन्ति अभिव्यज्यन्ते। (तथा) राज्यागमे ब्रह्मणः स्वापकाले, तत्रैव अव्यक्तसञ्ज्ञके पूर्वोक्त एव स्वापावस्थामापन्ने ब्रह्मणि प्रजापतौ प्रलीयन्ते प्रलीना भवन्ति ॥१८॥

अवतरणम्—ननु ब्रह्मणः प्रजापतेः प्रबोधकाले यो भूतग्राम उत्पन्नः स तस्य स्वापकाले प्रणष्टः। पुनश्च तस्य प्रबोधकाले अन्य एव भूतग्रामो यदि भवति तर्हि सुकृतदुष्कृतयोः साम्यप्रसक्तौ अकृताभ्यागम-कृतविप्रणाश-दोषौ स्याताम् । किञ्च यदि स्थावरजङ्गमलक्षणप्राणिनिकायस्य प्रतिकल्पं भिन्नभिन्नत्वं तर्हि एकस्य बन्धमोक्षान्वयिनोऽभावात् काण्डद्वयात्मनो बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिः फलाऽभाववती प्रसज्यते ? अतः प्रतिकल्पं प्राणिनिकायस्य ऐक्यम् आस्थेयम् अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थम्, बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थञ्च । तत्र अविद्याऽस्मितारागद्वेषाऽभिनिवेशात्मकपञ्चक्लेशमूलककर्माशयवशात् स एव अस्वतन्त्रो भूतग्रामो भूत्वा भूत्वा प्रलीयते इत्यतः संसारे वैराग्यं ग्राह्यमिति प्रदर्शनार्थम् इदमाह—भूतेति ।

व्याख्या—हे पार्थ, स एवाऽयंभूतग्रामो यः पूर्वस्मिन् कल्पे आसीत् स एवायं नत्वन्यो भूतग्रामः भूतसमुदायः, स्थावरजङ्गमलक्षणः अवशः अविद्यादिक्लेशमूलकधर्माऽधर्मात्मककर्माशयवशाद् अस्वतन्त्रः सन् भूत्वा भूत्वा ब्रह्मणोऽहरागमे उत्पद्य उत्पद्य आविर्भूय आविर्भूय राज्यागमे अह्नः परिक्षये प्रलीयते तिरोभवति (पुनश्च) अहरागमे ब्रह्मणो दिनस्यागमे प्रभवति उत्पद्यते आविर्भभवति । एवं प्रादुर्भावतिरोभावमूलकदुःखपरिपूर्णोऽयं संसारः। अलम् अनेन संसारेण। अतोऽस्माद् वैराग्यमेव युक्तमित्यर्थः ॥१९॥

अवतरणम्—'अक्षरं ब्रह्म परमम्' (८।३) इति यद् उपक्रान्तं तस्य परब्रह्मणः क्रमिकप्राप्त्युपायो निर्दिष्टः—ओमित्येकाक्षरं ब्रह्म व्याहरन् (८।१३) इत्यादिना। अथेदानीम् अक्षरस्यैव तस्य स्वरूपनिर्दिदिक्षया इदम् उच्यते अनेन योगमार्गेण क्रमिकप्राप्त्युपायेन इदं गन्तव्यमिति—परेति ।

व्याख्या—तस्मात् पूर्वोक्ताद् भूतग्रामबीजभूताद् हिरण्यगर्भप्रजापतेरपि तदीयशतवर्षान्ते नाशावस्थात्मकाद् अविद्यालक्षणाद् मायाख्याद् अव्यक्तात् तु

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥
पुरुषः स परःपार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

---

विलक्षणः परो व्यतिरिक्तः भिन्न अन्यो विलक्षणः, तुना द्योतितमपि वैलक्षण्यं वाचकशब्दद्वारा स्फुटीकृतम् । सनातनश्चिरन्तनः, अव्यक्तोऽनिन्द्रियगोचरो भावोऽक्षराख्यं परं ब्रह्म योऽस्ति स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु (अपि) न विनश्यति । ततश्च अविद्यातः परब्रह्मणोऽक्षराख्यस्य अत्यन्तमेव वैलक्षण्यं बोधितं भवति । ननु पूर्वत्र न अविद्यालक्षणोऽव्यक्त उक्तः । ब्रह्मणः स्वापावस्थालक्षण एवोक्त इति तस्मादित्यस्य कथं पूर्वोक्तादित्यर्थः स्यादिति ? नैष दोषः । आब्रह्मभुवनादित्यत्र (८।१६) हिरण्यगर्भस्य कालपरिच्छिन्नत्वम् उक्तम् । तत एव तन्नाशाधिकरणभूता अविद्याऽपि उक्तप्रायैवेति । अतस्तस्मादित्यस्य पूर्वोक्तादित्यर्थः । भिन्नत्वेऽपि सालक्षण्यं स्यात् तन्माभूदिति अन्यशब्दप्रयोगः ॥२०॥

अवतरणम्—यथोक्ते अव्यक्ते अक्षरे भावे श्रुतेः सम्मतिमाह—अव्यक्तेति ।

व्याख्या—तमाहुरिति तच्छब्देन प्रतिनिर्देशाद् यच्छब्दस्याऽध्याहारः । यो भावोऽव्यक्त इति अक्षर इति च उक्तः पूर्वत्र अस्मिन्प्रकरणे । यो भावः परब्रह्माख्य इत्यर्थः । तं भावं परब्रह्माख्यम्, श्रुतयः परमां गतिम् आहुः कथयन्ति—'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥' (कठो.) इत्याद्याः । परमां प्रकृष्टां निरतिशयाम्, गतिं गन्तव्यमित्यर्थः । यं भावम् अक्षराऽव्यक्तशब्दितं, प्राप्य गत्वा, योगिनो न निवर्तन्ते न आवर्तन्ते संसाराय इति शेषः । तद् मम विष्णोः परमं निरतिशयं धाम पदं स्थानम् अस्तीति शेषः । अत्र विष्णोः परमधाम्नश्च अभेदेऽपि राहोः शिर इतिवदुपचारात् षष्ठी । तथा च श्रुतिः—'तद् विष्णोः परमं पदम्' (कठो.) इति ॥२१॥

अवतरणम्—तस्य विष्णोः परमपदस्य लब्धेरुपायमाह—पुरुष इति ।

व्याख्या—हे पार्थ, सः अव्यक्तोऽक्षर इत्युक्तः परः प्रकृष्टो निरतिशयः यस्मात्परं न किंचिदस्ति सः पुरुषः पुरिशयवान् पूर्णत्वाद्वा पुरुषः परमात्मा, अनन्यया आत्मविषयया ज्ञानलक्षणया भक्त्या तु एव लभ्यः प्राप्यः । 'तु शब्दोऽवधारणार्थः' इत्यानन्दगिरिः । 'भक्तिर्भजनं सेवा प्रदक्षिणप्रणामादिस्तां

यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥

---

व्यावर्त्तयति भाष्यकारो भगवान् ज्ञानलक्षणयेति' इति चानन्दगिरिः। परत्वमेव स्फुटयति यस्येति। यस्य परस्य पुरुषस्य परमात्मनोऽन्तःस्थानि मध्यस्थानि कार्यभूतानि भूतानि चराचराणि सन्ति। कार्यं हि उपादानस्य कारणस्य अन्तर्वर्ति भवति। येन परेण पुरुषेण सर्वमिदं जगत्, ततं व्याप्तम् आकाशेनेव घटादिकम् वर्तते ॥२२॥

अवतरणम्—ननु पुरुषः स परः पार्थ भक्त्या' इत्यत्र ज्ञानलक्षणयेति ज्ञानाधीना परमपुरुषप्राप्तिरुक्ता। न च ज्ञानं गमनमार्गमपेक्ष्य फलाय कल्पते विदुषो गत्युत्क्रान्तिनिषेधश्रुतेः—'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति। एवं सति यत्रकाले इत्यादिगमनमार्गोक्तिरयुक्ता? इति चेत् सत्यम्। 'सगुणशरणानां प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरभाविक्रमिकमुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्यः' इति विवक्षितस्य अर्थस्य समर्पणाय यत्र काले इत्याद्युच्यते। तत्र आवृत्तिमार्गोपन्यासस्तु उत्तरमार्गस्तुत्यर्थः—यत्रेति।

व्याख्या—इह योगिन इति तन्त्रेण पदद्वयस्य निर्देशः। योगिनो ब्रह्मोपासकाः ब्रह्मध्यायिनः। योगिन इष्टादिकर्मिणश्चेति। हे भरतर्षभ भरतवंशश्रेष्ठ, यत्र काले कालाभिमानियद्देवतानेत्रीके मार्गे प्रयाता मृत्वा गता योगिनो ब्रह्मोपासकाः, अनावृत्तिम् अपुनर्जन्म यान्ति प्राप्नुवन्ति। यत्र काले च कालाभिमानियद्देवतानेत्रीके मार्गे च प्रयाता मृत्वा गता योगिनः कर्मिणस्तु आवृत्तिम् एव पुनर्जन्म एव यान्ति। तं कालं कालाभिमानितत्तद्देवतानेत्रीकं मार्गम् जात्येकवचनाद् कालाभिमानितत्तद्देवतानेत्रीकौ मार्गौ वक्ष्यामि कथयिष्यामि। 'आतिवाहिकास्तल्लिङ्गात्' (ब्र० सू० ४।३।४) इति न्यायादिह कालशब्देन कालाभिमानिदेवतानेत्रीकौ मार्गौ विवक्षितौ। 'नैते सृती पार्थ जानन्' (८।२७) इत्यत्र सृतीति प्रतिनिर्देशाच्च ॥२३॥

अवतरणम्—तत्र ब्रह्मोपासकानाम्, अनावृत्तिकारिणं देवयानं पन्थानमाह—अग्निरिति।

व्याख्या—अग्निः अग्निकालस्याभिमानिनी देवता। ज्योतिः ज्योतिःकालस्य अभिमानिनी देवता। अथवा अग्निज्योतिषी यथाश्रुते एव देवते।

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥**

---

अत्र पक्षे यत्र काले तं कालमिति निर्देशः कालाभिमानिदेवतानां भूयस्त्वाद् आम्रवणवद् उपपद्यते । यथा सत्यपि द्रुमान्तरे आम्राणां द्रुमाणां भूयस्त्वाद् आम्रवणम् इति व्यपदेशस्तद्वत् । इदमेव देवताद्वयं छान्दोग्ये अर्चिरभिमानि-देवतात्वेन श्रुतम् । (तथा) अहः अहरभिमानिनी देवता । शुक्लः शुक्ल-पक्षाभिमानिनी देवता । षण्मासा उत्तरायणम्—षण्मासोत्तरायणदेवता । तत्र तत्तद्देवतानेत्रीके मार्गे प्रयाता मृत्वा गताः, 'ब्रह्मविदो ब्रह्मोपासन-पराः' इति भाष्याद् ब्रह्मध्यायिनो जना योगिनः, ब्रह्म परब्रह्म गच्छन्ति, 'क्रमेणेति वाक्यशेषः ।' इति भगवान् शङ्कराचार्यः । "न हि सद्यो मुक्ति-भाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति । 'न तस्य प्राणा उत्क्रामन्ति' ( ) इति श्रुतेः । ब्रह्मसंलीनप्राणा एव ते । ब्रह्ममया ब्रह्म-भूता एव ते ।" इति च भगवान् शङ्कराचार्यः । क्रमेण तु ब्रह्मोपासका असम्य-ग्दर्शननिष्ठा एव ब्रह्म गच्छन्ति । कालान्तरे ब्रह्मलोके सम्यग्दर्शनं प्राप्येति भावः । इह अग्निरित्यारभ्योत्तरायणपर्यन्तदेवतानां निर्देशोऽन्यासामपि श्रुत्युक्तानां देवतानाम् उपलक्षणार्थः । तथा च श्रुतिः—'तेऽर्चिरभिसंभवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षड् उदङ्ङेतिमासां-स्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ॥' (छा. ४।१५।६) इति । अत्र श्रुत्यन्तराऽनुसारं संवत्सरादादित्यमित्यस्य स्थाने 'संवत्सराद्देवलोकं देव-लोकाद् वायुं वायोरादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम् विद्युतो-वरुणं वरुणादिन्द्रम् इन्द्रात्प्रजापतिं प्रजापतेर्ब्रह्मलोकं गच्छन्ति ब्रह्मोपासका इति द्रष्टव्यम् । विस्तरस्तु ब्रह्मसूत्रेषु द्रष्टव्यः ॥२४॥

अवतरणम्—अथ कर्मिणाम् आवृत्तिकारिणं पितृयाणमार्गमाह—धूम इति ।

व्याख्या—धूमो धूमाभिमानिनी देवता । रात्रिः रात्र्यभिमानिनी देवता । तथा कृष्णः कृष्णपक्षाभिमानिनी देवता । षण्मासा दक्षिणायनम् षण्मासदक्षिणायनदेवता । तत्र तत्तद्देवतानेत्रीके मार्गे प्रयातो मृत्वा गतो योगी कर्मी इष्टादिकारी चान्द्रमसं चन्द्रमसि भवं ज्योतिः फलं प्राप्यभुक्त्वा

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥२६॥
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥२७॥

---

तत्क्षयाद् निवर्तते मृत्युलोके पुनर्जन्म गृह्णाति। अत्रापि धूमादिदेवतानां निर्देशः श्रुत्युक्तानां देवतानामुपलक्षणार्थः । तथा च श्रुतिः—'ते धूममभिसंभवन्ति धूमाद्रात्रिम् रात्रेरपरपक्षमपरपक्षाद् यान् षडू दक्षिणैति मासांस्तान् एते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकम् पितृलोकादाकाशम् आकाशाच्चान्द्रमसम् एष सोमो राजा तद् देवानामन्नम् तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते ॥' (छा ५।१०।५) इति। 'कृतात्ययेऽनुशयवान् अवरोहति' (ब्र. सू. ३।१।८) इति न्यायोपीह द्रष्टव्यः ॥२५॥

अवतरणम्—देवयानपितृयाणमार्गौ उपसंहरति—शुक्लेति ।

व्याख्या—एते पूर्वोक्ते शुक्लकृष्णे शुक्ला च कृष्णा च, शुक्लेति सामान्ये नपुंसकम्। गती हि हीति श्रुतिस्मृत्योः प्रसिद्धिं द्योतयति। श्रुतिस्मृतिप्रसिद्धौ मार्गौ । ज्ञानप्रकाशकृत्त्वात् शुक्ला गतिस्तदभावात्तु कृष्णा गतिः। जगत इति ज्ञानकर्मणोरधिकृतानां लोकानामित्यर्थः। न सर्वस्यैव लोकस्य एते संभवतः शाश्वते नित्ये। संसारस्य अनादित्वात्। मते अभिप्रेते। तत्र एकया शुक्लया गत्या देवयानमार्गेण। अनावृत्तिम् अपुनर्जन्म, याति प्राप्नोति ब्रह्मोपासकः। क्रमेण ज्ञानप्राप्तेः। अन्यया कृष्णया गत्या पितृयाणमार्गेण पुनर्भूयः, आवर्तते भूलोकमायाति। इष्टादिकर्मकृत्तु इतिशेषः। तत्र भोक्तव्यस्य कर्मणः क्षये शेषकर्मवशात् तत्फलभोगाय जन्म गृहीत्वेत्यर्थः ॥२६॥

अवतरणम्—अत्रानन्दगिरिमधुसूदनसरस्वतीभ्यामुक्तम्— 'गतेरुपास्यत्वाय तद् विज्ञानं स्तौति नैते इति' इति—

व्याख्या—हे पार्थ, एते यथोक्ते, सृती मार्गौ, जानन्—'एका सृतिः क्रमेण मोक्षाय। अपरा सृतिः स्वर्गादिसंसाराय' इत्येवं फलज्ञानसहितं मार्गद्वयं जानन्। कश्चन योगीकश्चिदपि ध्याननिष्ठः समाहितो जनः, न मुह्यति सुखबुद्ध्या स्वर्गादिफलं न कामयते किन्तु परमेश्वरनिष्ठ एव भवति। तस्माद्,

योगस्य (ध्यानस्य) अपुनरावृत्तिफलकत्वाद् हे अर्जुन सर्वेषु, कालेषु योगयुक्तः समाहितः परमात्मध्याननिष्ठो भव। योगं नित्यं कुरु ॥२७॥

**वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरब्रह्मयोगो नामाष्टमोऽध्यायः ॥८

अवतरणम्— शृणु योगस्य माहात्म्यम्—वेदेति।

व्याख्या— योगी ध्याननिष्ठतया समाहितो जनः, इदं सप्तप्रश्न निर्णय-द्वारेणोक्तं, विदित्वा सम्यग् अवधार्य, अनुष्ठाय (च) वेदेषु सम्यग् अधीतेषु, यज्ञेषु साद्गुण्येन अनुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु पुण्य फलं पुण्यस्य फलं यत्प्रदिष्टं शास्त्रेण तत्सर्वंफलजातम् अत्येति अतीत्य गच्छति। आद्यम् आदौ भवम् सनातनं परं प्रकृष्टम् ऐश्वरं स्थानं सार्वकारणं निर्विशेषं ब्रह्म उपैति च प्रतिपद्यते च। क्रमेणेति शेषः। अत्रानन्दगिरिः— 'विदित्वेति। न चेदं वेदनम् आयातिकम् किन्त्वनुष्ठानपर्यन्तमित्याह भाष्य-कारः 'सम्यग् अवधार्य अनुष्ठायेति।' इत्याह। तदेवम् अनेन अष्टमाध्यायेन सप्तप्रश्नप्रतिवचनेन योगमार्गं दर्शयता ध्येयत्वेन 'तत्त्वमसि, इति महावाक्य-घटकतत्पदार्थो व्याख्यातः ॥२८॥

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु शाङ्करभाष्यानुसारिण्यां वंशीव्याख्यायां वंशीधरमिश्रकृतायां अष्टमोऽध्यायः
श्रीकृष्णार्पणमस्तु ॥८॥



# अथ नवमोऽध्यायः

श्री भगवान् उवाच--

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।।१।।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ।।२।।

---

अवतरणम्--अष्टमे सुषुम्नाख्यनाडीद्वारेण धारणायोगः सर्वद्वारसंयमनादिगुणेन सहित उक्तः। तस्य फलम् अर्च्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेव अनावृत्तिरूपं निर्दिष्टम्। तत्र 'अनेनैव प्रकारेण मोक्षप्राप्तिफलम् अवगम्यते नाऽन्यथा इति तदाशङ्कासमाधित्सया --श्रीभगवानुवाच।

व्याख्या-- गुह्यतमं गोप्यतमम्, विज्ञानसहितं विज्ञानम् अनुभवः साक्षात्कारः तत्सहितम् इदं वक्ष्यमाणं ज्ञानं ब्रह्मज्ञानम् वक्ष्यमाणम् उक्तञ्च पूर्वेषु अध्यायेषु तद् बुद्धौ संनिधिकृत्य इदमित्याह। तु शब्दो विशेषनिर्धारणार्थः। इदमेव सम्यग्ज्ञानं साक्षाद् मोक्षप्राप्तिसाधनम् 'वासुदेवः सर्वमिति' 'आत्मैवेदं सर्वम्' (बृह० २।४।६) 'एकमेवाऽद्वितीयम्' (छा. ६।२।१) इत्यादिश्रुतिस्मृतिभ्यः। न त्वन्यत्। 'अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति' इत्यादि श्रुतिभ्यश्च।' इति भाष्यम्। ते तुभ्यं प्रवक्ष्यामि कथयिष्यामि। अनसूयवे असूयारहिताय। यद् ज्ञानं, ज्ञात्वा 'प्राप्य' अशुभात् संसारबन्धनाद् मोक्ष्यसे मुक्तो भविष्यसि ।।१।।

अवतरणम्--प्रवक्ष्यमाणं ब्रह्मज्ञानं शिष्यस्य प्ररोचनाय स्तौति--राजेति।

व्याख्या--राजविद्या इदं ब्रह्मज्ञानम् विद्यानां राजा, अस्ति, दीप्त्यतिशयत्वात्। दीप्यते हि इयं ब्रह्मविद्याऽतिशयेन सर्वविद्यानां मध्ये। (तथा) राजगुह्यम् गुह्यानां गोप्यानां राजा अस्ति। (तथा) उत्तमं पवित्रं सर्वेषां पावनानां मध्ये उत्कृष्टतमं पावनं शुद्धिकारणम् इदं ब्रह्मज्ञानम् अस्ति। 'अनेकजन्मसहस्रसंचितमपि धर्माऽधर्मादि समूलं कर्म क्षणमात्राद् भस्मी करोति

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥

---

यस्माद् अतस्तस्य पावनत्वं किमु वक्तव्यम् ?' इति भगवान् शङ्कराचार्यः (किञ्च) प्रत्यक्षावगमम् प्रत्यक्षेण सुखादेरिव अवगमो यस्य तत् । अनेकगुणवतोऽपि धर्मविरोधित्वं दृष्टं न तथा आत्मज्ञानं धर्मविरोधि किन्तु धर्म्यं धर्माद् अनपेतम् । एवमपि स्याद् दुःसंपाद्यम् इति ? अतआह-सुसुखं कर्तुम्-कर्तुं प्राप्तुं सुसुखम् अतिसुखेन प्राप्यम् अस्ति । 'यथारत्नविवेकविज्ञानम्' इति भाष्यम् । तत्र अल्पायासानां कर्मणां सुखसंपाद्यानाम् अल्पफलत्वं दुष्कराणां च महाफलत्वं दृष्टम् इति । इदं तु सुखसंपाद्यत्वाद् व्येति इति प्राप्तम् अत आह—अव्ययम् न अस्य फलतः कर्मवद् व्ययोऽस्ति इति अव्ययम् अस्ति । अतः श्रद्धेयम् आत्मज्ञानम् इत्यर्थः ॥२॥

अवतरणम्—ये पुनरात्मज्ञाने श्रद्धाहीनास्ते बहुक्लेशभाजः, इत्याह—अश्रद्दधाना इति ।

व्याख्या—हे परंतप, अस्य धर्मस्य आत्मज्ञानस्य, अश्रद्दधानाः श्रद्धाविरहिताःस्वरूपे फले च नास्तिकाः पापकारिणोऽसुराणाम् उपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असुतृपः पुरुषा मां परमेश्वरम् अप्राप्य मत्प्राप्तिमार्गसाधनभूतं भेदभक्तिमात्रमपि अप्राप्येत्यर्थः सामर्थ्यात् । परमेश्वरप्राप्तेर्मार्गस्तुअभेदभक्तिरेव । तस्य साधनभूता भेदभक्तिरित्यर्थः । अन्यथा अप्रसक्तप्रतिषेधः स्यात् । स च अनिष्टः । प्राप्तौ सत्यां हि प्रतिषेधः सार्थको भवति । तदुक्तम् अत्र भाष्ये—'अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैव आशङ्का इति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमपि अप्राप्य इति मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्तस्य वर्त्म नरकतिर्यगादियोनिप्राप्तिमार्गस्तस्मिन्, एव निवर्तन्ते निश्चयेन वर्तन्ते आवर्तन्ते इत्यर्थः ॥३॥

अवतरणम्—आत्मज्ञानस्य स्तुत्या आत्मज्ञानाय शिष्यम् अभिमुखीकृत्यात्मज्ञानं व्याख्यातुमारभते—मयेति ।

व्याख्या—अव्यक्तमूर्तिना न व्यक्ता प्रत्यक्षभूता मूर्त्तिः स्वरूपं यस्य सोऽहम् अव्यक्तमूर्तिस्तेन करणाऽगोचरस्वरूपेण निरुपाधिकेन मया मम

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥५॥**

---

यः परो भावस्तेन परमात्मना, इदं दृश्यमानं सर्वंजगद् ब्रह्मादिस्तम्बपर्यन्तम् ततं व्याप्तम् अस्तीति शेषः । सोपाधिकस्य व्यापकत्वाऽसंभवादाह-अव्यक्त-मूर्तिनेति । निरुपाधिकेनेति भावः । ननु धूमवह्न्योरिव यदि जगतः परमेश्व-रस्य च व्याप्यव्यापकभावस्तर्हि परमेश्वरस्य परिच्छिन्नत्वं स्यात् । अत आह-मत्स्थानि सर्वभूतानीति । सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि मत्स्थानि मयि अव्यक्तमूर्तौ करणाऽगोचरस्वरूपे निरुपाधिके स्थितानि मया आत्मना आत्मवत्त्वेन स्थितानि सन्ति । तेषां भूतानाम् अहमेवात्माऽस्मि । "न हि निरात्मकं किंचिद् भूतं व्यवहाराय अवकल्पते । अतस्ते मयि स्थितानि सन्तीति उच्यते । (एवं सति सकलपरिच्छेदशून्यत्वाद् अपरिच्छिन्न एवा-ऽस्मीति भावः ।) तेषां भूतानाम् अहमेव आत्मा इत्यतस्तेषु स्थित इति मूढ-बुद्धीनाम् अवभासते । अतो ब्रवीमि न चाहं तेषु (भूतेषु) अवस्थितः मूर्तवत् संश्लेषाऽभावेन आकाशस्यापि अन्तरतमो हि अहम् । (अन्तर्व्यापकः, अन्तरतमः परम आत्मा अन्तरात्मा अन्तर्वर्तीत्याद्यर्थः । ) नहि असंसर्गि वस्तु क्वचिद् आधेयभावेन अवस्थितं भवति ।" इति भाष्यम् । ननु इहोक्तम् न चाहं तेष्ववस्थित इति । अष्टादशे तु वक्ष्यते 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (१८।६१) इति । तत्र विरोधः प्रतिभातीति चेत् "सर्वव्यापकोऽपि तत्र (हृद्देशेऽन्तःकरणे भगवान्) अभिव्यज्यते सप्तद्वीपाधिपतिरिव राम उत्तरकोसलेषु ।" इति श्रीमधुसूदनसरस्वतीये तद् व्याख्यानादविरोधः । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इत्यपि तथैव नेयः । असदेव भूतं रज्जावुरग इव परमात्मनि अधिष्ठाने मूढदृष्टेः प्रतिभासते, परमात्मा तु रज्जुरिव नाऽवभासते मूढस्य । एवञ्च रज्जुस्थ एव सर्पः, रज्जुरेव च तस्या-त्मा इत्येवं परमात्मा कल्पितस्य जगतोऽधिष्ठानतयैव आत्मा च अधिकरणञ्च व्यापकश्च भवतीति द्रष्टव्यम् ॥४॥

अवतरणम्--अत एव असंसर्गित्वात्परमात्मनः--न चेति ।

व्याख्या—भूतानि ब्रह्मादिस्तम्बपर्यन्तानि मत्स्थानि आधाराधेयभावेन मयि स्थितानि न च नैव सन्तीति शेषः । चकारोऽवधारणार्थ इहेत्या-नन्दगिरिः । ईश्वरे भूतानां नैव स्थितिरिति ईश्वरस्य याथात्म्यम् । तदाह—पश्येति । मे मम वासुदेवस्य, ऐश्वरम् ईश्वरस्य इमम्, योगं युक्तिं घटनम्

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥

---

आत्मनो याथात्म्यमित्यर्थः । पश्य अवलोकय । तथा च श्रुतिः–'असङ्गो न हि सज्जते' (बृ० ३।९।२६) इति असंसर्गित्वात्परमात्मनो वासुदेवस्य असङ्गतां दर्शयति इदञ्च आश्चर्यं पश्य –'पूर्वश्लोके मत्स्थानि सर्वभूतानि' इत्युक्त्वाऽत्र 'न च मत्स्थानि भूतानि' इति तद्विरुद्धमुक्तम् इत्येकम्–आश्चर्यम् । अन्यच्च भूतभृदिति–आश्चर्यं पश्य --भूतभृदिति । मम आत्मा अहमित्यर्थः । 'राहोः शिरः' इतिवद् अभेदेऽपि षष्ठी । देहादिसंघाते अहङ्कारम् अध्यारोप्य लोका यथा देहादिसंघाताद् आत्मत्वेन गृहीताद् अन्यम् आत्मानम् आत्म-शब्देन व्यपदिशन्ति । देहादिसंघातरूपं तु आत्मानं मम शब्देन व्यपदिशन्ति अज्ञानात् तथा लोकबुद्धिम् अनुसरन् इह भगवानपि देहादिसंघातं विभज्य तस्मिन् अहङ्कारमध्यारोप्य परमेश्वरम् आत्मानं विभक्तम् –आत्मतया व्यपदिशति स्म । किन्तु लोकवद् अजानन् न, अपि तु जानन्नेव । यथोक्तं भाष्ये–'कथं पुनरुच्यते असौ मम आत्मेति ? विभज्य देहादिसंघाते तस्मिन् अहङ्कारम् अध्यारोप्य लोकबुद्धिमनुसरन् व्यपदिशति 'मम आत्मा' इति । न पुनर् आत्मन आत्मा अन्य इति लोकवद् अजानन् ।' इति । भूतभृद् भूतानि बिभर्त्ति इति भूतभृद् अस्मि असङ्गोऽपि सन् । न च भूतस्थः, नैव भूतेषु तिष्ठतीति भूतस्थोऽस्मि यथोक्तेन न्यायेन असङ्गत्वरूपेण दर्शितत्वाद् भूतस्थत्वाऽनुपपत्तेः । (तथा) भूतभावनः भूतानि भावयति उत्पादयति वर्धयति वा सोऽस्मि । ननु असङ्गश्चेदीश्वरस्तर्हि कथं पूर्वश्लोके मत्स्थानि सर्वभूतानि' इत्युक्तम् ? इह च कथं तद्विरुद्धमुच्यते 'न च मत्स्थानि भूतानि' इति ? अत्रोच्यते--असङ्गतया वस्तुतो भूताऽसम्बन्धेऽपि रज्जूरगवत् कल्पनया पूर्वत्र मत्स्थानीत्युक्तम् इत्यविरोधः । इति त्वं मम ऐश्वरं याथात्म्यं पश्येति वाक्यार्थः ॥५॥

अवतरणम्--मया ततमिदम् इत्यादिना यथोक्तेन श्लोकद्वयेन उक्तमर्थं दृष्टान्तेनोपपादयन् आह--यथेति ।

व्याख्या--यथा येन प्रकारेण, सर्वत्रगः सर्वत्रगामी (अत एव) महान्--महान् महत्परिमाणवान्, वायुः पवनः, नित्यं सदा, सृष्टिस्थितिकालेषु, आकाशस्थितः आकाशस्य निरवयवत्वाद् आकाशे संश्लेषं विनैव स्थितः तथा तेन प्रकारेण, संश्लेषं विनैव सर्वाणि आकाशादीनि महान्त्यपि

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

---

भूतानि मत्स्थानि मयि परमेश्वरे असङ्गेऽपि वासुदेवे सर्वगते आकाशस्याऽपि अन्तरतमे स्थितानि सन्ति इति एवम् उपधारय जानीहि । यथाऽऽकाश-पवनयोरसंश्लेषेऽपि आधाराधेयभावो न विरुद्धयते तथा अधिष्ठाने मयि कल्पितस्य जगतोऽपि आधाराधेयभावोऽस्तीति जानीहीत्यर्थः ॥६॥

अवतरणम्- यथा स्थितिकाले भूतानि मयि तिष्ठन्ति तथा प्रलय-कालेऽपि मयि तिष्ठन्तीत्याह—सर्वेति ।

व्याख्या—हे कौन्तेय, कल्पक्षये प्रलयकाले सर्वभूतानि आकाशादीनि मामिकां मदीयाम् प्रकृतिं त्रिगुणात्मिकां निकृष्टाम् अपराम् अविद्यालक्षणाम् मायाख्याम् यान्ति । यान्येव भूतानि स्थितिकाले आकाशे वायुरिव मयि स्थितानि तान्येव प्रलयकाले मम मायायां त्रिगुणात्मिकायां प्रकृतौ अविद्या-लक्षणायां तिष्ठन्तीत्यर्थः । ननु प्रलयकाले प्रकृतौ लीनानां प्रकृतेरेवोत्पत्तिः पुनः कल्पादौ स्याद् ? इत्यत आह -पुनरिति । पुनः कल्पादौ प्रलयान्ते तदुत्तरस्य कल्पस्यारम्भे तानि तान्येव सर्वभूतानि उत्पत्तिकाले अहं वासुदेव एव विसृजामि उत्पादयामि । न हि जडा प्रकृतिर्माया मम शक्तिरूपा स्वयमेव उत्पादयितुं समर्था मदीयप्रेरणां विना कुम्भकारं विना मृत्तिकेव घटम् । अह-मेव अभिन्ननिमित्तोपादानतया स्वप्रकृतिसचिवः सर्वं जगद् यथावद् व्यवस्था-पयामि । न मदीया प्रकृतिः स्वतन्त्रास्तीत्याशयः ॥७॥

अवतरणम्—स्वस्य अभिन्ननिमित्तोपादानत्वमेव स्फुटीकरोति भगवान्—प्रकृतिमिति ।

व्याख्या—(एवम्) स्वां मम स्वभूतां प्रकृतिं मायाख्याम् अविद्या-लक्षणाम् अवष्टभ्य अधिष्ठाय वशीकृत्य तद्द्वारा प्रकृतेः स्वभावस्य प्राग्भवीय-स्वस्वसंस्कारस्य वशाद् अधीनत्वाद् अविद्याऽस्मितारागद्वेषाभिनिवेशदोषै-रवशं वशीकृतम् । अस्वतन्त्रम् इमम् कृत्स्नं भूतग्रामम् दृश्यमानं समग्रं भूत-समुदायं पुनः पुनः भूयोभूयः, संसारस्य अनादित्वाद् विसृजामि उत्पादयामि । रज्ज्वां सर्पमिव प्रदर्शयामीत्याशयः । अत्र प्रथमे चरणे प्रकृतिर्माया । चतुर्थे तु स्वभावः इति विवेकः ॥८॥

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद् विपरिवर्तते ॥१०॥

---

अवतरणम्--नन्वेवं भूतग्रामं विषमं विदधतस्तव तन्निमित्ताभ्यां धर्माऽधर्माभ्यां संबन्धः स्यादित्याशङ्क्य परिहरति--न चेति ।

व्याख्या--हे धनञ्जय, तानि भूतग्रामस्य विषमविसर्गनिमित्तानि, कर्माणि देवनरतिर्यगादिरूपसर्जनानि अर्थाद् अविद्याद्वाराऽऽवरणविक्षेपरूपाणि रज्ज्वां सर्पसृष्टिरिव मयि तादृक्प्रदर्शनानि, तेषु कर्मसु उदासीनवद् उपेक्षकवद् आसीनम् अर्थाद् 'अहं करोमि' इत्यभिमानवर्जितं (तथा) असक्तं फलसङ्गरहितं 'फलाय करोमि' इत्यभिमानरहितम् माम् ईशं न च नैव निबध्नन्ति सुकृतदुष्कृतभागिनं संसारिणं कुर्वन्ति । अन्योऽपि यदि एवम् कर्तृत्वाभिमानरहितः फलसङ्गरहितश्च करोति तर्हि सोऽपि कर्मभिर्न बध्यते । अन्यथा तु कोशकारवद् मूढः कर्मभिर्बध्यते एवेत्यभिप्रायो भाष्ये व्याख्यातः ॥९॥

अवतरणम्--तत्र 'भूतग्राममिमं विसृजामि' 'उदासीनवदासीनम्' इति च विरुद्धमुच्यते इति तत्परिहारार्थमाह--मयेति ।

व्याख्या--हे कौन्तेय, मया सर्वतो दृशिमात्रस्वरूपेण अविक्रियात्मना, केवलं सन्निधिमात्रेण सत्तामात्रेण प्रकृतौ सत्तास्फूर्तिप्रदायिना, अध्यक्षेण अधिष्ठात्रा स्वामिना, निमित्तेन हेतुना (हेतौ तृतीयेयम्) प्रकृतिर्मम माया त्रिगुणात्मिका अविद्यालक्षणा मयि कल्पिता ममैव स्वभूता शक्तिरेका, सचराचरं स्थावरजङ्गमलक्षणं जगत्, सूयते उत्पादयति, मयि अधिष्ठाने प्रदर्शयति प्रदर्शयतीवेति यावत् । तथा च मन्त्रवर्णः-'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माऽध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' (श्वेता० ६।११) इति । अत्रानन्दगिरिः-'प्रकृतिशब्दार्थमाह भाष्यकारो 'मम माया' इति । तस्या अपि ज्ञानत्वं वारयति भाष्यकृत् 'त्रिगुणात्मिका अविद्या लक्षणा' इति । पराभिप्रेतं प्रधानं व्युदस्यति 'अविद्यालक्षणा' इति । साक्षित्वे प्रमाणमाह भाष्ये तथा चेति । मूर्तित्रयात्मना भेदं वारयति एक इति । अखण्डं जाड्यं प्रत्याह देव इति । आदित्यवत् ताटस्थ्यं प्रत्यादिशति

सर्वभूतेष्विति। किमिति तर्हि सर्वैर्नोपलभ्यते? तत्राह गूढ इति बुद्ध्यादिवत् परिच्छिन्नत्वं व्यवच्छिनत्ति सर्वव्यापीति। तर्हि नभोवदनात्मत्वम्? नेत्याह सर्वभूतान्तरात्मेति। तर्हि तत्र तत्र कर्मफलसंबन्धित्वं स्यात् तत्राह–कर्माध्यक्ष इति। सर्वाधिष्ठानत्वमाह सर्वभूताधिवास इति। सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संनिधिर्वासोत्रोच्यते। न केवलं कर्मणामेवायम् अध्यक्षः। अपि तु तद्वतामपीत्याह-साक्षीति। दर्शनकर्तृत्वशङ्कां शातयति 'चेता' इति। अद्वितीयत्वं केवलत्वं, धर्माऽधर्मादिराहित्यमाह–निर्गुण इति। किं बहुना सर्वविशेषशून्य इति चकारार्थः। उदासीनस्याऽपीश्वरस्य साक्षित्वमात्रं निमित्तीकृत्य जगदेतत् पौनः पुन्येन सर्गसंहारौ अनुभवतीत्याह-हेतुनेति। कार्यवत्कारणस्यापि साक्ष्यधीनैव प्रवृत्तिरिति भाष्यकृदाह-व्यक्ताऽव्यक्तात्मकं जगत्सचराचरम् इति।' इत्याह। हे कौन्तेय, अनेन हेतुना मम अध्यक्षत्वेन कारणेन सचराचरं व्यक्ताऽव्यक्तात्मकं जगद् विपरिवर्तते सर्वासु अवस्थासु पुनः पुनश्चक्रवद् परिवर्तते भ्रमति। जन्मादिनाशान्तसकलविकारजातं पुनः पुनः प्राप्नोतीत्यर्थः।। सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संन्निधिमात्रेण प्रकृतेरधिष्ठातृत्वात् प्रकृत्यैव भूतग्रामस्य विसर्गादिकरणात् प्रकृत्यैव क्रियमाणस्य केवलं मयि आरोपान्मम भूतग्रामस्य विसर्गादिकर्तृत्वम्। स्वत औदासीन्यमेव मम वर्तते इत्यविरोध इत्याशयः। कारणवत् कार्यस्याऽपि जगतो ममाऽधीनैव प्रवृत्तिरिति व्यक्ताऽव्यक्तात्मकं सकलं जगद् मदधीनमेव प्रवर्तते। न हि दृशिव्याप्तिं (चेतन व्याप्तिं) विना जडवर्गस्य काऽपि प्रवृत्तिः संभवति। दृशिश्चेतनः परमात्मा परमेश्वर एव। अतो यथा जगतः सृष्टिस्थितिसंहारा ईश्वराधीनास्तथा अन्या अपि सर्वा जगतः प्रवृत्तयः परमेश्वराधीना एव भवन्ति। अतो ह्येकं पत्रमपि परमेश्वरप्रेरणां विना न कम्पितुमर्हतीति प्रवादः। तथा च वक्ष्यते–'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥' (१८।६१) इति। तथा हि–'अहमिदं भोक्ष्ये' इति भोगविषया जगतः प्रवृत्तिः। तदर्थम् 'इदं पश्यामि, इदं शृणोमि, इदं जिघ्रामि, इदं स्पृशामि, इदम् आस्वादयामि' इत्यादिनानाविधविषयोपलब्धिविषया जगतः प्रवृत्तिः। तदर्थम् इदं करिष्यामि, एतदर्थमिदं करिष्ये इत्यादिविहितप्रतिषिद्धाचरणविषया जगतः प्रवृत्तिः सुखदुःखनिमित्ता। 'इदं ज्ञास्यामि' इत्यनुष्ठानप्रयोजकज्ञानविषया जगत्प्रवृत्तिरित्याद्या कार्यकरणसंघातरूपस्य जडवर्गस्य जगतः प्रकृतिकार्यस्य सकलाऽपि प्रवृत्तिश्चेतनरूपक्षेत्रज्ञाऽभिन्नपरमेश्वरव्याप्तिं विना न संभवति, चेतनक्षेत्रज्ञपरमेश्वरव्याप्तिम् उररीकृत्यैव जायते। अवगतिनिष्ठाऽवगत्यवसानैवेति यावत्। वृक्षपत्रकम्पनाद्यपि अन्तर्यामिचेतनसंनिधानादेव। वायुकम्पनाद्यपि अन्तर्यामि-

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

---

चेतनसन्निधानादेवेति बोध्यम् । स्फुटमेतद्यक्षोपाख्याने (केनोपनिषदि) । अतः 'सर्वासु अवस्थासु हेतुनाऽनेन जगद् विपरिवर्तते' इति यदुक्तं भगवता वासुदेवेन भाष्यकृता च तत् सूपपन्नम् । तथा च परमात्मनोऽध्यक्षत्वमात्रेण जगतश्चेष्टा भवतीत्यत्र प्रमाणम्–'योऽस्याध्यक्षः परमे व्योमन्' (तै. ब्रा. २।८।९) इत्यादि-मन्त्राः । अस्य प्रत्यक्षादिसन्निधापितस्य जगतो योऽध्यक्षः सत्तास्फूर्तिप्रदानेन प्रवर्तकः, स परमे प्रकृष्टे हार्दे व्योम्नि आकाशे स्थितो दुर्विज्ञेय इत्यर्थः । एवं च केषांचित् प्रश्नाः–'परमेश्वरस्य सृष्टिकरणे किं प्रयोजनम् ? किं स्वस्य भोगः ? उत चेतनान्तरस्य भोगः ? उत अचेतनस्य भोगः ? उत अपवर्गः ? अपवर्गश्चेत् कस्य ? स्वस्य अन्यस्य वा ?' तथा तत्र प्रतिवचनम्–'न तावत् स्वस्य भोगः प्रयोजनम् । एकस्य देवस्य परमार्थसतः सर्वाध्यक्षभूतचैतन्य-मात्रस्य आकाशस्येव सर्वभोगाऽस्पृष्टत्वात् । न च चेतनान्तरस्य भोगोऽपि सृष्टिकरणे प्रयोजनम्, परमात्मव्यतिरिक्तस्य चेतनान्तरस्य अभावात् । न च अचेतनस्य भोगः सृष्टिकरणे प्रयोजनम्, अचेतनस्य अनिर्वाच्यत्वेन असत्त्वात् । 'नेह नानास्ति किञ्चन' इति श्रुतेः । अचेतनस्य भोक्तृत्वाऽयोगाच्च । नापि अपवर्गः फलम् सृष्टिकरणे, सृष्टेस्तद्विरोधित्वात् । न च स्वस्य अपवर्गः प्रयोजनम् स्वस्य नित्यमुक्तत्वात् । नापि अन्यस्यापवर्गः फलम् अन्यस्य अनिर्वाच्यत्वेन असत्त्वात् ।' इत्येवं प्रश्ना प्रतिवचनानि च अनुपपन्नानि । परस्य ब्रह्मणो मायानिबन्धने सर्गे विवर्तमात्ररूपे उक्तानां शङ्कानाम् अनवका-शात् । अतएव प्रतिवचनयोग्यतायाश्च अभावात् । तथा च मन्त्रवर्णः "को अद्धावेद ? क इह प्रवोचत् ? कुत आजाता ? कुत इयं विसृष्टिः ?" इत्यादिः (तै. ब्रा. २।८।९) प्रोक्तप्रश्नप्रतिवचनानाम् अनुपपत्तिं दर्शयति । दर्शितं च भगवता–"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥" (५।१५) अज्ञानाधीना सृष्टिरिति ॥१०॥

अवतरणम्—नन्वेवं भूतं सर्वाध्यक्षं सर्वभूताधिवासं त्वां किमिति सर्वे आत्मत्वेन भेदेन वा न भजन्ते ? इत्याशङ्क्याह—अवेति ।

व्याख्या—'एवं नित्यशुद्धबुद्धमुक्तस्वभावं' सर्वजन्तूनाम् आत्मान-मपि सन्तं' मानुषीं मनुष्यसम्बन्धिमीं तनुं देहम् आश्रितं स्वीकृतवन्तं भक्ते-

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।।१३।।

---

च्छया भक्तोद्धाराय च केवलं मनुष्यदेहेन व्यवहरन्तं न तु मनुष्यवद् देह-तादात्म्याऽभिमानेन युक्तं मां वासुदेवम् मूढा अविवेकिनः, मम परं प्रकृष्टं भावं परमात्मतत्त्वं नभःकल्पं नभसोऽप्यन्तरतमं भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानम् एव मूढत्वाद् अज्ञत्वाच्च अवजानन्ति नाद्रियन्ते न भजन्ति निन्दन्ति तिरस्कुर्वन्ति वा । ततश्च मदवज्ञानात् तज्जनितदुरित-प्रभावात् प्रतिबद्धबुद्धयस्ते सर्वपुरुषार्थबाह्याः शोच्याः सन्तीति भावः ।।११।।

भगवन्तम् अवजानतां शोच्यत्वं स्पष्टीकरोति– मोघाशा इति । मोघाशा मोघा निष्फला आशा आशिषस्तत्तद्वस्तुविषयाः प्रार्थना येषां ते, (तथा) मोघकर्माणः मोघान्येव कर्माणि अग्निहोत्रादीनि अनुष्ठीयमानानि येषां ते । (तथा) मोघज्ञाना मोघं ज्ञानं शास्त्रजन्यशाब्दबोधो येषां ते, (तथा) विचेतसः विगतं चेतो विवेको येषां ते भवन्तीति शेषः । स्वात्मभूत– भगवदवज्ञाकरणादित्यर्थः । न केवलम् उक्तविशेषणवत्त्वमेव तेषां भवति किन्तु वर्तमानदेहपातादूर्ध्वम् अतिक्रूरयोनिप्राप्तिश्च तेषां निश्चिता भवती-त्याह—राक्षसीमिति । (किञ्च ते) मोहिनीं मोहकरीम्, देहात्मवादिनीम् राक्षसीम् रक्षसामियं राक्षसी ताम् (तथा) आसुरीम् असुराणाम् इयम्, आसुरी ताम्, प्रकृतिं स्वभावम्—श्रिता आश्रिता भवन्ति । 'छिन्धि, भिन्धि पिब, खाद, इत्येवं राक्षसवत् तथा 'न देहि न जुहुधि परस्परम् अपहर' इत्येवं असुरवद् वदनशीलाः क्रूरकर्माणस्ते भवन्तीत्यर्थः । 'असूर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।।' (ईशा. ३) इति श्रुतेः प्रारब्धफलकदेहपातादूर्ध्वं ते क्रूरयोनिं प्राप्नुवन्तीति भाव. ।।१२।।

अवतरणम्—ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः, तानाह—महात्मेति ।

व्याख्या—हे पार्थ, महात्मानस्तु अक्षुद्रचित्ताः श्रद्दधाना भगवद्भक्ति-लक्षणे मोक्षमार्गे प्रवृत्तास्तु जनाः, दैवीं देवानाम् इयं दैवी ताम्, शमदम-दयाश्रद्धादिलक्षणां प्रकृतिं स्वभावम् आश्रिताः प्राप्ताः, सन्तः मां वासुदेवम्, भूतादिं भूतानां वियदादीनाम् प्राणिनां च आदिं कारणम्,' अव्ययं विनाश-रहितं परमात्मानं ज्ञात्वा अनन्यमनसोऽनन्यचित्ताः सन्तः, (मां) भजन्ति

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥**

---

सेवन्ते । 'अज्ञाते सेवाऽनुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवन्ते इत्याह—ज्ञात्वेति । 'महान् प्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं येषामिति व्युत्पत्तिमाश्रित्याह—अक्षुद्रेति । तु शब्दोऽवधारणे । अनन्यस्मिन् प्रत्यग्भूते मयि परस्मिन्नेव मनो येषामिति व्युत्पत्त्या व्याकरोति अनन्यचित्ता इति' इत्यानन्दगिरिः ॥१३॥

अवतरणम्—कथं भजन्तीति अपेक्षायां द्वाभ्यां भजनस्य प्रकारमाह भगवान्—सततमिति ।

व्याख्या—महात्मानस्तु इत्यनुवर्तते । भक्त्या परेण प्रेम्णा नित्ययुक्ताः नित्यं सदा युक्ताः संयुक्ताः सन्तः, दृढव्रताः दृढं स्थिरं प्रतिपक्षैश्चालयितुम् अशक्यं व्रतं ब्रह्मचर्यादिनियमो येषां ते, मां भगवन्तं ब्रह्मस्वरूपं सततं सर्वदा' कीर्तयन्तः संशब्दयन्तः, 'कृत संशब्देन इति चौरादिकः, 'यतन्तश्च इन्द्रियोपसंहारशमदमदयाऽहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्चेति' भाष्ये । अत्रानन्दगिरिः—सर्वदेति श्रवणावस्था गृह्यते । कीर्तनं वेदान्तश्रवणं प्रणवजपश्च । "व्रतं ब्रह्मचर्यादि" इत्याह । अत्र मधुसूदनसरस्वती—"सततं सर्वदा ब्रह्मनिष्ठं गुरुमुपसृत्य वेदान्तवाक्यविचारेण गुरूपसदनेतरकाले च प्रणवजपोपनिषदावर्तनादिभिर्मां सर्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्तयन्तः । वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्वन्त इति यावत् ।" इत्याह । "निरन्तरं सर्वदा ब्रह्मस्वरूपं मां कीर्तयन्तः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसंगम्य तन्मुखादुपनिषच्छ्रवणानन्तरम् उपनिषद्भि र्हरेगोविन्द वासुदेव दामोदर माधव मुकुन्देत्यादिनामभिश्च कीर्तयन्तः" इतिभाष्योत्कर्षदीपिकाकृत् । "सततं सर्वदा स्तोत्रमन्त्रादिभिः कीर्तयन्तः" इतिश्रीधरस्वामी प्राह । नमस्यन्तश्च प्रणमन्तश्च मां हृदयेशम् आत्मानम् 'उपासते सेवन्ते' इति भाष्यम् । नमस्यन्तश्चेति चकारात्-'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥' (श्रीमद्भागवते) इति वन्दन सहचरितं श्रवणाद्यपि बोद्धव्यम् ।" इति मधुसुदन सरस्वती । 'अर्चनं पादसेवनम् इत्यपि गुरुरूपे तस्मिन् सुकरमेव अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम् ।' इति च मधुसूदनसरस्वती । कीर्तनवन्दनयोः स्वशब्दाभ्यामेवोक्तत्वात्तदितरेषां श्रवणादीनां चकारादाक्षेप इति तद्भावः ॥१४॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

---

अवतरणम्—केन केन च अपरेण प्रकारेण महात्मानो मां भजन्तीति बोधयितुं भगवान् कीर्तननमस्काराद्युक्तप्रकारेतरभजनरूपोपासनाप्रकारानाह—ज्ञानेति ।

व्याख्या—अन्ये ब्रह्मनिष्ठा महात्मानः ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञः पूजनरूपत्वाद् इज्यतेऽनेनेति यज्ञस्तेन, 'मां चापि' इतिभाष्ये संबन्धः मां च ईश्वरमेव, अपि अन्यामुपासनां परित्यज्येत्यर्थः। 'देवतान्तरध्यानत्यागमपिशब्दसूचितं भाष्यकारो दर्शयति अन्यामुपासनां परित्यज्येति' इत्यानन्दगिरिः। 'अपि शब्द इन्द्रादिदेवता परित्यागार्थः' इति भाष्योत्कर्षदीपिका। 'मामीश्वरं चेति भाष्यस्य मामीश्वरमेवेत्यर्थः। ईश्वरं चेति चकारोऽवधारणे' इत्यानन्दगिरिः। ज्ञानयज्ञमेव विभजते-एकत्वेनेति। तच्च ज्ञानम् 'एकमेव परं ब्रह्म' इत्येवम् इति एकत्वेन परमार्थदर्शनेन यजन्त पूजयन्तः उपासते उत्तमाधिकारिणः। उत्तमाधिकारिणामुपासनामुक्त्वामध्यमानामधिकारिणाम् उपासनप्रकारमाह-(केचिच्च) पृथक्त्वेन 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरादित्यादिरूपेणावस्थितः' इत्युपासते। मध्यमाधिकारिणामेव प्रकारान्तरेण उपासनमुदीरयति-(केचिद्) 'बहुधाऽवस्थितः स एव भगवान् सर्वतोमुखो विश्वरूपः' इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेण अग्न्यादित्यादिरूपेणेति यावद् उपासते भजन्ति। पृथक्त्वेनेति कतिपयदेवतान्तररूपेण भगवान् अवस्थित इति ज्ञानयज्ञेनेत्यर्थः। बहुधेति सकलविश्वरूपेणावस्थितो भगवान् स एवेति ज्ञानयज्ञेनेत्यर्थ इति विवेकः ॥१५॥

अवतरणम्—यदि बहुभिः प्रकारैर्महात्मानस्त्वाम् उपासते तर्हि कथं त्वामेवोपासते ? इत्यत आह चतुर्भिः—अहमिति ।

व्याख्या—क्रतुः श्रौतकर्मभेदोऽग्निष्टोमादिः, अहम्, अहमेवास्मि। यज्ञः स्मार्तकर्मभेदो वैश्वदेवादिः, अहम् अहमेवास्मि। (किञ्च) स्वधा पितृभ्यो यदन्नं दीयते तदन्नम् अहम् अहमेवास्मि। औषधं सर्वप्राणिसाधारणम् यद् अन्नम् तद् अहम्, अहमेवास्मि। अथवा स्वधेति सर्वप्राणिसाधारणम् अन्नम्। औषधमिति व्याध्युपशमार्थं भेषजम्। मन्त्रो वेदमन्त्रोऽहम् येन पितृभ्यो देवता

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कारऋक्सामयजुरेव च ॥१७॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहर्जुन ॥१९॥

---

म्यस्च हविर्दीयते सोऽहमेवास्मि । आज्यं हविश्च अहमेव । अग्निर्यस्मिन् हूयते सोऽहमेव । हुतं हवनकर्म च अहमेवास्मि । 'क्रियाकारकफलजातं भगवदतिरिक्तं न अस्तीति समुदायार्थः' इत्यानन्दगिरिः ॥१६॥

भगवतः सर्वात्मत्वे हेत्वन्तरमाह-पितेति । (किञ्च) अस्य प्रत्यक्षस्य जगतः पिता जनयिता अहम् अहमस्मि । माता जनयित्री, धाता कर्मफलस्य विधाता, पितामहः पितुः पिता वेद्यं वेदितव्यम्, पवित्रं पावनम्, ओङ्कारः प्रणवः, ऋक् साम यजुश्च अहमेवास्मि । नियताक्षरपादा ऋक् । गीतिविशिष्टा ऋगेव साम । अनियताक्षरं यजुः । चकाराद् अथर्वाङ्गिरसो गृह्यन्ते । मन्त्रब्राह्मणयोर्वेदनामधेयम् । वेदत्वे सति नियताक्षरपादत्वम् ऋक्त्वम् इत्याद्यर्थः ॥१७॥

इतश्च भगवतः सर्वात्मत्वं मन्तव्यम् इत्याह गतिरिति । गतिः कर्मफलम्, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताऽकृतस्य द्रष्टा, निवासो यस्मिन् प्राणिनो निवसन्ति, शरणम् आर्तानां मत्प्रपन्नानाम् आर्तिहरः, सुहृत्प्रत्युपकाराऽनपेक्षः सन् उपकारी, प्रभवः प्रभवति अस्मादिति उत्पत्तिस्थानम् । प्रलयः प्रलीयतेऽस्मिन्निति प्रलीनतास्थानम्, स्थानं तिष्ठत्यस्मिन्निति स्थित्यधिकरणम्, अव्ययं बीजम् यावत्संसारभावित्वाद् नित्यं प्ररोहधर्मिणां प्ररोहकारणम्, अहमेवास्मीति पूर्वेण संबन्धः । निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनाम् । पोष्टा पोषणकर्ता कर्मानुसारमिति शेषः । 'कार्यकरणप्रपञ्चस्य अधिष्ठानमित्याह निवासः' इत्यानन्दगिरिः । 'शीर्यते दुःखम् अस्मिन्निति व्युत्पत्तिमाश्रित्याह शरणमिति' इत्यानन्दगिरिः । 'न ह्यबीजं किञ्चित् प्ररोहति, नित्यं च प्ररोहदर्शनाद् बीजसंततिर्न व्येतीति गम्यते' इतिभाष्यम् ॥१८॥

इतश्च भगवतः सर्वात्मकत्वम् इत्याह - तपामीति । (किञ्च) हे अर्जुन, अहम् आदित्यो भूत्वा कैश्चिद्रश्मिभिरुल्बणैः स्तपामि, कैश्चिद्रश्मिभिरनुल्ब-

त्रैविद्या मां सोमपाः पूतपापा
　　यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकम्,
　　अश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
　　क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं हि त्रैधर्म्यमनु प्रपन्ना
　　गतागतं कामकामा लभन्ते ॥२१॥

---

णैर्वर्षम् उत्सृजामि त्यजामि, उत्सृज्य पुनः कैश्चिद्रश्मिभिरष्टभिर्मासैः वर्षं वर्षणं जलं निगृह्णामि शोषयन् गृह्णामि । पुनरुत्सृजामि प्रावृषि । देवानाम् अमृतञ्च अहमेवास्मि । मर्त्यानां मृत्युश्चाहम् सद् व्याकृतं जगद, असद् अव्याकृता प्रकृतिश्च अहमेवास्मि । यतः ऋत्वादीनामुपलक्षणार्थतया सर्वात्मतया अहमेव स्थितोऽस्मि । अतः पूर्वोक्तैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञै मां पूजयन्तो ये ज्ञानविदो जना उपासते ते यथाविज्ञानं मामेव प्राप्नुवन्ति सद्यः क्रमेण वेति वाक्यशेषः ॥१९॥

अवतरणम्--ये पुनरज्ञाः कामकामास्ते तु--त्रैविद्या इति ।

व्याख्या--त्रैविद्याः तिस्रो विद्या अधीयते विदन्ति वा त्रैविद्याः । यद्वा तिस्रो विद्या येषां ते त्रिविद्याः, ते एव त्रैविद्याः, ऋग्यजुःसामविदः, सोमपाः सोमं पिबन्तीति सोमपाः, सोमो लता विशेषः क्रतुविधौ तद्रसपानकर्तारः, पूतपापास्तैनैव विहितेन सोमपानेन शुद्धकिल्विषाः, यज्ञैरग्निष्टोमादिक्रतुभिः, मां वस्वादिदेवरूपिणं परमेश्वरम् इष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं प्रार्थयन्ते प्रकर्षेण याचन्ते । ततस्ते पुण्यं पुण्यफलम्, सुरेन्द्रलोकं सुरेन्द्रस्य शतक्रतोः स्थानम्, आसाद्य संप्राप्य दिवि स्वर्गे दिव्यान् दिविभवान् अप्राकृतान् देवभोगान् भुज्यन्ते इति भोगाः, देवानां भोगादेवभोगास्तान् अश्नन्ति भुञ्जते ॥२०॥

अवतरणम्--नेयं स्वर्गप्राप्तिर्भगवत्प्राप्तितुल्यास्तीत्याह--ते इति ।

व्याख्या--ते अग्निष्टोमादिसोमयागकारिणः, कामकामाः काम्यन्ते इति कामाः विषयाः, तान्, कामयन्ते इति कामकामाः विषयाभिलाषिणो जनाः, तं पूर्वोक्तं विशालं विस्तीर्णम्, स्वर्गलोकं सुरेन्द्रलोकम्, भुक्त्वा

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥**

अनुभूय पुण्ये स्वर्गभोगकारणभूते, क्षीणे भोगेन नष्टे सति, मर्त्यलोकं मर्त्याः मरणधर्माणस्तेषां लोकम् इमं मृत्युलोकम्, विशन्ति आविशन्ति । एवं हि यथोक्तेन प्रकारेण हीति प्रसिद्धम्, त्रैधर्म्यम् त्रयाणां हौत्राध्वर्यवौद्गात्राणां धर्माणां वेदत्रयविहितानां समाहारः त्रिधर्मम्, तदेव त्रैधर्म्यम् । स्वार्थे ष्यञ् । तद् अनुप्रपन्नास्तदनुगताः । गतागतम् गतञ्च आगतञ्च गतागतमेव केवलं लभन्ते न तु स्वातन्त्र्यं क्वचिल्लभन्ते इत्यर्थः । हौत्रम्, आध्वर्यवम् औद्गात्रम् इति क्रमेण ऋग्यर्जुःसामाख्यवेदबोधितं कर्मत्रयं ज्योतिष्टोमादिके काम्ये यागे उपयुज्यते । 'एवं हि त्रैधर्म्यमि'ति भाष्यकारधृतपाठः आनन्दगिरिधनपतिभ्याञ्च व्याख्यातः । मधुसूदनसरस्वती एवं हि त्रैधर्म्यमिति पाठं व्याख्याय पुनराह—एवं त्रयीधर्ममिति पाठेऽपि स एवार्थ इति । किन्तु प्रसिद्धिद्योतकस्य हिशब्दस्यात्रपाठे न्यूनता या स महान् दोषो भगवता भाष्यकृता-अधृतश्चेति ॥२१॥

अवतरणम्—ये पुनर्निष्कामाः सम्यग्दर्शिनः-तेषां कथं योगक्षेमौ स्याताम् ? इत्याशङ्क्याह —अनन्येति ।

व्याख्या —'अनन्याः नास्ति मद्व्यतिरेकेण अन्यत् काम्यं-भजनीयं वा देवतान्तरं येषां तथा भूता' इति श्रीधरस्वामी । 'अनन्याः अपृथग्भूताः परं देवं नारायणम् आत्मत्वेन गताः सन्तः' इति भाष्यम् । 'येभ्योऽन्यो न विद्यते' इति व्युत्पत्तिम् आश्रित्य भाष्य आह 'अपृथग्भूता इति' इत्यानन्दगिरिः । आनन्दगिरिमेवानुसरन् मधुसूदनसरस्वती प्राह—'अन्यो भेददृष्टिविषयो न विद्यते येषां ते अनन्याः सर्वाद्वैतदर्शिन' इति । एवञ्च अनन्याः अपृथग्भूताः परं देवं नारायणम् आत्मत्वेन गताः सन्तः चिन्तयन्तः —'अहमेव वासुदेवः सर्वात्मा न मत्तोऽन्यत् किञ्चिदस्ति' इति ज्ञात्वा तमेव प्रत्यञ्चं सदा ध्यायन्तः, ये जनाः संन्यासिनो ज्ञानिनो मां 'पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः' इत्यानन्दगिरिः । तेषां परमार्थदर्शिनां नित्याभियुक्तानां नित्यम् अनवरतम् । आदरेण ध्याने व्यापृतानां योगक्षेमं—योगश्च क्षेमश्च अनयोः समाहारः योगक्षेमं तद् । योगोऽप्राप्तस्य प्रापणम्, क्षेमःप्राप्तस्यरक्षणं तदुभयम् अहं वहामि प्रापयामि । यस्मात् कारणाद् ज्ञानी त्वात्मैव-मे मतं स च ममप्रियस्तस्मात् कारणात् ते मम आत्मभूताः प्रियाश्चेति । अतस्तेषां योगक्षेमम् अहं वहामि । "ननु अन्येषामपि भक्तानाम् आर्तजिज्ञासु-

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्याः, यान्ति मद्याजिनोऽपि माम् ॥२५॥

---

धनार्थिनां योगक्षेमं भगवान् वहत्येव ? सत्यमेवम् । किन्तु अयं विशेषोऽन्ये ये भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्ते । अनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते । न हि ते जीविते मरणे वा आत्मनो गृद्धिं कुर्वन्ति । केवलमेव भगवच्छरणास्ते । अतो भगवानेव तेषां योगक्षेमं वहतीति" इति भाष्यम् ॥२२॥

अवतरणम्—ननु अन्या अपि देवता त्वमेव चेत् सर्वात्मत्वात्तर्हि अन्यदेवताभक्ता अपि वस्तुगत्या त्वामेव भजन्ते । एवं सति साक्षात्त्वद्भक्तानां देवतान्तरभक्तानाञ्च किम् अन्तरम् ? इत्याह—येऽपीति ।

व्याख्या—हे कौन्तेय, येऽपि अन्यदेवता भक्ता अन्यासु देवतासु वस्वादिषु भक्ताः सन्तः श्रद्धयाऽऽस्तिक्यबुद्धया अन्विता अनुगताः, अन्याः वस्वादिदेवताः यजन्ते पूजयन्ति तेऽपि मामेव नारायणमेव सर्वात्मानं यजन्ति पूजयन्ति (किन्तु) अविधिपूर्वकम् अविधिरज्ञानम् तत्पूर्वकं मां यजन्ति । 'अन्या अपि देवता वासुदेव एव' इति ज्ञानाऽभावस्तेषां मद्भक्ताद् विशेषः । तत्त्वस्य अज्ञानादेव ते च्यवन्ति इत्युत्तरेणान्वयः ॥२३॥

स्वाशयं स्फुटीकरोति—अहं हीति । अहं हीति प्रसिद्धमिदं यद् अहं सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां तत्तद्देवतात्मत्वेन भोक्ता च प्रभुरेव च अस्मि । मत्स्वामिको हि यज्ञः । 'अधियज्ञोऽहमेवाऽत्र' इत्युक्तवानस्मि । तु किन्तु ते अन्यदेवताभक्ता मां नारायणं तत्त्वेन यथावद् न अभिजानन्ति 'सर्वदेवतात्माऽहं भगवान् नारायणोऽधियज्ञश्च' इत्येवं ते न जानन्ति । अतोऽस्मात्कारणात् स्वर्गादिमात्रं क्षुद्रं फलं भुक्त्वा ते च्यवन्ति पतन्ति ॥२४॥

अवतरणम्—अन्यदेवताभक्तानां स्वभक्तानाञ्च यागफलयोर्विशेषं स्फुटीकरोति—यान्तीति ।

व्याख्या—देवव्रता देवेषु वस्वादित्येन्द्रादिषु व्रतं बल्युपहारप्रदक्षिणनमस्कारादिनियमो भक्तिश्च प्रीतिरूपा येषां ते, देवान् यान्ति तद्देवतानां सां-

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतम्, अश्नामि प्रयतात्मनः ॥२६॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥२७॥

---

निध्यं प्राप्नुवन्ति। पितृव्रताः पितृषु व्रतं श्राद्धादिक्रियापरत्वं येषां ते, पितृभक्ताः पितॄन् अग्निष्वात्तादीन् यान्ति पितृणां सांनिध्यं प्राप्नुवन्ति। भूतेज्याः भूतानां पूजकाः तत्तद्भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति तेषां सांनिध्यं प्राप्नुवन्ति। मद्याजिनोऽपि मद्यजनशीला वैष्णवा अपि तथैव मां विष्णुं यान्ति यथाविज्ञानम्। ततश्च सद्यो मुक्त्या क्रममुक्त्या वा नावर्तन्ते इत्यभिप्रायः। समानेऽप्यायासे मामेव ज्ञात्वा न भजन्ते, तेन अज्ञानेन ते अन्यदेवताभक्ता अल्पफलभाजोभवन्तीत्यर्थः ॥२५॥

**अवतरणम्**–न केवलं मद्भक्तानाम् अनावृत्तिलक्षणम् अनन्तफल-मेव। सुखाराधनश्चाऽहम्। कथम्? इत्यत आह—पत्रमिति।

**व्याख्या**—यः प्रयतात्मा-शुद्धबुद्धिः, भक्त्या प्रीत्या, मे मह्यम् पत्रं, पुष्पं, फलं तोयं जलं प्रयच्छति समर्पयति (तस्य) प्रयतात्मनः शुद्धबुद्धेर्भक्तस्य, भक्त्युपहृतम् भक्त्या प्रीत्या उपहृतं समर्पितम् तत् पत्रादिकम् अहं नारायणः अश्नामि गृह्णामि। भक्त्या भक्त्युपहृतमिति भक्तेर्द्विर्ग्रहणं भक्तेरावश्यकत्वं द्रढयति ॥२६॥

**अवतरणम्**—सुखाराधनत्वं स्वस्य प्रकारान्तरेणापि स्फुटी करोति भगवान् यदिति।

**व्याख्या**—हे कौन्तेय, यत् करोषि त्वं यां क्रियां निर्वर्तयसि स्वतः प्राप्तां गमनादिकां वा शास्त्रतः प्राप्तां सन्ध्योपासनादिकां वा। यद् अश्नासि यं कंचिद् भोगं करोषि स्वतो वा शास्त्रतो वा प्राप्तम् अनिषिद्धम्। यद् जुहोषि श्रुतिप्राप्तं स्मृतिप्राप्तं वा यद् हवनं करोषि। यद् ददासि शास्त्रतः प्राप्तं स्वतःप्राप्तं वा यत् किञ्चिद् दानं करोषि। यत् तपस्यसि शास्त्रतः प्राप्तं चान्द्रायणादि वा प्राणायामादि वा यत् किञ्चित् तपश्चरणं करोषि। तत् तत्सर्वं क्रियाजातम्, मदर्पणं कुरुष्व मह्यं समर्पयस्व 'ईश्वराय करोमि भृत्यवत्' इति बुद्ध्या कृत्वा 'इदं भगवतेऽस्तु' इत्येवं कुरुष्वेत्यर्थः। इदं भगवते कृष्णाय समर्पये इत्येवं वा कुरुष्वेत्यर्थः। कुरुस्वेति आत्मनेपदेन

शुभाऽशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

---

समपर्कगामित्वं क्रियाफलस्य (समर्पणफलस्य) स्यादिति सूचितम् । श्रीमद्भागवतेऽप्युक्तम्—'नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥' ( ७। ) इति । 'कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तत् ॥ (११। ) इति च । 'यत्तपस्यसि कौन्तेय' इतितपःपदं नित्यनैमित्तिकसर्वकर्मोपलक्षणार्थमिति मधुसूदन सरस्वती । यत्करोषीत्यादि यत्पदानि क्रियाणां विशेषणानि । यद्यपि यत्करोषीत्येतावतैव यदश्नासीत्यादीनामपि ग्रहणं सिद्धं तथापि प्रपञ्चार्थं तेषां ग्रहणं ब्राह्मणवसिष्ठन्यायात् ॥२७॥

अवतरणम्—एवं कुर्वतस्तव यद् भविष्यति तच्छृणु—शुभेति ।

व्याख्या एवम्–मत्प्रं सर्वकर्मसमर्पणेन, संन्यासयोगयुक्तात्मा सन्, संन्यासश्चासौ योगश्चेति संन्यासयोगः । कर्मैव सन् मत्समर्पणतया संन्यासः । कर्मैव सन् ब्रह्मयोजकतया योगश्च, तेन संन्यासयोगेन मत्समर्पणरूपेण युक्त आत्मा अन्तः करणं यस्य स सन् । शुभाशुभफलैः शुभानि च अशुभानि च इष्टाऽनिष्टानि फलानि येषां तैः, कर्मबन्धनैः कर्माणि एव संचितसंचीयमानप्रारब्धफलकानि बन्धनानि तैः, मोक्ष्यसे मुक्तो भविष्यसि । (ततश्च) विमुक्तः जीवन्नेव कर्मबन्धनरहितः सन् माम् परमात्मानम् उपैष्यसि 'विमुक्तः कर्मबन्धनैर्जीवन् एव पतिते च अस्मिन् शरीरे माम् उपैष्यसि आगमिष्यसि ॥' इति भाष्यम् ॥२८॥

अवतरणम्—रागद्वेषवान् तर्हि भवान् यतो भक्तान् अनुगृह्णासि नेतरान् ? तद् नेत्याह—समोऽहमिति ।

व्याख्या—अहं सर्वभूतेषु समस्तुल्योऽस्मि । (यतः) मे मम द्वेष्यः द्वेषविषयो, न नास्ति कश्चित् । न प्रियः न च कश्चित् प्रियः प्रीतिविषयोऽस्ति । तु किन्तु ये मां भक्त्या प्रीत्या भजन्ति श्रवणकीर्तनादिभिर्वर्णाश्रमधर्माऽनुष्ठानैश्च सेवन्ते । ते भक्ताः, मयि सन्ति अहमपि च तेषु अस्मि । 'अग्निवद्

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥३०॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

---

अहम् । दूरस्थानां यथा अग्निः शीतं न अपनयति, समीपमुपसर्पताम् अपनयति, तथा अहं भक्तान् अनुगृह्णामि नेतरान् । ये भजन्ति तु माम् ईश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्तन्ते । तेषु चापि अहं स्वभावत एव वर्ते नेतरेषु । न एतावता तेषु द्वेषो मम ॥' इति भाष्यम् । सप्तमीद्वयम् सामीप्ये । औपश्लेषिकाधिकरणे ॥२९॥

अवतरणम् – शृणु मद्भक्तेर्माहात्म्यम् – अपीति ।

व्याख्या—अपिचेत् यद्यपि, सुदुराचारः सुष्ठु दुराचारः अतीवकुत्सिताचारस्तथापि, अनन्यभाक् अनन्यभक्तिः सन् मां भजते सेवते, स साधुरेव सम्यग्वृत्त एव मन्तव्यो ज्ञातव्यः हि यस्मात् सः सम्यग्व्यवसितः यथावत् साधुनिश्चयवान् अस्ति । मम भजनारम्भात् पूर्वं सुदुराचारोऽपि मद्भजनारम्भप्रभृतिसाधुनिश्चयवत्त्वाद् अनन्यभक्तिर्जनः साधुरेव ज्ञातव्यो न सुदुराचार इत्यर्थः । अपि शब्दात् सदाचारवान् साधुरेव मन्तव्य इति किं वक्तव्यम् ? अनेन पापीयसामपि भगवद्भजनेऽधिकार इति सूचयतीत्यानन्दगिरिः ॥३०॥

एतदेव स्फुटीकरोति क्षिप्रमिति उत्सृज्य च बाह्यां दुराचारताम् अन्तः सम्यग्व्यवसायसामर्थ्यादसौ क्षिप्रं शीघ्रमेव धर्मात्मा धर्मचित्त एव, भवति अनन्यभक्त्या मद्भजनस्य सामर्थ्यात् । शश्वद् नित्यं, शान्तिम् उपशमं निगच्छति प्राप्नोति । 'उपशमो दुराचारादुपरमः' इत्यानन्दगिरिः शश्वद् नित्यं 'शान्तिं चोपशमं निगच्छति प्राप्नोति' इति भाष्यस्य व्याख्यायाम् । ननु किमिति स्वभक्तस्य दुराचारादुपरतिरुच्यते, दुराचारोपहृतचेतस्तया किमित्यसौ न नश्यतीत्याशङ्क्याह-कौन्तेयेति । "शृणु परमार्थं कौन्तेय, प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु न मे भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥" इति भाष्यम् । अत्रश्रीधरस्वामी–"कुतर्ककर्कशवादिनो-नैतन्मन्येरन् इति शङ्काव्याकुलचित्तमर्जुनं प्रोत्साहयति—हे कौन्तेय पटहकाहलादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु कथं, मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकम् इमं प्राप्य भजस्व माम् ॥३३॥

---

अपि तु कृतार्थ एव भवतीति । ततश्च ते त्वत्प्रौढिविजृम्भाद् विध्वंसित कुतर्का निःसंशयं त्वामेव गुरुत्वेन आश्रयेरन् ॥" इति प्राह ॥३१॥

अवतरणम्—'न मे भक्तः प्रणश्यति' इत्यत्र हेतुम् आचक्षाणो भक्त्यधिकारे जातिनियमो नास्ति-इत्याह मां हीति ।

व्याख्या—हे पार्थ हि यस्माद् मां व्यपाश्रित्य आश्रयत्वेन गृहीत्वा, येऽपि पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः स्युः । के ते (पापयोनयः) इत्यत आह—स्त्रियो वैश्यास्तथा शूद्राः । तेऽपि परां गतिं प्रकृष्टां गतिं मोक्षाख्यां यान्ति गच्छन्ति ॥ 'तत्र स्त्रीशूद्राणां वेदाध्ययनादौ अनधिकृतानां पापबाहुल्याद् लब्धस्त्रीयोनीनां पापयोनित्वं पापजन्मत्वं स्पष्टमेव वैश्या अपि पूर्वजन्मनि ब्राह्मणाः क्षत्रिया वा अनन्तरं पापकर्मणा वैश्ययोनिमापन्नाः कृष्यादिरता ग्राह्याः' इति भाष्योत्कर्षदीपिकाकृत् । इह-शूद्रपदेनैव उपलक्षणार्थतया अन्त्यजानां ग्रहणं सिद्धम् इति तदर्थं भाष्यविरुद्धतया प्रकारान्तरेण व्याख्याय पापयोनिपदेनअन्त्यजानां ग्रहणाय प्रयासः श्रीधरस्वाम्यादीनां वृथैव भाष्यविरुद्धत्वान् शब्दस्वारस्यविरुद्धत्वाच्च पापयोनय इति विशेषणं भाष्ये स्त्रीवैश्यशूद्राणामेव कृतमित्यवधेयम् । यस्मात् पापयोनयोऽपिः परां गतिं यान्ति तस्माद् न मे भक्तः प्रणश्यतीति सुसिद्धसित्यर्थः ॥३२॥

'अपि चेत्सुदुराचारः' 'येऽपि स्युः पापयोनयः' इत्यपि शब्दाभ्यां सूचितमर्थं स्फुटीकुर्वन्नाह—किं पुनरिति । पुण्याः पुण्ययोनयो ब्राह्मणा ब्राह्मणवर्णा तथा राजर्षयः राजानस्ते ऋषयश्चेति । राजानः क्षत्रियवर्णाः, ऋषयः सूक्ष्मदर्शिन इत्यर्थः । भक्ताः सन्तः सन्तः परां गतिं यान्ति इत्यत्र पुनः किं वक्तव्यम् ? तेषां परा गतिर्वचनं विनैव सुप्रसिद्धाऽस्तीति भावः । यतो मद्भक्तेरीदृशं माहात्म्यम् अतः, अनित्यं क्षणभङ्गुरम् असुखञ्च सुखहीनं च इमं लोकं मनुष्यदेहं परमार्थसाधनभूतं प्राप्य परमपुरुषार्थसाधनं दुर्लभं मनुष्यदेहं प्राप्य तत्साफल्याय मां भजस्व सेवस्व । इमं लोकमिति मनुष्यदेहस्य

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवम् आत्मानं मत्परायणः ॥३४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोध्यायः ॥९॥

---

दुर्लभत्वद्योतनाय । कदाचिद् अन्यदा भजिष्यामीति न युक्तम् मनुष्यदेहस्य क्षणभङ्गुरत्वात् । असुखमिति मोक्षसुखाय तस्माद्यतनीयमिति भावः । भगवद्भक्त्यधिकारे जातिनियमो नास्तीति पूर्वश्लोके आनन्दगिरिः ॥३३॥

अवतरणम्—केन प्रकारेण भगवद्भजनं कर्तव्यम् इत्यत आह—मन्मेति ।

व्याख्या—मन्मना मयि मनो यस्य स त्वं भव । (तथा) मद्भक्तः मनसेव शरीरेणाऽपि करचरणादिना पूजनतीर्थगमनादिरूपां मद्भक्तिं कुर्वन् भव । (तथा मद्याजी मद्यजनशीलो भव । ताच्छील्ये णिनिः । (तथा) मां मामेव नमस्कुरु । एवं यथोक्तेन प्रकारेण युक्त्वा समाधाय चित्तम् मत्परायणः अहं परम अयनं परा गतिर्यस्य स सन् मामेव आत्मानम् सर्वेषां भूतानां प्रत्यगात्मभूतम् ईश्वरम् एष्यसि आगमिष्यसि । अहं हि सर्वेषां भूतानाम् आत्मा च परा गतिश्च । तं माम् एकत्वेन प्राप्स्यसि । मनोवाक्कायैः मम भजनं कुरु मुक्तये इति भावः । यथा श्रीमद्भागवते अम्बरीषादिप्रकरणे दर्शितमस्ति ॥ तदेवं नवमेनाध्यायेन सोपाधिकं तत्पदवाच्यं निरुपाधिकं च तत्पदलक्ष्यं ज्ञेयं ब्रह्म निरूप्य तज्ज्ञानोपायभूतं भगवद्भजनं सुकरं सार्वाधिकारिकं च प्रोक्तम् ॥ श्रीकृष्णे परमानन्दे भक्तानुग्रहकारिणि । प्रीतिं निःश्रेयसार्थाय प्रयत्नादाचरेद् बुधः ॥३४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां नवमोऽध्यायः ॥९॥

श्रीकृष्णार्पणमस्तु ।



# अथ गीतावंश्यां दशमोऽध्यायः

श्रीभगवान् उवाच—

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥
न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥
यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥

---

अवतरणम्—सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिताः नवमे च। अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावाः सविशेषध्याने निर्विशेषप्रतिपत्तौ च शेषत्वेन वक्तव्याः। तत्त्वं च भगवतो वक्तव्यम् प्रागुक्तमपि दुर्विज्ञेयत्वाद्-इत्यत आह—भूय एवेति।

व्याख्या—हे महाबाहो, भूय एव पुनरपि मे मम परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं त्वं शृणु। पूर्वत्र उक्तमेवार्थं विस्पष्टीकर्तुं मया कथ्यमानं त्वं शृणु इत्यर्थः। यत् प्रीयमाणाय प्रीतिं लभमानाय मद्वचनात् त्वम् अमृतमिव पिबन् अतीव प्रीयसे यस्मात् तस्मात्, ते तुभ्यम् अहं हितकाम्यया हितेच्छया वक्ष्यामि कथयिष्यामि ॥१॥

अवतरणम्—किमर्थम् अहं वक्ष्यामि ? इत्यत आह—न मे इति।

व्याख्या—सुरगणा ब्रह्मादयोऽपि मे मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम् अथवा प्रभवं प्रभवनम् उत्पत्तिं, न विदुर्नजानन्ति। नापि महर्षयो भृग्वादयो विदुः। हि यस्माद् अहं परमात्मा देवानां ब्रह्मादीनां महर्षीणां च भृग्वादीनाम्, सर्वशः सर्वैः प्रकारैः उपादानत्व-निमित्तत्व-बुद्ध्यादिप्रवर्तकत्व-रूपैः आदिः कारणम् अस्मीति शेषः ॥२॥

अवतरणम्—कोऽसौ भगवतः प्रभावो यं देवादयोऽपि न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तद्धीफलं च कथयति—यो मामिति।

व्याख्या—यः कश्चिन्मर्त्यः, अनादिम् यस्मादहं देवानां महर्षीणां च आदिः, न मम अन्य आदिर्विद्यते, अतोऽहम् अनादिरजश्च। अनादित्वम्

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमस्तथा ।
सुखं दुःखं भवोऽभावोभयं चाऽभयमेव च ॥४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥
महर्षयः सप्त पूर्वे, चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

---

अजत्वे हेतुः । न जातोऽज इति । तम् । माम् अजम् अनादिं च लोक-महेश्वरम् लोकानां महान्तमीश्वरं तुरीयम् अज्ञानतत्कार्यवर्जितम् । वेत्ति जानाति स मर्त्येपु मनुष्येपु असंमूढः सम्मोहवर्जितः मम तत्त्वज्ञः सर्वपापैः सकलैर्मतिपूर्वाऽमति पूर्वकृतैः किल्विपैः प्रमुच्यते प्रमोक्ष्यते अचिरेणैव मुक्तो-भवतीत्यर्थः ॥३॥

अवतरणम्--इतश्चाहं महेश्वरो लोकानाम्--बुद्धिरिति ।

व्याख्या--बुद्धिरन्तःकरणस्य सूक्ष्मसूक्ष्मतरसूक्ष्मतमाऽर्थाऽवबोधन-सामर्थ्यम् । यतस्तद्वन्तं बुद्धिमान् इति वदन्ति । ज्ञानम् आत्मादिपदार्थानाम् । अवबोधः । तद्वन्तं हि ज्ञानवान् इति वदन्ति । असम्मोहः प्रत्युत्पन्नेपु बोद्ध-व्येपु विवेकपूर्विका प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अविकृत-चित्तता । सत्यं यथादृष्टस्य यथाश्रुतस्य च आत्मानुभवस्य परबुद्धिसंक्रान्तये तथैव उच्चार्यमाणा वाक् । दमो वाह्येन्द्रियोपशमः । उपशमो विपयेभ्यो व्यावृत्तिः । शमोऽन्तःकरणस्योपशमः । सुखम् आह्लादः । दुःखं संतापः । भवउद्भवः । अभावस्तद्विपर्ययः । भयं त्रासः । अभयम् च त्रासविप-रीतम् ॥४॥

अहिंसा प्राणिनाम् अपीडा । समता समचित्तता । तुष्टिः संतोपः । पर्याप्तबुद्धिर्लाभेपु । तप इन्द्रियसंयमपूर्वकं स्वशरीरपीडनम् । दानं यथा-शक्ति संविभागः, यशो धर्मनिमित्ता कीर्तिः । अयशोऽधर्मनिमित्ता अकीर्तिः । (एते) भूतानां प्राणिनां भावाः बुद्धयादयो यथोक्ता मत्त एव लोकमहेश्वरात् पृथग्विधा नानाविधाः । स्वस्वकर्माऽनुरूपेण भवन्ति जायन्ते ॥५॥

अवतरणम्--इतश्चाऽहं महेश्वरो लोकानाम्--महेति ।

व्याख्या--पूर्वे अतीतकालसम्बन्धिनः, सप्त महर्पयो भृग्वादयो भृगुर्म-रीचिरत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति । तथा च पुराणम्--भृगुं-

एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

---

मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान् ॥' इति । तथा पूर्वे एव, चत्वारो मनवो मनुसञ्ज्ञकाः सावर्णा इति प्रसिद्धाः सावर्णिर्धर्मसावर्णि र्दक्षसावर्णिः सावर्णश्चेति । यद्यपि अस्मिन् कल्पे एते सावर्णाः पूर्वे न सन्ति किन्तु भविष्यन्ति तथापि अतीतकल्पमादाय तेषां पूर्वत्वं सिद्धम् इति 'तथा' इति 'जाताः' इति च अविरुद्धम् । (एते) मद्भावा मयि भावो येषां ते मद्भावा मद्गतभावना अतएव वैष्णवेन सामर्थ्येन उपेताः, मनसा मनसैव मया उत्पादिता जाता उत्पन्नाः । येषां महर्षीणां मनूनां च (सृष्टिः) लोके इमा दृश्यमानाः स्थावरजङ्गमलक्षणाः प्रजाः सन्ततयः सन्ति ॥ यत्त्वत्र केचित् चत्वार इति सनकादयः, मनवः स्वायम्भुवादयश्चतुर्दशेति व्याचख्युस्तन्न, सनकादय इति चतुर्दशेति च पदयोरध्याहारे वाक्यस्याऽसामर्थ्यात् । अतएव सर्वज्ञेन भाष्यकृता तथा न व्याख्यातमिति द्रष्टव्यम् ॥६॥

**अवतरणम्**—यथोक्तभगवद्विभूतियोगज्ञानस्य फलमाह—एतामिति ।

**व्याख्या**—मम ईश्वरस्य एतां यथोक्तां विभूतिं बुद्धयादिरूपैर्विस्तारं, बुद्धयाद्युपादानत्वेन विविधा भूतिर्भवनं वैभवं सर्वात्मकत्वमिति यावत् । योगञ्च युक्तिञ्च आत्मनो घटनम् । 'ईश्वरस्य तत्तदर्थसम्पादनसामर्थ्यं योगस्तदाह भाष्यकार 'आत्मनो घटनमिति' इत्यानन्दगिरिः । 'अथवा योगो योगमाया ईश्वरस्य शक्तिविशेषरूपा, तज्जं सर्वज्ञत्वं सर्वैश्वर्यं चेह योगशब्देन लक्ष्यते' तदाह-भाष्ये "अथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग इत्युच्यते" इति । तं च यो जनस्तत्त्वतस्तत्त्वेन यथावदित्येतत् । वेत्ति जानाति-'भगवान् सर्वात्मा सर्वज्ञः सर्वेश्वरश्च' इत्येवं संजानाति । सोऽविकम्पेन अप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते युक्तो भवतीत्यर्थः । सोपाधिकपरमेश्वरविषयकज्ञानं निरुपाधिकसच्चिदानन्दब्रह्मज्ञाने द्वारम् अस्तीति भाव आनन्दगिरीये । अत्र अस्मिन् अर्थे संशयो नास्ति ॥७॥

**अवतरणम्**—भगवद्विभूतियोगयोर्ज्ञानेन सम्यग्दर्शनस्थैर्यलक्षणाऽविकम्पयोगाऽवाप्तिर्यथा भवति तद् दर्शयति चतुर्भिः—अहमिति ।

**व्याख्या**—अहं परं ब्रह्म वासुदेवाख्यम्, सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्य जगतः संसारस्य प्रभवः उत्पत्तिस्थानम् । उपादानं निमित्तं च । मत्तः मत्स-

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

---

काशादेव, सर्वं स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं जगत् प्रवर्तते मयाऽन्तर्यामिणा प्रेर्यमाणं यथास्वं मर्यादामनतिक्रम्य चेष्टते। इति इत्येवं मम सर्वात्मत्वं सर्वनिमित्तोपादानत्वं सर्वेश्वरत्वं सर्वज्ञत्वं च मत्वा बुधा अवगतसंसाराऽसारत्वार्था जनाः, भावसमन्विताः भावो भावना परमार्थतत्त्वाऽभिनिवेशस्तेन समन्विताः संयुक्ताः, मां भजन्ते सेवन्ते। भगवद्विभूतियोगज्ञानमाहात्म्यात् प्रतिष्ठिता भगवन्निष्ठा सिद्धयतीति भावः ॥८॥ प्रेमपूर्वकं यद्भजनं बुधानां तदेव विवृणोति-मच्चित्ता इति। बुधा अवगतसंसारनिःसारत्वाः, मच्चित्ताः मयि एव चित्तं येषां ते। मद्गतप्राणाः मां गताः प्राप्ताश्चक्षुरादयः प्राणा इन्द्रियाणि येषां ते। मयि उपसंहृतकरणा इत्यर्थः। अथवा मद्गतप्राणा मद्गतजीवना इत्येतत्। मां ज्ञानबलवीर्यादिधर्मैर्विशिष्टं परस्परम् अन्योऽन्यं नित्यं निरन्तरं बोधयन्तोऽवगमयन्तः, कथयन्तश्च कीर्तयन्तश्च, तुष्यन्ति च परितोषं प्राप्नुवन्ति च, रमन्ति च रमन्ते च रतिं च प्राप्नुवन्ति प्रियसंगत्येव ॥९॥ एवं भूतेभ्यः सम्यग्ज्ञानमहं ददामीत्याह-तेषामिति। सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं न तु अर्थित्वादिना कारणेन, मां परमात्मानं भजतां सेवमानानां तेषाम् ये मच्चित्तत्वादियथोक्तैः प्रकारैः मां भजन्ते तेषाम् तेभ्योऽहम् तं बुद्धियोगम् बुद्धिः सम्यग्दर्शनं मदीयतत्त्वविषयम्, तेन योगो बुद्धियोगस्तं, ददामि प्रयच्छामि। तं कं बुद्धियोगं ददासीत्यपेक्षायामाह— येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन ते मच्चित्तत्वादिप्रकारैर्मां भजमाना जना मां परमेश्वरम् आत्मभूतम् आत्मत्वेन उपयान्ति प्रतिपद्यन्ते साक्षात्कुर्वन्तीत्यर्थः। सोऽविकम्पेन योगेन युज्यते इति यदुक्तं तत् साधितम् ॥१०॥ ननु भगवत्साक्षात्काररूपाया भगवत्प्राप्तेर्बुद्धियोगेन साध्यत्वे अनित्यत्वापत्तेर् भक्तेभ्यो बुद्धियोगं ददासि येन ते त्वामुपयान्तीत्ययुक्तम्? इत्याशङ्क्य भगवत्प्राप्तेः प्रति

वन्धकस्य मिथ्याप्रत्ययलक्षणस्य मोहान्धकारस्य आवरणस्य केवलं नाशकमात्र एव बुद्धियोगो भगवत्प्राप्तिस्तु आत्मत्वेन सिद्धा एव सर्वदा, इति न भगवत्प्राप्तेरनित्यत्वम् इत्याशयेनाह–तेषामेवेति। अहं परमात्मा, तेषामेव मच्चित्तत्वादिप्रकारै मां भजमानानामेव अनुकम्पार्थं 'कथं नु न नाम श्रेयस्तेषां स्याद्' इति दयाहेतोर् आत्मभावस्थः सन् आत्मनो भावोऽन्तःकरणाशयः तस्मिन् एव स्थितः सन् भास्वता भक्तिप्रसादस्नेहाभिषिक्तेन, मद्भावनाऽभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना, विरक्तान्तःकरणाधारेण, विषयव्यावृत्तरागद्वेषाऽकलुषितचित्तनिवातापवारकस्थेन नित्यप्रवृत्तैकाग्रचपूर्वकध्यानजनितसम्यग्दर्शनरूपया भासा युक्तेन सम्यग्दर्शनपर्यन्तेन ज्ञानदीपेन ज्ञानमेव दीपस्तेन, देहाद्यव्यक्तान्ताऽनात्मवर्गाऽतिरिक्तपरब्रह्मगोचरज्ञानरूपविवेकप्रत्ययरूपेण, अज्ञानजम् अज्ञानम् अविवेकस्ततो जातं मिथ्याज्ञानम्, तमः मिथ्याप्रत्ययलक्षणं मोहान्धकारम्। 'अविवेकोनामाऽज्ञानं ततो जातं मिथ्याज्ञानम्, तदुभयम् एकीकृत्य तमो विवक्ष्यते। न च तन्नाशकत्वं जडस्य कस्यचित्तदन्तर्भूतस्य युक्तम्। तेनाहं नाशयामीत्युक्तम्।' इत्यानन्दगिरिः। नाशयामि निवारयामि। अहं चिदात्मा आत्मभावस्थः सन्, तत्त्वमस्यादिमहावाक्यजन्या 'अहं ब्रह्माऽस्मि' इत्याकाराऽन्तःकरणरूपबुद्धिवृत्तिस्तत्र अभिव्यक्तः सन्, तत्त्वमस्यादिमहावाक्यजन्या 'अहं ब्रह्माऽस्मि' इत्याकारा बुद्धिवृत्तिरेव ज्ञानं दीपतुल्यं मोहरूपान्धकारनिवारणे करणत्वात्। तेन सहायेन मूलाऽज्ञानजं मिथ्याप्रत्ययलक्षणं मोहान्धकारम् आत्माऽऽवरणं नाशयामि। आवरणनाशे सति स्वयमेव आत्मतत्त्वं सर्वदा सर्वकालम् प्रकाशते। अतो नास्ति ब्रह्मप्राप्तेरनित्यत्वमित्याशयः। अत्र भगवता भाष्यकारेण 'ज्ञानदीपेन भास्वता' इत्यस्य विवरणे पूर्वोक्तानि विशेषणानि ज्ञानस्य दीपत्वं स्फुटीकर्तुं कथं च ज्ञानदीपः प्राप्यते इति च बोधयितुं प्रयुक्तानि। तथा हि यथा दीपप्रभोत्पत्तौ तैलादिस्नेहस्य, वर्तेः, पवनेरणस्य, स्नेहाधारस्य, निवातापवारकस्य अपेक्षा भवति कारणत्वात् तथैव अत्र भास्वति ज्ञानदीपे भगवद्भक्तिहेतुकेश्वरप्रसादस्य स्नेहसदृशस्य, भगवद्भावनाऽभिनिवेशस्य पवनेरणसदृशस्य, ब्रह्मचर्यशमदमादिसाधनानुष्ठानजन्यसंस्कारवती या प्रज्ञा सैव वर्तिसदृशी तस्याः, विषयविरक्तान्तःकरणरूपस्य स्नेहाऽऽधारस्य, विषयव्यावृत्तं चित्तं यद् रागद्वेषाऽकलुषितं तस्य निवाताऽपवारकसदृशस्य अपेक्षा भवति स्वोत्पत्तौ। ज्ञानदीपे प्रभारूपा भाः सम्यग्दर्शनरूपं ज्ञानमेव स्वयम्। यद् नित्यप्रवृत्तचित्तैकाग्रचपूर्वकश्रवणमनननिदिध्यासनैर्महावाक्याज्जायते। सम्यग्दर्शनमेव ज्ञानदीपः सन्नपि कल्पनया सम्यग्दर्शनरूपया भासाऽपि स एव

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यम्, आदिदेवमजं विभुम् ॥१२॥

---

युक्तः। वस्तुतस्तु भासमानदीपस्य यथा प्रभैव मुख्यं स्वरूपं तथैवात्र ज्ञानदीपस्य मुख्यं स्वरूपं सम्यग्दर्शनमेवास्ति। अभेदेऽपि 'राहोः शिरः' इतिवत् कल्पनया भेदव्यवहारो भास्वता ज्ञानदीपेनेति। अतो भास्वतेत्यस्य सम्यग्दर्शनपर्यन्तेनेत्यर्थः कृतोऽस्ति आनन्दगिरिणाऽपि। 'अहं ब्रह्माऽस्मि' 'अहमस्मिपरं ब्रह्म' इत्याकारा महावाक्याज्जाता अन्तःकरणवृत्तिरेव भास्वान् ज्ञानदीपः सम्यग्दर्शनलक्षणः सम्यग्दर्शनपर्यन्तः। सा च जडत्वात् स्वयम् अज्ञाननिर्वर्तिका न स्यात् किन्तु तस्यां वृत्तौ अभिव्यक्तश्चिदात्मा भगवानेव तया वृत्त्या ज्ञानदीपेन सम्यग्दर्शनलक्षणेन अज्ञानं मिथ्याप्रत्ययलक्षणम् अविवेकरूपञ्च निवारयति। अत उक्तम्–'अहमज्ञानजं तमः' नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति। तमोनाशे सति यथा पूर्वसिद्धमेव घटादि प्रकाशते तथैव आवरणनाशे सति पूर्वप्राप्त एव चिदात्मा प्रकाशते प्राप्त इव भवति यः सावरणदशायाम् अप्राप्त इव आसीत् स एव पूर्वप्राप्तोऽपि आवरणनाशे सति पुनः प्राप्त इव भवतीति 'माम् उपयान्ति' इत्यनेन न मोक्षस्य कृतकत्वम् आयातीति भावः। यद्यपि यथोक्तब्रह्माकारबुद्धिवृत्त्यभिव्यक्तश्चिदात्मैव अज्ञानं नाशयति तथापि न तादृशबुद्धिवृत्तिं विना। इतिकृत्वा तादृशबुद्धिवृत्तेर्दीपतुल्यत्वम् तत्रापि वस्तुतस्तु चिदात्मैव प्रकाशस्वरूपः। प्रकाशरूपचिदात्मव्यञ्जकतयैव दीपतुल्यत्वं तादृशबुद्धिवृत्तेरिति तस्याः करणत्वम्। बुद्धीद्धबोधस्य बोधेद्धबुद्धेर्वा भगवद्गीतामते विनिगमनाविरहाद् अज्ञाननाशकत्वमिति। अतएवात्र आनन्दगिरिः—'(नाशयात्मभावस्थ इत्यन्तेन) बुद्धीद्धबोधस्य अज्ञानादिनिवर्तकत्वमुक्त्वा बोधेद्धबुद्धेस्तन्निवर्तकत्वमिति पक्षान्तरमाह ज्ञानेति' इति प्राह ॥११॥

अवतरणम्—यथोक्तां भगवतो विभूतिं योगं च श्रुत्वा—अर्जुनउवाच।

व्याख्या—निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकञ्च सर्वात्मत्वादि भगवतो रूपं तद्धीफलं कैवल्यञ्च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्यत्वोक्तिपूर्वकं मन्दाऽनुग्रहार्थं सर्वं बुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन् अर्जुनः सप्तभिः श्लोकैरुवाच—परं सर्वोत्कृष्टं धाम तेजोरूपं चैतन्यम् (तथा) परमं निरतिशयं पवित्रं पावनं (यत्) परं सर्वजगदुपादानं

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥
सर्वमेतद् ऋतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन, भूतेश, देवदेव जगत्पते ॥१५॥

---

ब्रह्म परमेश्वरः (स एव)भवान् वासुदेवोऽस्ति (नान्य.) ॥ कुतस्त्वमेवं ज्ञातवानित्याशङ्क्य आप्तानां वाक्यादित्याह—सर्वे ऋषयः सूक्ष्मदर्शिनो वसिष्ठाद्यास्तथा देवर्षिर्देवश्चासौ ऋषिश्चेति यः स नारदस्तथा असितो देवलो व्यासश्च त्वाम् शाश्वतं नित्यं दिव्यं दिवि परमे व्योम्नि भवं सत्तावन्तं सर्वप्रपञ्चातीतमित्यर्थः । आदिदेवं सर्वदेवानाम् आदौ भवं विद्यमानं देवं दीव्यतीति देवस्तम् सर्वदेवमूलत्वे सति द्योतमानमित्यर्थः । अजम् अजन्मानं विभुं विभवनशीलं सर्वगतमित्यर्थः । एवं भूतं पुरुषं पुरि सर्वप्राणिशरीरेषु शयानम् आत्मानम् आहुः कथयन्ति । स्वयं चैव त्वं मे मह्यं (तथा) ब्रवीषि कथयसि ॥१२-१३॥ केशव, यद्—एतत् तवपर ब्रह्मत्वादिकं यथोक्तम् ऋष्यादिभिस्त्वं च मां प्रति 'न मे विदुः सुरगणाः' इत्यादिना वदसि भाषसे तद् एतत्सर्वम् ऋतं सत्यमेव यथार्थमेव अहं मन्ये जानामि । हे भगवन् समग्रैश्वर्यादिसम्पन्न, ते तव व्यक्तिं प्रभावं निरुपाधिकस्वभावं देवा ब्रह्मादयो न विदुर्न जानन्ति । दानवा प्रबलपराक्रममायाविशिष्टा उपलक्षणार्थतया महर्षयश्च न विदुर्न जानन्ति हि इति प्रसिद्धमेतदित्यर्थः । तस्मान्न मे विदुरित्यादि यदुक्तं भवता तत् तथैवेति अहं जाने ॥१४॥

यतस्त्वं देवादीनामादिरतः कारणाद् हे पुरुषोत्तम, क्षराऽक्षरातीतपूर्णचैतन्यस्वरूप, हे भूतभावन भूतानि ब्रह्मादिस्तम्बपर्यन्तानि भावयतीति हे भूतोत्पादक, हे भूतेश भूतानाम् ईश, हे देवदेव देवानां देव, हे जगत्पते, जगतां पते, त्वं स्वयमेव आत्मनैव परकर्तृकोपदेशादिमन्तरेणैव त्वमेव, आत्मना स्वरूपेणैव न साधनान्तरेण आत्मानं सोपाधिकं निरुपाधिकं च वेत्थ जानासि । सोपाधिकं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं निरुपाधिकं च निरस्ताशेषविशेषं प्रत्यक्त्वेनाऽविषयम् आत्मानं त्वं वेत्थ जानासीत्यर्थः । भूतभावनेति सर्वप्रकृतित्वं सर्वकर्तृत्वञ्चोक्तम् । भूतेशेति सर्वेश्वरत्वमुक्तम् । जगत्पते इति सर्वजगत्पालकत्वमुक्तम् ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकान्, इमांस्त्वं व्याप्य तिष्ठसि ।।१६।।
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ।।१७।।

---

अवतरण्—यस्माद् अस्मादृशाम् अगोचर स्तव तत्त्वं जिज्ञासितं च तस्मात् त्वयैव सर्वज्ञेन वक्तव्यमित्याह—वक्तुमिति ।

व्याख्या—त्वं परमेश्वरो याभिर्विभूतिभिर्यैरात्मनो-माहात्मविस्तारैः, इमान् भूम्यादीन् लोकान् व्याप्य पूरयित्वा तिष्ठसि वर्तसे(ताः) आत्मविभूतयः आत्मनो माहात्म्यविस्ताराः, दिव्याः 'दिव्यत्वम् अप्राकृतत्वमि'त्यानन्दगिरिः। 'दिव्या असाधारणा असर्वज्ञैर्ज्ञातुमशक्याः' इति मधुसूदनसरस्वती । 'दिव्या अत्यद्भुताः' इति श्रीधरस्वामी । सन्तीति शेषः । हि इति प्रसिद्धमेतदित्यर्थः । (अतस्ता आत्मनो विभूतीर्माहात्म्यविस्तारान्) अशेषेण साकल्येन (मां प्रति) वक्तुम् कथयितुम्, (त्वमेव) अर्हसि योग्यो भवसि (नान्यः कश्चिद्) तस्मात् ताः कृपया मह्यं कथयेत्याशयः ।।१६।।

अवतरणम्—किमर्थं मम विभूतीः श्रोतुमिच्छसीत्याशङ्क्य तद्-ध्यानसौकर्यप्रकारप्रश्नेन भगवत्तत्त्वविज्ञानं विभूतिश्रवणस्य फलं कथयेति—द्वाभ्याम् आह—कथमिति ।

व्याख्या—हे योगिन् 'योगो निरतिशयैश्वर्यादिशक्तिः । सोऽस्यास्तीति हे योगिन् निरतिशयैश्वर्यादिशक्तिशालिन्', इति मधुसूदनसरस्वती । 'योगो-नामैश्वर्यं तदस्यास्तीति योगी हे योगिन्' इत्यानन्दगिरिः । अहं स्थविष्ठ-मतिस्त्वां देवादिभिरपि ज्ञातुमशक्यम् कथं केन प्रकारेण, केन सौकर्यप्रकारेणे-त्यर्थः । सदा सततं परिचिन्तयन्, केन प्रकारेण उपलक्षितं त्वां सततम् अनुसंदधानः शुद्धबुद्धिर्भूत्वा त्वां निरुपाधिकं निरस्ताशेषविशेषम्, विद्याम् विजानीयाम् ? इत्येकः प्रश्नः । प्रश्नान्तरं प्रस्तौति । च=किञ्च–हे भगवन् हे सोपाधिक, त्वं सोपाधिको मया केषु केषु भावेषु पदार्थेषु चिन्त्यश्चिन्तनीयो ध्येयोऽसि ? केषु केषु चेति चकारेण प्रश्नान्तरमिदमिति स्फुटम् । कथं विद्या-मिति निरुपाधिकब्रह्मवि षयकसम्यग्दर्शनविषयकः प्रश्नः । केषु केषु चभावेषु चिन्त्यो मयेति निरुपाधिकब्रह्मज्ञानद्वारभूतं यत् सोपाधिकब्रह्मध्यानं तद्विषयकः प्रश्न इति विवेकः । चेतनाऽचेतनभेदैरुपाधिबहुत्वाच्च केषु केषु इति बहुव-चनम् ।।१७।।

विस्तरेणात्मनो योगं विभूतिं च जनार्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

श्रीभगवान् उवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥

---

प्रकृतं प्रश्नमुपसंहरति-विस्तरेणेति। हे जनार्दन, जनान् असुरान् देवप्रतिपक्षभूतान् अर्दयति नरकादिं गमयतीति जनार्दनः। 'जनैः सर्वैर्भक्तैरभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनम् अर्द्यते याच्यते यः' इति वा जनार्दनः। सः। 'अर्द गतौ याचने च' इत्यस्य रूपम्। 'आत्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तारं ध्येयपदार्थानाम्' इति भाष्यम्। भूयः पूर्वम् उक्तमपि संक्षेपेण अधुना विस्तरेण कथय। हि यस्मात् (तव मुखाद्) अमृतम् अमृतादपि सातिशयं वचनामृतं शृण्वतो मे मम कर्णाभ्यां पिबतः तृप्तिरलंप्रत्ययेन इच्छाया विच्छित्तिर्नास्ति ॥१८॥

अवतरणम्—'कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्' 'केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ?' इत्यस्य प्रश्नद्वयस्य (विस्तरेणात्मनो योगं विभूतिं च जनार्दन। भूयः कथय' इत्यनेन वाक्येन समाधानाय प्रार्थनायां कृतायाम् प्रतिवचनं करिष्यन् अध्यायान्तं यावत्—श्रीभगवान् उवाच।

व्याख्या—हे कुरुश्रेष्ठ, हन्त, इदानीम् कथयिष्यामीत्यनेनास्य संबन्धः। दिव्याः दिवि भवाः अप्राकृता अन्तर्भूतयोगाः इत्यर्थः, हि प्रसिद्धाः आत्मविभूतयः आत्मनो मम विभूतयः विविधा भावा विस्ताराः सन्ति तासां मध्ये प्राधान्यतः यत्र यत्र या या प्रधानभूता विभूतिः, तां तां ते तुभ्यम् कथयिष्यामि वक्ष्यामि। अवशेषेण वक्तुमर्हसीति यदुक्तं तत्राह—मे मम विस्तरस्य विभूतीनां विस्तारस्य अन्तः समाप्तिर्नास्ति। अतोऽनन्तत्वाद् अशेषतस्तु वर्षशतेनापि विभूतयो वक्तुं न शक्याः यस्मात् तस्मात् प्राधान्यतः प्राधान्येनैव कथयिष्यामीत्यर्थः। अत्र नीलकण्ठः—'प्राधान्यत इति-योगोपकारित्वेन विभूतय इह प्राधान्येनोच्यन्ते योगस्तु संक्षेपणैव उच्यते तस्य अग्रे (एकादशे) वक्ष्यमाणत्वादिति भावः। अन्यथा 'योगं विभूतिं च कथय इति पृष्टे विभूतिमात्रकथनेन अनवहितचित्तत्वं भगवतः स्याद्' इत्याह। अत्र 'हन्त इदानीम्' इति भाष्यम्। 'हन्तेति अनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति इत्याह-इदानीम्' इति। इत्यानन्दगिरिर्भाष्यव्याख्यायाम् आह ॥१९॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥**

---

अवतरणम्—दिव्यविभूतिप्रकथने प्रस्तुते सति आदावेव पारमार्थिकं पारमेश्वरं रूपं शृणु । पश्चात्तु सोपाधिकं पारमेश्वरं रूपमपि श्रोष्यसीत्याशयेनाह—अहमिति ।

व्याख्या—हे गुडाकेश, गुडाका निद्रा तस्या ईश जितनिद्र, अथवा हे घनकेश, सर्वभूताशयस्थितः सर्वेषां भूतानाम् आशये, आशेरते अस्मिन् विद्याकर्मपूर्वप्रज्ञाः इति आशयो हृदयम् तत्र स्थितः अन्तर्हृदिस्थितः आत्मा प्रत्यगात्मा (यः सः) अहम् अहमेव अस्मीति शेषः । (अहं परमात्मा उत्तमाधिकारिणा सर्वभूताशयस्थप्रत्यगात्मत्वेन नित्यं ध्येय इत्यर्थः । यस्तु मन्दो मध्यमो वाऽधिकारी मां परमात्मानं प्रत्यगात्मत्वेन ध्यातुं न शक्तः, तेन तु अधिकारिणा उत्तरेषु वक्ष्यमाणेषु भावेषु अहं चिन्त्यो (ध्येयोऽस्मि, यस्माद्) अहम् अहमेव भूतानां ब्रह्मादिस्तम्बपर्यन्तानाम् । आदिश्च कारणञ्च, मध्यं च स्थितिश्च, अन्त एव च प्रलयश्च अस्मीति शेषः । यस्मादहमेव भूतानाम् अभिन्ननिमित्तोपादानम् तस्मादहं सर्वात्मत्वेन उत्तमाधिकारिणा ध्यातव्यः । तदशक्तेन तु मध्येन मन्देन वाऽधिकारिणा वक्ष्यमाणेषु भावेषु ध्यातव्योहमस्मि इति वाक्यार्थः । अत्र नीलकण्ठः–'संक्षेपेण योगमाह–अहमिति ।' इत्यवतरणमाह । धनपतिश्च-'योगं विभूतिं च कथय' इति त्वया पृष्टम् । तत्र प्रथमं तावद् मदीयं योगं शृणु-अहमिति' इत्यवतरणमाह । वस्तुतस्तु इह योगमन्तर्भाव्यैव विभूतीनां कथनं प्रतिज्ञातं भगवता–हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ? इति, विभूतीनां दिव्यत्वेन विशेषणात् । न हि योगं पृथक् कृत्वा काचिद् दिव्या भगवद्विभूतिरस्ति । तस्मान्न भगवतोऽनवहितत्वं संभावयितुं शक्यते । एवमेव प्रश्नकृताऽर्जुनेनापि उपक्रमे अन्तर्भूतयोगा एव विभूतयो वक्तव्यत्वेन प्रार्थिता विभूतीनां दिव्यत्वेनैव विशेषणाद् 'वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः'(१०।१६)इति । क्वचित्तु प्रपञ्चार्थं भगवताऽपिभेदेन व्यपदेशः कृतः 'एतां विभूतिं योगं चे'(१०।७)ति । एवमेव अर्जुनोऽपि क्वचिद्भेदेन व्यपदेशं कृतवान् 'विस्तरेण आत्मनो योगं विभूतिञ्च जनार्दन' इति प्रपञ्चार्थमेवेति वयम् ॥२०॥

आदित्यानामहं विष्णुर्ज्योतिषांरविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

---

अवतरणम्—उक्तं समस्तं विभूतियोगं ध्यातुम् अशक्तेभ्यो व्यस्तं विभूतियोगं ध्यातुमुपदिशति—आदित्यानामिति ।

व्याख्या—आदित्यानाम् द्वादशानां विष्णुशक्रार्यमन्धातृत्वष्टृपूषन्विवस्वन्सवितृमित्रवरुणांशभगनामकानां मध्ये विष्णुर्नाम वामनावतारोऽहम् । ज्योतिषां प्रकाशयितॄणां मध्ये अंशुमान् रश्मिमान् रविः सूर्योऽस्मि । मरुतां मरुद्देवताभेदानां मध्येऽहं मरीचिर्नामाऽस्मि । नक्षत्राणां रात्री गगने प्रकाशमानानां मध्ये अहं शशी चन्द्रमा अस्मि आदित्यादिषु प्रधानभूता विष्णुप्रभृतयो मम दिव्याविभूतयः परमात्मनः सन्ति इति कृत्वा परमात्मा परब्रह्म विष्णुत्वादिप्रकारे ध्यातव्य इत्याशयः, निर्धारणे षष्ठ्यः ॥२१॥ अपि च अहम्—वेदानाम् ऋग्यजुःसामाऽऽथर्वणानां मन्त्रब्राह्मणसमुदायानां मध्ये अहं सामवेदोऽस्मि । तत्र 'अग्निमीळे पुरोहितम्' इत्यादि ऋग्वेदः । 'इषेत्वोर्जेत्वा' इत्यादिर्यजुर्वेदः । 'अग्न आयाहि वीतये' इत्यादिः सामवेदः । 'शं नो देवीरभीष्टये' इत्यादिरथर्ववेदः । तत्र भगवान् सामवेदत्वेन ध्यातव्यः । 'गानेन रमणीयत्वात्सामवेदस्य' इति नीलकण्ठः । 'गानमाधुर्येण अतिरमणीयः सामवेदो भगवान् इति मधुसूदनसरस्वती । देवानां रुद्रादित्यादीनां मध्ये वासव इन्द्रोऽस्मि । इन्द्रियाणां एकादशानां मनश्चक्षुःश्रोत्रनासिकात्वग्रसनापायूपस्थहस्तपादवाचां मध्ये अहं मनः संकल्पविकल्पात्मकम् अन्तःकरणम् अस्मि । (तथा) भूतानां प्राणिनां संबन्धिनी, चेतना कार्यकरणसंघाते जीवा-

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥

---

धिष्ठिते यावत्पश्चत्वं सर्वत्र व्यापिनी चैतन्याऽभिव्यञ्जिका बुद्धिवृत्तिरहम् अस्मीत्यर्थः । आद्यास्तिस्रो निर्धारणे षष्ठ्यः । अन्त्यैका शेषे षष्ठी ॥२२॥ च=किञ्च, रुद्राणाम् एकादशानां मध्ये शङ्करोऽस्मि । यक्षरक्षसां यक्षांसि रक्षांसि च तेषां मध्ये वित्तेशः कुबेरोऽस्मि । रक्षसामपि क्रूरत्वादिसाम्याद् यक्षैः सह एकीकृत्य निर्देशः । वसूनाम् अष्टानां मध्ये पावकोऽग्निरस्मि । शिखरिणां शिखरवतां मध्ये च अहम् मेरुर्मेरुनामा शिखरवान् अस्मि ॥२३॥ च=किञ्च हे पार्थ पुरोधसां राजपुरोहितानां मध्ये मुख्यं प्रधानं बृहस्पतिं मां विद्धि जानीहि । बृहस्पतिर्हि देवराजस्येन्द्रस्य पुरोधाः इति मुख्योऽस्ति । सेनानीनाम् सेनापतीनां मध्ये अहं स्कन्दोऽस्मि देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां मध्ये अहं सागरः समुद्रोऽस्मि ॥२४॥ (किञ्च) महर्षीणां महान्त श्चते ऋषयश्चेति तेषां मध्ये अहं भृगुरस्मि । गिरां वाचां पदलक्षणानां मध्ये अहम् एकम् प्रधानम् अक्षरम् ओङ्कारोऽस्मि । ब्रह्मणः प्रतीकत्वेन ब्रह्मणो वाचकत्वेन च ओङ्कारस्य अक्षरस्य प्राधान्यम् एक शब्देनोच्यते । तदुक्तं प्रौढमनोरमायाम्—'एकोऽन्यार्थे प्रधाने च, प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥' इति । यज्ञानां मध्ये जपयज्ञोऽस्मि । 'जपयज्ञस्य यज्ञान्तरेभ्यो हिंसादिराहित्येस प्राधान्यम् उपेत्याह यज्ञानामिती' त्यानन्दगिरिः । स्थावराणां स्थितिमतां मध्ये हिमालयोऽस्मि । शिखरिणां शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमस्मि इत्युक्तेऽपि स्थितिशीलानां तेषामेव मध्ये हिमवान् पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाह भगवान् स्थावराणां हिमालय इति । तदेव ध्वनयन् भाष्यकार आह स्थितिमतामिति पूर्वत्र शिखरवतामिति चेति ॥२५॥

व्याख्या—किञ्च सर्ववृक्षाणां मध्ये अश्वत्थोऽस्मि । देवर्षीणां च देवा एव सन्तो ये ऋषित्वं प्राप्ता मन्त्रदर्शनात् तेषां मध्ये च अहं नारदोऽस्मि । 'ऋषित्वं प्राप्ता मन्त्रदर्शित्वाद्' इति भाष्याद् मन्त्रदर्शित्वमृषित्वमिति ऋषेर्लक्षणं भवति । सिद्धान्तकौमुद्यामपि 'ऋषयो मन्त्रद्रष्टारः' इति । गन्धर्वाणां मध्ये चित्ररथो नाम गन्धर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्याऽतिशयं ये प्राप्तास्ते सिद्धास्तेषां मध्ये कपिलो नाम मुनिरस्मि । मन्यते इति मुनिः । मन्ता वेदशास्त्रार्थतत्त्वावगन्ता यः स मुनिरिति सिद्धान्तकौमुद्याष्टी-

उच्चैःश्रवसमश्वानां विद्धि माम् अमृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि, यमः संयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

---

कायाम् ॥ 'निरीश्वरप्रधानवादी कपिलस्त्वन्य' इति ब्रह्मसूत्रस्थशाङ्कर-भाष्ये ॥२६॥ किञ्च अश्वानां मध्ये अमृतोद्भवम् अमृतनिमित्तमथनोद्भवम् उच्चैःश्रवसम् एतन्नामकम् अश्वं मां विद्धि जानीहि। (तथा) गजेन्द्राणाम् हस्तीश्वराणां मध्ये ऐरावतम् इरावत्या अपत्यं यस्तम् मां विद्धि इति संबन्धः । नराणां च मनुष्याणां च मध्ये नराधिपं राजानं मां विद्धीति संबन्धः ॥२७॥

(किञ्च) आयुधानाम् अस्त्राणां मध्ये अहं वज्रं दधीच्यस्थिसंभवम् आयुधम् अस्मि । धेनूनां दोग्ध्रीणां मध्ये कामधुग् सर्वेषां कामानां दोग्ध्री वसिष्ठस्य धेनुः सामान्या वा कामधेनुरस्मि । प्रजनश्च प्रजनयतीति प्रजनः प्रजनयिता कन्दर्पः कामदेवोऽस्मि । सर्पाणां सर्पभेदानां मध्ये वासुकिः सर्प-राजोऽस्मि ॥२८॥ किञ्च नागानां नागविशेषाणां नागजातीयानां मध्ये अनन्तो नाम नागराजोऽस्मि । यादसां जलदेवतानां मध्ये अहं वरुणो नाम जलदेवता-राजोऽस्मि । पितॄणां मध्ये अर्यमा नाम पितृराजोऽस्मि । संयमतां संयमनं कुर्वतां मध्ये च यमो यमराजोऽस्मि । 'सर्पा नागाश्च जातिभेदाद् भिद्यन्ते' इत्यानन्दगिरिः । 'सविषाः सर्पाः, निर्विषास्तु नागाः' इति श्रीधरस्वामी ॥२९॥ च=किञ्च, दैत्यानां दितिवंश्यानां मध्ये अहं प्रह्लादः प्रह्लादनामाऽस्मि कलयतां कलनां गणनां कुर्वतां मध्ये अहं कालोऽस्मि । मृगाणां पशूनां च मध्ये 'मृगेन्द्रः सिंहो व्याघ्रो वाऽहम्' इति भाष्यम् । पक्षिणां पतत्रिणां मध्ये च अहं वैनतेयो विनतायाः सुतो गरुडो गरुत्मान् अस्मि ॥३०॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादःप्रवदतामहम् ॥३२॥
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

---

व्याख्या—(किञ्च) पवतां पावयितॄणां मध्ये अहं पवनो वायुरस्मि। शस्त्रभृतां शस्त्राणां धारयितॄणां मध्ये अहं दाशरथी रामोऽस्मि। 'आदित्यानामहं विष्णुरित्यत्र विष्णोरिव रामस्य साक्षात्स्वरूपस्याऽपि सर्वैश्वर्यशालिनोऽपि अनेन रूपेण ध्यानविवक्षया स्वविभूतिमध्ये पाठः। वृष्णीनां वासुदेवोऽस्मीति तेन रूपेण ध्यानविवक्षया स्वस्याऽपि स्वविभूतिमध्ये पाठवद्' इति मधुसूदनसरस्वती। अत्र 'दाशरथी रामः' इति भाष्यम्। झषाणां मत्स्यादीनां मध्ये च अहं मकरोऽस्मि। मकरो नाम जातिविशेषः। स्रोतसां स्रवन्तीनां मध्ये अहं जाह्नवी गङ्गाऽस्मि ॥३१॥

व्याख्या—(किञ्च) हे अर्जुन, सर्गाणां सृष्टीनाम् आदिश्च अन्तश्च मध्यञ्चैव उत्पत्तिस्थितिप्रलयस्थानम् अहम् अहमेवास्मि। उपक्रमे भूतानां जीवाधिष्ठितानामेव आदिरन्तश्च मध्यञ्चाहमित्युक्तम्। इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः। इदम् उत्तमाधिकारिणां ध्यानविवक्षयेति भाति उपक्रमोक्तवत्। अत्र शेषे षष्ठी। भूतानां चेतना इत्यत्र यथा। विद्यानां मध्ये अध्यात्मविद्या मोक्षार्थत्वात् प्रधानम् अस्मि। (तथा) प्रवदतां प्रवक्तॄणां मध्ये वदनभेदानां कथाभेदानां तिसृणां वादजल्पवितण्डानां मध्ये इत्यर्थः। वादोऽस्मि। अत्र भाष्ये—"वादोऽर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानम्। अतः सोऽहमस्मि। प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति" इत्युक्तम्। तत्र तत्त्वबुभुत्स्वोः कथा वादः। स्वपक्षस्थापनपरपक्षखण्डनवती विजिगीष्वोः कथा जल्पः। विजिगीष्वोः कथैव एककर्तृकस्वपक्षस्थापनमात्रफलाऽपरकर्तृकप्रतिपक्षखण्डनमात्रफला वितण्डेति संक्षेपेण तासां भेदः। विस्तरस्तु न्यायदर्शने द्रष्टव्यः ॥३२॥

अवतरणम्—किञ्च—अक्षरेति।

व्याख्या—अक्षराणां वर्णानां मध्ये अहम् अकारो नाम वर्णोऽस्मि। श्रेष्ठत्वात्। तथा च श्रुतिः—'अकारो हि सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना

मृत्युः सर्वहरश्चाहम् उद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहम् ऋतूनां कुसुमाकरः ॥३५॥

---

वल्ली नानारूपा भवति ।" इति । सामासिकस्य समाससमूहस्य मध्ये च द्वन्द्वः द्वन्द्वो नाम समासोऽस्मि । (किञ्च) अहमेव अक्षयोऽक्षीणः, कालः प्रसिद्धः क्षणाद्याख्यः, अथवा परमेश्वरः कालस्यापि कालः, अस्मि । (तथा) अहं विश्वतोमुखः सर्वतोमुखः धाता सर्वजगतः कर्मफलस्य विधाता अस्मि ॥४३॥

अवतरणम् -किञ्च -मृत्युरिति ।

व्याख्या -किञ्च- यः सर्वहरो मृत्युः प्राणहरः सोऽहमस्मि । यस्तु केवलधनादिहरो गौणो मृत्युः, स नास्मि । मृत्यु र्हि द्विविधः केवलधनादिहरः प्राणहरश्चेति । तत्र यः प्राणहरः स सर्वहर उच्यते । अथवा परमेश्वर एव सर्वहरो मृत्युः प्रलयकाले सर्वद्वैतप्रपञ्चस्य हरणात् । स परमेश्वरोऽहमस्मीत्यर्थः । किञ्च भविष्यताम् भाविकल्याणानाम् उत्कर्षप्राप्तियोग्यानामित्यर्थः । उद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुरहमस्मि । किञ्च नारीणां स्त्रीणां मध्ये अहम् कीर्तिः, श्रीर्वाक् स्मृतिर्मेधा, धृतिः क्षमा अस्मि । एताः स्त्रीणां मध्ये उत्तमाः सन्ति । 'यासाम् आभासमात्रसम्बन्धेनापि लोक आत्मानं कृतार्थं मन्यते ।' इति भाष्यम् ॥३४॥

अवतरणम्—किञ्च—बृहदिति ।

व्याख्या—तथा किञ्च, साम्नाम् ऋगक्षरारूढानां गीतिविशेषाणां मध्ये प्रधानभूतं बृहत्साम 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीतिविशेषो बृहत्साम तद् अहमस्मि । तेन इन्द्रः सर्वेश्वरत्वेन स्तूयते इति तस्य श्रेष्ठत्वम् । वेदानां सामवेदोऽस्मीत्युक्तं प्राक् तत्रापि अन्यसामापेक्षया बृहत्साम्नः श्रेष्ठत्वात् तेन रूपेण भगवान् ध्यातव्य इत्यर्थः । तथा छन्दसां-गायत्र्यादिच्छन्दोविशिष्टानाम् ऋचां मध्ये अहं गायत्रीच्छन्दोविशिष्टा ऋगस्मि । तथा मासानां वैशाखचैत्रादीनां मध्ये अहं मार्गशीर्षो मासोऽस्मि । 'पक्वसस्याढ्यत्वादित्याह मासानामिति' इतिआनन्दगिरिः । तथा ऋतूनां वसन्तादीनां मध्ये अहं कुसुमाकरो वसन्तोऽस्मि रमणीयत्वादिति शेष इत्यानन्दगिरिः ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराऽचरम् ॥३९॥

---

किञ्च—छलयतां छलस्य कर्तॄणां, शेषे षष्ठीयम् । द्यूतम् अक्षदेवनादिलक्षणम् अस्मि । पापफलप्रदानकाले भगवान् द्यूतरूपं गृह्णातीति प्रतिभाति । तेजस्विनाम् अहं तेजोऽस्मि । शेषे षष्ठी । (जेतॄणाम् अहं) जयोऽस्मि । (व्यवसायिनाम् अहं) व्यवसायोऽस्मि । तथा सत्त्ववतां सात्त्विकानाम् अहं सत्त्वम् सत्त्वगुणोऽस्मि । सर्वत्रेह सम्बन्धसामान्ये (शेषे) षष्ठी ॥३६॥

अवतरणम्—किञ्च । वृष्णीति ।

किञ्च-वृष्णीनां वृष्णिवंश्यानां मध्ये अहं वासुदेवोऽस्मि, अयमेव तव सखा । (तथा) पाण्डवानां मध्ये अहं धनञ्जयोऽस्मि, त्वमेव । 'मुनीनां मननशीलानां सर्वपदार्थज्ञानिनाम् अपि अहं व्यासः' इति भाष्यम् । कवीनां क्रान्तदर्शिनां मध्ये अहम् उशना नाम कविः क्रान्तदर्शी शुक्राचार्योऽस्मि । 'कवि शब्दोऽत्र यौगिको न रूढः पौनरुक्त्यादित्यानन्दगिरिः ॥३७॥

व्याख्या—किञ्च—दमयतां दमयितॄणाम् अहं दण्डोऽस्मि अदान्तानां दमने साधनम् । (तथा) जिगीषताम् जेतुमिच्छताम् जनानाम् नीतिर्जयसाधनमस्मि । किञ्च गुह्यानां गोप्यानां गोपनहेतुर्मौनं वाचोनिग्रहोऽस्मि । न हि तूष्णीं स्थितानाम् अभिप्रायो गम्यते । यद्वा गुह्यानां गोप्यानां मध्ये मौनं मुनिभावः सर्वकर्मसंन्यासश्रवणमननपूर्वकंनिदिध्यासनलक्षणं मौनमस्मि । पूर्वत्र सम्बन्धसामान्ये षष्ठी । उत्तरत्र निर्धारणे । (तथा) ज्ञानवतां सम्यग्दर्शिनाम् अहं ज्ञानम् सम्यग्दर्शनम् अस्मि । 'श्रवणादिद्वारा परिपक्वसमाधिजन्यं सम्यग्दर्शनं ज्ञानम्' इत्यानन्दगिरिः ॥३८॥

अवतरणम्—किञ्च—यच्चेति ।

व्याख्या—हे अर्जुन; यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमेवास्मि । 'निधानं बीजमव्ययम्' (९।१८) इत्युक्तमपि प्रकरणोपसंहाराय

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥

---

पुनराह । प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह – तत् चराचरं चरं च अचरं च तयोः समाहारः स्थावरजङ्गमलक्षणं भूतं किमपि न अस्ति यद् मया विना स्याद् भवेत् । 'मया अपकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्याद् अतो मदात्मकं सर्वमित्यर्थः' इति भाष्यम् ॥३९॥

अवतरणम्—दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति—नान्तोऽस्ति ।

व्याख्या—हे परन्तप, मम दिव्यानाम् अप्राकृतानां विभूतीनां माहात्म्यविस्ताराणाम्, विविधरूपेण भवनानाम्, अन्तो नास्ति परिसमाप्तिरियत्ता नास्तीत्यर्थः । एष तु अनन्तरदर्शितस्तु विभूते मम माहात्म्यविस्तारस्य विस्तरः वर्णनप्रतानः, मया उद्देशतः एकदेशतः प्रोक्तः कथितः । न तु समग्रतः कथितः । विभूतीनाम् अनन्तत्वादित्याशय । 'प्रथनेवावशब्दे' (पा० सा०) इति अशब्दविषये प्रथने घञ् प्रत्ययेन विस्तार इति रूपम् शब्दविषये तु 'ऋदोरप्' (पा० सू०) इत्यपा विस्तर इति रूपं सिद्ध्यति । क्रमेणोदाहरणं पटस्य विस्तारः, ग्रन्थस्य विस्तर इति ॥४०॥

अवतरणम्—अधुना अतिसंक्षेपं करोति । किं बहुनोक्तेन ?–यदिति ।

व्याख्या—यद् यत्सत्त्वम् भूतं वस्तु विभूतिमद् ऐश्वर्ययुक्तं श्रीमत् श्रीर्लक्ष्मीस्तया सहितम् ऊर्जितमेव वा उत्साहोपेतमेव वा अस्ति दृश्यते श्रूयते वा लोके शास्त्रे चेति शेषः । तत्, तत् सत्त्वं प्राणिभूतं मम ईश्वरस्य तेजोंऽशसंभवम् एव, तेजसोंऽश एकदेशः स संभवति अस्मिन्निति संभवः समुत्पत्तिस्थानम् यस्य तत्, एव अवगच्छ त्वं जानीहि । अनेन अनुक्तानामपि विभूतीनां संग्रह उक्तः । अत्रानन्दगिरिः 'अनुक्ता अपि परस्य विभूतीः संग्रहीतुं लक्षणमाह यद्यदिति । वस्तु (भाष्योक्तं) प्राणिजातम् । सप्राणं बलवद् ऊर्जितं तदाह–(भाष्ये) उत्साहोपेतमिति । तेजसश्चैतन्यस्यैश्वरशक्तेर्वा अंशस्तेजोंऽशः संभवोऽस्येति तेजोंऽशसंभवम् । तदाह भाष्ये तेजसोंऽशः एकदेशः संभवो यस्य तदिति ।' इत्याह ॥४१॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नम् एकांशेन स्थितो जगत् ॥४२॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः॥

---

**अवतरणम्**—मन्दमध्यमाधिकारिणां ध्यानविषयविवक्षया 'आदित्यानामहं विष्णुः' इत्यारभ्य व्यस्तं विभूतियोगं व्याख्याय 'अहमात्मा गुडाकेश' इत्यादिना उक्तमपि उत्तमाधिकारिणां ध्यानविषयविवक्षया भक्ताऽनुग्रहार्थं समस्तं विभूतियोगं पुनः प्रकारान्तरेण उच्यते अथवेति।

**व्याख्या**—अथवेति पक्षान्तरे। उत्तरपक्षस्य दार्ढ्याद् अयमेव पक्षस्तवोत्तमाधिकारिणः समुचित इत्याशयः। हे अर्जुन, बहुना विस्तीर्णेन एतेन एवमादिना यथोक्तेन विभूतिसमुदायेन सावशेषेण ज्ञातेन तव शक्तस्योत्तमाधिकारिणः किं, न किमपि प्रयोजनं साध्यम्। मन्दमध्यमाधिकारिणामेव तत् साध्यम्। तव तु तावत्प्रयोजनं सिद्धमेव। न हि उक्तासु विभूतिषु ज्ञातासु सर्वा विभूतयो ज्ञायन्ते। कासाञ्चिदेव विभूतीनामुक्तत्वात्। अशेषतस्तु त्वम् उच्यमानम् इममर्थं शृणु। इदं प्रत्यक्षादि सन्निधापितं कृत्स्नं सकलं जगत् सब्रह्माण्डं साकाशादिकं च सर्वं प्रपञ्चात्मकं जगद् एकांशेन एकावयवेन एकपादेन सर्वभूतस्वरूपेण निखिलप्रपञ्चोपादानशक्त्युपाधिकेन विष्टभ्य विधृत्य दण्डेनेवच्छत्रम्, स्तम्भेनेव गृहाच्छादनम् अहम् अहमेव स्थितोऽस्मि। अन्ये तु मम पादा अवयवा अंशाः सोपाधिकस्य सकलप्रपञ्चेभ्य ऊर्ध्वं निरुपाधिकरूपेण तिष्ठन्ति। तथा च मन्त्रवर्णः 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' (तै० आ० ३।१२) इत्यभिप्रायः। तदनेन अध्यायेन भगवतो नानाविधा विभूतीर्ध्येयत्वेनोपदिश्य सर्वप्रपञ्चात्मकं रूपं च ध्येयत्वेन दर्शयित्वा 'त्रिपादस्यामृतम् इति प्रपञ्चाधिकं रूपं निरुपधिकं तत्त्वमुपदिशयता सच्चिदानन्दस्तत्पदार्थो निर्धारितः ॥४२॥

ॐ तत्सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां दशमोऽध्यायः॥

श्रीकृष्णार्पणमस्तु।



## ॥ अथ गीतावंश्यामेकादशोऽध्यायः ॥

अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥

भवाऽप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाऽव्ययम् ॥२॥

---

अवतरणम्—भगवतो विभूतय उक्तास्तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगद्' इति भगवताऽभिहितं श्रुत्वा यद् जगदात्मरूपम् आद्यम् ऐश्वरं तत् साक्षात्कर्तुम् इच्छन्—अर्जुन उवाच ।

व्याख्या—हे कमलपत्राक्ष, हे कमलदलनयन, कमलस्य तन्नामकस्य पुष्पस्य पत्र इव अक्षिणी यस्य सः । मदनुग्रहाय मम अनुग्रहो मदनुग्रहस्तस्मै मयि करुणां निमित्तीकृत्य ममोपकारो मदनुग्रहस्तदर्थमिति यावत् । परमं निरतिशयं परमपुरुषार्थसाधनमिति यावत् । गुह्यं गोप्यम्, अध्यात्मसञ्ज्ञितम् आत्माऽनात्मविवेकविषयकं वचो वाक्यम् 'अशोच्यान् अन्वशोचस्त्वम्' इत्यारभ्य षष्ठाध्यायपर्यन्तं त्वं पदार्थप्रधानं यत् त्वया सर्वज्ञेन उक्तम् । तेन वचसा मम अयं मोहोऽहं हन्ता एते हन्यन्ते मया' इत्यादिलक्षणो भ्रमो विगतो विनष्टः । आत्मनः कर्तृत्वादिसर्वविकाराऽभावोक्तेः । अयमित्यनेन मोहस्य आत्मसाक्षिकत्वं दर्शितम् । मम अज्ञानविपर्यासरूपा अविवेकबुद्धिरपगतेत्यर्थः । अत्र श्लोके प्रथमे पादे अक्षराधिक्यम् आर्षम् इति इति नीलकण्ठः ॥१॥

हि—किञ्च, हे कमलपत्राक्ष पुण्डरीकाक्ष, मया त्वत्तः त्वत्सकाशाद् भूतानां गगनादिसकलपदार्थजातानां भवाप्ययौ भवश्च अप्ययश्च तौ उत्पत्तिप्रलयौ विस्तरशो न संक्षेपतः सप्तमाध्यायमारभ्य दशमाऽध्यायपर्यन्तम् 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादौ 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादौ च पुनः पुनः श्रुतौ । अपि च अव्ययम् अक्षयम् माहात्म्यं (तव) श्रुतम् । महात्मनस्तव भावो माहात्म्यम् पारमार्थिकं सोपाधिकं वा

एवमेतद् यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

श्रीभगवान् उवाच—
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

---

सर्वात्मत्वादिरूपं श्रुतम् अपिचेति विभक्तिपरिणामद्योतकम् । विश्वसृष्ट्यादि-कर्तृत्वे सत्यपि अविकाराऽवैपम्यौदासीनत्वादिलक्षणम् अपरिमितं महत्त्वं श्रुतं, ज्ञातम् इत्यर्थः । 'मया ततमिदं सर्वम्' 'न च मां तानि कर्माणि निबध्नन्ति 'समोऽहं सर्वभूतेषु' इत्यादिना तत्पदार्थप्रधानेन वाक्येनेति शेषः ॥२॥

त्वदुक्तेऽर्थे विश्वासाऽभावाद् न मे तस्य दिदृक्षा किन्तु कृतार्थीबुभूषयैवेत्याह—एवमेतदिति । हे परमेश्वर, त्वम् आत्मानं यथा आत्थ कथयसि एतद् एवमेवास्ति । नान्यथाऽस्ति इति मम विश्वासस्तथापि कृतार्थीबुभूषया 'श्रेयसि केन तृप्यते' इति न्यायात् हे पुरुषोत्तम अहं ते तव ऐश्वरम् ज्ञानैश्वर्यं शक्तिबलवीर्यतेजोभिः सम्पन्नं वैष्णवं रूपं द्रष्टुं चक्षुषापि प्रत्यक्षीकर्तुम् इच्छामि ॥३॥

द्रष्टुमशक्ये कुतो दिदृक्षा ? इत्याशङ्क्याह—मन्यसे इति । हे प्रभो, प्रभवति सृष्टि स्थिति संहार प्रवेश प्रशासनेभ्य इति प्रभुस्तत्संम्बुद्धौ इत्यानन्दगिरिः । यदि तव तद् ऐश्वरं, वैष्णवं रूपं मया द्रष्टुं शक्यम् अस्तीति मन्यसे (तर्हि) हे योगेश्वर योगिनो योगास्तेषाम् ईश्वर, ततो यस्मादहम् अतीवार्थी द्रष्टुम् ततस्तस्माद् मे मह्यम् अव्ययम् आत्मानं स्वकीयम् ऐश्वरं वैष्णवं रूपं दर्शय । प्रार्थनायां लोट् ॥४॥

अवतरणम्—भक्ताऽभिलापपरिपूरणाय भक्तवत्सलश्चतुर्भिः—श्रीभगवानुवाच ।

व्याख्या—हे पार्थ, शतशः शतं शतम् अथ तदनन्तरम् सहस्रशः सहस्रं सहस्रं च । 'संख्यैकवचनाच्च' (पा. सू.) इति वीप्सायां शस् । अनन्तानीत्यर्थः । नानाविधानि अनेकप्रकाराणि, नानावर्णाकृतीनि च नाना

पश्यादित्यान् वसून् रुद्रान् अश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥७॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

संजय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥

---

विलक्षणा नीलपीतादिप्रकारा वर्णास्तथा आकृतयोऽवयवसंस्थानविशेषा येषां तानि च. दिव्यानि अप्राकृतानि मे मम विष्णो रूपाणि स्वरूपाणि पश्य चाक्षुषप्रत्यक्षविषयी कुरु ॥५॥ तान्येव रूपाणि लेशतोऽनुक्रामति पश्येति । हे भारत, द्वादश आदित्यान्, अष्टौ वसून्, एकादशरुद्रान्, द्वौ अश्विनौ, तथा सप्त सप्तगणा ये मरुन्नामकाः पवनाः देवास्तान् पश्य । (तथा) बहूनि अन्यान्यपि अदृष्टपूर्वाणि मनुष्यलोके त्वया अन्येन वा केनचित् पूर्वम् अदृष्टानि आश्चर्याणि अद्भुतानि मे रूपाणीति संबन्धः । पश्य अवलोकय ॥६॥ न केवलम् एतावदेव किन्तु—हे गुडाकेश जितनिद्र, घनकेश वा, अस्य इदानीम् इह मम सोपाधिकस्य देहे एकस्थम् एकस्मिन् स्थितं कृत्स्नं समस्तमेव सचराचरं चरेण अचरेण च सह वर्तमानम्, जगद् आकाशादिकम्, सब्रह्माण्डं पश्य । यच्च अन्यद् जयपराजयादि यच्छङ्कसे 'यद्वा जयेम यदि वा नो जयेयुः' इति यदवोचस्तदपि द्रष्टुं यदीच्छसि तर्हि पश्य ॥७॥ किन्तु अनेनैव प्राकृतेन स्वचक्षुषा मां विश्वरूपधरं द्रष्टुं न तु शक्यसे । येन तु शक्यसे द्रष्टुं दिव्येन चक्षषा तद् दिव्यं चक्षुरप्राकृतं नेत्रं ते तुभ्यम् अहं ददामि । तेनैव मद्दत्तेन दिव्येन चक्षुषा मे मम ऐश्वरं वैष्णवं योगं शक्त्यतिशयं पश्य । योगं युक्तिम् अघटितघटनासामर्थ्यम् अघटितघटनासामर्थ्याऽतिशयमिति यावत् । पश्येत्यर्थः । अहो भक्ताभिलाषपूरकत्वं भगवतः ॥८॥

अवतरणम्—इमं वृत्तान्तं संजयो धृतराष्ट्रमाहेत्याह वैशम्पायनो जनमेजयं—संजय उवाचेति ।

व्याख्या—हे राजन् धृतराष्ट्र, एवम् यथोक्तप्रकारेण उक्त्वा ततोऽनन्तरम् महायोगेश्वरो महांश्चासौ योगानां योगिनामीश्वरश्चेति, हरिर्नारा-

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

---

यणः पार्थाय अर्जुनाय ऐश्वरं वैष्णवं परमं निरतिशयं रूपं विश्वरूपं दर्शयामास दर्शितवान्। दिव्यं चक्षुः प्रदायेति शेषः। 'हरति अविद्यां सकार्यामिति हरिः। यद् ईश्वरस्य मायोपहितस्य परमम् उत्कृष्टं रूपं तद् दर्शयाम्बभूवेत्याह परममिति' इत्यानन्दगिरिः ॥९॥ तदेव रूपं विशिनष्टि—अनेकेति। अनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तद् अनेकवक्त्रनयनम्, अनेकाद्भुतदर्शनम् अनेकानि अद्भुतानि विस्मापकानि दर्शनानि यस्मिन्रूपे तद्, अनेकदिव्याभरणम् अनेकानि दिव्यानि अप्राकृतानि आभरणानि यस्मिन् रूपे तद्, (तथा) दिव्यानेकोद्यतायुधम्—दिव्यानि अनेकानि उद्यतानि आयुधानि यस्मिन् रूपे तद् रूपं दर्शयामासेति पूर्वेण संबन्धः। अत्र अनेकानीति भाष्यस्य अनल्पानीत्यर्थो न तु अनेकसंख्यानीति। तथा सति अनेकं वक्त्रं नयनं च यस्मिन् रूपे इत्येवं विग्रहः स्याद् एकशब्दस्य संख्यायां नित्यैकवचनान्तत्वेन तदर्थे अनेकशब्दस्याऽपि नित्यैकवचनान्तत्वादिति मञ्जूषायां विस्तरः। अत एव 'अनेकमन्यपदार्थे' 'अनेकं प्रथमान्तम्' 'अनेकः करोति' इति व्याकरणसूत्रमहाभाष्ययोः सर्वत्रैकवचनान्ततेति द्रष्टव्यम् 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥' इति कोशः ॥१०॥ किञ्च—दिव्यमाल्याम्बरधरं दिव्यानि अप्राकृतानि माल्यानि पुष्पाणि अम्बराणि वस्त्राणि च ध्रियन्ते येन ईश्वरेण तम्, दिव्यगन्धानुलेपनम् दिव्यं गन्धानुलेपनं यस्य तम्, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं सर्वाश्चर्यप्रचुरम्, अनन्तं नास्ति अन्तो यस्य तम्, अपरिच्छेदम्, विश्वतोमुखं सर्वतो मुखं विश्वतः सर्वतः मुखानि यस्य तम्, सर्वभूतात्मत्वात्। देवम् ईश्वरम्, 'पार्थाय दर्शयामासेति पूर्वेण संबन्धः। 'अर्जुनो ददर्श इति वा अध्याह्रियते' इति भाष्यम् ॥११॥

अवतरणम्—ननु विश्वरूपस्य भगवतः काऽपि दीप्तिः स्यादेव। अन्यथा तस्य काष्ठादिसाम्येन अरमणीयत्वं स्यात्। सा दीप्तिः कीदृशी तस्य? इत्यपेक्षायाम् या पुनर्भगवतो विश्वरूपस्य प्रभा तस्या उपमोच्यते—दिविति।

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

---

व्याख्या—यदि, 'असंभाविताभ्युपगमार्थो यदि शब्दः' इत्यानन्दगिरिः। दिवि अन्तरिक्षे तृतीयस्यां वा दिवि, स्वर्गे इति यावत्। सूर्यसहस्रस्य सूर्याणां सहस्रं तस्य भाः प्रभा, युगपद् एकस्मिन्नेव काले उत्थितस्य युगपदेव उत्थिता भवेत् तर्हि सा भाः प्रभा, तस्य विश्वरूपस्य महात्मनः परमेश्वरस्य भासः प्रभायाः सदृशी स्यात्, कथंचित् सदृशी संभवति, न तु सदृशी भवत्येवेति निश्चयः। स्यादिति संभावनायां लिङ् स्याद्वा न वा स्यादित्यर्थः। तत्रापि विश्वरूपस्य प्रभा उपमानमेव स्याद् नोपमेया। उपमानस्य अतिरेकाद् विश्वरूपस्यैव प्रभा अतिरिच्येत। अन्या तूपमा तस्य दीप्तेर्नास्त्येवेत्यर्थः। अनया अतिशयोक्त्या विश्वरूपस्य प्रभायाः सर्वथा निरूपमत्वमेव व्यज्यते। माघकविनाऽपि इत्थमेवाऽलङ्कृतिः कृता—'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्। तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥' इति ॥१२॥

अवतरणम्—किञ्च-तत्रेति।

व्याख्या—पूर्वं भगवता यदुक्तं इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्। मम देहे गुडाकेश' इति तद् अर्जुनेनाऽनुभूतमित्याह– तत्रैकस्थमिति। किञ्च तदा विश्वरूपदर्शनावसरे विश्वरूपाऽऽविर्भावावसरे पाण्डवोऽर्जुनस्तत्र तस्मिन् देवदेवस्य हरेः शरीरे विश्वरूपे एकस्थम् एकस्मिन्नेव स्थितम् अनेकधा देवपितृमनुष्यादिभेदैः प्रविभक्तम् प्रविभागयुक्तम् कृत्स्नं समस्तमेव जगद् अपश्यद् दृष्टवान् ॥१३॥

अवतरणम्—तदनन्तरं किं वृत्तम् इति संजयः कथयति—तत इति।

व्याख्या—ततः तं विश्वरूपं दृष्ट्वा विस्मयाविष्टो विस्मयोऽद्भुतरसस्य स्थायी भावः, तेन आविष्टः संयुक्तः (अतएव) हृष्टरोमा हृष्टानि रोमाणि यस्य सः, रोमाञ्चयुक्तः सः प्रकृतो धनञ्जयोऽर्जुनः शिरसा मस्तकेन देवं विश्वरूपमीश्वरं प्रणम्य प्रकर्षेण तस्य नमनं कृत्वा प्रह्वीभूतः कृताञ्जलिः

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थम्
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥१६॥

---

कृतोऽञ्जलिर्येन सः सन् पुनर्नमस्कारार्थं संपुटीकृतहस्तः सन् अभाषत उक्तवान् यत् त्वयादर्शितं विश्वरूपं स्वकीयं तदहं 'पश्यामी'त्यादिभिः सप्तदशभिः श्लोकैः ॥१४॥

अवतरणम्—स्वानुभवं प्रकटयन् भगवन्तं यदाहार्जुनस्तदनुवदितुं संजय आह—अर्जुन उवाचेति ।

व्याख्या—हे देव हे भगवन्, तव देहे सर्वान् देवान् इन्द्रादीन् तथा भूतविशेपसंघान् भूतविशेपाणां, स्थावरजङ्गमानां नानासंस्थानविशेपाणां, संघाः समूहास्तान्, (तथा) "ईशं प्रजानाम् ईशितारं ब्रह्माणं चतुर्मुखं कमलासनस्थम् पृथिवीपद्ममध्ये मेरुकर्णिकास्थम् ।" इति भाष्यम् । सर्वान् ऋषींश्च वसिष्ठादीन् दिव्यान् दिवि भवान् उरगांश्च वासुकिप्रभृतीन् पश्यामि ॥१५॥

अवतरणम्—(किञ्च)-अनेकेति ।

व्याख्या—(किञ्च) हे विश्वेश्वर, हे सर्वेश्वर, हे विश्वरूप, हे सर्वरूप, अनेकबाहूदरवक्त्रनेत्रम् अनेकं बाहूदरवक्त्रनेत्रं यस्य तव तम्, सर्वतोऽनन्तरूपम्, सर्वत्र विद्यमानानि अनन्तानि रूपाणि यस्य तव तम् त्वा त्वां पश्यामि उपलभे । (किञ्च) तव अन्तम् अवसानं न पश्यामि, मध्यम् अन्तरं न पश्यामि "मध्यं नाम द्वयोः कोट्योरन्तरम्" इति भाष्यम् । पुनरादिम् आरम्भं च तव न पश्यामि नोपलभे ॥१६॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥१८॥

---

किञ्च-किरीटिनम् किरीटं नाम शिरोभूषणविशेषः, तद् अस्यास्तीति-तम्, गदिनम् गदा यस्याऽस्ति तम्, चक्रिणञ्च चक्रम् यस्यास्ति इति तम् च, तेजोराशिम् तेजसोराशिः समूहस्तम्, तेजःपुञ्जस्वरूपम, सर्वतो दीप्तिमन्तम् सर्वतः सर्वत्र दीप्तिः प्रभा यस्यास्ति तम् । दुर्निरीक्ष्यं दुःखेन निरीक्षितुं शक्यो दुर्निरीक्ष्यस्तम्, समन्तात्, सर्वत्र दीप्तानलार्कद्युतिम् दीप्तौ दीप्तिमन्तौ यौ अनलार्कौ अग्निसूर्यौ तयोर्द्युतिर्यस्य तम् । (तथा) अप्रमेयम् अशक्यपरिच्छेदम् त्वा त्वां पश्यामि उपलभे ॥१७॥

अवतरणम्—इत एव ते योगशक्तिसंदर्शनादहम्, अनुमिनोमि--त्वमिति ।

व्याख्या—वेदितव्यं ज्ञातव्यं मुमुक्षुभिः परमं, निरतिशयम् अक्षरम् न क्षरतीति यत् तत्, 'न क्षरतीति निष्प्रपञ्चत्वम् उच्यते' इत्यानन्दगिरिः । अर्थात् निष्प्रपञ्चं निरुपाधिकं ब्रह्म, त्वम् त्वमेवासि । किञ्च त्वम् अस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानम् आश्रयोऽसि । (किञ्च) त्वम् अव्ययः न व्ययो विद्यते यस्य तव सः (तथा) शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता रक्षिता असि । (किञ्च) त्वम् सनातनश्चिरन्तनः पुरुषः पुरिशयः प्रत्यगात्मा परः प्रकृष्टः, मे मतोऽभिप्रेतोऽसि ॥१८॥

अनादिमध्यान्तमनन्तवीर्यम्
अनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदम्
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

---

अवतरणम्--भगवतो विश्वरूपाख्यं रूपमेव पुनर्विवृणोति--अनादीति ।

व्याख्या--किञ्च त्वां विश्वरूपम् अनादिमध्यान्तम्, आदिश्च मध्यश्च अन्तश्च न विद्यते यस्य तम्, अनन्तवीर्यम्, न विद्यते अन्तो यस्य तद् अनन्तम् तथाभूतं वीर्यं यस्य तम्, (तथा) अनन्तबाहुम् अनन्ता बाहवो यस्य तम्, शशिसूर्यनेत्रम् शशिसूर्यौ नेत्रे यस्य तम्, चन्द्रादित्यनयनम्, (तथा) दीप्तहुताशवक्त्रम् दीप्तश्चासौ हुताशश्च स वक्त्रं यस्य तम् (तथा) स्वतेजसा इदं विश्वं तपन्तम् तप्तं कुर्वन्तं पश्यामि ॥१९॥

अवतरणम्--प्रकृतस्य भगवद्रूपस्य व्याप्तिमाह--द्यावेति ।

व्याख्या--(किञ्च) हे महात्मन्, अक्षुद्रस्वभाव, त्वया एकेन विश्वरूपधरेण द्यावापृथिव्योः स्वर्गभूलोकयोर् इदं दृश्यमानम् अन्तरम् मध्यम् अन्तरिक्षम् हीति प्रत्यक्षम् इति नीलकण्ठीये । व्याप्तम् विशेषेण संबद्धम् । सर्वा दिशश्च पूर्वाद्या व्याप्ताः । तव विश्वरूपधरस्य इदं दृश्यमानम् उग्रं भयङ्करम् अद्भुतं विस्मापकं रूपं दृष्ट्वा उपलभ्य इदं लोकत्रयं लोकानां त्रयं (तदभिमानिदेवजातम्) प्रव्यथितं भीतं प्रचलितं वाऽस्ति । इदमित्यस्य तन्त्रेण मध्यमणिन्यायेनरूपे लोकत्रये चान्वयः ॥२०॥

अवतरणम्--अथाऽधुना भगवान् पुरा 'यद्वा जयेम यदि वा नो जयेयुः' इत्यर्जुनस्य यः संशय आसीत् तन्निर्णयाय 'पाण्डवानां जयम् ऐकान्तिकं प्रदर्शयामि' इति प्रवृत्तोऽभूत् । तं पश्यन् आह पाण्डवः--अमीति ।

अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वा विस्मिताश्चैव सर्वे ॥२२॥
रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।

---

व्याख्या—अमी हि इति प्रत्यक्षम् युद्धचमाना योद्धारः सुरसंघाः येऽत्र भूमारावताराय अवतीर्णा वस्वादिदेवसंघा मनुष्यसंस्थानास्ते त्वा त्वां विशन्ति प्रविशन्तो दृश्यन्ते । तत्र केचिदन्ये भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयो भूत्वा करौ सम्पुटीकृत्य त्वां गृणन्ति स्तुवन्ति । (तथा) महर्षिसिद्धसंघाः महर्षीणां च सिद्धानां च संघाः, 'स्वस्ति' इत्युक्त्वा युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तानि उपलक्ष्य विश्वविनाशम् आशङ्कमानाः 'स्वस्त्यस्तु जगते' इत्युक्त्वा पुष्कलाभिः संपूर्णाभिः स्तुतिभिस्त्वां स्तुवन्ति' 'असुरसंघा इति पदं छित्वा भूमारभूता दुर्योधनादयस्त्वां विशन्ति इत्यपि वक्तव्यम्' इत्यानन्दगिरिमधुसूदनसरस्वत्यौ ॥२१॥

अवतरणम्—(किञ्च)—रुद्रेति ।

व्याख्या—(किञ्च) ये च रुद्रादित्या रुद्राश्च आदित्याश्च, वसवः साध्याश्च, विश्वे विश्वसञ्ज्ञका गणदेवाः, अश्विनौ तन्नामकौ देवौ, मरुतो वायुदेवाश्च उष्मपाश्च पितरश्च, गन्धर्वयक्षासुरसिद्धसंघाः गन्धर्वा हाहाहूहूप्रभृतयो, यक्षाः कुवेरप्रभृतयो, ऽसुरा विरोचनप्रभृतयः सिद्धाः कपिलादयः, तेषां संघाः, सन्तीति शेषः । ते सर्वे रुद्रादयः सिद्धसंघान्ताः विस्मिताश्चैव विस्मयमापन्ना एव च सन्तस्त्वा त्वां वीक्षन्ते पश्यन्ति ॥२२॥

अवतरणम्—लोकत्रयं प्रव्यथितमिति यदुक्तं तदुपसंहरति—रूपमिति ।

बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥२४॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।

---

व्याख्या—हे महाबाहो यस्मात् ते तव रूपं स्वरूपं मूर्त्तिः बहुवक्त्रनेत्रम् बहुनि वक्त्राणि च नेत्राणि च यस्मिन् तत्, बहुबाहूरुपादम् बहवो बाहव ऊरवः पादाश्च यस्मिस्तद्, बहूदरं बहूनि उदराणि यस्मि स्तद्, बहुदंष्ट्राकरालं, बह्वीभिर्दंष्ट्राभिः करालं विकृतम् महद् अति प्रमाणम् अस्ति तस्मात् तव रूपं स्वरूपं मूर्ति तद् दृष्ट्वा लोका लौकिकाः प्राणिनः प्रव्यथिता भयेन प्रचलिताः तथा अहमपि प्रव्यथितोऽस्मि ॥ अत्र यस्मादित्यवतरणं भाष्ये दत्तम् ततः 'यस्मादेवं तव रूपं तस्मात् तद् दृष्ट्वेति योजना' इत्यानन्दगिरिः ।२३॥

अवतरणम्—अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमेव प्रपञ्चयति—नभ इति ।

व्याख्या—हे विष्णो, त्वां विश्वरूपधरं नभःस्पृशं द्युस्पर्शम्, दीप्तं प्रज्वलितम् अनेकवर्णम् अनेके अनल्पा वर्णा भयङ्करा नानासंस्थाना यस्मिन् तम्, व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्य तम्, दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्य तम् दृष्ट्वा हीति प्रत्यक्षम् । प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतः, अन्तरात्मा मनो यस्य सः, सन्, अहं धृतिं धैर्यम्, शमम्, शान्तिं च न विन्दामि न लभे ॥२४॥

अवतरणम्—दृश्यमानेऽपि भगवद्देहे परितोषाद्यभावे कारणान्तरमाह—दंष्ट्रेति ।

दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥२५॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥२६॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद् विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

---

व्याख्या—च = किञ्च दंष्ट्रा करालानि दंष्ट्राभिः करालानि विकृतानि, कालानलसंनिभानि कालानलः प्रलयकालवर्ती लोकानां दाहकोऽग्निः, तत्संनिभानि तत्सदृशानि, ते तव विश्वरूपधरस्य मुखानि दृष्ट्वैव, 'एवकारेण प्राप्तिर्व्यावर्त्यते' इत्यानन्दगिरिः । अहं दिशः पूर्वापरादिविवेकेन न जाने दिङ्मूढः संजातोऽस्मि । (अतः) शर्म च सुखं च न लभे नोपलभे । (अतो) हे देवेश, हे जगन्निवास, हे जगदाधार, प्रसीद त्वं प्रसन्नो भव ॥२५॥

अवतरणम्—येभ्यः पराजयस्य ममाऽऽशङ्का आसीत्सा च अपगता मम—अमीति ।

व्याख्या—अमी च धृतराष्ट्रस्य पुत्राः दुर्योधनप्रभृतयः सर्वे एकं युयुत्सुं विनेति मधुसूदनसरस्वती धनपतिश्च । अवनिपालसंघैः अवनीं पृथ्वीं पालयन्तीति अवनिपाला भूपाला जयद्रथप्रभृतयस्तेषां संघैः समूहैः सहैव संहता एव 'त्वरमाणा विशन्ति' इति व्यवहितेन संबन्धः । (किञ्च) भीष्मो द्रोणः तथा असौ मम प्रसिद्धः प्रतिद्वन्द्वी सूतपुत्रः कर्णः, अस्मदीयैरपि योधमुख्यैर्योधानां मुख्यैः प्रधानैर्धृष्टद्युम्नप्रभृतिभिः सह वक्त्राणि ते त्वरमाणा विशन्तीति उत्तरेणान्वयः ॥२६॥

त्वरमाणाः सन्तः द्रुतगत्येत्यर्थः । दंष्ट्रा करालानि दंष्ट्राभिः करालानि विकृतानि भयानकानि भयजनकानि ते तव विश्वरूपस्य वक्त्राणि

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवाऽमी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्
तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥

---

मुखानि विशन्ति प्रविशन्ति । किञ्च तव वक्त्राणि प्रविष्टानां मध्ये केचित् कतिचिद् दशनान्तरेषु दन्तान्तरेषु मांसमिव भक्षितं विलग्नाः चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिताः संदृश्यन्ते उपलभ्यन्ते ॥२७॥

अवतरणम्—कथं प्रविशन्ति मुखानि ? इत्याह—यथेति ।

व्याख्या—तत्रेदं निदर्शनम् । यथा नदीनां स्रवन्तीनां वहवो बहुसंख्यका अम्बुवेगा अम्बूनां वेगा जलानां त्वराविशेषाः समुद्रमेव अभिमुखाः सन्तः द्रवन्ति प्रविशन्ति तथा तेन प्रकारेण तद्वत् नरलोकवीरा मनुष्यलोकशूरा अमी भीष्मादयः, अभिविज्वलन्ति अभितः प्रकाशमानानि तव विश्वरूपस्य वक्त्राणि मुखानि प्रविशन्ति ॥२८॥

अवतरणम्—ते किमर्थं प्रविशन्ति कथञ्च ? तत्राह—यथेति ।

व्याख्या—यथा यद्वत् पतङ्गाः क्षुद्रपक्षिविशेषाः, समृद्धवेगाः समृद्धोवेगो येषां ते, उद्भूतगतयः सन्तः प्रदीप्तं प्रज्वलितं ज्वलनम् अग्निम्, नाशाय विनाशाय एव विशन्ति प्रविशन्ति तथैव तद्वदेव लोकाः प्राणिनस्तवापि विश्वरूपस्य वक्त्राणि मुखानि नाशाय नाशायैव समृद्धवेगाः सन्तो विशन्ति ॥२९॥

अवतरणम्—भगवतश्चरितमाह—लेलीति ।

व्याख्या—हे विष्णो व्यापनशील, ज्वलद्भिः दीप्यमानै र्वदनैर्मुखैः समग्रान् समस्तान् लोकान् ग्रसमानः अन्तः प्रवेशयन्, समन्तात्सर्वतो लेलिह्यसे भृशं पुनः पुनर्वा लिहसि आस्वादयसि रसनाभिः । (किञ्च) तव विश्व-

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

श्रीभगवान् उवाच—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥

---

रूपस्य उग्राः क्रूरा भासो दीप्तयः समग्रं समस्तं जगत् तेजोभिरापूर्य संव्याप्य प्रतपन्ति प्रतापं कुर्वन्ति ॥३०॥

अवतरणम्—यत एवम् उग्रस्वभावो भवान् अत आख्याहीति।

व्याख्या—हे देववर, देवानां प्रधान, (एवम्) उग्ररूपोऽतिक्रूराकारः, भवान् कोऽस्ति? (इति) मे मह्यम् आख्याहि त्वं कथय। ते तुभ्यम्, नमोऽस्तु-प्रसीद प्रसादं कुरु, आद्यम् आदौ भवम् भवन्तं विज्ञातुम्-विशेषेण ज्ञातुम्, इच्छामि। हि यस्मात्, तव विश्वरूपस्य प्रवृत्तिं चेष्टां न प्रजानामि किमर्थमेवम् अतिक्रूराकारेण प्रवृत्तोऽसीति। अतस्त्वं मह्यं कथय। प्रार्थनायां लोट् ॥३१॥

अवतरणम्—एवं प्रार्थितः सन् कालोऽस्मीति त्रिभिः—श्रीभगवान् उवाच।

व्याख्या—अहं लोकक्षयकृत् लोकानां क्षयं करोतीति, लोकनाशकृत्, प्रवृद्धः प्रकर्षेण वृद्धिं गतः, इह अस्मिन् काले लोकान् समाहर्तुं-संहर्तुं प्रवृत्तः सयत्नः, कालः क्रियाशक्त्युपहितः सर्वस्य संहर्ता यः परमेश्वरः सोऽस्मि। ये योधाः योद्धारः, प्रत्यनीकेषु तव प्रतिपक्षभूतेषु अनीकेषु सेनासु अवस्थिताः—प्रकारविशेषेण स्थिता भीष्मद्रोणकर्णप्रभृतयः सन्ति येभ्यस्तव आशङ्का ते सर्वे ऋतेऽपि विनाऽपि त्वा त्वां, न भविष्यन्ति न जीविष्यन्ति कालात्मना मया ग्रस्तत्वादित्यभिप्रायः ॥३२॥

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ।।३३।।

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ।।३४।।

---

यस्मादेवं तस्मात्, हे सव्यसाचिन् 'सव्येन वामेनापि हस्तेन शराणां क्षेपात् सव्यसाचीत्युच्यतेऽर्जुनः' इति भाष्यम् । सव्येन वामेन हस्तेन सचितुं शरान् संधातुं शीलं यस्य सः, हे वामदक्षिणोभयकरकरणकशरक्षेपकारिन्, त्वं युद्धार्थम् उत्तिष्ठ उत्थितो भव । 'भीष्मद्रोणप्रभृतयोऽतिरथा अजेया-देवैरपि अर्जुनेन जिताः' इति यशो लभस्व । शत्रून् दुर्योधनप्रभृतीन् जित्वा अभिभूय समृद्धम् असपत्नम् अकण्टकं राज्यं भुङ्क्ष्व । एते तव शत्रवो-दुर्योधनप्रभृतयो भीष्मद्रोणकर्णादयश्च पूर्वमेव मयैव निहता निश्चयेन हताः प्राणैर्वियोजिताः । भगवतः शङ्खवादनेनैव तत्कालमेव एषां हृदयानि विदीर्णानीति स्मर्तव्यम् । अतस्त्वं निमित्तमात्रं केवलं निमित्तं भव, शस्त्रादि-स्थानीयो भव । अलक्षितरूपेण मया निहतानपि एतान् लक्षितरूपेण बाणपात विषयीकृत्य हननकर्तृत्वारोपाधिष्ठानमात्रं भवेत्यभिप्रायः ।।३३।।

मयैवैते निहता इति यदुक्तं तत्प्रपञ्चयति—द्रोणमिति । अत्र भाष्ये—"द्रोणञ्चेति । येषु येषु योधेषु अर्जुनस्याऽऽशङ्कासीत् तांस्तान् सर्वान् व्यपदिशति भगवान् मया हतानिति । तत्र द्रोणभीष्मयोस्तावत् प्रसिद्धमा-शङ्काकारणम् । द्रोणो धनुर्वेदाचार्यो दिव्यास्त्रसंपन्नः । आत्मनश्च विशेषतो गुरुः । गरिष्ठो भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च । परशुरामेण द्वन्द्व-युद्धम् अगमद् न च पराजितः । तथा जयद्रथो यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति । कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः ।" इति । द्रोणं च भीष्मं च जयद्रथं च कर्णम् तथा अन्यान् अपि

संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥३५॥

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।

---

दुर्योधनादीन् योधवीरान् वीरयोद्धॄन् मया हतांस्त्वं जहि मारय निमित्तमात्रेण। अतो मा व्यथिष्ठाः, तेभ्यो भयं मा कार्षीः। युद्धयस्व युद्धं कुरु, रणे युद्धे, सपत्नान् शत्रून् दुर्योधनादीन्, जेतासि जेष्यसि ॥३४॥

अवतरणम्—तदनन्तरं यद् वृत्तं तद् धृतराष्ट्रं प्रति—संजय उवाच।

व्याख्या—इमं वृत्तान्तं धृतराष्ट्राय संजयः कथयामासेति वैशम्पायनो जनमेजयमाह—संजय उवाचेति। भगवतः श्रीकृष्णस्य एतत् पूर्वोक्तं 'कालोऽस्मि' इत्यादि श्लोकत्रयात्मकं वचनं वाक्यजातं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः, कृताञ्जलिः सन् संपुटीकृतहस्तः सन् नमस्कृत्वा भगवतोऽभिवादनं कृत्वा भीतभीतः पुनः पुनर्भयाविष्टचेताः सन् प्रणम्य नम्रीभूय एव पुनरेव कृष्णं भगवन्तं सगद्गदम् आह। 'भयाविष्टस्य दुःखाभिघातात् स्नेहाविष्टस्य च हर्षोद्भवाद् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधस्ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत् स गद्गदो नाम।' इति भाष्यम्। तेन सह वर्तते इति सगद्गदम्, क्रियाविशेषणमिदम्। सगद्गदं यथा स्यात्तथा आह उक्तवान्। अत्र भाष्ये–'अत्रावसरे संजयवचनं साभिप्रायम्। कथम्? द्रोणादिषु अर्जुनेन हतेषु अजेयेषु चतुर्षु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन् संधिं करिष्यति। ततः शान्तिरुभयेषां भविष्यतीति। तदपि नाश्रौषीद् धृतराष्ट्रो भवितव्यवशात्।' इति प्रोक्तम् ॥३५॥

अवतरणम्—एकादशभिः श्लोकैः 'स्थाने इत्यादिभिः—स्तुवन् अर्जुन उवाच।

रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥३६॥
कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत् तत्परं यत् ॥३७॥

---

व्याख्या—हे हृषीकेश, सर्वेन्द्रियप्रवर्तक, तव प्रकीर्त्या 'त्वन्माहात्म्यकीर्तनेन 'श्रुतेन' इति भाष्यम् । यद् जगत् । प्रहृष्यति प्रहर्षमुपैति तत् स्थाने युक्तमित्यर्थः । अथवा विषयविशेषणं स्थाने इति । 'युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति ।' इति भाष्यम् । स्थाने युक्ते विषये त्वयि जगत् प्रहृष्यति अनुरज्यते चेत्यादि-व्याख्येयम् ।' च=तथा यद् जगद् अनुरज्यते, अनुरागमुपैति । यच्च भीतानि रक्षांसि दिशो द्रवन्ति गच्छन्ति पलायन्ते, च=तथा, सर्वे सिद्धसंघाः सिद्धानां कपिलादीनां संघाः समुदायाः नमस्यन्ति नमस्कुर्वन्ति च यद् तत् सर्वं स्थाने युक्तम् अथवा युक्ते हर्षादिविषये भवति तेषां' तत्सर्वमित्यर्थः । अत्र मधुसूदनसरस्वती नीलकण्ठश्च—'अयं श्लोको रक्षोघ्नमन्त्रत्वेन मन्त्रशास्त्रे प्रसिद्धः । स च नारायणाष्टाक्षरसुदर्शनास्त्रमन्त्राभ्यां संपुटितो ज्ञेयः इति रहस्यम्' इति प्राहतुः ॥३६॥

अवतरणम्—भगवति हर्षादिविषयताया युक्तत्वे हेतुं दर्शयति—कस्मादिति ।

व्याख्या—च=किञ्च, हे महात्मन्, हे अनन्त, हे देवेश हे जगन्निवास, ब्रह्मणोऽपि हिरण्यगर्भस्यापि आदिकर्त्रे आदिकारणाय, गरीयसे गुरुतराय, ते तुभ्यम्, कस्माद् हेतो स्ते सिद्धसंघादयो न नमेरन् न नमस्कुर्युः ? यतस्त्वं ब्रह्मणोऽपि आदिकर्ता गरीयान् अतः स्थाने एव तेषां हर्षादयो नमस्कारश्चेत्यभिप्रायः । भगवतो नमस्कारादियोग्यत्वे हेत्वन्तरमाह—त्वमिति' सत् कार्यम् असत् कारणम्, एतदुभयाऽभिन्नम् अक्षरं सोपाधिकं ब्रह्म यद् वेदान्तेषु श्रूयते 'सर्वं खल्विदं ब्रह्म' 'एतदक्षरं गार्गि' इत्यादि, तत् त्वमेवासि । परमार्थतस्तु तत्परं ताभ्यां सदसद्भ्यां कार्यकारणाभ्यां व्यक्ताऽव्य-

त्वमादिदेवः पुरुषः पुराणस्
त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥३८॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥

---

त्ताभ्यां परं प्रकृष्टं तयोरपि मूलकारणम् अक्षरं ब्रह्मेति निरुपाधिक· यच्छ्रूयते तदपि त्वमेवाऽसीत्यर्थः। अतो भवान् सुतरां नमस्कारादियोग्य-इत्याशयः ॥३७॥

अवतरणम्—सम्प्रति जगत्स्रष्टृत्वादिनापि नमस्कारादियोग्यो भवानस्तीति स्तुत्या दर्शयन् भगवन्तं स्तौति--त्वमिति ।

व्याख्या—हे अनन्तरूप, न विद्यतेऽन्तो रूपाणां यस्य सः, त्वम्, आदिदेवोऽसि, जगतः स्रष्टृत्वात् (तथा) पुराणश्चिरन्तनः पुरुषः पुरि शरीरेशयनाद् असि। (तथा) त्वम् अस्य प्रत्यक्षस्य विश्वस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन् जगत्सर्वम् महाप्रलयादौ सोऽसि। तदसि इति वा (किञ्च) त्वं त्वमेव वेत्ता वेदिता असि, वेद्यञ्च वेदनार्हं च त्वमेवासि, परं धाम च परमं पदं च वैष्णवम् चैतन्यस्वरूपम् सच्चिदानन्दात्मकं त्वमेवासि। (तथा) त्वया विश्वं समस्तं जगत् ततं व्याप्तम् ॥३८॥

अवतरणम्—किञ्च—वायुरिति ।

व्याख्या—त्वं त्वमेव वायुरसि, यमोऽसि, अग्निरसि, वरुणोऽसि, शशाङ्कश्चन्द्रमाः, असि, प्रजापतिः कश्यपादिः प्रजापालकोऽसि, प्रपितामहश्च तथा पितामहस्य ब्रह्मणोऽपि पिताऽसि। (अतः) ते तुभ्यम् सहस्रकृत्वः सहस्रवारं नमो नमोऽस्तु पुनः पुनर्नमस्कारोऽस्तु। पुनश्च भूयोऽपि ते तुभ्यं नमो नमोऽस्तु। वारं वारं पुनर्वारं वारं पुनश्च वारं वारं तुभ्यं नमस्कारोऽस्तु इत्यर्थः। पुनश्चेति भूयोऽपीति द्विः प्रयोगौ च द्वौ इति शब्दैः श्रद्धाभक्त्यतिशयाद् आत्मनोऽपरितोषं नमस्करणे दर्शयति ॥३९॥

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्याऽमितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वाऽपि ॥४१॥

---

अवतरणम्—तथा—नम इति ।

व्याख्या—पुरस्तात् पूर्वस्यां दिशि ते तुभ्यं नमः नमस्कारोऽस्तु । अथ पृष्ठतः पश्चिमायां दिशि च तुभ्यं नमोऽस्तु । किञ्च हे सर्व हे सर्वात्मन् सर्वत एव सर्वास्वेव दिक्षु स्थिताय तुभ्यं नमोऽस्तु । सर्वत्वे हेतुं दर्शयति—अनन्तवीर्याऽमितविक्रमः अनन्तम् अपरिच्छिन्नं वीर्यं सामर्थ्यं यस्य सः, तथा अमितोऽपरिच्छिन्नो विक्रमः पराक्रमो यस्य सः, अनन्तवीर्यश्चासौ अमितविक्रमश्चेति कर्मधारयः । एवं भूतस्त्वं यतः सर्वं समस्तं जगत्, समाप्नोषि सम्यग् एकेन आत्मना आप्नोषि व्याप्नोषि ततस्तस्मात्कारणात् त्वं सर्वोऽसि सर्वो भवसि । त्वया विनाभूतं न किञ्चिद् अस्तीत्यर्थः । वीर्यवान् अपि कश्चिच्छस्त्रादिविषयये न पराक्रमते मन्दपराक्रमो वा भवति । भगवांस्तु नैवम् । किन्तु अनन्तवीर्यश्चाऽमितपराक्रमश्च अस्तीत्याशयः ॥४०॥

अवतरणम्—यतोऽहं त्वन्माहात्म्याऽपरिज्ञानापराधी अतः—सखेति ।

व्याख्या—अज्ञाननिमित्तं स्वापराधं क्षमापयति—हे अच्युत सर्वदेशकालवस्तुषु च्युतिरहित, मया अर्जुनेन तव ईश्वरस्य इदं विश्वरूपं महिमानम्, माहात्म्यम् लक्षणया अभेदारोपेण विश्वरूपात्मकं माहात्म्यमित्यर्थः । विश्वरूपे महिमत्वारोपो मुखे चन्द्रत्वारोप इव ज्ञातव्यः । 'तवेमम्' इति पाठे तु तव इमं सम्प्रति प्रत्यक्षभूतं विश्वरूपाख्यं महिमानम् माहात्म्यम् इत्यर्थः । महिमानम् (सदा) अजानता 'अज्ञानिना मूढेन मया अज्ञात्वा सखा, समानवयाः इति मत्वा । विपरीतबुद्धया ज्ञात्वा प्रसभं प्रसह्य अभिभूय प्रमादाद् विक्षिप्तचित्ततया प्रणयेन वाऽपि प्रणयो नाम स्नेहनिमित्तको विश्रम्भस्तेन वाऽपि कारणेन यद् उक्तम् हे कृष्ण, हे यादव, हे सखेति । हे सखे इति भाष्ये विवरणाद् अत्र इकारलोप आर्षः । 'संधिरार्षः' इति श्रीधरस्वाम्यादयः । भाष्ये 'तत् प्रसभोक्तम् तादृशप्रसभोक्तिनिमित्तकम् स्वस्य अपराधम् अहम् अप्रमेयं त्वां क्षामये' इति उत्तरश्लोकगतेन संबन्धः । अत्र भाष्ये

यच्चावहासार्थमसत्कृतोऽसि　विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव　॥४३॥

---

'तवेदं महिमानम् अजानतेति वैयधिकरण्येन संवन्धः। इदं विश्वरूपम्। तवेमम् इति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव' इत्युक्तम् ॥ तस्य यथाव्याख्यात एवार्थः। इदं शब्दस्य नपुंसकत्वाद् महिमानमित्यनेन लक्षणां विनाऽभेदान्वयो न स्यात् मुखचन्द्रमित्यत्रेवेति भावः ॥४१॥

अवतरणम्—यच्चेति ।

व्याख्या—किञ्च यद् अवहासार्थम् परिहासप्रयोजनाय, विहारशय्यासनभोजनेषु-विहरणं विहारः पादव्यायामः। शय्या शयनं तल्पादिकम्। आसनम् आस्थायिका सिंहासनादि, भोजनम् अदनम् इत्येतेषु विषयभूतेषु एकः परोक्षः सन् केवलः सखीन् विना रहसि स्थितः सन् इत्यर्थः। अथवाऽपि यद्वा समक्षम् सखीनां प्रत्यक्षमेव तद् बुद्धिस्थं यथा स्यात्तथा असत्कृतोऽसि परिभूतोऽसि तिरस्कृतोऽसि मया अजानता महिमानं तवेदमिति तवेममिति वा संवध्यते। अत्र 'तदिति क्रियाविशेषणम्' इति भाष्यम्। हे अच्युत सर्वदा निर्विकार, तत् सर्वं प्रसभोक्तम् असत्करणञ्च अपराधजातं मदीयम् अहं मूढोऽर्जुनस्तवास्मीति अप्रमेयं प्रमाणातीतं त्वामीश्वरं क्षामये क्षमां कारये। यतो ममाऽज्ञानकृतानाम् अपराधानां भवता सर्वेश्वरेण क्षमा कर्तव्या न तु मह्यं तदपराधनिमित्तं दण्डो दातव्य इति मम प्रार्थनेयं करुणानिधेर्भक्तवत्सलस्य तव पुरस्तादित्यभिप्रायः ॥४२॥

अवतरणम्—यतस्त्वम्—पितेति ।

व्याख्या—हे अप्रतिमप्रभाव, प्रतिमीयते या सा प्रतिमा उपमा। न विद्यते प्रतिमा यस्य तव प्रभावस्य त्वम् अप्रतिमप्रभावः 'हे अप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः' इति भाष्यम्। लोकत्रयेऽपि सर्वेष्वपि लोकेषु (यतः) त्वत्समएव अन्यस्तावन्नास्ति, त्वदपेक्षया अभ्यधिकोऽन्यः कुतः स्यात् ?

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।

---

न कथमपि स्यादित्यर्थः। अत्र भाष्यम्—'न हि ईश्वरद्वयं संभवति, अनेकेश्वरत्वे व्यवहाराऽनुपपत्तेः' इति। तत्रानन्दगिरिः—'ईश्वरभेदे प्रत्येकं स्वातन्त्र्यात्तदैकमत्ये हेत्वभावान्नानामतित्वे च एकस्य सिसृक्षायामन्यस्य संजिहीर्षासंभवाद् व्यवहारलोपादयुक्तम् ईश्वरनानात्वमित्यर्थः।' इति। अतस्त्वत्समो नास्तीति सूपपन्नम्। 'रुद्राणां शङ्करश्चास्मि' इत्याद्युक्तरीत्या शङ्करादयस्तु, एकस्यैवेश्वरस्य विभूतयः सन्तीत्याशयः। यत एवम् अतस्त्वम् त्वमेव अस्य प्रत्यक्षादिना सन्निधापितस्य चराचरस्य स्थावरजङ्गमस्य, लोकस्य समस्तस्य प्राणिजातस्य पिताऽसि जनयिताऽसि। न केवलं त्वमस्य जगतः पितैव किन्तु पूज्यश्च पूजार्हश्चासि। यतो जगतो गरीयान् गुरुतरो गुरुरसि। गुरूणामपि हिरण्यगर्भादीनां धर्मात्मज्ञानसंप्रदायप्रवर्तकत्वेन शिक्षयितृत्वाद् गरीयान् गुरुस्त्वमसि ॥४३॥

अवतरणम्—यत एवम्—तस्मादिति।

व्याख्या—यतः पितासि लोकस्य चराचरस्य तस्मात् कारणात्. अहमर्जुनः प्रणम्य नमस्कृत्य कामं शरीरं प्रणिधाय प्रकर्षेण नीचैर्धृत्वा 'कायं दण्डवद् भूमौ पातयित्वा' इत्यर्थः श्रीधरस्वाम्यादिभिर्व्याख्यातः। 'प्रणिधाय प्रकर्षेण नीचैर्धृत्वा' इति भाष्यम्। ईशम् ईशितारम् ईड्यं स्तुत्यम् त्वां भवन्तं प्रसादये प्रसादं कारये। हे देव ! त्वं पुनः पुत्रस्य अपराधं पितेव, सख्युरपराधं सखेव (किञ्च) प्रियाया अपराधं प्रिय इव मम अपराधं यथोक्तम् अन्यश्च सोढुं क्षन्तुं त्वम् अर्हसि योग्यो भवसि। प्रियायार्हसीति सन्धिरार्षः। इवेति इवकारोऽनुपज्यते। भाष्यात्तथा प्रतीतेः ॥४४॥

अवतरणम्—हेतुकथनपूर्वकं विश्वरूपोपसंहारं प्रार्थयते—अदृष्टेति।

व्याख्यादेव—हे देव, अदृष्टपूर्वम् पूर्वं कदाचिदपि न दृष्टं तवेदं विश्वरूपं मयाऽन्यैर्वा यत् तदहं दृष्ट्वा हृषितोऽस्मि हर्षमुपागतोऽस्मि। (किञ्च)

तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥४५॥
किरीटिनं गदिनं चक्रहस्तम्
इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥४६॥

श्रीभगवान् उवाच—

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

---

अदृष्टपूर्वं (भयानकं) विश्वरूपं दृष्ट्वा भयेन मे मम मनः प्रव्यथितं प्रकम्पितं च अस्ति । (अतो) हे देवेश ! हे जगन्निवास, प्रसीद मयि प्रसादं कुरु (यतश्च) मे मह्यं तदेव मत्प्रियं रूपं दर्शय स्वप्रसादफलम् आविष्कुरु । प्रार्थनायां लोट् ॥४५॥ तद्रूपमेव विवृणोति यस्य दर्शनं प्रार्थयते—किरीटिनमिति ।

व्याख्या—हे सहस्रबाहो, 'वार्तमानिकेन विश्वरूपेण इति भाष्यम् । सहस्रसंख्यकभुज, हे विश्वमूर्ते विश्वरूपधर, अहं त्वां तथैव पूर्ववदेव किरीटिनं किरीटवन्तं गदिनं गदावन्तं, (तथा) चक्रहस्तम् चक्रं हस्ते यस्य तम्, द्रष्टुम् इच्छामि (यतएवम् अतस्त्वम् इदं विश्वरूपम् उपसंहृत्य) तेनैव पूर्वेणैव चतुर्भुजेन चत्वारो भुजा यस्मिन् रूपे तेन, रूपेण वासुदेवरूपेण भव 'इत्थं भूतलक्षणे' तृतीया । तद्रूपोपलक्षितो भवेति प्रार्थयेऽहम् । प्रार्थनायां लोट् । 'एतेन सर्वदा चतुर्भुजादिरूपम् अर्जुनेन भगवतो दृश्यते इत्युक्तम्' इति मधुसूदनसरस्वती ॥४६॥

अवतरणम्—अर्जुनं भीतमुपलभ्य उपसंहृत्य विश्वरूपं प्रियवचनेन आश्वासयन् मयेति त्रिभिः श्लोकैः—श्रीभगवान् उवाच ।

व्याख्या—हे अर्जुन, प्रसन्नेन प्रसादो नाम त्वयि अनुग्रहबुद्धिस्तद्वता मया तेजोमयं तेजःप्रायं, विश्वं समस्तम्, आद्यम् आदौ जगदादौ भवम् अनन्तम् अन्तरहितम् इदं यदधुनैवोपसंहृतम् तत् परं प्रकृष्टं रूपं विश्वरूपम्

न वेदयज्ञाऽध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥४९॥

---

आत्मयोगाद् आत्मन ऐश्वर्यस्य सामर्थ्यात् तव तुभ्यं दर्शितम् । यद् मे मम रूपं त्वदन्येन त्वद्भिन्नेन केनचिद् न दृष्टपूर्वम्—पूर्वं कदापि न दृष्टम् । तद्रूपं मया तुभ्यं दर्शितमित्यर्थः ॥४७॥

अवतरणम्—आत्मनो मम विश्वरूपदर्शनेन त्वं कृतार्थ एव संवृत्त इति तत्स्तौति—न वेदेति ।

व्याख्या—हे कुरुप्रवीर, अहम् एवंरूपः यथादर्शितविश्वरूपः, नृलोके मनुष्यलोके त्वदन्येन त्वद्भिन्नेन केनचिद् नरेण, 'मदनुग्रहविहीनेनेतिशेषः' इत्यानन्दगिरिः । द्रष्टुं साक्षात्कर्तुं न शक्योऽस्मि । (यतोऽहम् एवं विश्वरूपः) वेदयज्ञाध्ययनैश्चतुर्णामपि वेदानां यथावद् अध्ययनैर्यज्ञविज्ञानैश्च न द्रष्टुं शक्योऽस्मि । 'वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथग् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्' इति भाष्यम् । अत्रानन्दगिरिः—'न च वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतम् अध्ययनस्य अर्थाऽवबोधपर्यन्तत्वादिति वाच्यम् तस्य अक्षरग्रहणान्ततावा वृद्धैः साधितत्वादिति भावः ।' इत्याह । 'तदधीते तद्वेद' इत्यनुशासने तद्वेदग्रहणं कृतवान् भगवान् पाणिनिरपि तत्रानुकूलः । (तथा) न दानैस्तुलापुरुषादिभिः, न च क्रियाभिरग्निहोत्रादिभिः श्रौतीभिः स्मार्ताभिश्च । न (च) उग्रैः घोरैस्तपोभिश्चान्द्रायणादिभिर्द्रष्टुं शक्योऽस्मि शक्यअहमिति आर्षम् ॥४८॥

अवतरणम्—एवं सत्यपि यदि घोररूपदर्शनाद् तव व्यथा जायते तर्हि मयोपसंहृतम् विश्वरूपमिदम् । तुभ्यं पूर्ववदेव रूपं दर्शयामीत्याह— मा ते इति ।

व्याख्या—ईदृग् यथा दर्शितं तथा, घोरं भयङ्करं, मम इदं विश्वरूपं रूपं दृष्ट्वा उपलभ्य (स्थितस्य) ते तव व्यथा भयं माभूद्, विमूढभावो विमूढ-

संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥

---

चित्तता च माभूत् । (अतोमया उपसंहृतं तद् रूपम्) त्वं पुनः व्यपेतभीर्विगतभयः प्रीतमनाः (च) सन् मे मम तदेव तवेष्टं चतुर्भुजं शङ्खचक्रगदापद्मधरं किरीटमकरकुण्डलश्रीवत्सकौस्तुभवनमालापीताम्बरादिसंशोभितम् इदं विद्यमानं दृश्यमानं रूपं प्रपश्य प्रकर्षेण पश्य ॥४९॥

अवतरणम्—तदिदं वृत्तं धृतराष्ट्राय संजयो निवेदयामास-इत्याह वैशम्पायनो जनमेजयम्—संजय उवाच ।

व्याख्या—इति एवम्, वासुदेवः श्रीकृष्णः, अर्जुनं तथा तथाभूतम् वचनम् उक्त्वा स्वकं वसुदेवगृहे जातं रूपं चतुर्भुजादियुक्तं भूयः पुनर्दर्शयामास अर्जुनं दर्शितवान् । पुनः सौम्यवपुः प्रसन्नदेहो भूत्वा महात्मा परमकारुणिकः परमात्मा श्रीकृष्णः, भीतम् विश्वरूपदर्शनजातभयम् एवम् अर्जुनम् आश्वासयामास च आश्वासितवांश्च ॥५०॥

अवतरणम्—ततो निर्भयः प्रीतमनाश्च सन् स्वस्वस्थतां निवेदयितुम्—अर्जुन उवाच ।

व्याख्या—हे जनार्दन, तव सौम्यं प्रसन्नम् इदं वर्तमानं मानुषं मनुष्यस्येव रूपं स्वरूपं दृष्ट्वा इदानीं सम्प्रति अहं प्रकृतिं स्वभावं स्वास्थ्यं गतः प्राप्तः सन् सचेताः प्रसन्नचित्तः संवृत्तः संजातोऽस्मि । तस्य रूपस्य चतुर्भुजत्वेऽपि मानुषत्वं मनुष्यस्येव आकार-प्रकार–कोमलकरचरणादिमत्तया स्यादेव इति न विरोधः ॥५१॥

अवतरणम्—स्वकृतस्य अनुग्रहस्य पुण्यातिशयलभ्यत्वं दर्शयिष्यन्—श्रीभगवान् उवाच ।

श्रीभगवान् उवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५२॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥५४॥

---

व्याख्या—मम यद्रूपं त्वं दृष्टवान् असि, तदिदं विश्वरूपं सुदुर्दर्शम् सुष्ठु दुःखेन द्रष्टुं योग्यम् । अस्ति । सुशब्दो विश्वरूपदर्शनस्य अतीवदौर्लभ्यं द्योतयति । (यतश्च) देवा अपि ब्रह्मेन्द्रादयोऽस्य मम विश्वरूपस्य रूपस्य-नित्यं सर्वदा दर्शनकाङ्क्षिणः सन्ति । न तु त्वमिव दृष्टवन्तस्ते दर्शनेप्सवोऽपि न च द्रक्ष्यन्ति इत्यभिप्रायः ॥५२॥

अवतरणम्—कस्मात्कारणाद् देवा न द्रष्टुं शक्ताः ? इत्यत आह— नाहमिति :

व्याख्या—अहं वेदै ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न एवंविधो यथा-दर्शितप्रकारो द्रष्टुं साक्षात्कर्तुं शक्यः, न तपसा उग्रेण चान्द्रायणादिना, न दानेन गोभूहिरण्यादिना दत्तेन, न च इज्यया यज्ञेन पूजया वा एवंविधो द्रष्टुं शक्यः । यथा यद्वत् त्वं मां दृष्टवानसि साक्षात्कृतवानसि ॥५३॥

अवतरणम्—तर्हि केन उपायेन भवान् द्रष्टुं शक्यः ? इत्यत आह — भक्त्येति ।

व्याख्य—हे परन्तप, भक्त्या प्रीत्या तु "अनन्यया अपृथग्भूतया, भगवतोऽन्यत्र पृथङ् न कदाचिदपि या भवति सात्वनन्या भक्तिः, सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया साऽनन्या भक्तिस्तया भक्त्या" इति भाष्यम् । अहं वासुदेवः परमात्मा एवंविधो विश्वरूपप्रकारकः सोपाधिकः तत्त्वेन च याथात्म्येन परमार्थप्रकारेण निरुपाधिकश्च यथाभक्ति ज्ञातुं शास्त्रतो ज्ञातुं शास्त्रजन्यशाब्दबोधविषयीकर्तुं प्राक् ततो द्रष्टुं शास्त्रजन्यापरोक्षज्ञान-विषयीकर्तुम् ततस्तत्त्वसाक्षात्कारेण प्रारब्धावसाने प्रवेष्टुं च विदेहकैवल्य-मोक्षलाभेन ऐक्यं गतुं च शक्योऽस्मि शक्य अहमिति पूर्ववद् आर्षम् ॥५४॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।।५५।।

ॐ तत् सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम
एकादशोऽध्यायः ।।११।।

---

अवतरणम्—"भक्त्यातु इति विशेषणाद् अन्येषाम् अहेतुत्वम् आशङ्क्य आह भाष्ये अधुनेति" इत्यानन्दगिरिः । "अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्य (संगृह्य) उच्यते—मत्कर्मेति ।"

व्याख्या हे पाण्डव, मत्कर्मकृत् मदर्थं कर्म मत्कर्म, तत्करोतीति मत्कर्मकृत् । मत्परमः अहं परमः परा गतिर्यस्य सः । करोति भृत्यः स्वामि-कर्म, न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते । अयं तु मत्कर्मकृद् मामेव परमां गतिं प्रतिपद्यते । (तथा) मद्भक्तः मामेव सर्व-प्रकारैः सर्वात्मना सर्वोत्साहेन भजते इति मद्भक्तः, सङ्गवर्जितः धनमित्र-पुत्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिस्तेन वर्जितः रहितः । निर्वैरः, निर्गतवैरः अतः सर्वभूतेषु शत्रुभावरहितः आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि इति शेषः । अनेन सर्वभूतेषु भगवद्भावं-पश्यन्निति ज्ञानयोग उक्तः । य ईदृशो मद्भक्तः स मामेति, अहमेव तस्य परा गति र्नाऽन्या कदाचिद् भवति ॥ तदेवम् अनेनाध्यायेन भगवतो विश्वरूपस्य सर्वेश्वरस्य सर्वात्मनः सर्वज्ञस्य मत्कर्म-कृदित्यादि न्यायेन क्रममुक्तिफलमभिध्यानं वदता तत्पदवाच्योऽर्थ ईश्वरो निरूपितः ।।५५।।

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु शाङ्करभाष्यानुसारिण्यां वंशीव्याख्यायां वंशीधरमिश्रकृतायां विश्वरूपदर्शनयोगो नामैका-दशोऽध्यायः इति श्रीकृष्णार्पणमस्तु ।।११।।



# अथ गीतावंश्यां द्वादशोऽध्यायः

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाऽप्यक्षरमव्यक्तम्, तेषां के योगवित्तमाः ॥१॥

---

अवतरणम्—द्वितीयप्रभृतिषु दशमान्तेषु अध्यायेषु तत्र तत्र परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्य निरुपाधिकस्य ज्ञेयत्वेन अनुसन्धानमुक्तम् । तेष्वेवाऽध्यायेषु तत्र तत्र सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य सोपाधिकस्य च ब्रह्मणो ध्येयत्वेन प्रतिपादनं कृतम् । विश्वरूपाध्याये एकादशे तु ऐश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं स्वकीयं भगवता दर्शितम् उपासनार्थं भक्तानाम् । तद् दर्शयित्वा चोक्तम्—'मत्कर्मकृदि'-त्यादि । एवं सगुणोपासनं निर्गुणोपासनं चेति पक्षद्वयं भगवता पुरस्तादुपन्यस्तम् । तत्राऽनयोः पक्षयोर्विशिष्टतरस्य पक्षस्य बुभुत्सया—अर्जुन उवाच ।

व्याख्या—एवम् अतीतानन्तरश्लोकेन 'मत्कर्मकृन्मत्परमः' इत्यादिना यः प्रकार उक्तस्तेन प्रकारेण, सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता ये भक्ता अनन्यशरणाः सन्तः, त्वां यथादर्शितं विश्वरूपं सोपाधिकं सगुणं पर्युपासते ध्यायन्ति । ये चापि अन्येऽपि ये च त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणः अनिर्देश्यमित्यादिना वक्ष्यमाणैर्विशेषणैः यथाविशेषितं ब्रह्म अक्षरं निरस्तसर्वोपाधित्वाद् अव्यक्तम्, अकरणगोचरम् । यद्धि लोके करणगोचरं तद् व्यक्तमित्युच्यते, अञ्जेर्धातोः करणगोचरीभावार्थकत्वात् । इदं त्वक्षरं तद्विपरीतम्, अनिर्देश्यं सर्वत्रगम् अचिन्त्यं कूटस्थम् अचलं ध्रुवम् अस्ति । तद् अव्यक्तमक्षरं निर्गुणं ब्रह्म निरुपाधिकं ये पर्युपासते, अक्षरब्रह्मविषयकानि वेदान्तश्रवणमनननिदिध्यासनानि कुर्वते । तेषाम् उभयेषां सगुणोपासकानां निर्गुणोपासकानां च मध्ये के कतरे योगवित्तमाः, अतिशयेन योगविदः सन्ति ? योगं समाधिं विन्दन्ति लभन्ते इति योगविदः, अतिशयेन योगविदो योगवित्तमाः । 'विद्लृ लाभे' इत्यस्मात् क्विप् । श्रेष्ठयोगिन इत्यर्थः ॥१॥

श्री भगवान् उवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥
ये त्वक्षरमनिर्देश्यम् अव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥

---

अवतरणम्—अत्र किम् अनयोर्योगयोः सविशेषनिर्विशेषोपासनयोर्मध्ये सुशक्यत्वगुणेन को योगः श्रेष्ठ इति पृच्छसि ? किं वा साक्षान्मोक्षहेतुत्वेन को योगः श्रेष्ठ इति पृच्छसि ? इत्येवं विकल्प्य क्रमेणोत्तरम्—सुशक्यत्वगुणेन सविशेषोपासनयोगस्य श्रेष्ठत्वम् । साक्षान्मोक्षहेतुत्वेन तु निर्विशेषोपासनयोगस्य श्रेष्ठत्वम् । इत्येवमाशयेन, कर्तुम्—श्रीभगवानुवाच ।

व्याख्या—ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणा उत्तमाधिकारिणस्ते तावत् तिष्ठन्तु । तान्प्रति यद् वक्तव्यं तदुपरिष्टाद् वक्ष्यामः । ये त्वितरे मन्दमध्याधिकारिणः सुशक्यं योगं वाञ्छन्ति तान् अधिकृत्य सम्प्रति उच्यते-मयीति । मयि विश्वरूपे परमेश्वरे सगुणे सोपाधिके, मन आवेश्य समाधाय, नित्ययुक्ता अतीतानन्तराऽध्यायान्तोक्तश्लोकार्थन्यायेन नित्यं सततं युक्ताः समाहिता, परया प्रकृष्टया श्रद्धया समादरबुद्ध्या उपेताः सहिताश्च सन्तो ये मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिम् उपासते मयि स्मृतिं सदा कुर्वन्ति ते सविशेषोपासनयोगिनो मे मम 'युक्ततमाः' इति मता अभिप्रेताः । नैरन्तर्येण हि ते मच्चित्ततयाऽहोरात्रम् अतिवाहयन्ति । अतो युक्तं तान् प्रति 'युक्ततमाः' इति वक्तुम्॥२॥

अवतरणम्—तर्हि किम् अक्षरब्रह्मोपासका युक्ततमा न भवन्ति ? नैवम्, तान्प्रति यद्वक्तव्यं तच्छृणु त्रिभिः श्लोकैः—ये तु इति ।

व्याख्या—ये तु सम्यग्दर्शिनो योगिनः इन्द्रियग्रामम् इन्द्रियसमुदायं संनियम्य सम्यक् संहृत्य सर्वत्र 'सर्वस्मिन्काले' इति भाष्यम् । समबुद्धयः समा तुल्या बुद्धिर्येषाम् इष्टाऽनिष्टप्राप्तौ ते सन्तः सर्वभूतहितेरताः सर्वप्राणिकल्याणे लग्नाः सन्तश्च अव्यक्तम् न केनाऽपि प्रमाणेन व्यज्यते यद् तद् अव्यक्तम् अकरणगोचरम्, अतएव अनिर्देश्यं निर्देष्टुमशक्यम् अशब्दगोचरम्, सर्वत्रगम् व्योमवत् सर्वव्यापि, अचिन्त्यम् अकरणगोचरत्वादेव मनसाऽपि चिन्तयितुम् अशक्यम् (असंस्कृतेन मनसेत्यर्थः) कूटस्थम् कूटं माया प्रकृति-

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

क्लेशोऽधिकतरस्तेषाम् अव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

---

तत्र स्थितं तदध्यक्षतया । अथवा कूटं राशिस्तद्वत् स्थितं निष्क्रियम् इत्यर्थः । (अत एव) अचलं-स्थिरम्, (अतएव) ध्रुवं नित्यम्, अक्षरम् अविनाशि परं ब्रह्म पर्युपासते परिसमन्ताद् उपासते, 'उपासनं नाम यथाशास्त्रम् उपास्य-स्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते' इति भाष्यम् । अत्रानन्दगिरिः 'निरु-पाधिके अक्षरे कथम् उपासना ? इति पृच्छति-उपासनमिति । शास्त्रतोऽक्षरं ज्ञात्वा यद् उपेत्य आत्मत्वेन उपगम्य उपासते तथैव तिष्ठन्ति पूर्णचिदेकतानम् अक्षरम् आत्मानमेव सदा भावयन्ति इत्येतदिह विवक्षितम् इत्याह यथेति ।' इत्याह । ते एवं भूता अक्षरोपासकाः सम्यग्दर्शिनो मामेव प्राप्नुवन्ति परमा-त्मानम् । अत्र भाष्ये—"न तु तेषां वक्तव्यं किञ्चिद् मां ते प्राप्नुवन्तीति । 'ज्ञानी त्वात्मैव मे मतम्' इति हि उक्तम् । नहि भगवत्स्वरूपाणां सतां युक्त-तमत्वम् अयुक्ततमत्वं वा वाच्यम् ।" इत्युक्तम् । ज्ञानवतां यथाज्ञानं भग-वत्प्राप्तेरर्थसिद्धत्वाद् अनुवादमात्रमिदं ते प्राप्नुवन्ति मामेवेति इति तद्भावः। अपि च अत्र भाष्ये—'कूटस्थम्-दृश्यमानगुणम् अन्तर्दोषं वस्तु कूटरूपं कूट-साक्ष्यम् इत्यादौ कूटशब्दः प्रसिद्धो लोके, तथा च अविद्यादि अनेकसंसार-बीजम् अन्तर्दोषवद् मायाऽव्याकृतादिशब्दवाच्यतया 'मायां तु प्रकृतिं विद्या-न्मायिनं तु महेश्वरम्' (श्वे० ४।१०) 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत् तत् कूटम् । तस्मिन्कूटे स्थितं कूटस्थं तदध्यक्षतया ।' इत्युक्तम् ॥४॥

(किन्तु) अव्यक्तासक्तचेतसाम् अव्यक्ते अक्षरे निर्विशेषे ब्रह्मणि तत्प्रा-प्त्यर्थम् आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरो भवति । मत्कर्मादिपराणां सगुणोपासकानां क्लेशोऽधिक एव भवति यद्यपि तथापि अधिकतरः क्लेशो भवति अक्षरब्रह्मोपासकानां देहाऽभिमानपरित्यागे तेषामवश्यं करणीये इति भावः । हि यस्मात्, अव्यक्ता अक्षरात्मिका गतिः स्थितिः देहवद्भिर्देहा-भिमानवद्भिर्दुःखं देहाभिमानपरित्यागनिमित्तं यथा स्यात्तथा अवाप्यते प्राप्यते । अतोऽक्षरोपासकानां देहाभिमानपरित्यागनिमित्तः क्लेशोऽधिक-

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥

---

तरो भवतीत्यर्थः अद्वेष्टेत्यादिना (१२।१३) अक्षरोपासकानां वर्तनप्रकारो वक्ष्यते । ॥५॥

अवतरणम्—ननु यदि अव्यक्तासक्तचेतसो 'मामेव प्राप्नुवन्ति' इति विशिष्यन्ते तर्हि किं व्यक्तोपासकास्त्वां न प्राप्नुवन्ति ? इति चेन्न, तेषामपि क्रमेण मत्प्राप्तेरित्याशयवानाह द्वाभ्याम्—ये तु इति ।

तु शब्दः शङ्कानिवृत्त्यर्थः' इत्यानन्दगिरिः । शङ्का तु अवतरणे उक्ता । ये तु सर्वाणि कर्माणि नित्यनैमित्तिकस्वाभाविकादीनि मयि ईश्वरे संन्यस्य-मत्कर्मकृत्त्वावस्थायां समर्प्य मत्परमत्वेन ध्यानयोगावस्थायां तु परित्यज्य सर्वस्य प्रपञ्चस्य ईश्वराधिष्ठानत्वेन ईश्वरे परित्यज्येति न विरुद्धम् । मत्पराः 'अहं वासुदेवः परो येषां ते सन्तोऽनन्येनैव अविद्यमानम् अन्यद्आलम्बनं विश्वरूपं देवम् आत्मानं मुक्त्वा यस्य योगस्य सोऽनन्ययोग स्तनैव योगेन समाधिना मां सगुणं ब्रह्म ध्यायन्तश्चिन्तयन्त उपासते मत्सामीप्यमुपगम्य तिष्ठन्ति ॥६॥

तेषाम् मदुपासनैकपराणां मय्यावेशितचेतसाम् मयि विश्वरूपे सर्वात्मके सोपाधिके सगुणे आवेशितं समाहितं चेतो येषां तेषाम् अहम् ईश्वरो मृत्युसंसारसागराद् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागरो दुस्तरत्वात् तस्मात्, समुद्धर्ता समुद्धारकर्ता न चिराद् न विलम्बात् किन्तु क्षिप्रमेव भवामि हे पार्थ इति त्वं जानीहीति शेषः ॥७॥

अवतरणम्—तस्मात् सगुणभगवन्निष्ठायां प्रयतनीयम् यतोऽधिकतर-क्लेशं विनैव भगवन्निष्ठानां सगुणशरणानां समुद्धारः, इत्याह—मयीति ।

व्याख्या—मय्येव सर्वात्मके विश्वरूपे सगुणे ईश्वरे मनः संकल्पविक-ल्पात्मकम् अन्तःकरणम् आधत्स्व स्थापय । मयि मय्येव बुद्धिं च अध्यवसायं

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।।९।।
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ।।१०।।
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ।।११।।

---

कुर्वतीम् निवेशय स्थापय । ततस्तव किं स्यादिति श्रृणु—एवं कुर्वन् मत्प्रसादाल्लब्धज्ञानः सन् क्रमेण मय्येव मयि विश्वेश्वरे निवसिष्यस्येव मदात्मना निवासं करिष्यसि एव अत ऊर्ध्वम् प्रारब्धभोगेन एतच्छरीरपातात्परम् । न संशयः अत्र संशयो न कर्तव्यः ।।८।।

अवतरणम्—अत्र अशक्तं प्रति सुगमोपायमाह कृपानिधिर्भगवान्—अथेति ।

व्याख्या—हे धनञ्जय, अथ एवम्, यथा अवोचाम तथा यदि मयि ईश्वरे चित्तं स्थिरम् अचलं यथा स्यात् तथा समाधातुं स्थापयितुं न शक्नोसि अचलं कर्तुं न पारयसि तर्हि ततः पश्चाद् अभ्यासयोगेन चित्तस्य एकस्मिन् आलम्बने आभ्यन्तरे वाह्ये वा प्रतिमादौ सर्वतः समाहृत्य पुनः पुनः स्थापनम् अभ्यासस्तत्पूर्वको योगः समाधानलक्षणः तेन मां विश्वरूपम् आप्तुं प्राप्तुम् इच्छ प्रार्थयस्व ।।९।।

द्वैतप्रपञ्चाऽभिनिवेशाद्—अभ्यासाधीनेऽपि योगेऽसामर्थ्यादप्रवृत्तौ पुनरुपायान्तरमाह भगवान्—अभ्यासेपीति । अथेत्यनुवर्तते । अथ यदि अभ्यासेऽपि पूर्वोक्तरूपे असमर्थोसि अशक्तोऽसि तर्हि मत्कर्मपरमो भव । मदर्थं कर्म मत्कर्म, तत्परमस्तत्प्रधानः स भव । मदर्थं कर्माण्यपि अभ्यासेन विना केवलं कर्माण्यपि नित्यनैमित्तिकानि एकादश्युपवाससान्तपननामसंकीर्तनादीनि कुर्वन् सिद्धिम् मोक्षम् सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेण अवाप्स्यसि ।।१०।।

अवतरणम्—बहिर्विषयाकृष्टचेतस्त्वाद् भगवदर्थकर्मपरतायामपि अशक्तं प्रति उपायान्तरमाह कृपानिधिः श्रीभगवान्—अथैतदिति ।

व्याख्या—अथ यदि पुनर् एतदपि यदुक्तं मत्कर्मपरमत्वमिति तद् अपि कर्तुम् अशक्तोऽसि तर्हि मद्योगमाश्रितः सन् क्रियमाणानि कर्माणि मयि

श्रेयो हि ज्ञानमभ्यासाज् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥

---

समर्प्य यत् तेषामनुष्ठानं स मद्योगस्तम् आश्रितः सन् ततस्तदनन्तरं यतात्मवान् संयतचित्तश्च सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं कुरु । 'मया तावद् ईश्वराज्ञया ईश्वरे समर्प्य यथाशक्ति कर्माणि कर्तव्यानि । तत्फलं दृष्टमदृष्टं वा भगवत्प्रीतेरन्यद् नेच्छामि' इत्येवं कर्मसु वर्तमानो भगवत्प्रसादेन कृतार्थो भविष्यतीति तात्पर्यम् । पूर्वत्र मत्कर्मपरमो भवेत्युपदेशः । इह तु यथाशक्ति क्रियमाणानां कर्मणां फलत्यागं कुरु, फलत्यागपरमो भवेत्युपदेश इति विशेषः ॥११॥

अवतरणम् —इदानीं सर्वकर्मफलत्यागं स्तौति—श्रेय इति ।

व्याख्या—अभ्यासाद् ज्ञानार्थं श्रवणाऽभ्यासात्, आत्माऽनिश्चयपूर्वकाद् ध्यानाऽभ्यासाद्वा ज्ञानं शास्त्रयुक्तिभ्याम् आत्मनिश्चयः श्रेयः प्रशस्यतरम् । हीति निश्चयः । प्रसिद्धं वा । साक्षात्कारहेतुत्वादितिभावः । ज्ञानात् शास्त्रयुक्तिकृतात्मनिश्चयाद् ध्यानशून्याद् ध्यानं शास्त्रयुक्तिकृतात्मनिश्चयपूर्वकम् आत्मध्यानं विशिष्यते विशिष्टमस्ति । शीघ्रसाक्षात्कारहेतुत्वादिति भावः । ध्यानात् शास्त्रयुक्तिकृतात्मनिश्चयपूर्वकाद् आत्मध्यानात् कर्मफलत्यागो विशिष्यते श्रेयान् अस्ति । कर्मफलत्यागस्य विशिष्टत्वे हेतुमाह—त्यागादिति । त्यागात् कर्मफलत्यागात् पूर्वश्लोकोक्तस्य मद्योगमाश्रितस्य यतात्मवतः साधकस्य अनन्तरम् अनन्तरमेव शान्तिरुपशमः सहेतुकस्य संसारस्य निवृत्तिः स्याद् न तु कालाऽन्तराऽपेक्षया ॥ ननु कर्मफलत्यागमात्रस्य सद्यः शान्तिकरत्वे 'सम्यग्धीरेव शान्तिकरी नाऽन्यद्' इति श्रुतिस्मृतिप्रसिद्धिर्विरुद्ध्येत 'तरति शोकम् आत्मवित्' 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'ज्ञानादेव तु कैवल्यम्' 'ऋते ज्ञानान्न मोक्षः' यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' 'ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाधिगच्छति' इत्यादिरितिचेद् अत्र भाष्यकृतः—'अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायाऽनुष्ठानाऽशक्तौ सर्वकर्मणां फलत्यागः श्रेयः साधनम् उपदिष्टम्, न प्रथममेव, अतश्च श्रेयो हि ज्ञानम् अभ्यासादिति उत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते सम्पन्नसाधनाऽनुष्ठानाऽशक्तौ अनुष्ठेयत्वेन

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१३॥

---

श्रुतत्वात्, केन साधर्म्येण स्तुतित्वम् ? 'यदा सर्वे प्रमुच्यन्ते (कठो० ६।१४) इति सर्वकामप्रहाणाद् अमृतत्वम् उक्तं तत्प्रसिद्धम् । कामाश्च सर्वे श्रौत-स्मार्तसर्वकर्मणां फलानि । तत्त्यागे च विदुषो ज्ञाननिष्ठस्य अनन्तरैव शान्ति-रिति । सर्वकामत्यागसामान्यम् अज्ञकर्मफलत्यागस्य अस्ति इति तत्सामा-न्यात् सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथा अगस्त्येन ब्राह्मणेन समुद्रः पीत इति इदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात् स्तूयन्ते । एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयः साधनत्वमभिहितम् ॥' इति प्राहुः । एवञ्च कर्मफलत्यागादनन्तरं शान्तिरिति वाक्यस्य भाष्योक्तरीत्या प्ररोचन-फलकत्वेन स्तुतिमात्रपरत्वादर्थवादत्वेन न दर्शितश्रुत्यादिविरोधः स्वार्थे तात्पर्याऽभावाद् 'विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवाद-स्तद्धानादर्थवादस्त्रिधा मतः ॥' इत्युक्तेः । तथाहि 'येत्वक्षरमनिर्देश्यम् अव्यक्तं पर्युपासते' इत्यादिना अक्षरोपासनादीनां सर्वकर्मफलत्यागा-न्तानां पूर्वपूर्वोपदिष्टसाधनानाम् अनुष्ठाने अशक्तस्यैव उत्तरोत्तरसाधन-मुपदिष्टम्, फलत्यागे चोपदेशपर्यवसानं कृतम् । न तु पूर्वपूर्वसाधनानु-ष्ठानशक्तस्योत्तरोत्तरसाधनमुपदिष्टम् । तस्माच्छक्तस्य अधिकारिणः पूर्वपूर्व-साधनानुष्ठानमेव समीचनम् इति स्पष्टमेव ध्वनितम् । तथा च अक्षरब्रह्मो-पासनायां सर्वोत्कृष्टसाधनत्वेन प्रोक्तायां सम्यग्दर्शनस्य प्राधान्येन सम्यग्द-र्शनादनन्तरमेव मोक्षसिद्धिरिति भवत्येकवाक्यता पूर्वोदाहृतश्रुतिस्मृति-वचनानाम् इत्यलम् ॥१२॥

अवतरणम्—अत्र च आत्मेश्वरभेदं व्यावहारिकमाश्रित्य विश्वरूपे ईश्वरे चेतःसमाधानलक्षणो योग उक्तः । कर्मानुष्ठानादि चेश्वरार्थमुक्तम् । पारमार्थिकम् आत्मेश्वराऽभेदमाश्रित्य तु अक्षरब्रह्मोपासनमुक्तम् । 'अथैत-दप्यशक्तोऽसि' इति अज्ञानकार्यसूचनाद् न अभेददर्शिनोऽक्षरब्रह्मोपासकस्य कर्मयोग उपपद्यते इति दर्शितम् । अभेददर्शिनः पण्डितस्य अज्ञानाऽभावात् । तथा कर्मयोगिनोऽक्षरब्रह्मोपासनाऽनुपपत्तिरपि दर्शिता तेनैव वाक्येन तस्य तत्राऽसामर्थ्यात् । अपि च अक्षरोपासकानां स्वातन्त्र्यमुक्तं कैवल्यलाभे 'ते प्राप्नुवन्ति मामेव' इति । इतरेषां तु ईश्वराधीनत्वरूपं पारतन्त्र्यमुक्तं

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर् यो मद्भक्तः स मे प्रियः ॥१४॥

---

कैवल्यलाभे—'तेषामहं समुद्धर्ता' इति अक्षरोपासका हि ईश्वरस्य आत्मभूता अभिमता अभेददर्शित्वाद् 'ज्ञानी त्वात्मैव मे मतम्' इति । एवम् अक्षरस्वरूपा एव ते इति तेषां-समुद्धरणकर्मत्ववचनम् अपेशलं स्यात् । यस्माच्च अर्जुनस्य अत्यन्तमेव हितैषी भगवान् तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति—'कुरु कर्मैव' इत्यादाविति तस्मात् कर्मयोगस्य अक्षरोपास्तेश्च युगपद् एकत्र अयोग इति दर्शितं भवति । न च हि आत्मानम् ईश्वरं प्रमाणतो बुद्ध्वा कस्यचिद् गुणभावं जिगमिषति कश्चिद् ईश्वरत्वगुणत्वयोर्विरोधात् । तस्माद्-अक्षरोपास्तिकर्मयोगयोरेकत्राऽयोगाद् वक्ष्यमाणस्य धर्मजातस्य अज्ञ-कर्मिणां साकल्येनाऽयोगाद् अक्षरनिष्ठानामेव तद् वक्तव्यम् । अविरुद्धांशस्य तु सर्वार्थत्वम् इष्टमेवेत्याशयेन भगवान् अक्षरोपासकानां सम्यग्दर्शननिष्ठानां सर्वकर्मसंन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादि धर्मजातं साक्षाद् अमृतत्वकारणं-वक्ष्यामीति प्रवर्तते—अद्वेष्टेति ।

व्याख्या—'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति (७।१७) यत्सूचितं सप्तमे भगवता तदिह प्रपञ्च्यते-अद्वेष्टेति । भक्तानां मध्ये यो मद्भक्तः सर्वभूतानां सर्वप्राणिनाम् अद्वेष्टा आत्मनो दुःखहेतुमपि न किञ्चिद् भूतं द्वेष्टि, सर्वाणि भूतानि आत्मत्वेन हि पश्यति । मैत्रः मित्रस्य भावो मैत्री तया वर्तते इति मैत्रः, सर्वभूतानामिति तन्त्रेण उभयतः संबध्यते । करुण एव च करुणा कृपा, दुःखितेषु दया, तद्वान् करुणः सर्वभूताऽभयप्रदः, संन्यासीत्यर्थः । 'अभयं सर्वभूतेभ्यो दत्त्वा संन्यासमाश्रयेत्' इति स्मृतेः । निर्ममो ममेतिप्रत्ययवर्जितः देहेऽपीतिशेष इत्यानन्दगिरिः । निरहङ्कारो निर्गतोऽहंप्रत्ययः वृत्तस्वाध्यायादिकृताहङ्कारान्निष्क्रान्त इति यावत् । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य सः, क्षमी क्षमावान् आक्रुष्टोऽभिहतो वा अविक्रिय एवासीनः, सततं संतुष्टः नित्यं देहस्थितिसाधनस्य लाभे अलाभे च उत्पन्नाऽलंप्रत्ययः, तथा गुणवल्लाभे तद्विपर्यये च सततं संतुष्टः, योगी समाहितचित्तः सततमिति संबध्यते । यतात्मा संयतस्वभावः, 'कार्यकरणसंघातः स्वभावशब्दार्थ' इत्यानन्दगिरिः दृढनिश्चयः दृढः स्थिरो

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षाऽमर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥**
**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥**

---

(स्थिरत्वं कुतर्कादिना अनभिभवनीयत्वम् इति चानन्दगिरिः)। निश्चयोऽध्यवसायो यस्य आत्मतत्त्वविषये सः (तथा) मय्यर्पितमनोबुद्धिः मयि मय्येव अर्पिते स्थापिते मनः संकल्पात्मकम् बुद्धिरध्यवसायलक्षणा यस्य संन्यासिनः सः, य ईदृशः श्लोकद्वयोक्तविशेषणः, मद्भक्तः परमार्थज्ञानलक्षणां मद्भक्तिमाश्रितः स मे मम प्रियः प्रीतिपात्रमस्तीति शेषः ॥१३-१४॥

अवतरणम्—उद्वेगादिराहित्यमपि ज्ञानवतो विशेषणम् इत्याह—यस्मादिति ।

व्याख्या—यस्मात्संन्यासिनो लोको नोद्विजते न उद्वेगं प्राप्नोति। न संतप्यते न संक्षुभ्यते, (तथा) यः संन्यासी लोकाद् न उद्विजते च न उद्वेगं प्राप्नोति च। (तथा) यः हर्षाऽमर्षभयोद्वेगैर्हर्षश्च अमर्षश्च भयञ्च उद्वेगश्च तैः मुक्तो रहितः। हर्षः प्रियलाभे अन्तःकरणस्य उत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः। अमर्षोऽभिलषितप्रतिघाते असहिष्णुता परकीयप्रकर्षस्य। भयं त्रासः। उद्वेग उद्विग्नता। स च ईदृशविशेषणवांश्च (परमार्थज्ञानी मद्भक्तः) मे मम प्रियः। चकारात् सर्वेषां पूर्वोक्तानां वक्ष्यमाणानां च ज्ञानवतो विशेषणानां संग्रहः। उद्वेगस्य पुनर्ग्रहणं तस्य त्यागे प्रयत्नाधिक्यमपेक्ष्यते इति सूचयति ॥१५॥

अवतरणम्—निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याह—अनपेक्ष इति ।

व्याख्या—देहेन्द्रियविषयसम्बन्धादिषु भोगोपकरणेषु अज्ञजनाऽपेक्षाविषयेषु अनपेक्षो निःस्पृहः, शुचिर्बाह्येन आभ्यन्तरेण च शौचेन संपन्नः, दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत् प्रतिपत्तुं समर्थः। उदासीनो न कस्यचित्पक्षं मित्रादेर्भजते यः स यतिः। गतव्यथः गता नोत्पन्ना व्यथा भयं परैस्ताडितस्यापि यस्य सः। 'गतव्यथो गतभयः' इति भाष्यम्। 'न च क्षमी इत्यनेन पौनरुक्त्यमिति वाच्यम् प्रत्युत्पन्नायामपि व्यथायाम् अपकर्तृषु अनपकर्तृत्वं क्षमित्वमित्यभ्युपगमादित्यानन्दगिरिः। सर्वारम्भपरित्यागी आरभ्यन्ते इत्या-

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाऽशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानाऽपमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१८॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्-भक्तिमान् यः स मे प्रियः ॥१९॥

रम्भाः इहामुत्रफलभोगार्थानि कामहेतुकानि कर्माणि, तान् परित्यक्तुं शीलम् अस्येति, सर्वकर्मपरित्यागशील:। ईदृशो यो मद्भक्तः परमार्थज्ञानलक्षणां भक्तिमाश्रितः स मे मम प्रियः प्रीतिविषयः ॥१६॥

अवतरणम्—द्वेषहर्षशोककाङ्क्षादिराहित्यमपि ज्ञानिनो लक्षणम् इत्याह—यो नेति।

व्याख्या--(किञ्च) यो मद्भक्तिमान् न हृष्यति इष्टप्राप्तौ, न द्वेष्टि अनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न काङ्क्षति न च अप्राप्तं किञ्चित् प्राप्तुमिच्छति। (तथा) शुभाऽशुभपरित्यागी शुभाऽशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी। एवं भूतो यो मद्भक्तिमान् परमार्थज्ञानी स मे मम प्रियः॥ "अद्वेष्टा सर्वभूतानां" इत्यत्र सर्वभूतेषु सामान्यद्वेषाऽभावः स्वाभाविक उक्तः अत्र तु अनिष्टप्राप्तौ तत्प्रयुक्तद्वेष-विशेषाऽभाव इति अपौनरुक्त्यम्। 'सर्वारम्भपरित्यागीत्यनेन वेदान्ते नित्य-नैमित्तिककाम्यकर्माऽतिरिक्तसर्वारम्भपरित्यागीति सर्वपदसंकोचो माभूदित्यत उक्तं शुभाऽशुभपरित्यागीति' धनपतिः ॥१७॥

अवतरणम्--शत्रुमित्रमानापमानशीतोष्णसुखदुःखेषु समत्वरूपम् अवि-कृतचित्तत्वं सर्वत्र सङ्गविवर्जितत्वं च तत्त्वविदो विशेषणमित्याह—सम इति।

व्याख्या - शत्रौ शातनकर्तरि च मित्रे प्रीतिकर्तरि च सम एकरूपः। तथा मानापमानयोः पूजापरिभवयोः समो हर्षविषादरहितः, (तथा) शीतो-ष्णसुखदुःखेषु नियताऽनियतसुखदुःखयोजकेषु समो निर्विकारः। (तथा) सङ्ग-विवर्जितः सर्वत्र चेतने स्त्र्यादौ अचेतने चन्दनादौ च सङ्गेन आसक्त्या विवर्जितो रहितः ॥१८॥

वाग्यतत्वादिविशेषणमपि ज्ञाननिष्ठस्य-अस्तीत्याह-तुल्येति। (किञ्च) तुल्यनिन्दास्तुतिः निन्दा च स्तुतिश्च तुल्ये यस्य सः। निन्दा दोषसंकीर्तनम्।

**ये तु धर्म्याऽमृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥१२॥

---

स्तुतिर्गुणकथनम् । मौनी मुनेर्भावो मौनं तदस्यास्तीति मौनी मौनधारी, संयतवागित्यर्थः । येन केनचित् शरीरस्थितिमात्रसाधकेन वस्तुना संतुष्टः संजातालंप्रत्ययः । तथा चोक्तम्—'येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी स्यात् तं देवा ब्राह्मणं विदुः ।!' (महा० शा० २४५।१२) इति । (किञ्च) अनिकेतः—निकेत आश्रयो निवासो नियतो न विद्यते यस्य सः । 'न कुट्यां नोंदके सङ्गो न चैले न त्रिपुष्करे । नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥' इति स्मृत्यन्तरात् । एतेन नियतनिवासराहित्यमपि ज्ञानवतो विशेषणम् इत्युक्तम् । (तथा) स्थिरमतिः स्थिरा परमार्थवस्तुविषया मतिर्यस्य सः । एवं भूतो भक्तिमान् परमार्थज्ञानलक्षणभक्तियुक्तो नरः यः स मम प्रियः प्रीतिविषयोऽस्ति ॥ 'पुनःपुनर्भक्तिग्रहणम् अपवर्गमार्गस्य परमार्थज्ञानस्य उपायत्वार्थम्' इत्यानन्दगिरिः ॥१९॥

अवतरणम्—'अद्वेष्टा सर्वभूतानाम्' इत्यादिना अक्षरस्योपासकानां निवृत्तसर्वैषणानाम् संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रकान्तमुपसंह्रियते—ये तु इति ।

व्याख्या—ये तु परमार्थज्ञाननिष्ठा अक्षरोपासकाः धर्म्याऽमृतम् धर्मादनपेतं धर्म्यम् धर्म्यं च तद् अमृतञ्चेति अमृतत्वहेतुत्वात् तद् इदं यथोक्तम् 'अद्वेष्टा सर्वभूतानाम्' (१२।१३) इत्यादिनाऽनन्तरोक्तं-धर्मजातम्, श्रद्दधानाः सन्तः पर्युपासते अनुतिष्ठन्ति । ते मत्परमाः अहम् अक्षरात्मा परमो निरतिशया गति र्येषां ते, भक्ताः उत्तमां परमार्थलक्षणां भक्तिम् आश्रिताः, मे मम अतीव प्रियाः प्रीतिविषयाः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च ममप्रियः' (७।१७) इति यत् पुरस्तात्सूचितं तदिह प्रपञ्च्य उपसंहृतम् 'भक्तास्तेऽतीव मे प्रियाः ।' इति । तु शब्दो ज्ञाननिष्ठेतरसकलभक्तव्यावृत्त्यर्थः । 'यो मद्भक्तः स मे प्रियः' (१२।१४)इत्यादौ सर्वत्रैव 'अतीव प्रियः' इत्यतीवपदस्यानुषङ्गः कर्तव्यः 'प्रियो हि ज्ञानिनोत्यर्थम्'(७।१७) इत्यनुरोधात् । अत्र भाष्ये—

'यस्माद् धर्म्यांऽमृतमिदं यथोक्तम् अनुतिष्ठन् भगवतो विस्णोः परमेश्वरस्य अतीव मे प्रियो भवति तस्मादिदं धर्म्याऽमृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणा इति वाक्यार्थः।' इत्युक्तम् ॥ तदेवम् अनेनाध्यायेन सोपाधाकिस्य ब्रह्मणो ध्यानाय तत्प्रसादेन तद्-द्वारा निरुपाधिकस्य ब्रह्मणोऽवगमाय वाच्यलक्ष्योभयरूपस्तत्पदार्थः प्रकाशितः। तत्पदार्थनिरूपणं नाम मध्यमं षट्कं च समापितम् ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां शाङ्करभाष्यानुसारिण्यां वंशीधरमिश्रकृतायां द्वादशोऽध्यायः श्रीकृष्णार्पणमस्तु ॥



## ॥ अथ वंशीव्याख्यायां त्रयोदशोऽध्यायः ॥

श्रीभगवान् उवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥

---

अवतरणम्—अतीतयोः प्रथमद्वितीयषट्कयोस्त्वंपदार्थतत्पदार्थौ समुक्तौ । अधुना अन्तिमं तृतीयं षट्कं वाक्यार्थनिष्ठं जीवब्रह्माऽभेदप्रतिपादकम् आरभ्यते । तत्राऽयं संबन्धः । सप्तमेऽध्याये ईश्वरस्य द्वे प्रकृती सूचिते । त्रिगुणात्मिका अष्टधा भिन्ना संसारहेतुत्वाद् अपरा क्षेत्रलक्षणा । परा चान्या जीवभूता ईश्वरात्मिका क्षेत्रज्ञलक्षणा । याभ्यां प्रकृतिभ्याम् ईश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तथा च क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते । अतीताऽनन्तराध्याये च 'अद्वेष्टा सर्वभूतानाम्' (१२।१३) इत्यादिना अध्यायपरिसमाप्त्यन्तेन वाक्यजातेन तत्त्वज्ञानिनां संन्यासिनां निष्ठा-यथा ते वर्तन्ते इत्येतद् उक्तम् । केन पुनस्तत्त्वज्ञानेन युक्तास्ते यथोक्तधर्माऽऽचरणाद् भगवतः प्रिया भवन्ति इत्येवमर्थं च अयमध्याय आरभ्यते । तत्र—श्रीभगवान् उवाच ।

व्याख्या—हे कौन्तेय, इदं दृश्यमानं शरीरम्—त्रिगुणात्मिका प्रकृतिः सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गसिद्धये देहेन्द्रियाद्याकारेण संहन्यते सोऽयं संघातः शरीरम् इत्युच्यते, शीर्यते इति शरीरम् इति व्युत्पत्तेः । क्षेत्रम् इत्येवम् अभिधीयते कथ्यते । क्षिणोति आत्मानम् अविद्यया, त्रायते च तं विद्यया इति । क्षीयते नश्यति—इति वा, क्षरति अपक्षीयते इति वा व्युत्पत्तेः । क्षेत्रवद् वाऽस्मिन् कर्मफलनिर्वृत्तेः । 'इतिशब्द एवं शब्द पदार्थकः' इति भाष्यम् । अर्थपदार्थकस्य क्षेत्रशब्दस्य इति शब्दबलाच्छब्दपदार्थकत्वम् । 'इतिशब्दोऽर्थविपर्यासकः' इति भगवान् महाभाष्यकारः । क्षेत्र शब्देन उच्यते इत्यर्थः । एवमेव 'क्षेत्रज्ञ इति' इत्यत्रापि बोध्यम् । यद्यपि त्रिगुणात्मिका अष्टधा भिन्ना अपरा प्रकृतिः सर्वाऽपि भाष्ये क्षेत्रशब्देन व्यवहृताऽस्ति—'क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण' इति सम्बन्धप्रदर्शने तथापि अत्र

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ।।२।।

---

श्लोके भगवता उपलक्षणार्थतया शरीरमात्रस्यैव अपरप्रकृतिपरिणामविशेषस्य क्षेत्रशब्दवाच्यत्वम् अभिहितम् । यतः क्षेत्रज्ञस्य विभुत्वेन सर्वत्र स्थितस्याऽपि शरीर एव अभिव्यक्तेर्दर्पण इव सवितृप्रकाशस्य शरीरेण सह भेदनिबन्धनस्य आधाराधेयभावस्य स्फुटा प्रतीतिर्जायते । अतः क्षेत्रज्ञात् क्षेत्रस्य क्षेत्राद्वा क्षेत्रज्ञस्य विवेकं स्फुटीकर्तुं शरीरमात्रस्येह क्षेत्रशब्दवाच्यत्वमभिहितमिति भावः एतत् क्षेत्रशब्दवाच्यं शरीरं यो वेत्ति विजानाति आपादतलमस्तकं स्वाभाविकेन ज्ञानेन विषयीकरोति—मम शरीरमिति विभक्ततया औपदेशिकेन ज्ञानेन वा विषयीकरोति—'देहो नात्मा दृश्यत्वाद्' इत्यादिरूपेण, स्वस्माद् विभक्ततयैव, तं शरीरस्य क्षेत्रस्य वेदितारम्, तद्विदः तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति जानन्ति पण्डितास्ते क्षेत्रज्ञ इति क्षेत्रज्ञ इत्येवम् प्राहुः क्षेत्रज्ञशब्देन कथयन्तीत्यर्थः ।।१।।

अवतरणम्—एवं क्षेत्रक्षेत्रज्ञौ परस्परभिन्नत्वेन कथितौ । किम् एतौ परस्परभिन्नत्वमात्रविषयकेण एतावन्मात्रेण ज्ञानेन ज्ञातव्यौ मोक्षसिध्यर्थं सांख्यानाम् इव ? नेत्युच्यते—क्षेत्रज्ञमिति ।

व्याख्या—हे भारत, भरतवंशोद्भव, सर्वक्षेत्रेषु ब्रह्मादिस्तम्बपर्यन्तसकलभूतशरीरेषु (विद्यमानं) क्षेत्रज्ञं चापि आत्मानं प्रत्यगात्मानं चापि मां परमेश्वरम् असंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु बहुषु य एकः क्षेत्रज्ञः प्रत्यगात्मा ब्रह्मादिस्तम्बपर्यन्ताऽनेकक्षेत्ररूपोपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययाऽगोचरं विजानीहीत्यभिप्रायः । 'चापीति निपातौ भिन्नक्रमौ जीवस्य अक्षरत्वज्ञानस्य देहादन्यत्वज्ञानेन समुच्चयस्य लाभाय—'न क्षेत्रज्ञं सांख्यवद् देहाद् दृश्याद् अन्यमेव केवलं विद्धि किन्तु क्षेत्रज्ञं मां चापि विद्धि' इति संबध्येते' इत्यानन्दगिरिः । तन्त्रेण यथाश्रुतक्रमौ अपि व्याख्येयौ 'क्षेत्रज्ञं चापि मां विद्धि चापीतिनिपाताभ्यां पूर्वश्लोकोक्तस्य क्षेत्रस्य अनुकर्षणात् न केवलं क्षेत्रमेव मां विद्धि क्षेत्रस्य मयि कल्पितत्वेन वस्तुतस्तद्रूपेण ममैव सत्त्वात्, किन्तु क्षेत्रज्ञं चापि मां विद्धी' त्येवम् इति वयम् । एतेन श्लोकपूर्वार्द्धेन प्रत्यगात्मपरमात्मनोरभेदः पारमार्थिकः प्रोक्तः । तज्ज्ञानं विशिनष्टि—क्षेत्रेति । क्षेत्रक्षेत्रज्ञयोर्दृश्यदर्शकयोः

परस्परविवेकज्ञानाय ज्ञेयभूतयोर्यद् ज्ञानम्, येन ज्ञानेन क्षेत्रक्षेत्रज्ञौ विषयी क्रियेते। अर्थात् क्षेत्रक्षेत्रज्ञविषयकं ज्ञानम् यत् तद् 'ज्ञानमि'ति, सम्यग्ज्ञानमिति, मतम् अभिप्रायो, ममेश्वरस्य विष्णोः, अस्तीतिशेषः। 'ननु भेदविषयत्वाद् न तज्ज्ञानं सम्यग्ज्ञानमिति युक्तम् इति चेन्न' तस्य विवेकज्ञानस्य महावाक्यार्थज्ञानद्वारा मोक्षौपयिकत्वेन सम्यक्त्वसिद्धेरिति भावः।' इत्यानन्दगिरिः। 'यस्मात् क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरम् अन्यद् अवशिष्टमस्ति तस्मात् क्षेत्रक्षेत्रज्ञेश्वरज्ञानं सम्यग्ज्ञानमिति मतम् अभिप्रायो ममेश्वरस्य विष्णोः' इति हि अत्र भाष्यार्थः। ननु सर्वक्षेत्रेषु एक एव ईश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत् तत ईश्वरस्य संसारित्वं प्राप्तम्, ईश्वरव्यतिरेकेण संसारिणोऽन्यस्याऽभावात्, संसाराऽभावप्रसङ्गो वा? तच्चोभयम् अनिष्टम् बन्धमोक्षतद्धेतुशास्त्राऽऽनर्थक्यप्रसङ्गात् प्रत्यक्षादिप्रमाणविरोधाच्च। प्रत्यक्षेण तावत् सुखदुःखतद्धेतुलक्षणःसंसार उपलभ्यते। जगद्वैचित्र्योपलब्धेश्च धर्माऽधर्मनिमित्तः संसारोऽनुमीयते। सर्वमेतद् अनुपपन्नम् आत्मेश्वरैकत्वे। इति चेद् न, आत्मेश्वरैक्येऽपि एकस्यैन अविद्यातः संसारित्वम् विद्यातश्च असंसारित्वम् इति व्यवस्थाया उपपत्तेः। ज्ञानाऽज्ञानयोरन्यत्वात्। 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' (कठो० १।२।४) 'श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते।' (कठो० १।२।२) इति श्रुतिभ्यां हि स्वरूपतः फलतश्च परस्परविलक्षणत्वेन विद्याऽविद्ये निर्दिष्टे। ताभ्यां संसारित्वाऽसंसारित्वव्यवस्थाया उपपत्तिः। इह च द्वे निष्ठे उक्ते ज्ञाननिष्ठा कर्मनिष्ठा चेति। 'सा=तु अविद्या सह कार्येण विद्यया हातव्या' इति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते। श्रुतयस्तावद्—'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' (केनो० २।५) 'तमेवं विद्वान् अमृत इह भवति' 'नान्यः पन्था विद्यतेऽयनाय' (तै० २।४) 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३।२।९) इति। अविदुषस्तु 'अथ तस्य भयं भवति' (तै० २।७) 'अविद्यायामन्तरे वर्तमानाः (कठो० १।२।५) 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' आत्मविद्यः—'स इदं सर्वं भवति' (बृह० १।४।१०) यदा चर्मवद्' (श्वे० ६।२०)' इत्याद्याः सहस्रशः। स्मृतयश्च-अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (५।१५) 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः'(५।१९) 'समं पश्यन् हि सर्वत्र' (१३।२८) इत्याद्याः। न्यायतश्च–'सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति। अज्ञानतस्तत्र पतन्ति केचिद् ज्ञाने फलं पश्य तथा

पतन्ति केचिद् ज्ञाने फलं पश्य तथा विशिष्टम् ॥' (महा० शा० २०१।१६) इति। तथा च देहादिष्वात्मबुद्धिरविद्वान् रागद्वेषादिप्रयुक्तो धर्माऽधर्मानुष्ठानकृद् जायते म्रियते चेत्यवगम्यते 'देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माऽधर्मप्रवृत्त्युपशमान्मुच्यन्ते । इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः । तत्रैवं सति क्षेत्रज्ञस्य ईश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति, घटाद्युपाधिभेदकृतम् आकाशस्य परिच्छिन्नत्वमिव। यथा वा 'अहं स्थूलः, अहं कृशः' इत्येवं देहाद्यात्मत्वम् अविद्याकृतम् आत्मनोभवति। सर्वजन्तूनां हि प्रसिद्धो देहादिषु अनात्मसु आत्मभावो निश्चितोऽविद्याकृतः । अतस्मिंस्तद्बुद्धिरविद्याकृतैव जायते। यथा पुरःस्थिते स्थाणौ अविद्यया पुमान् इति निश्चयो जायते तथैव देहादावनात्मनि आत्मधीरविद्यातो जायते इति निश्चयो भवति। स्थाणौ पुरुषत्वं भ्रान्त्या भातीत्येतावता पुरुषधर्मः शिरःपाण्यादिर्न स्थाणोर्भवति, स्थाणुधर्मो वा वक्रत्वादिर्न पुंसो भवति। यथा तथा न चैतन्यं धर्मो देहस्य स्यात् न देहधर्मो वा स्थूलत्वादिश्चेतनस्य स्यात्। सुखदुःखमोहेच्छादिश्च ज्ञेयस्य (अन्तःकरणस्यैव) धर्मो न ज्ञातुरात्मनः क्षेत्रज्ञस्य। अविद्याध्यारोपितत्वाद् देहस्य जरादिवत्। एतेन जरादिर्देहस्य धर्मः सुखादिश्च आत्मन इति वदन्तः परास्ताः। तत्रैवं सति कर्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्थो ज्ञातरि अविद्याध्यारोपित इति न तेन ज्ञातुः किञ्चिद् दुष्यति। यथा बालैरध्यारोपितेन आकाशस्य तलमलत्वादिना। एवं च सति आरोपितेन अधिष्ठानस्य वास्तविकस्पर्शाऽभावे सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगन्धमात्रमपि नाशङ्क्यम्। न हि क्वचिदपि लोके अविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः। सा च अविद्या अन्तःकरणस्यैव धर्मो न क्षेत्रज्ञस्य ज्ञातुः। आत्मानं न जानामि मनुष्योऽहम् इत्यादि प्रतीतिरपि आत्मनि क्षेत्रज्ञेऽन्तःकरणधर्मस्य अविद्यारूपस्य अज्ञानस्याऽध्यासादेव। अविद्याऽपि स्वयम् अध्यस्तैव अध्यासान्तरस्य कारणम्। न च अन्योऽन्याश्रयोऽनादित्वाद् बीजाङ्कुरवत्। लक्षणैक्याच्च जीवेश्वरयोरभेदः सिध्यति। तथाहि द्वितीयाऽध्याये 'अव्यक्तोऽयमचिन्त्योऽयम्। अविकार्योऽयमुच्यते'। 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥' (२।४।१५) इति जीवस्वरूपमुक्तम्। तथा द्वादशाऽध्याये ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥' (१२।३) इति हीश्वरस्वरूपमुक्तम्। लक्षणं हि तयोरव्यक्तत्वम् अचिन्त्यत्वम्, अचलत्वम् सर्वगतत्वञ्चेत्यादि

**तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥**

---

समानमेव एवं लक्षणैक्यान्न जीवेश्वरभेदः संभवति । न च तयोर्भेदे द्वयोः सर्वगतत्वं संभवति अन्योऽन्यव्यावृत्तत्वेन असर्वगतत्वापत्तेः न च जीवबहुत्वं संभवति व्यापकाऽनेकजीववादे भोगसाङ्कर्यप्रसङ्गात् अन्तःकरणरूपोपाधिभेदात्तु एकस्याऽपि आत्मनः क्षेत्रज्ञस्य ईश्वरस्य जन्ममरणबन्धमोक्षादिसर्वव्यवस्थाया उपपत्तेर्न पुरुषबहुत्वं सिद्धयति । जीवेश्वरयोरैक्यमित्यत्र जीवपदेन बुद्धयाद्युपाधिरहितस्य क्षेत्रज्ञस्य बोधः । यदा तु जीवपदेन बुद्धयाद्युपाधिसहितस्य क्षेत्रज्ञस्य ग्रहणं क्रियते तदा तु तस्य ईश्वराद् भिन्नत्वमेव । तस्मात् क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु इति क्षेत्रज्ञमित्येकवचनं सर्वक्षेत्रेषु इति बहुवचनं च मां विद्धीति च सर्वं सम्यग् उपपद्यते इत्यलम् ॥२॥

अवतरणम्—'इदं शरीरं कौन्तेय' इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकं प्रतिपत्तिसौकर्यार्थम् उपन्यस्यति-तत्क्षेत्रमिति । किञ्च यद्यपि चतुर्विंशत्या भेदैर्भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेण परिणतायामेव प्रकृतौ 'अहं स्थूलः, अहं कृशः, अहं मनुष्यः, अहं ब्राह्मणः' इत्यादिरूपेण अहंभावेन लोकस्य अविवेकः स्फुट इति तद्विवेकार्थम् भगवता 'इदं शरीरं क्षेत्रमित्याद्युक्तम् । तदेतत्प्रपञ्चयिष्यन् श्रोतुर्मनः समाधानाय तावत् संग्रहं प्रतिजानीते-तत्क्षेत्रमिति ।

व्याख्या—अत्र किञ्चेत्यतः प्राक्तनमवतरणं भाष्योक्तं बोध्यम् । किञ्चेत्यादिकं च श्रीधरस्वाम्युक्तमिति बोध्यम् । भाष्यस्य समान्यरूपत्वेन अस्याऽपि तदन्तर्गतत्वेन तदविरुद्धत्वमिति मयाऽत्र दर्शितमिदम् । तत् क्षेत्रम्—'इदं शरीरं (१३।१) कौन्तेय' इति निर्दिष्टं यत् तत्क्षेत्रमित्यर्थः । यच्च यत्स्वरूपवांश्च, यादृक् च यद्धर्मवांश्च, यद्विकारि यो विकारोऽस्य तद् यद्विकारि यद्विकारवांश्च, अत्रापि सामर्थ्याच्चकारस्य अनुकर्षः । सर्वत्र अस्तीति शेषः । यच्चास्ति, यादृक्चास्ति, यद्विकारि चास्तीत्येवम् । यतश्च यस्माच्च कारणाद्, यत् 'कार्यमुत्पद्यते' इति वाक्यशेषः । स च पूर्वश्लोके निर्दिष्टः—क्षेत्रज्ञश्च यः यत्स्वरूपवान्, यत्प्रभावश्च ये प्रभावा उपाधिकृताः शक्तयो यस्य स च, अस्तीति शेषः । तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वाऽवधारयेत्यर्थः ॥३॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥

---

अवतरणम्--विवक्षितं क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं स्तौति--श्रोतृप्ररोचनार्थम्--ऋषिभिरिति ।

व्याख्या--'तत्समासेन मे शृणु' इत्यतस्तदित्यनुवर्तते । तद् यथाविशेषितं क्षेत्रक्षेत्रज्ञयोर्याथात्म्यम्, ऋषिभिर्वसिष्ठादिभिर्योगवासिष्ठादौ बहुधा ध्यानधारणादिविषयत्वेन वैराजादिरूपेण बहुप्रकारैर्गीतं निरूपितं कथितम् । विविधैर्नाना प्रकारैश्छन्दोभिश्छन्दांसि ऋगादीनि ऋग्यजुःसामाथर्ववेदाः, तैर्मन्त्रात्मकैः शाखाभेदभिन्नैर्नित्यनैमित्तिककाम्यकर्मविषयैर्नानायजनीयदेवताप्रतिपादनपरैः पृथग् विवेकतो गीतं कथितम् । किञ्च विनिश्चितैर्निश्चितप्रत्ययोत्पादकैर्न संशयरूपैरित्यर्थः । हेतुमद्भिर्युक्तियुक्तैर्ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्म इति तानि पदानि उच्यन्ते तैरेव च 'आत्मेत्येवोपासीत' इत्यादिभिः क्षेत्रक्षेत्रज्ञज्ञानपरैः (उपनिषद्भिस्तद्व्याख्यानैश्च) क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतम् इत्यनुवर्तते । 'आत्मेत्येवोपासीत' इत्यादिपदेन 'ब्रह्मविद् आप्नोति परम्' 'अथ योऽन्यां देवताम् (बृह० १।४।७)' इत्यादीनि वाक्यानि ग्राह्याणि । अत्र 'अथातो ब्रह्म जिज्ञासा' इत्यादीन्यपि सूत्राणि गृहीतानीत्यानन्दगिरिः श्रीधरस्वामिधनपतिश्च । छन्दोभिरिति ऋगादिमन्त्रपरम् उपनिषदां ब्रह्मसूत्रपदशब्देन ग्रहणादिति भाष्याशयः ॥४॥

अवतरणम्--स्तुत्या अभिमुखीभूताय अर्जुनाय आह--महेति ।

व्याख्या--महाभूतानि महान्ति च सर्वविकारव्यापकत्वाद् भूतानि च तानि भूतत्वादिति महाभूतानि सूक्ष्माणि रूपरसादिस्वरूपाणि पृथिव्यप्तेजोवाय्वाकाशानां स्थूलानां मूलानि । 'महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद् भूतानि च सूक्ष्माणि । स्थूलानि तु इन्द्रियगोचरशब्देन अभिधायिष्यन्ते ।' इति भाष्यम् । अहङ्कारो महाभूतकारणम् अहं प्रत्ययलक्षणः । बुद्धिरहङ्कारकारणम् अध्यवसायलक्षणा । अव्यक्तम् एव च, न व्यक्तम् अव्य-

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ।।६।।**

---

वतम् अव्याकृतम् ईश्वरशक्तिः 'मम माया दुरत्यया' ७।१४) इत्युक्तम्, बुद्धेः कारणम् । 'एव शब्दः प्रकृत्यवधारणार्थः एतावती एव अष्टधा भिन्ना प्रकृतिः। च शब्दो भेदसमुच्चयार्थः' इति भाष्यम् । 'पञ्च तत्मात्राणि अहङ्कारो महद्-अव्याकृतम् इत्यष्टधाभिन्नत्वम् । मूलप्रकृत्या सह तन्मात्रादिभेदानाम् (उक्तानाम्) समुच्चयश्चकारार्थः' इति तत्रानन्दगिरिः । इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद् बुद्धीन्द्रियाणि, वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि तानि दश, एकं चेन्द्रियं मनः, एकादशं संकल्पाद्यात्मकम् 'पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः । तान्येतानि सांख्याश्चतुर्विंशतिस् तत्त्वानि आचक्षते' इति भाष्यम् । अत्र भाष्ये "शब्दादिविषयशब्देन (इन्द्रियगोचरत्वमापन्नाः) स्थूलानि भूतानि गृह्यन्ते" इत्यानन्दगिरिः । 'स्थूलानि तु इन्द्रियगोचरशब्देनाऽभिधायिष्यन्ते' इत्युक्तभाष्यादिति तद्भावः । तदेवम् इह श्लोके यानि महाभूतानीति, तानि सांख्यानाम् पञ्च तन्मात्राणीति । या त्विह बुद्धिरिति तत्सांख्यानां महत् तत्त्वम् इति । इह ये 'पञ्च चेन्द्रियगोचरा' इति ते सांख्यानां पञ्च महाभूतानीति यदिह अव्यक्तमिति सा मूलप्रकृतिरिति अव्यक्तमिति च साङ्ख्याः कथयन्ति । इयांस्तु अस्माकं विशेषः । सांख्यैः स्वतन्त्रा सत्या च प्रकृतिरिष्यते । अस्माभिस्तु मायारूपा मिथ्यारूपा ईश्वराधीना च प्रकृतिरिष्यते इति ।।५।।

अवतरणम्—अथेदानीम् आत्मगुणा इति यानाहुर्वैशेषिकास्तेऽपि क्षेत्रधर्मा एव, न तु क्षेत्रज्ञस्य (आत्मनः प्रत्यगात्मनः परमात्मनः) इत्याह भगवान्—इच्छेति ।

व्याख्या—इच्छा सुखे तत्साधने वा 'इदं मे भूयाद्' इति स्पृहात्मा चित्तवृत्तिः । द्वेषो दुःखे तत्साधने वा 'इदं माभून्मे' इति स्पृहाविरोधिनी निषेधात्मा चित्तवृत्तिः । सुखम् अनुकूलं प्रसन्नं सत्त्वम् । दुःखं प्रतिकूलं (कलुषं) रजः, संघातो देहेन्द्रियाणां संहतिः । चेतना देहेन्द्रियसंघातेऽभिव्यक्ता आत्मचैतन्याऽऽभासानुविद्धाऽन्तःकरणवृत्तिस्तप्ते लौहपिण्डेऽभिव्यक्तोऽनल इव, (तथा) धृतिः ययाऽवसादप्राप्तानि देहेन्द्रियाणि ध्रियन्तेसा । एता इच्छादयो धृत्यन्ता ज्ञेयत्वाद् अन्तःकरणस्य क्षेत्रस्यैव धर्माः सन्ति न तु क्षेत्रज्ञस्य अतः कारणाद्धर्मधर्मिणोरेकत्वादिच्छादयःक्षेत्रसञ्ज्ञका एव सन्ति ।

क्षेत्रसञ्ज्ञका भवन्ति। महाभूतादय इन्द्रिगोचरान्ताश्च पूर्वोक्ता अपि ज्ञेयत्वात् एतत् सविकारं क्षेत्रं, यस्य क्षेत्रभेदजातस्य संहतिर् 'इदं शरीरं क्षेत्रम्' इत्युक्तं तदेतत् सविकारं क्षेत्रंक्षेत्रभेदजातम्। अत्र भाष्यम्—"इच्छा यज्जातीयं सुखहेतुम् अर्थम् उपलब्धवान् पूर्वं पुनस्तज्जातीयम् उपलभमानस्तमादातुमिच्छति सुखहेतुरिति, सा इयम् इच्छा अन्तःकरणधर्मो ज्ञेयत्वात् क्षेत्रम्। तथा द्वेषो यज्जातीयम् अर्थं दुःखहेतुत्वेन अनुभूतवान् पुनस्तज्जातीयम् उपलभमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात् क्षेत्रमेव। तथा सुखम् अनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात् क्षेत्रमेव। दुःखं प्रतिकूलात्मकं ज्ञेयत्वात् तदपि क्षेत्रम्। संघातो देहेन्द्रियाणां संहतिस्तस्याम् अभिव्यक्ता अन्तःकरणवृत्तिस्तप्तइव लोहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना, साच क्षेत्रं ज्ञेयत्वात्। धृतिर्ययाऽवसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात् क्षेत्रम्। सर्वान्तःकरणधर्मोपलक्षणार्थम् इच्छादिग्रहणं यत उक्तं तदुपसंहरति-एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिना उदाहृतमुक्तम्। यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमिति उक्तं तत् क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम्॥" इति। एवं चाऽयमर्थः—क्षेत्रनिरूपणं सम्प्रति उपसंहरति-एतदिति। क्षेत्रम् मूलप्रकृतिरूपम् अव्यक्तम्, सविकारम् विकारेण बुद्ध्यादिना (महदादिना) तद्विकारेण च इच्छादिना सहितम्-एतद्–महाभूतादिधृत्यन्तभेदभिन्नम् क्षेत्रभेदजातम्, यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तम् उपक्रमे तत् समासेन संक्षेपेण उदाहृतमुक्तं व्याख्यातमिति॥ प्रकृतिस्तद्विकृतयश्च ज्ञेयत्वात् क्षेत्रसञ्ज्ञका एवेति भावः। अत्रानन्दगिरिः—"सर्वज्ञोक्तिविरोधाद् हेयं वैशेषिक मतमिति मत्वा उक्तम् भाष्यकृता' अथेदानीमात्मगुणा इति यान् आचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्' इति।" इत्याह। पुनश्च "देहेन्द्रियात्मवादौ व्युदसितुं क्षेत्रान्तर्भूतत्वमेव संघातस्य इति संघातं विभजते-देहेति। विज्ञानवादं प्रत्याह–तस्यामिति।" इत्याह पुनश्च –"तप्ते लोहपिण्डेवह्नेरभिव्यक्तिवदुक्तसंहतौ बुद्धिवृत्तिरभिव्यज्यते। तत्र च अग्निरभिव्यक्तो लोहपिण्डमेव अग्निबुद्धया ग्राहयति। तथात्मचैतन्यं बुद्धिवृत्तौ अभिव्यक्तं तामेव आत्मतया बोधयति अत स्तदाभासानुविद्धा सैव चेतनेत्युच्यते। सा च मुख्यचेतनं प्रति ज्ञेयत्वाद् अतद्रूपत्वान् क्षेत्रमेवेत्यर्थः।" इत्याह। अत्रेच्छादीनां क्षेत्रधर्मत्वेऽपि धर्मधर्मिणोरभेदात् क्षेत्रत्वं बोध्यम्। इच्छादिग्रहणस्य सर्वान्तःकरणधर्मोपलक्षणार्थतया अनुक्तानामपि संकल्पादीनां क्षेत्रत्वमुक्तम्। अतः प्रकरणसमाप्त्या प्रकरणविभागार्थं भगवतोपसंहृतम्-

अमानित्वमदम्भित्वम् अहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥
इन्द्रियार्थेषु वैराग्यम् अनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषाऽनुदर्शनम् ॥८॥

---

एतत् क्षेत्रमिति । अत एव समासेनेत्युक्तम् । इच्छादीनां मनोधर्मत्वे श्रुतिरपि प्रमाणम्—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (छा०) इति ॥६॥

अवतरणम्—'तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्–तत्समासेन मे शृणु' इति यत्प्रतिज्ञातं तत् 'महाभूतान्यहङ्कारः' इत्यारभ्य 'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' इत्यन्तेन श्रावितम् । 'स च यो यत्प्रभावश्च तत्समासेन मे शृणु' इति प्रतिज्ञातं च क्षेत्रज्ञं तत्प्रभावं च 'ज्ञेयं यत् तत् प्रवक्ष्यामि' (१३।१२) इत्यादिभिः श्रावयिष्यति यज्ज्ञानादमृतत्वं प्राप्यते। अधुना तु पूर्वं तज्ज्ञानसाधनगणम् अमानित्वादिलक्षणं यस्मिन् सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति यत्परः संन्यासी ज्ञाननिष्ठ उच्यते तम् अमानित्वादिगणं ज्ञानसाधनत्वाद् ज्ञानशब्दवाच्यं विदधाति (निरूपयति) भगवान् पञ्चभिः—अमानित्वमिति ।

व्याख्या—अमानित्वम्–मानिनो भावो मानित्वम् आत्मनः श्लाघनं तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वम् । अहिंसा अहिंसनम् प्राणिनाम् अपीडनम् । क्षान्तिः पराऽपराधप्राप्तौ अविक्रिया । आर्जवम् ऋजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनम् अन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानाम् अपनयनं शौचम् । स्थैर्यं स्थिरभावो मोक्षमार्गे एव कृताऽध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्य आत्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोध आत्मविनिग्रहः ॥७॥

किञ्च—इन्द्रियार्थेषु शब्दादिषु दृष्टाऽदृष्टेषु भोगेषु वैराग्यं विरागभावः । अनहङ्कारः अहङ्काराऽभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च, जरा च, व्याधयश्च, दुखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषाऽनुदर्शनम् । जन्मनि गर्भवासो योनिद्वारा निःसरणं च

असक्तिरनभिष्वङ्गः　　पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वम् इष्टानिष्टोपपत्तिषु ॥९॥
मयि चानन्ययोगेन　भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वम् अरतिर्जनसंसदि　　॥१०॥

---

दोषस्तस्य अनुदर्शनम् आलोचनम्, तथा मृत्यौ दोषानुदर्शनम्, तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनम् परिभूतताचेति । तथा व्याधिषु शिरोरोगादिषु दोषाऽनुदर्शनम्, तथा दुःखेषु-अध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषो दुःखदोषः तस्य जन्मादिषु पूर्ववद् अनुदर्शनम् । दुःखं जन्म, दुःखं मृत्युः, दुःखं जरा, दुःखं व्याधयः । दुःखनिमित्तत्वाद् जन्मादयो दुखं न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनाद् देहेन्द्रियविषयभोगेषु वैराग्यम् उपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानाम् आत्मदर्शनाय । एवं ज्ञानहेतुत्वाद् ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥८॥

किञ्च पुत्रदारगृहादिषु पुत्राश्च दाराश्च गृहाश्च ते आदयो येषां तेषु असक्तिः प्रीत्यभावः । पुत्रदारगृहादिष्वेव अनभिष्वङ्गः, अभिष्वङ्गो नाम सक्तिविशेष एव अनन्यात्मभावनालक्षणः । (अनन्यात्मभावना अन्यस्मिन् पुत्रादौ अनन्यात्मत्वस्य भावनेत्यर्थः, तादात्म्याऽभिमान इति यावत् । यथाऽन्यस्मिन् पुत्रादौ सुखिनि दुःखिनि वा अहमेव सुखी दुःखी च । जीवति मृते वा अहमेव जीवामि मरिष्यामि चेति बुद्धिः । इष्टानिष्टोपपत्तिषु इष्टानामनिष्टाञ्च उपपत्तयः संप्राप्तयः तासु नित्यं च नित्यमेव सदैव समचित्तत्वम् तुल्यचित्तता, हर्षविषादशून्यता । इष्टप्राप्तिषु न हृष्यति अनिष्टप्राप्तिषु च न कुप्यति न विषीदति । एतानि असक्त्यनभिष्वङ्गसमचित्तत्वानि ज्ञानार्थंत्वाज् ज्ञानशब्देनोच्यन्ते । एवम् अमानित्वादि च ज्ञानसाधनत्वाज्ज्ञान शब्देन उक्तम् ॥९॥

ज्ञानस्य साधनान्तर माह—मयि चेति । "मयि चेश्वरे अनन्ययोगेन अपृथक् समाधिना 'नान्यो भगवतो वासुदेवाद् परोऽस्ति अतः स एवास्माकं गतिः' इत्येवं निश्चिता अव्यभिचारिणी बुद्धिरनन्ययोगस्तेन" 'इति भाष्यम् । अव्यभिचारिणी न व्यभिचरणशीला भक्तिर्भजनम् । सा च ज्ञानं ज्ञानहेतुत्वात् । (तथा) विविक्तदेशसेवित्वम् विविक्तः स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादि विविक्तः शुद्धो देशस्तं

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तम् अज्ञानं यदतोऽन्यथा ॥११॥
ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तद् नासदुच्यते ॥१२॥

---

सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावः। विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्ते उपजायते। अतो विविक्तदेशसेवित्वं ज्ञानहेतुत्वाज्ज्ञानम् उच्यते। (तथा) जनसंसदि जनानां प्राकृतानां संस्कारहीनानाम् अविनीतानाम् कलहोन्मुखचित्तानां संसत् समवाय स्तत्र। न संस्कारवतां विनीतानां संसद् तत्रेति। तस्यास्तु ज्ञानोपकारकत्वमेव। अतः प्राकृतजनसंसदि अरतिर् अरमणम्। ज्ञानार्थत्वाज्ज्ञानम्। अत्रापि तज्ज्ञानमिति संबध्यते पूर्वत्र च ॥१०॥

साधनान्तरमाह—अध्यात्मज्ञाननित्यत्वम्। आत्मादिविषयं ज्ञानम् अध्यात्मज्ञानम् आत्माऽनात्मविवेक इत्यर्थः। तस्मिन् नित्यत्वम् नित्यभावः। तत्रैव निष्ठावत्त्वम्। विवेकनिष्ठो हि वाक्यार्थज्ञान समर्थो भवति। वाक्यार्थस्तत्त्वमसीतिवाक्यार्थः। (तथा) तत्त्वज्ञानार्थदर्शनम् अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानम् 'अहमस्मि परं ब्रह्मे'ति साक्षात्कारस्तस्यार्थो मोक्षः संसारोपरम स्तस्यालोचनम् तत्त्वज्ञानार्थदर्शनम्। तत्त्वज्ञानफलाऽऽलोचने सति हि तत्साधनानुष्ठाने प्रवृत्तिः—स्यादिति। एतद् अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तम् उक्तं विंशतिसंख्याकं वृन्दं यत् तद् 'ज्ञानम्' इति प्रोक्तं कथितं ज्ञानार्थत्वाद्। अतोऽन्यथा अस्माद्यथोक्ताद् अन्यथा विपर्ययेण मानित्वं दम्भित्वम्, हिंसा अक्षान्तिर् अनार्जवम् इत्यादि यत् तद् अज्ञानम् ज्ञानविरोधित्वात् संसारप्रवृत्तिकारणत्वाद् 'अज्ञानम्' इति विज्ञेयं परिहरणायेसि वाक्यशेषः। अत्र 'यत्परः संन्यासी ज्ञाननिष्ठ उच्यते' इति भाष्येण अयम् अमानित्वादिगणो विंशतिको ज्ञाननिष्ठाऽस्तीति गम्यते ॥११॥

अवतरणम्—यथोक्तज्ञानसाधनगणानुष्ठाननिष्पन्नेन ज्ञानेन किं ज्ञातव्यम्? इत्याकाङ्क्षायाम् 'स च यो यत्प्रभावश्च तत्समासेन मे शृणु' इति पूर्वप्रतिज्ञातमेवार्थं श्रावयितुं भगवानाह-षड्भिः—ज्ञेयमिति।

व्याख्या—श्रोतुरवधानाय पूर्वार्द्धमाह—ज्ञेयं यत्तदिति। ज्ञेयं यथोक्ताऽमानित्वादिज्ञानसाधनगणानुष्ठानसाध्यज्ञानेन ज्ञातव्यं यद् अस्ति तत्

समनन्तरमेव प्रवक्ष्यामि प्रकर्षेण यथावद् वक्ष्यामि कथयिष्यामि। प्ररोचनेन श्रोतुरभिमुखीकरणाय तज्ज्ञानस्य फलमाह--यदिति। यद् ज्ञेयं वक्ष्यमाणं ज्ञात्वा साक्षात्कृत्य साक्षात्कर्ता अमृतम् अमृतत्वं मोक्षम् अश्नुते प्राप्नोति। न पुनर्म्रियते इत्यर्थः। ज्ञेयमाह--अनादिमदिति। आदिरस्ति अस्येति आदिमद् न आदिमद् अनादिमत्, आदिरहितम्। 'मतुवर्थस्य बहुव्रीहिणा बोधयितुं शक्यत्वेऽपि मतुपः प्रयोगः श्लोकपूरणार्थः' इति भाष्यम्। 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति लाघवमूलकस्य न्यायस्य प्रत्यस्थादितिसूत्रे 'असुव्वतः' इति महाभाष्ये प्रयोगस्य दर्शनेन क्वचिदनाश्रयस्य बोधनादितिभावः। अत्र केचिद् 'अनादि' इत्यतः परत्र 'मत्परम्' इति पदं छिन्दन्ति, बहुव्रीहिणा लब्धेऽर्थे मतुप आनर्थक्यं माभूदिति अर्थविशेषं च दर्शयन्ति 'अहं वासुदेवः परः परा शक्तिर्यस्य तद् 'मत्परम्' इति। सत्यमेवं यद्यर्थः संभवति, किन्तु नार्थः संभवति। इह ब्रह्मणः सर्वविशेष-प्रतिषेधेनैव विजिज्ञापयिषितत्वाद् 'न सत् तन्नासदुच्यते' इति। विशिष्ट-शक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम्। तस्मान्मतुपः प्रयोगः श्लोकपूरणार्थं एवेति स्थितम्, उक्तरीत्या असाधुत्वस्याऽभावात्। परं निरति-शयं मयोच्यते इति प्ररोचनेन अभिमुखीकृत्याह–तद् ज्ञेयं परं ब्रह्म न सद् उच्यते न कार्यं कथ्यते। सदिति कार्यमित्यर्थः। अभिव्यक्तनामरूपत्वात कार्यस्य सत्त्वम्। न असद् उच्यते न कारणं कथ्यते असदिति कारणमित्यर्थोऽनभि-व्यक्तनामरूपत्वात्। परं ब्रह्म न कार्यं न च कारणम् किन्तु तदुभयविलक्षणं निर्विशेषं ( स्वप्रकाशचैतन्यमात्मरूपम् ) तद् अस्तीतिवाक्यार्थः। ननु परं ब्रह्म विधिमुखेन किं न निरूप्यते ( एवं तद् ) इति ? निषेधमुखेन तु निरूप्यते 'न सत् तन्नासदुच्यते' इति ? ज्ञेयं यत् तत्प्रवक्ष्यामि इति महता कण्ठरवेणोद्-घुष्य निषेधमुखेन निरूपणम् अननुरूपमिति चेन्न, ब्रह्मणो विधिमुखेन निरूप-णस्य असंभवान्निषेधमुखेनैव निरूपणस्य अनुरूपत्वात्। सर्वासु हि उपनिषत्सु 'ज्ञेयं' ब्रह्म 'नेति नेति' ( बृह० ४।४।२२ ) 'अस्थूलमनणु' ( बृह० ३।३।८ ) इत्यादि विशेषप्रतिषेधेनैव निर्दिश्यते न तु 'इदं तद्' इति विशेषविधानेन, तस्य निर्विशेषत्वेन वाचोऽगोचरत्वात्। तस्मिन् अविद्यया अध्यस्तानाम् अतद्धर्माणां निवृत्तेर्बोधनाय तु निषेधमुखेनैव ब्रह्मणो निरूपणस्य श्रुतिषु प्रसिद्धेः। ननु न तदस्ति किञ्चिद् वस्तु यद् अस्तिशब्देन न उच्यते। अथ अस्ति शब्देन नोच्यते, नास्ति तद् ज्ञेयम्। ज्ञेयञ्च तद्, अस्ति शब्देन न उच्यते चेति विप्रतिषिद्धम्। इतिचेद् मैवम्, न तावन्नास्ति ज्ञेयं तदिति नास्तिबुद्धेरविषय-

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।१३।।**

---

त्वात् । अतीन्द्रियत्वेन ब्रह्मणः शब्दप्रमाणैकगम्यत्वाद न इन्द्रियगम्यघटादिरिव ब्रह्म अस्तिनास्त्यन्यतरबुद्धिविषयम् । किन्तु तदुभयविलक्षणमेव । अत उक्तं निषेधमुखेन 'न सत् तन्नासद्' इति । अपि च ब्रह्म न केनापि शब्देनोच्यते शब्दानां जातिगुणक्रियासम्बन्धाऽन्यतमद्वारेण सङ्केतग्रहणापेक्षबोधजनकत्वात् । गौः शुक्लः चलः, गोमान् इत्यादौ तथा दृष्टत्वात् ब्रह्मणि तु जात्यादीनामाभावान्न तस्य शब्दगोचरता । अत एव श्रुतिरप्याह—'यतो वाचो निवर्तन्ते' ( तै० २।४।९ ) इति । ध्येयं ब्रह्म सगुणं तु विधिमुखेनापि शब्दविषय एवेत्यलम् ।।१२।।

अवतरणम्—ननु सदादिशब्दाऽविषयस्य ज्ञेयस्य ब्रह्मणोऽसत्त्वमेव स्यात् ? इत्याशङ्कायां सर्वप्राणिकरणोपाधिद्वारेण ज्ञेयस्य ब्रह्मणोऽस्तित्वंप्रतिपादयंस्तस्याऽसत्त्वाशङ्कां निवर्तयति पञ्चभिः सर्वत इति ।

व्याख्या—तद् ज्ञेयं ब्रह्म सर्वतः पाणिपादम् सर्वतः सर्वत्र पाणयः पादाश्च यस्य तद् सर्वतोऽक्षिशिरोमुखम्, सर्वतः सर्वत्र अक्षीणि शिरांसि मुखानि च यस्य तद् सर्वतः श्रुतिमत् सर्वतः सर्वत्र श्रुतयः सन्ति यस्य तद् अस्तितिशेषः । (तथा) लोके प्राणिनिकाये, सर्वं चराचरम्, आवृत्य संव्याप्य तिष्ठति स्थितिं लभते । अक्षिश्रवणवत्वम् अवशिष्टज्ञानेन्द्रियवत्त्वस्यापि उपलक्षणार्थम् । एवं पाणिपादमुखवत्त्वम्, अवशिष्टकर्मेन्द्रियवत्वस्यापि उपलक्षणार्थम् । सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो रथादिवदचेतनाः क्षेत्रज्ञाऽभिन्नचेतनब्रह्मशक्तिसद्भावनिमित्तकप्रवृत्तिमन्तोऽचेतनत्वादिति ज्ञेयब्रह्मसद्भावे लिङ्गानि सन्ति इत्येवं सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञाऽभिन्नज्ञेयब्रह्माऽस्तित्वं विभाव्यते । चेतनस्यैव (ब्रह्मणः) क्षेत्रोपधिना क्षेत्रज्ञत्वात् । क्षेत्रज्ञस्य च ब्रह्मणाऽभेदात् । अत एव 'स च यो यत्प्रभावश्च तत्समासेन मे शृणु' इति प्रतिज्ञातं क्षेत्रज्ञस्यैव सप्रभावस्य श्रावणं करोति भगवान् 'ज्ञेयं यत्—तत्प्रवक्ष्यामी'त्यादिनेति ध्येयम् । अन्यथा प्रतिज्ञातस्य न्यूनतापत्तिः । अत एव भाष्यकृतोक्तम् अमानित्वमित्यादिश्लोकावतरणे 'क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं 'ज्ञेयं यत् तत्प्रवक्ष्यामि' इत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान् ।' इति । उपाधिभूतं क्षेत्रं पाणिपादादिभिः प्रकारैरनेकधा भिन्नम् । क्षेत्रज्ञोपाधिभेदकृतं विशेषजातं मिथ्यैव

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

---

क्षेत्रज्ञस्येति तदपनयनेन ज्ञेयत्वमुक्तम् 'न सत् तन्नासदुच्यते' इति । उपाधिकृतं मिथ्यारूपमपि अस्तित्वाऽधिगमाय ज्ञेयधर्मवत् परिकल्प्य उच्यते 'सर्वतः पाणिपादं तदि'त्यादिना । 'तथाहि सम्प्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति ।' इति भाष्यम् । अनेन श्लोकेन सर्वतः पाणिपादादिकम् अध्यारोप्य 'न सत् तन्नासदुच्यते' इत्यनेन तस्य निषेधः (अपवादः) कृत इति बोध्यम् । 'ब्रह्मणः शक्तिःसन्निधिमात्रेण प्रवर्तनसामर्थ्यम् इत्यानन्दगिरिः ॥१३॥ उपाधिभूत—पाणिपादादीन्द्रियगणाऽध्यारोपणात् क्षेत्रज्ञाऽभिन्नस्य ज्ञेयस्य ब्रह्मणस्तद्वत्ताशङ्का मा भूदिति निरूपणार्थः श्लोक आरभ्यते—सर्वेन्द्रियगुणाभासमिति । सर्वेन्द्रियगुणाभासम् सर्वाणि च तानि इन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियरूपाणि अन्तःकरणे च बुद्धिमनसी इति सर्वेन्द्रियाणि अन्तःकरणबहिष्करणानि तेषां गुणैरध्यवसायसंकल्पश्रवणवचनादिभि र्व्यापारैराभासते अवभासते व्यापृतमिव गृह्यते यत् तत् सर्वेन्द्रियगुणाभासम् । सर्वेन्द्रियव्यापारैर्व्यापृतमिव अवभासमानमित्यर्थः । तथा च श्रुतिः -'ध्यायतीव लेलायतीव' (बृह० ४।३।७) इति । ज्ञेयं ब्रह्मेति संबन्धः । कस्मात्पुनः कारणाद् न व्यापृतमेवेति गृह्यते इत्यत आह—सर्वेन्द्रियविवर्जितम् । सर्वकरणरहितम् । अतो न करणव्यापारै र्व्यापृतं ब्रह्म । यस्तु-अयं मन्त्रः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेता ३।१९) इत्यादिः । स स्वेपाधिभूतसर्वेन्द्रियगुणानुगुण्यभजनशक्तिमद् ब्रह्मेत्येवं प्रदर्शनार्थो, न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः ।' 'अन्धो मणिमविन्दत' (तै० आ० १।११) इत्यादिमन्त्रार्थवत् तस्य मन्त्रस्यार्थः ।' इति भाष्यम् । यस्मात्सर्वकरणरहितं ब्रह्म तस्माद् असक्तं सर्वसंश्लेषरहितम्, (तथापि) सर्वभृच्चैव मायया सर्वमेव बिभर्ति धारयति च । सदास्पदं हि सर्वम् सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । यथा-ऊपरभूमिर्मरीचिकोदकेन कल्पितेन असक्ता भवति, अधिष्ठानतया सर्वं मरीचिकोदकं बिभर्ति च तथा ब्रह्माऽपि वस्तुतः सर्वसंश्लेषरहितमपि आरोपाधिष्ठानतया सर्वं बिभर्त्येवेति भावः । किञ्च ज्ञेयं ब्रह्म निर्गुणं सत्त्वरज-

बहिरन्तश्च भूतानाम् अचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

---

स्तमोभिर्गुणै रहितम्, (अथापि) गुणभोक्तृ च सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारेण परिणतानां गुणानां भोक्तृ उपाधिद्वारेण उपलब्धृ च विद्यते । सर्वभृत्त्वेन (सर्वाधिष्ठानत्वेन) गुणभोक्तृत्वेन च ज्ञेयब्रह्मणोऽस्तित्वं विभाव्यते इति वाक्यार्थः ॥१४॥

इतोऽपि ज्ञेयं ब्रह्म विभाव्यते बहिरिति । भूतानां प्राणिनां, बहिरन्तश्च देहाद् बहिस्तद् ब्रह्म विद्यते । भूतेभ्यो बहिर्बाह्यविषयादिरूपेण ब्रह्म विद्यते इत्यर्थः । भूतानाम् अन्तश्च ब्रह्म विद्यते प्रत्यगात्मभूतमित्यर्थः । 'बहिस्त्वक्पर्यन्तं देहम् आत्मत्वेन अविद्याकल्पितम् अपेक्ष्य तमेव अवधिं कृत्वा बहिरुच्यते । तथा प्रत्यगात्मानम् अपेक्ष्य देहमेवावधिं कृत्वा अन्तरुच्यते ।' इति भाष्यम् । बहिरन्तश्च इत्युक्ते मध्ये अभावे प्राप्ते इदमुच्यते--अचरं चरमेव चेति । बहिर्विद्यमानान्तर्विद्यमानयोर्मध्ये च यच्चराऽचरं जङ्गमस्थावरदेहाभासं तदपि तदेव ज्ञेयं ब्रह्मास्तीति संबन्धः । विषयादिरूपेण बहिर्विद्यमानस्य ब्रह्मणः प्रत्यगात्मरूपेणान्तर्विद्यमानस्य च ब्रह्मणो मध्ये च यद् भूतं नानाविधदेहात्मना भासमानं तदपि ज्ञेयं तत्त्वं सएवेत्यर्थः । यथा रज्जुः सर्पाभासः । ननु यदि अचरं चरमेव च व्यवहारविषयं सर्वं ज्ञेयं ब्रह्मैवास्ति किमिति सर्वैर्ब्रह्मेति न विज्ञायते इत्यत उच्यते-सूक्ष्मत्वादिति । सत्यम् । सर्वाभासं तत् तथापि व्योमवत् सूक्ष्मम् अतः सूक्ष्मत्वात् स्वेन रूपेण विदुषां ज्ञेयमपि अविदुषाम् अविज्ञेयम् अस्ति । विदुषां तु 'आत्मैवेदं सर्वम्' (छा० ७।२५।२) 'ब्रह्मैवेदं सर्वम्' (बृ० २।५।१) इत्यादि प्रमाणतो नित्यं विज्ञातं तद् । दूरस्थम् अविज्ञाततया अविदुषां वर्षकोट्यापि अप्राप्यत्वाद् दूरस्थम् । अन्तिके च तद् विदुषाम् आत्मत्वादिति समीपं च ब्रह्म । 'सूक्ष्मत्वम् अतीन्द्रियत्वम्'--इत्यानन्दगिरिः ॥ तथा च मन्त्रः--'तदेजति तन्नैजति तद् दूरे तद्वदन्तिके । तदन्तरस्य भूतस्य तदु सर्वस्यास्य बाह्यतः ॥' (ईशा.) इति ॥१५॥

ज्ञेयस्य ब्रह्मणोऽस्तित्वस्यानुमाने हेत्वन्तरमाह--अविभक्तमिति । किञ्च भूतेषु सर्वप्राणिषु अविभक्तञ्च प्रतिदेहं व्योमवत् तदेकमेवास्ति अभिन्नम् ।

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७॥

---

विभक्तमिव च स्थितम् देहेष्वेव विशेपेण भाव्यमानत्वात् (विभाव्यमानत्वात्) प्रतिप्राणि विभक्तेषु देहेषु देहतादात्म्येन प्रतीयमानत्वात् प्रतिदेहं विभिन्नमिव अनेकमिव च स्थितं विद्यते। कार्याणां स्थितिहेतुत्वाच्च ज्ञेयं ब्रह्म अस्तीत्याह—"भूतभर्तृच भूतानि बिभर्ति इति तद् ज्ञेयं–भूतभर्तृ च स्थितिकाले। प्रलयकाले ग्रसिष्णु ग्रसनशीलम्। उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलम्। यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य।" इति भाष्यम्। निमित्तोपादानतया प्रलये प्रभवे स्थितौ च कारणत्वाज्ज्ञेयं ब्रह्मास्तीति मन्तव्यमित्यभिप्रायः ॥१६॥

इतश्च ज्ञातव्यं ब्रह्मास्ति–ज्योतिषामिति। किञ्च सूर्यादीनां बुद्ध्यादीनां च प्रकाशकत्वादस्ति ज्ञेयं ब्रह्मेत्याह। तद् ज्ञेयं ब्रह्म ज्योतिषामपि आदित्यादीनामपि ज्योतिः प्रकाशकम्। आत्मचैतन्यज्योतिषा दीप्तानि हि आदित्यादीनि ज्योतींषि दीप्यन्ते 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभति' (श्वेता. उ. ६।१४) इत्यादिश्रुतिभ्यः। स्मृतेश्च 'यदादित्यगतं तेजस्तत्तेजो विद्धि मामकम्' (१५।१२) इत्यादेरिहैव। ननु ज्ञेयस्य ब्रह्मणोऽतमस्त्वेऽपि तमःस्पृष्टत्वं स्यादित्यत आह–तमसः परमुच्यते इति। तमसोऽज्ञानात् परम् अस्पृष्टमुच्यते। 'आदित्यवर्णं तमसः परस्तात्' (       ) इत्यादिभिः श्रुतिभिरितिशेषः। 'अमानित्वम्' इत्यारम्य 'तमसः परमुच्यते' इत्यन्तेन ग्रन्थेन ज्ञानसाधन-ज्ञातव्य-ज्ञानफलानि उक्त्वा सम्प्रति, ज्ञानादेर्दुःसम्पाद्यत्वबुद्ध्या प्राप्तावसादस्य साधकस्य उत्तम्भनार्थं, दयानिधिराह–ज्ञानम्, 'अमानित्वादि ज्ञानसाधनजातम् यदुक्तं तद्, ज्ञेयम् 'अनादिमत्परं ब्रह्म' इत्यारभ्य 'तमसः परमुच्यते' इत्यन्तेन यदुक्तं तत्, ज्ञानगम्यम् ज्ञानफलम् ज्ञेयमेव ज्ञातं सद् ज्ञानफलम् इति ज्ञानगम्यमुच्यते। ज्ञायमानं तु ज्ञेयमुच्यते इति विशेषः। तदेतत् त्रयमपि सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितम् विशेषेण स्थितम्, अस्तीतिशेषः। यतस्तत्रैव (हृदि एव) एतत्त्रयं विभाव्यते अतः प्रयत्नवता सुसम्पादनमेतदित्यभिप्रायः। 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.) इति हि स्वरूपलक्षणमुक्तं ब्रह्मणः श्रुत्या। अतः प्रमाणजन्यचेतोवृत्त्यभिव्यक्तसंविद्रूपं ब्रह्म, न भूतज्योतीरूपमितिबोध्यम्। 'आदित्यवर्णं' 'भारूपः' इत्यादि तु ब्रह्मणस्तमःस्वरूपत्वप्रतिषेधार्थमिति बोध्यम् ॥१७॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते ॥१८॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥

---

अवतरणम्—यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरम्यते—इति क्षेत्रमिति ।

व्याख्या—इति-एवम्, क्षेत्रं महाभूतादि धृत्यन्तम्, तथा ज्ञानम्—अमानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तम् ज्ञानसाधनजातम् ज्ञेयं च 'ज्ञेयं यत् तत्प्रवक्ष्यामि' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तम्, समासतः संक्षेपतः, उक्तं-कथितम् । "अस्मिन् सम्यग्दर्शने कोऽधिक्रियते इति उच्यते-मद्भक्तः-मयि-ईश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो 'यत्पश्यामि, श्रृणोमि स्पृशामि वा तत् सर्वं भगवान् वासुदेव एव' इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः सः" (इति भाष्यार्थः) एतद् यथोक्तं सम्यग्दर्शनं विज्ञाय लब्ध्वा मद्भावाय मम भावो मद्भावः—परमात्मभावस्तस्मै उपपद्यते कल्पते मोक्षं गच्छतीत्यर्थः । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते-महात्मनः ॥' (        ) 'ब्रह्मवेद ब्रह्मैव भवति' (मु.) इति च । ननु वक्तव्यान्तरे अवशिष्टे सति किमिति त्रितयमेव संक्षिप्योपसंहृतम् ? तत्राह भगवान् भाष्यकारः—'एतावान् सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्य उक्तः' इति ॥१८॥

अवतरणम्—प्रकृतिमित्यादिवक्ष्यमाणं नाऽनन्तरपूर्वग्रन्थसंबन्धि, किन्तु व्यवहितपूर्वग्रन्थसम्बद्धं विद्यते । तथाहि सप्तमेऽध्याये ईश्वरस्य द्वे प्रकृती उपन्यस्ते पराऽपरे क्षेत्रक्षेत्रज्ञलक्षणे । 'भूमिरापोऽनलो वायुः' इत्यादिना श्लोकेन (अपरेयमितस्त्वन्याम्) इत्यादिना च श्लोकेन । ततश्च 'एतद्योनीनि भूतानि' इत्यनेन तयोः प्रकृत्योः सकलभूतयोनित्वमुक्तम् । तत्र क्षेत्रक्षेत्रज्ञौ व्याख्याय शिष्टं तयोर्भूतयोनित्वं व्याख्यातुकामः 'क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वययोनित्वं कथं भूतानाम् ? भूतानामिव प्रकृत्योरपि किञ्चित्प्रकृत्यन्तरं स्यात् ? तस्याऽपि (प्रकृत्यन्तरस्य) अन्यत् किञ्चित्प्रकृत्यन्तरं स्यादिति अनवस्थानाद् नास्ति भूतयोनिता प्रकृतिद्वयस्येति आशङ्क्य समाधत्ते—प्रकृतिमिति ।

व्याख्या—प्रकृतिं पुरुषं चैव ईश्वरस्य द्वे पूर्वोक्ते प्रकृती एवेह प्रकृति-पुरुषौ स्तः। तौ। उभौ अपि द्वौ अपि, न त्वेकः पुरुष एव, अनादी न विद्यते आदिर्ययोस्तौ, विद्धि विजानीहि। नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम्। प्रकृतिद्वयवत्त्वमेव हीश्वरस्य ईश्वरत्वम्। याभ्यां प्रकृतिभ्यां भगवानीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते। तौ द्वौ अनादी सन्तौ (प्रकृतिपुरुषौ) संसारस्य जगतः कारणम्। अनादित्वात् तयोर्न प्रकृत्यन्तरापेक्षत्वमिति न अनवस्था, इति युक्तं तयोर्भूतयोनित्वं सप्तमोक्तमिति भावः। कथं तौ संसारस्य कारणम्? तत्राह—विकारांश्चेति। विकारांश्च बुद्ध्यादिदेहेन्द्रियान्तान् 'कार्यकरणकर्तृत्वे हेतुः' इत्यादि श्लोके कार्यत्वेन वक्ष्यमाणान्, गुणांश्चैव सुखदुःखमोहप्रत्ययाकारपरिणतान् सत्त्वरजस्तमोरूपान् तत्रैव श्लोके 'करण' शब्देन वक्ष्यमाणान्, प्रकृतिसंभवान् प्रकृतिरीश्वरस्य बुद्ध्यादिसकलविकारकारणीभूतशक्तिस्त्रिगुणात्मिका माया नाम, सा संभवो येषां विकाराणां गुणानां च तान् प्रकृतिसंभवान् प्रकृतिपरिणामान् विद्धि जानीहि प्रकृतेरनादित्वे बुद्ध्यादीनां विकाराणां सुखदुःखादीनां च तत्कार्यत्वे च पुरुषस्य निर्विकारत्वम् निर्गुणत्वञ्च सिद्ध्यति, पुरुषस्य कथं भूतयोनित्वम् इति तु उत्तरश्लोके वक्ष्यते। अत्र केचिद् 'अनादी' इति पदे न आदी अनादी इति नञ्तत्पुरुषसमासं वर्णयित्वा प्रकृतिपुरुषौ जगतः आदिकारणे न किन्तु ईश्वरः साक्षादेव जगत्कारणम् प्रकृतिपुरुषयोरपि ईश्वर एव कारणमिति वदन्ति। यदि पुनः प्रकृतिपुरुषौ नित्यौ एव स्यातां तत्कृतमेव जगत्स्यान्नेश्वरकृतमिति तेषां भावः। तदसत्, प्राक् प्रकृतिपुरुषयोरुत्पत्तेरीश्वरस्य ईशितव्याऽभावाद् अनीश्वरत्वप्रसङ्गात्। महाप्रलयान्ते पुनः नवीनकल्पारम्भे संसारस्य निर्निमित्तत्वापत्तौ महाप्रलयं विना अनिर्मोक्षप्रसङ्गात्, शास्त्रानर्थक्यप्रसङ्गाद् बन्धमोक्षाऽभावप्रसङ्गाच्च। किञ्च प्रकृतेरनादित्वाऽभावे प्रकृतिपरिणामभूतान्तःकरणोपाधिकस्य जीवस्य अनादे र्जीवत्वमेव न स्यात्, तस्य अनादित्वाऽभावे तु आदिभूतस्य जीवस्य प्राक्तनधर्माऽधर्माऽभावात् तं सुखदुःखाभ्यां योजयितुरीश्वरस्य वैषम्यनैर्घृण्यदोषौ स्याताम्। कृतविप्रणाशाऽकृताभ्यागमदोषप्रसङ्गश्च तस्य सादित्वे सान्तत्वे च स्याताम्। नित्यत्वे-पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत्। अतः प्रकृतेः पुरुषस्य च अनादित्वं नित्यत्वरूपं श्रुतिसिद्धम् एष्टव्यमेवेत्यभिप्रायः॥ अत्र केचिद् अन्यथाऽवतरणं कल्पयन्ति। 'यतश्च यत्' 'स च यो यत्प्रभावश्च' इति व्याख्यातुमाह—प्रकृतिं पुरुषं चैवेति। इति। तदुपेक्ष्यम्। भाष्यविरोधाद् 'एतत्क्षेत्रं

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥

---

समासेन सविकारमुदाहृतम्' इति, 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तम्' इत्येवं च 'क्षेत्रक्षेत्रज्ञोभयप्रकरणोपसंहारपरकमूलविरोधाच्चेतिदिक् ॥१९॥

अवतरणम्—के पुनः पूर्वश्लोके उक्ता विकारा गुणाश्च प्रकृतिसंभवाः सन्ति ? कथञ्च पुरुषः संसारकारणम् (भूतयोनिरिति) ? इत्यत आह—कार्येति ।

व्याख्या—अत्र भाष्यम्—"कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश (पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनोबुद्ध्यहङ्काराश्चेति)। देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते। गुणाश्च प्रकृतिसंभवाः । सुखदुःखमोहात्मकाः करणाश्रयत्वात् करणग्रहणेन गृह्यन्ते ।" इति । अयं भावः यद्यपि कार्यशब्देन वाच्यवृत्त्या शरीरमात्रस्य ग्रहणम् । करणशब्देन च वाच्यवृत्त्या । अन्तःकरणबहिष्करणानां त्रयोदशानां ग्रहणं भवति अन्यत्र, तथापि अत्र लक्षणया कार्यस्य देहस्य आरम्भकाणि पूर्वोक्तानि त्रयोदश करणानि चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि हस्तपादादीनि पञ्च कर्मेन्द्रियाणि मनोबुद्ध्यहंकाराश्चेति, तथा पञ्च महाभूतानि पञ्च रूपादीनि सूक्ष्मभूतानि चेति त्रयोविंशतिस्तत्त्वानि सांख्योक्तानि कार्यशब्देन गृह्यन्ते पूर्वत्र श्लोके यानि त्रयोविंशतिस्तत्त्वानि विकारशब्देन कथितानि । ये तु पूर्वश्लोके गुणशब्देन कथितास्ते अत्र करणाश्रयत्वाल्लक्षणया करणशब्देन गृह्यन्ते सत्त्वादयः गुणाः सुखदुःखमोहाकारेण परिणताः । एवञ्च कार्यकरणकर्तृत्वे कार्याणां बुद्ध्यादिदेहेन्द्रियान्तानां त्रयोविंशतेस्तत्त्वानां करणानां च सुखदुःखमोहाकारैः परिणतानां सत्त्वादीनां गुणानां, कर्तृत्वे उत्पादकत्वे । कर्मणि षष्ठ्या समासः प्रकृतिः पारमेश्वरी शक्तिर्मायाख्या मूलप्रकृतिः । हेतुः कारणम् उच्यते कथ्यते आरम्भकत्वेनेत्यर्थः । कार्य-करणानाम् उत्पादकत्वे—हेतुः कार्यकरणकर्मकोत्पादकत्वस्य आश्रयः प्रकृतिः कार्यकरणानाम् पूर्वोक्तानाम् उत्पादिका प्रकृतिरित्यर्थः इति यावत् । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिर्भवतीति भावः । कारणं द्विविधं भवति आरम्भकम् निष्पादकापरपर्यायम्, ज्ञापकञ्चेति । इह प्रकृतिरारम्भककारणम् न तु ज्ञापकं कारणमिति भावः ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

---

क्वचित् कार्यकारणकर्तृत्वे इति पाठः। तत्रापि स एवार्थः। कार्यं विकारः कारणं विकारि। विकारः पूर्वोक्ता बुद्ध्यादयस्त्रयोविंशतिरेव। विकारिणः सुखदुःखमोहाः सत्त्वादिपरिणामाः। तेषां कर्तृत्वे इत्याद्यर्थः पूर्वोक्तः। अथवा षोडश विकाराः पञ्च महाभूतानि दशेन्द्रियाणि मनश्चेतिकार्यम्। महदहङ्कार-शब्दस्पर्शरूपरसगन्धा इति सप्त प्रकृतिविकृतयः कारणम्। तयोः कार्य-कारणयोः कर्तृत्वे प्रकृतिर्हेतुराश्रय उच्यते आरम्भकत्वेनैव इत्यर्थः। पुरुषः संसारस्य यथा कारणं भवति तदुच्यते—"पुरुषो जीवः क्षेत्रज्ञो भोक्ता इति पर्यायः" इति भाष्यम्। पुरुषो जीवः—सोपाधिकः क्षेत्रज्ञः सुखदुःखानांभोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुर् उपलब्धेराश्रय उच्यते इत्यर्थः। कथं पुनर-नेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषौ संसारस्य कार-णम्? अत्रोच्यते—प्रकृतेः कार्यकरणसुखदुःखरूपेण परिणामाऽभावे पुरु-षस्य चेतनस्य प्रकृतिस्थस्य उपलब्धुरुपलब्धृत्वाऽभावे च कुतः संसारः स्यात्? यदा पुनः कार्यकरणसुखदुःखरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तुर्भोक्तृत्वेन अविद्यारूप एव संयोगः स्यात् तदैव संसारः स्यादिति। अतो यत् प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःख-भोक्तृत्वेन च संसारकारणत्वं भूतयोनित्वम् उक्तं तद् युक्तमुक्तम्। सुखदुःख-भोग एव संसारः। पुरुषस्य जीवस्य सुखदुःखभोक्तृत्वमेव संसारित्वम् इत्यलम् ॥२०॥

अवतरणम्—ननु असङ्गस्य पुरुषस्य कथं सुखदुःखभोक्तृत्वम् इत्य-पेक्षायां तत्र कारणमाह—पुरुषः प्रकृतिस्थो हीति।

व्याख्या—हि यस्मात्, पुरुषः स्वतः सच्चिदानन्दघनोऽपि प्रकृतिस्थः प्रकृतौ अविद्यालक्षणायां मायायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृति-मेव अनादिकालाद् आत्मत्वेन अभिमन्यमानोऽस्तीत्यर्थः। तस्मात् कारणात् प्रकृतिजान् प्रकृतितो जातान् गुणान् सुखदुःखमोह-रूपेण परिणतान् भुङ्क्ते उपलभते 'सुखी दुःखी मूढः पण्डितोऽहम्' इत्येवम्। सत्यामपि अविद्यायाम् अस्य पुरुषस्य भोक्तुः, गुणसङ्गः गुणेषु सुखदुःखमोहेषु भुज्यमानेषु यः सङ्गः= आत्मभावः सोऽस्य पुरुषस्य सदसद्योनिजन्मसु सत्यो योऽन्यः सद्योनयो देवादि-

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥२२॥**

---

योनयः, असत्यो योनयोऽसद्योनयः पश्वादियोनयः, सामर्थ्यात् सदसद्योनयो मनुष्ययोनयस्तासु जन्मानि तेषु विषयभूतेषु कारणं प्रधानं कारणम् अस्तीति शेषः। अथवा अस्य पुरुषस्य सदसद्योनिजन्मसु संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम्। तथा च श्रुतिः—"स यथाकामो भवति-तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभि संपद्यते।" (बृह.।४।४।५) इति। एतदुक्तं भवति—पुरुषस्य संसारित्वे अविद्योपादानं कारणम् अस्ति गुणसङ्गो निमित्तकारणम् अस्तीति। एवम् अज्ञानात्मा अविद्या, तत्प्रयुक्त एव कामात्मा गुणसङ्गश्च संसारस्य कारणम् इति तौ परिवर्जनीयौ मुमुक्षुभिः ॥२१॥

**अवतरणम्**—पूर्वश्लोकेन पुरुषस्य संसारित्वे अविद्याया उपादानकारणत्वं गुणसङ्गस्य च निमित्तकारणत्वम् उक्तम्। एतत्कथनम् अविद्यागुणसङ्गयोः परिवर्जनार्थमेव। तत्र ससङ्गस्य अज्ञानस्य निवर्तकम्—वैराग्यपूर्वक-कर्मसंन्यासपूर्वकम् आत्मज्ञानं गीताशास्त्रे प्रसिद्धम्। तच्च मोक्षसाधकम् आत्मज्ञानम् अस्मिन्नध्याये पूर्वत्र अध्यायादौ क्षेत्रक्षेत्रज्ञविषयम् उपन्यस्तम्। (क्षेत्रक्षेत्रज्ञविषयकत्वेन रूपेण परम्परया उपन्यस्तम् इति भावः।) अपि च तदेव ज्ञानम् 'यज्ज्ञात्वाऽमृतमश्नुते' (१३।१२) इत्यादिना 'न सत् तन्नासदुच्यते' (१३।१२) इत्यन्तेन तदन्याऽपोहेन (तदन्यनिषेधेन) व्याख्यातम्। 'सर्वतः पाणिपादं तद्' (१३।१३) इत्यादिना च अतद्धर्माऽध्यारोपेण व्याख्यातम्। सम्प्रति तु तस्यैव मोक्षसाधनभूतस्य आत्मज्ञानस्य साक्षान्निर्देशः क्रियते—उपद्रष्टेति।

**व्याख्या**—अस्मिन् प्रत्यक्षे, देहे प्रकृतिपरिणामभूते जीवरूपेण वर्तमानोऽपि पुरुषः परः प्रकृतेर्भिन्न एव, सर्वथा प्रकृतिगुणैर् असंसृष्ट एवास्ति। तत्र हेतवः—यस्माद् अयम् 'उपद्रष्टा' इत्युक्तः श्रुत्या। अत्र भाष्यम्—'उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयम् अव्यापृतो यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशल ऋत्विग्यजमानव्यापारगुणदोषाणाम् ईक्षिता तद्वत् कार्यकरणव्यापारेषु अव्यापृतोऽन्यो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टा उपद्रष्टा। अथवा देहचक्षुर्म-

नोबुद्ध्यात्मानो द्रष्टारः, तेषां वाह्यो द्रष्टा देहस्तत आरभ्य अन्तरतमश्च प्रत्यक् समीप आत्मा द्रष्टा यतः परोऽन्तरो नास्ति द्रष्टा स अतिशयसामीप्येन द्रष्टृत्वाद् उपद्रष्टा स्यात्। यज्ञोपद्रष्टृवद् वा सर्वविषयी करणादुपद्रष्टा।' इति। अत्रानन्दगिरिः—'कार्यकरणानां व्यापारवतां समीपे स्थितः संनिधि मात्रेण तेषां साक्षीत्येवमर्थत्वेन उपद्रष्टेति पदं व्याचष्टे समीपस्थ इति। लौकिकस्येव द्रष्टुरस्यापि स्वव्यापारविशिष्टतया निष्क्रियत्वविरोधमाशङ्क्याह स्वयमिति। स्वव्यापारादृते संनिधिरेव द्रष्टृत्वम्। दृष्टान्तेन स्पष्टयति—यथेति। उपद्रष्टेत्यस्यार्थान्तरमाह—अथवेति। बहूनां द्रष्टृत्वेऽपि कस्य उपद्रष्टृत्वं तत्राह—तेषामिति। उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात् तत्रैव सामीप्याऽवसानात् प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः। उक्तमेव व्यनक्ति यत इति। यथा यजमानस्य ऋत्विजां च यज्ञकर्मणि गुणं दोषं वा सर्वयज्ञाऽभिज्ञः सन् उपद्रष्टा विषयी करोति तथाऽयमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीति उपद्रष्टेति पक्षान्तरमाह—यज्ञेति।' इत्याह। तदेवम् अर्थत्रयम्—उपद्रष्टा 'समीपस्थः सन् द्रष्टा' इति उप प्रत्यगात्मा च द्रष्टा चेति उपद्रष्टा 'सर्वसाक्षी प्रत्यगात्मा' इति, उपद्रष्टा इव उपद्रष्टा इति चेति। आद्ययोरर्थयोरुपद्रष्टृशब्दो। यौगिकः अन्त्ये तु गौणलाक्षणिक इति भेदः॥ पूर्वत्रार्थे दृष्टान्तमात्रेण यजमानऋत्विक्तटस्थवृत्तान्तोपन्यासः। अन्त्ये तु रूढयज्ञोपद्रष्टृशब्दस्यात्र लक्षणया तत्सदृशे प्रयोग इति भावः। अन्तरतमः सर्वाऽभ्यन्तरवर्तीत्यर्थः। प्रत्यग् अभ्यन्तवर्तीत्यर्थः॥ (तथा) 'अनुमन्ता' इत्युक्तः श्रुत्या। अनुमननम्। अनुमोदनम् जायमानासु इन्द्रियादीनां क्रियासु पार्श्वस्थस्य पुरुषस्य परितोषः, तत्कर्ता संनिधानमात्रेणैव। अथवा कार्यकरणप्रवृत्तिषु स्वयम् अप्रवृत्तोऽपि प्रवृत्त इव अनुकूलो विभाव्यते तेन अनुमन्ता च। अथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता इत्युक्तः श्रुत्या। (तथा) भर्ता इत्युक्तः श्रुत्या। भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां धारणं तत्कर्ता, तत्कर्ताऽपि स्वसंनिधानमात्रेणैव। (तथा) भोक्ता इत्युक्तः—श्रुत्या। बुद्धेः सुखदुःखमोहात्मकप्रत्ययरूपभोगानामपि स्वसंनिधानमात्रेणैव कर्ता साक्षीत्यर्थः। भोक्ता अग्न्युष्णवद् नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ताइव जायमाना विभक्ता विभाव्यन्ते इति भोक्ता आत्मोच्यते न तु भोगक्रियावत्त्वेन। (तथा) महेश्वर इत्युक्तः श्रुत्या। सर्वात्मकत्वाद् महानिति, स्वतन्त्रत्वाद् ईश्वरश्चेति महेश्वरः। पर-

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥**

---

मात्मा इति चापि उक्तः कथितः श्रुत्या । देहादीनां बुद्ध्यन्तानाम् अविद्यया प्रत्यगात्मत्वेन कल्पितानाम् उपद्रष्टृत्वादिना परमः सर्वेभ्य उत्कृष्टः स चासौ आत्मा च अकल्पितः सत्सभूत इति 'परमात्मा' इति शब्देनापि उक्तः श्रुत्येति सर्वशेषः । तथा च श्रुतिः—'साक्षी चेता केवलो निर्गुणश्च ) ' श्वे. ) इति । 'एष भूताधिपतिरेष लोकेश्वरः' 'ईशानं भूतभव्यस्य' 'अनुमन्ता साक्षी च' 'सोऽन्तःपरमात्मा' इत्याद्या । यश्च 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।' (१५।१७) इति वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' (१३।२) इति उपन्यस्तो व्याख्यायोपसंहृतश्च ॥२२॥

अवतरणम्—आत्मज्ञानेन को लाभः ? इति पुनराह—य एवमिति ।

व्याख्या—यः कश्चिद्, 'एवं यथोक्तप्रकारेण' इति भाष्ये । यथोक्तप्रकारेण–जीवेश्वरादि सर्वकल्पनाधिष्ठानत्वेन इत्यर्थः ।' इत्यानन्दगिरिः । पुरुषं वेत्ति 'अयमहम्' इति आत्मभावेन साक्षात्करोति । प्रकृतिञ्च यथोक्ताम् अनाद्यनिर्वाच्याम् सर्वाऽनर्थोपाधिभूताम्, अविद्यालक्षणाम्, गुणैः स्वविकारैर्यथोक्तैः, सह प्रागुक्तया एकत्वगोचरया विद्यया निवर्तिताम् अभावम् आपादितां वेत्ति अनुभवति स आत्मैकत्वसाक्षात्कारी, 'सर्वथा प्रारब्धकर्मवशाद् इन्द्रवद् विधिम् अतिक्रम्य वर्तमानोऽपि भूयो न जायते' इति मधुसूदनसरस्वती । सर्वथा सर्वप्रकारेण विहितेन निषिद्धेन च वर्तमानोऽपि वर्णाश्रमधर्मान् उल्लङ्घ्य प्रवर्तमानोऽपि भूयः पतितेऽस्मिन् विद्वच्छरीरे पुनर्देहान्तराय नाऽभिजायते नोत्पद्यते । देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात् किमुवक्तव्यं स्ववृत्तस्थो भूयो नाभि जायते इति, इत्यभिप्रायः । तथा च श्रुतयः—'क्षीयन्ते चास्य कर्माणि' (मु. उ. २।२।८) 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३।२।९) 'तस्य तावदेव चिरं यावन्न विमोक्ष्य' (छा. ६।४।२) 'इषीकातूलवच्च सर्वकर्माणि प्रदह्यन्ते' (छा. ५।२४।३) इत्याद्याः । स्मृतयश्च—'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥' (४।३७) 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ इत्याद्या विदुषः पुनर्जन्माभावं बोधयन्ति । वर्तमानजन्मारम्भकाणि तु प्रारब्धफलकानि कर्माणि विदुषोऽपि वर्तमानदेहपातं यावद् अनुवर्तन्ते एव, न तेषां दाहः । इतरेषां तु संचितसंचीयमा-

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥२४॥

नानां कर्मणां विद्योत्पत्तिसमकालमेव विद्यया प्रदाहो भवति । यथा पूर्वं लक्ष्यवेधाय धनुषो मुक्त इषुर्लक्ष्यवेधोत्तरकालमपि यावद्वेगं गच्छति । आरब्धवेग-क्षयादेव पतनेन निवर्तते । एवं शरीरारम्भकं कर्म शरीरस्थिनिप्रयोजने निवृत्तेऽपि आसंस्कारवेगक्षयात् पूर्ववद् वर्तते एव । स एव इषुरनारब्ध-प्रवर्तकवेगस्तु अमुक्तो धनुषि प्रयुक्तोऽपि उपसंह्रियते प्रयोजने निवृत्ते सति धानुष्केण । तथाऽनारब्धफलानि कर्माणि' स्वाश्रयस्थान्येव ज्ञानेन निर्बीजी क्रियन्ते इति पतितेऽस्मिन् विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेवो-क्तमिति सिद्धम् । स्पष्टञ्चेदं ब्रह्मसूत्रेषु ॥२३॥

अवतरणम्—अत्रात्मदर्शने उपायविकल्पा ध्यानादय उच्यन्ते—ध्या नेनेति ।

व्याख्या—केचिद् योगिनः, आत्मनि बुद्धौ आत्मना ध्यानसंस्कृतेन मनसाऽन्तःकरणेन आत्मानं 'प्रत्यक्चेतनं ध्यानेन पश्यन्ति, परमात्मतयेति शेष इत्यानन्दगिरिः । 'ध्यानं नाम (किम् ?) शब्दादिभ्यो विषयेभ्यः श्रोत्रा-दीनि करणानि मनसि उपसंहृत्य मनश्च प्रत्यक्चेतयितरि (उपसंहृत्य) एका-ग्रतया यत् (प्रत्यक्चेतनस्य) चिन्तनं तद् ध्यानम् । तथा 'ध्यायतीव बकः' 'ध्यायतीव पृथिवी' 'ध्यायन्तीव पर्वताः' (छा. ७।६।१) इत्युपमोपादानात् तैलधारावत् संततोऽविच्छिन्नप्रत्ययो ध्यानं तेन ध्यानेन' इति भाष्यम् । तेन ध्यानेन । अर्थात् कृतवेदान्तश्रवणमननोत्तरवर्तिना निदिध्यासनेन क्रिय-माणेन उपायेन तत्त्वमस्यादिवेदान्तजन्याम् 'अहमस्मि परं ब्रह्म' इत्याकारां बुद्धिवृत्तिं शाब्दामपि, साक्षात्काररूपां कुर्वन्तीत्यर्थः । इमे उत्तमाधिकारिणः सन्ति 'केचिदित्युत्तमाधिकारिणो गृह्यन्ते' इति आनन्दगिरीयात् । अन्ये ध्यानाऽपरपर्याये निदिध्यासने असमर्था मध्यमाधिकारिणः सांख्येन योगेन 'सांख्यं नाम-इमे सत्त्वरजस्तमांसि गुणा मया दृश्याः । अहं तेभ्योऽन्य-स्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मा' इति चिन्तनम् एष सांख्यो योगस्तेन वेदान्तवाक्यार्थश्रवणमननरूपेण उपायेन निदिध्यासनात्मकध्यानक्रमेण आत्मनि आत्मना आत्मानं पश्यन्तीति संबन्धः । 'अहमस्मि परं ब्रह्म' इति-शाब्दबुद्धिं सांख्ययोगात्मकचिन्तनेन निदिध्यासनक्रमेण साक्षात्काररूपां सम्पादयन्तीत्यर्थः । इमे मध्यमाधिकारिणः सन्तीति आनन्दगिरीये । अपरे च

अन्येत्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥

यावत्संजायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद् विद्धि भरतर्षभ ॥२६॥

---

मन्दाधिकारिणश्चित्तस्याऽशुद्धया वैराग्याऽभावे वेदान्तश्रवणमननिदिध्यासनाऽसमर्थाः कर्मयोगेव कर्मैव योगा ईश्वरार्पणबुद्धयाऽनुष्ठीयमानं घटनरूपं योगार्थत्वाद्योगशब्दितम् ते न उपायेत सत्त्वशुद्धिवेदान्तश्रवण-मनन-निदिध्यासनजन्यज्ञानक्रमेण आत्मनि आत्मानम् आत्मना पश्यन्ति साक्षात्कुर्वन्तीत्यर्थः । या 'अहमस्मि परं ब्रह्म' इत्याकारा वेदान्तमहावाक्यजन्या क्रमेण साक्षात्काररूपा बुद्धिवृत्तिस्तत्र प्रत्यगात्मानं परमात्मतया विषयी कुर्वन्तीत्यर्थः इति यावत् ॥२४॥

अवतरणम्—अथ मन्दतरान् अधिकारिणो मोक्षमार्गे प्रवृत्तिं प्रतिलम्भयति—अन्ये तु इति ।

व्याख्या—अन्ये तु मन्दतरा अधिकारिणः, एषु यथोक्तेषु विकल्पेषु अन्यतमेनाऽपि एवम् यथोक्तम् आत्मानम् अजानन्तः शास्त्राध्ययनसामर्थ्यहीनत्वाद् आत्माऽज्ञानयुक्ता अन्येभ्य आचार्येभ्यः श्रुत्वा 'इदमेवं चिन्तयत' इत्युक्ता– उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति ध्यायन्ति आत्मानमिति शेषः । जन्मान्तराऽनुष्ठितकर्मयोगशुद्धचित्ता वैराग्यवन्त इति शेषः सामर्थ्यात् । मन्दतरत्वं तु एषां शास्त्राऽध्ययनहीनत्वात् । तेऽपि उपासमानाः श्रुति परायणाः श्रुतिः श्रवणं परम् अयनं गमनं मोक्षमार्गे प्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः । मृत्युं मृत्युयुक्तं संसारम् अतितरन्त्येव अतिक्रामन्ति एव । नात्र संशयः । 'किन्तु ते शनैरतितरन्ति' इति श्रीधरस्वामी । एषु यथोक्तेषु चतुर्षु अपि विकल्पेषु कर्मनिष्ठा ज्ञाननिष्ठेति पूर्वोक्तं द्वयमेव अन्तर्भवतीति न पूर्वग्रन्थविरोध इति बोध्यम् ॥२५॥

अवतरणम् –'क्षेत्रज्ञं चापि मां विद्धि' (१३।२) इत्युक्त्वा 'ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते' (१३।१२) इत्युक्तम् । तेन क्षेत्रज्ञेश्वरैक्यज्ञानं मोक्षसाधनमिति लभ्यते । तत्र युक्तिप्रदर्शनार्थं श्लोकमाह—यावदिति ।

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ।।२७।।**

---

व्याख्या—हे भरतर्षभ, भरतवंशश्रेष्ठ, यावत् किञ्चिद्, यत्किञ्चित् स्थावरजङ्गमम्, स्थावरं च जङ्गमं च तयोः समाहारः, स्थावरजङ्गमं, सत्त्वं वस्तु संजायते उत्पद्यते। तत् स्थावरजङ्गमं वस्तु क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रं च क्षेत्रज्ञश्च तयोः संयोगात् संजायते इति त्वं विद्धि जानीहि। अत्र भाष्ये—“कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः ? न तावद् रज्ज्वेव घटस्य, अवयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य भवति, आकाशवन्निरवयवत्वात्। नापि समवायलक्षणः, तन्तु पटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमाद् इति। ? उच्यते—क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतत्तद्धर्माऽध्यासलक्षणः संयोगो 'क्षेत्रक्षेत्रज्ञस्वरूपविवेकाऽभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाऽभावाद् अध्यारोपितसर्परजतादिसंयोगवत् । सोऽयम् अध्यासरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः। यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग् दर्शितरूपात् क्षेत्राद् मुञ्जाद् इव इषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत् तन्नासदुच्यते' (१३।१२) इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति। क्षेत्रं च मायानिर्मितहस्ति-स्वप्नदृष्टवस्तुगन्धर्वनगरादिवद् असदेव सदिव अवभासते इत्येवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधाद् अपगच्छति मिथ्याज्ञानम्। तस्य जन्महेतोरपगमाद् 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' (१३।२३) इत्यनेन विद्वान् भूयो नाऽभिजायते इति यदुक्तं तदुपपन्नतरमुक्तम् ।।” इति व्याख्यातम्। तदेवम् अनेन श्लोकेन भगवता क्षेत्रज्ञेश्वरैकत्वज्ञानं मोक्षसाधनम् इत्युपपादितम् ।।२६।।

अवतरणम्—सम्यग्दर्शनस्य फलं 'न स भूयोऽभिजायते' इति अविद्यादिसंसारबीजनिवृत्तिद्वारेण विदुषः पुनर्जन्माऽभाव उक्तः। जन्मकारणञ्च क्षेत्रक्षेत्रज्ञयोरविद्यानिमित्तकः संयोग उक्तः। अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनं पूर्वत्र असकृद् उक्तमपि अतिसूक्ष्मार्थत्वाद् अधिकारिभेदाऽनुग्रहाय पुनः शब्दान्तरेण भगवानाह—सममिति।

व्याख्या—सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु समं निर्विशेषम् एकम् तिष्ठन्तं स्थितिं कुर्वन्तं परमेश्वरम् परमश्चासौ ईश्वरश्चेति तम्, देहेन्द्रि-

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥२८॥**

---

यमनोबुद्धयव्यक्तनामकान् आत्मनोऽपेक्ष्य परमं श्रेष्ठम् ईश्वरम् आत्मानम् । अविद्यया हि देहादीनि अव्यक्तान्तानि आत्मत्वेन कल्प्यन्ते कैश्चित् तदपेक्षया परमम् इति विशेषणं प्रयुज्यते–देहेन्द्रियाद्यव्यक्तान्तव्यावर्तनाय । विनश्यत्सु जन्मादिनाशान्तसर्वविकारयुक्तेषु (सर्वेषु भूतेषु) अविनश्यन्तं सकलविकारहीनं कूटस्थं यः पश्यति साक्षात्करोति स विद्वान् एव वस्तुतः पश्यति । अत्र विनश्यत्सु अविनश्यन्तम् इति विशेषणाभ्याम् भूतेभ्योऽत्यन्तवैलक्षण्यं परमेश्वरस्य सूचितम् विशेषणयोस्तयोरुपलक्षणार्थत्वात् । तथा च–भूतानि बहूनि, सविशेषाणि सविकाराणि, असत्यानि अनित्यानि जडानि च । परमेश्वरस्तु–एकोऽद्वितीयो निर्विशेषो निर्विकारः सत्यः कूटस्थश्चेतनश्चेत्यर्थो लभ्यते । तथाभूतम् एकम् अविभक्तं परमेश्वरम् आत्मानं यः पश्यति सम्यग्दर्शी सः । स एव तु वस्तुतः पश्यति । इतरे तु अर्थात् एतद्विपरीतदर्शिनो विभक्ताऽनेकात्मदर्शिनश्च विमूढा अन्धा एव विद्यन्ते, यथाविशेषितपरमेश्वरस्य आत्मभूतस्य अतिसन्निहितस्यापि अदर्शनाद् इति भगवतोऽभिप्रायः ॥२७॥

अवतरणम्—यथोक्तस्य सम्यग्दर्शनस्य फलकथनेन स्तुतिः कर्तव्या, तस्य साधने पुरुषं प्रवर्तयितुम् इति श्लोक आरभ्यते—समम् इति ।

व्याख्या—हि यस्मात् सर्वत्र सर्वभूतेषु समवस्थितम् तुल्यतया अवस्थितम् ईश्वरम् अतीतानन्तर श्लोकोक्तलक्षणम् इत्यर्थः । समम् एकम् अविक्रियं पश्यन् उपलभमानः सम्यग्दर्शीत्यर्थः । आत्मना स्वेनैव आत्मानं स्वं न हिनस्ति न हन्ति ततस्तस्मात्कारणात् स्वस्य अहिंसनादित्यर्थः । परां प्रकृष्टां गतिं मोक्षाख्याम् याति प्राप्नोति' सर्वो हि अज्ञोऽत्यन्तप्रसिद्धं साक्षाद् अपरोक्षम् आत्मानं तिरस्कृत्य अनात्मानं जडं देहम् आत्मत्वेन परिगृह्य तमपि धर्माऽधर्मौ कृत्वा उपात्तमुपात्तं हत्वा हत्वा अन्यम् अन्यं देहात्मानम् उपादत्ते नवं नवम् । एवम् उपात्तम् आत्मानं हन्ति इति आत्महा भवति सर्वोऽज्ञः । योऽपि परमार्थाऽऽत्मा सोऽपि सर्वदा अविद्यया हत इव भवति विद्यमानसुखादिफलाऽप्राप्तेरिति सर्वेऽपि आत्महन एव अविद्वांसः । यस्तु इतरो यथोक्तात्मदर्शी स उभयथाऽपि आत्मना आत्मानं न हिनस्ति । उभयाऽपि आरोपाऽनारोपाभ्यामित्यर्थः । आरोपितमात्मानं देहम् अनारोपितमात्मानं परमार्थं भूतं च न हिनस्ति, देहस्य आत्मनश्च परमानन्दरूपफलप्राप्तेर्हिंसां न करोति

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानम् अकर्तारं स पश्यति ॥२९॥
यदा भूतपृथग्भावम् एकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३०॥

---

विद्वानित्यर्थः । ततो याति परां गतिम् तस्माद् आत्मनोऽहिंसनात् परमानन्दप्राप्तिरूपं मोक्षाख्यं फलं तस्य संपद्यते इत्यर्थः ॥ सति सम्यग्दर्शने अविद्याया नाशाद् आनन्दस्वरूपस्य आत्मन आवरणस्य अज्ञानस्य नाशाद् अनन्तसुखाऽभिव्यक्तिर्भवतीति भावः ॥२८॥

अवतरणम्—ननु सर्वभूतस्थमीशं समं पश्यन् न हिनस्ति आत्मनाऽऽत्मानम् इत्युक्तं नोपपद्यते स्वगुणकर्मवैलक्षण्यभेदभिन्नेषु बहुषु आत्मसु समत्वैकत्वदर्शनस्याऽयोगाद् इत्येतदाशङ्क्य आह—प्रकृत्यैवेति ।

व्याख्या—प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे. उ. ४।१०) इति मन्त्रवर्णात् । तया प्रकृत्या, एव च न अन्येन, महदादिकार्यकरणाकारपरिणतया क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्-नित्यत्व-नैमित्तिकत्व-काम्यत्व-निषिद्धत्व-स्वाभाविकत्वरूपैः प्रकारैरुपलक्षितानि कर्माणि वाङ्मनःकायारभ्याणि कर्माणि यः पश्यति उपलभते तथा आत्मानम् क्षेत्रज्ञम् अकर्तारं सर्वोपाधिविवर्जितम् पश्यति उपलभते साक्षात् करोति स पश्यति स सम्यक् पश्यति परमार्थदर्शी अस्तीत्यभिप्रायः । निर्गुणस्य अकर्तु निर्विशेषस्य च आत्मनः प्रतिदेहं भेदे प्रमाणाऽभावः प्रतिघटम् आकाशस्येव । एतेन प्रतिदेहं भिन्नत्वेन सर्वभूतेषु एकब्रह्मदर्शनम् अयुक्तमित्यपास्तम् । अत्र प्रकृत्यैवेत्येवकारेण सांख्याऽभिमतायाः प्रकृतेर्व्यवच्छेद इत्यानन्दगिरिः । पुरुषस्य तु न निषेधस्यावश्यकत्वम् 'तथात्मानमकर्तारंस पश्यति' इत्यनेनैव कर्तृत्वस्य निषेधसिद्धेरिति तस्य भावः । अपि च सांख्याभिमतकर्तृत्ववादी नास्ति सम्यग्दर्शीति ब्रह्मसूत्रेषु विस्तरः ॥२९॥

अवतरणम्—पूर्वत्र आपाततः क्षेत्रभेददर्शनम् अभ्यनुज्ञाय क्षेत्रज्ञभेददर्शनम् अपाकृतम् । इदानीं तु क्षेत्रभेददर्शनमपि मायिकत्वेन अपाकरोति । अतश्च प्रकृतेस्तद्विकाराणां च सांख्यमत इव नास्मन्मते सत्यत्वम् । इति निरूपयितुं तदेव सम्यग्दर्शनं शब्दान्तरेण पुनः प्रपञ्चयति—यदेति ।

**अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥**

---

व्याख्या—यदा यस्मिन्काले भूतानां देहेन्द्रियादीनां पृथग्भावं पृथक्त्वम् एकस्थम् एकस्मिन् आत्मनि स्थितम् ब्रह्मरूपे एकत्राऽधिष्ठाने आरोपितम् अनुपश्यति शास्त्राचार्योपदेशतो मत्वा आत्मप्रत्यक्षतया पश्यति—'आत्मैवेदं सर्वम्' (छा. ७।२५।२) इति। तत एव च तस्मादेव आत्मनश्च विस्तारं सर्वेषाम् आकाशादीनां भूतानामुत्पत्तिं 'यतो वा इमानि भूतानि जायन्ते' ( ) इत्येवमादि प्रकारैरनुपश्यति तदा तस्मिन् काले तस्याम् अवस्थायाम्, ब्रह्म संपद्यते ब्रह्मैव भवति यथोक्तसम्यग्दर्शी—'ब्रह्म वेद ब्रह्मैव भवति' (मु. ३।२।९) इति श्रुतेः। 'प्रकृत्यैव च कर्माणि' इति पूर्वश्लोके आत्मभेदो निराकृतः। इह तु अनात्मभेदोऽपि निराकृत इति विशेषः ॥३०॥

अवतरणम्—ननु एकस्यैवात्मनः सर्वदेहात्मत्वे सर्वदेहस्थतया तत्तद्-देहगतैर्दोषैस्तस्य संबन्धः स्यात्? इत्याशङ्क्य निराकरोति—अनादित्वादिति।

व्याख्या—हे कौन्तेय, अयम् साक्षादपरोक्षः परमात्मा क्षेत्रज्ञः प्रत्यगात्मा, अनादित्वात् आदिः कारणम्, तद् यस्य नास्ति सोऽनादिस्तस्य भावोऽनादित्वम् तस्मात् अव्ययोऽस्ति नास्य व्ययो विद्यते। यद् हि आदिमत् तत् स्वेन आत्मना व्येति अयं तु अनादित्वाद् निरवयवः इति कृत्वा न व्येति। (तथा) निर्गुणत्वात् अव्ययः, सगुणो हि गुणव्ययाद् व्येति। अयं तु निर्गुणत्वाद् न व्येति इति परमात्माऽयम् अव्ययोऽस्ति। 'यत एवम् अतः' इति 'न करोति' इत्यत्र कारणप्रदर्शनभाष्येण प्रकृत श्लोके अव्ययपदघटको व्ययशब्दः सकल-विकाराणाम् उपलक्षणार्थं इति सूच्यते। यत एवम् ( अर्थात् सकल विकार-शून्यः) अतः, शरीरस्थोऽपि, शरीरेषु आत्मन उपलब्धिर्भवति इति शरीर-स्थ उच्यते। तथापि, न करोति। तदकरणादेव तत्फलेन न लिप्यते। यो हि कर्ता स कर्मफलेन लिप्यते, अयं तु अकर्ता अतो न फलेन लिप्यते इत्यर्थः। कःपुनर्देहेषु करोति लिप्यते च? यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इदम् अनुपपन्नम् उक्तम्—क्षेत्रज्ञेश्वरैकत्वम् 'क्षेत्रज्ञं चापि मां विद्धि' (१३।२) इत्यादि। अथ नास्ति ईश्वरादन्यो देही, कः करोति लिप्यते च इति वाच्यम्, परो वा नास्तीति (वाच्यम्)। सर्वथा दुर्विज्ञेयं दुर्वाच्यंचेति भगवत्प्रोक्तम् औपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च। तत्रायं-

यथा सर्वगतं सौक्ष्म्याद् आकाशं नोपलिप्यते ।
सर्वत्राऽवस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥
क्षेत्रक्षेत्रज्ञयोरेवम् अन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर् यान्ति ते परम् ॥३४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

---

परिहारो भगवता स्वेनैव उक्तः–'स्वभावस्तु प्रवर्तते' (५।१४) इति । अविद्यामात्रस्वभावो हि 'करोति लिप्यते' इति व्यवहारो भवति। न तु परमार्थत एकस्मिन् परमात्मनि तदस्ति। अत एतस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्टानां परमहंसपरिव्राजकानां-तिरस्कृताऽविद्याव्यवहाराणां कर्माऽधिकारो नास्ति, इति तत्र तत्र दर्शितं भगवता ॥" इत्युक्तमत्र भाष्ये ॥३१॥

अवतरणम्—किमिव 'न करोति न लिप्यते' इति ? अत्र दृष्टान्तमाह—यथेति ।

व्याख्या—हे भारत सर्वगतं सर्वव्यापकम् (अपि) आकाशं गगनं सौक्ष्म्यात् सूक्ष्मभावाद् न उपलिप्यते न संसृज्यते तत्तत्पदार्थैः सर्वैः। तथा सर्वत्र देहे अवस्थितोऽपि आत्मा न उपलिप्यते। यथा अप्रतिहतस्वभावत्वात्, आकाशं पङ्कादिमति देशे गतमपि पङ्कादिना न उपलिप्यते तथा आत्माऽपि सुखदुःखादिमति अन्तःकरणे स्थितोऽपि सुखदुःखादिभिर्न उपलिप्यते ॥३२॥

(किञ्च) यथा एको रविरादित्यः कृत्स्नं संपूर्णम् इमंलोकं प्रकाशयति अवभासयति स्वसत्तामात्रेण तथा क्षेत्री आध्यासिकसंबन्धेन क्षेत्रवान् आत्मा-कृत्स्नं सं पूर्ण क्षेत्रं महाभूतादि धृत्यन्तं (यथोक्तं पूर्वत्र) प्रकाशयति स्वसत्तामात्रेणैव अवभासयति। रविदृष्टान्तोऽत्र आत्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेषु एक आत्मा अलेपश्चेति ॥३३॥

अवतरणम्–समस्ताऽध्यायार्थोपसंहारार्थोऽयं श्लोकः—क्षेत्रेति ।

व्याख्या—ये जनाःक्षेत्र क्षेत्रज्ञयोर्यथाव्याख्यातयोः, एवं यथाप्रदर्शित-प्रकारेण अन्तरं परस्परवैलक्षण्यविरोधम्, भूतप्रकृतिमोक्षं च भूतानां प्रकृतिः अविद्यालक्षणा अव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षम् अभावगमनं च ज्ञान-चक्षुषा शास्त्राचार्योपदेशजनितम् आत्मप्रत्ययिकज्ञानं चक्षुस्तेन ज्ञानचक्षुषा विदुर्विजानन्ति ते तत्त्वविदः परं परमार्थतत्त्वं ब्रह्म यान्ति गच्छन्ति। न पुनर्देहम् आददते इत्यर्थः ।। तदेवम् अमानित्वादि ज्ञानसाधनजातनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वाऽनर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भाव-लक्षणपरमपुरुषार्थसिद्धिरिति सिद्धम् ।।३४।।

गीतासु सर्ववेदार्थं यः प्रकाशितवान् परम् ।
वन्दे तं परमानन्दं कृष्णं शङ्करमद्वयम् ।।१३।।

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां त्रयोदशोऽध्यायः ।।१३।।

श्रीकृष्णार्पणमस्तु ।



# अथ गीतावंश्यां चतुर्दशोऽध्यायः

श्रीभगवान् उवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥

---

अवतरणम्—पूर्वाध्याये उक्तम्—'सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगाद्-उत्पद्यते' इति । तत् कथम् ? इति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते । अथवा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थम्, पुरुषस्य प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणम् इत्युक्तम् । कस्मिन् गुणे कथं सङ्गः ? के वा गुणाः ? कथं वा ते बध्नन्ति इति, गुणेभ्यश्च मोक्षणं कथं स्यात् ? मुक्तस्य च लक्षणं वक्तव्यम् । इत्यवेमर्थञ्च—श्रीभगवान् उवाच ।

व्याख्या—ज्ञानानाम् सर्वेषां यज्ञादिज्ञेयजडवर्गवस्तुविषयाणां मध्ये उत्तमं श्रेष्ठम् ब्रह्मज्ञानसाधनतया परम्परया मोक्षरूपोत्तमफलजनकत्वाद् । (तथा) परम् अव्यक्तात्मकपरवस्तुविषयम्, ज्ञानं ब्रह्मसाक्षात्कारात्मकाऽपरोक्षज्ञानसाधनभूतं ज्ञानम् भूयः पूर्वेषु सर्वेषु अध्यायेषु असकृद् उक्तम् अपि ब्रह्मणोऽतीन्द्रियत्वेन, दुर्बोधत्वात् पुनः प्रवक्ष्यामि प्रकर्षेण वक्ष्यामि, परोत्तमशब्दाभ्यां वक्ष्यमाणज्ञानं स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । अन्यजडवस्तुज्ञानानि न मोक्षाय इदन्तु मोक्षायेति । अत्र ज्ञानानामिति ज्ञानपदेन अमानित्वादीनाम् उक्तानां ब्रह्मज्ञानसाधनानां न ग्रहणम् । तेषां यमनियमत्वेन ज्ञानसाधनत्वेऽपि ज्ञानत्वाऽभावात् । तेषां स्वयमुत्तमत्वात् च । किन्तु यज्ञादिज्ञेयजडवर्गवस्तुविषयेभ्यो ज्ञानेभ्य एव गुणादिविषयकज्ञानस्य वक्ष्यमाणस्य उत्तमत्वं न तु अमानित्वादिभ्योऽपि । अव्यक्तस्य परत्वमपेक्ष्यैव तदन्तर्गतगुणादिविषयकज्ञानस्य वक्ष्यमाणस्य परत्वम् । तथा च श्रुतिरव्यक्तस्य परत्वमाह—'इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तम् अव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥' (कठो०) इति । यद्यपि परम् उत्तमम्

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥**

---

इति एकार्थत्वात्पुनरुक्तिस्तथापि परशब्दो विषयस्य विशेषणम् उत्तमशब्दस्तु फलस्य विशेषणम् । परं परवस्तुविषयम् । उत्तमम् उत्तमफलजनकम् इत्यर्थं इति न दोषः ॥ 'यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य' इति भाष्यम् । 'मुनयः संन्यासिनो मननशीलाः' इति च भाष्यम् । सर्वे परां सिद्धिं मोक्षाख्याम् इतोऽस्माद् देहबन्धनाद् ऊर्ध्वं गताः प्राप्ताः ब्रह्मसाक्षात्कारद्वारेति शेषः । यज्ञादिज्ञेयान्तरजडवस्तुज्ञानं तु परम्परया विविदिषाजननद्वारा मोक्षसाधकब्रह्मज्ञानसाधकम् । वक्ष्यमाणं गुणादिविषयकं ज्ञानं तु साक्षादेव मोक्षसाधकब्रह्मसाक्षात्कारसाधकम् इति भवति तेभ्यः परम् उत्तमञ्चेति । ज्ञानानामिति निर्धारणे षष्ठी ॥१॥

अवतरणम्—गुणादिविज्ञानेन मोक्षाख्यसिद्धिरवश्यं भाविनीतिदर्शयति—इदमिति ।

व्याख्या—इदं वक्ष्यमाणगुणादिज्ञानजन्यं ज्ञानं ब्रह्मज्ञानम् उपाश्रित्य तद्धेतुश्रवणमननादिसामग्रीसम्पत्तिद्वारा संप्राप्य मम परमेश्वरस्य साधर्म्यं स्वरूपम् एकत्वम् आगताः प्राप्ता इत्यर्थः । अत्र भाष्यम्—'मम परमेश्वरस्य साधर्म्यं मत्स्वरूपताम् आगताः प्राप्ता इत्यर्थो न तु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदाऽनभ्युपगमाद् गीताशास्त्रे । फलवादश्चायं स्तुत्यर्थमुच्यते ।' इति । 'भेदे साधर्म्यम् उपमा' इति वदन् वाग्देवनावतारत्वेन प्रथितः काव्यप्रकाशकारोऽपि एकत्वे साधर्म्यं स्वीकरोति एवम् । महाभाष्यकारो भगवानपि एकत्वे साधर्म्यं स्वीकरोतीत्यन्यत्रविस्तरः । समानधर्मतां साधर्म्यं प्राप्ता इत्यर्थे तु प्रस्तुतब्रह्मज्ञानफलं विहाय अप्रस्तुतब्रह्मध्यानफलस्वीकार प्रसङ्गाच्च एकत्वमर्थः साधर्म्यशब्दस्य । एवंभूताः संन्यासिनः सर्गेऽपि ब्रह्मादिसृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते । प्रलये ब्रह्मणोऽपि हिरण्यगर्भस्य विनाशकाले, न व्यथन्ति च व्यथां नापद्यन्ते, न च्यवन्तीत्यर्थः । अपि शब्दाद् अवान्तरसर्गादौ जन्मादिकं न प्राप्नुवन्तीति किमु वक्तव्यम् इत्यभिप्रायः ॥२॥

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥३॥
सर्वयोनिषु कौन्तेय मूर्त्तयः संभवन्ति याः ।
तासां ब्रह्म महद्-योनिर् अहं बीजप्रदः पिता ॥४॥

---

अवतरणम्—तदेवं वक्ष्यमाणज्ञानप्रशंसया श्रोतारम् अभिमुखीकृत्य 'परमेश्वराधीनयोः प्रकृति पुरुषयोः सर्वभूतोत्पत्तिम्प्रति हेतुत्वम्, न तु स्वतन्त्रयोरितीमं विवक्षितमर्थमाह—ममेति ।

व्याख्या—हे भारत, अत्र भाष्ये मम (परमेश्वरस्य) स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिरुपादानकारणं सर्वभूतानाम् (इतिशेषः ।) महद् ब्रह्म (अस्तीतिशेषः) महत्त्वाद् भरणाच्च स्वविकाराणां महद् ब्रह्मेति योनिरेव विशेष्यते ।' इति ॥ लिङ्गवैषम्याद् महद् ब्रह्मेति अर्थान्तरं किञ्चित् इति न । लिङ्गवैषम्येऽपि वेदाः प्रमाणम् इत्यादौ अभेदान्वयस्य स्वीकारात् । तस्मिन् महति ब्रह्मणि योनौ गर्भाधानस्थाने मायायाम् त्रिगुणात्मिकायां योनौ अहं क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमान् ईश्वरः, गर्भं हिरण्य गर्भस्य जन्मनो बीजं हिरण्यगर्भद्वारा सर्वभूतजन्मकारणं बीजं दधामि आदधामि निक्षिपामि गर्भाधानं करोमि अविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । ततस्तस्माद् गर्भाधानात् सर्वभूतानां हिरण्यगर्भादिस्तम्बपर्यन्तानां "हिरण्यगर्भोत्पत्तिद्वारेण" इति भाष्यम् । संभव उत्पत्तिर्भवति । अत्रानन्दगिरिः--स्वरूपत्वेन स्वभूतत्वं वारयति भाष्यकारो मदीयेति । ऐश्वरीं चिच्छक्तिं व्यावर्तयति भाष्यकारस्त्रिगुणात्मिकेति । सांख्यीया प्रकृतिरपि मदीयेति व्यावर्त्तिता । योनिशब्देन सर्वाणि भवनयोग्यकार्याणि प्रति उपादानत्वमभिप्रेतम् इत्याह भाष्यकारः सर्वभूतानामिति । प्रकृतेर्महत्त्वं साधयति सर्वेति । सर्वकार्यव्याप्तिमादाय योनावेव ब्रह्मशब्दः । लिङ्गवैषम्यान्महद-ब्रह्मेति अर्थान्तरं किञ्चिदित्याशङ्क्याह—योनिरिति । 'आदिकर्ता स भूतानाम्' इति स्मृत्या हिरण्यगर्भकार्यत्वाऽवगमाद् भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याह हिरणगर्भेति भाष्यकारः ।" इत्याह ॥३॥

अवतरणम्—ननु हिरण्यगर्भस्य तस्मादुद्भवेऽपि कथं सर्वभूतानामुद्भवः ? देवपितृमनुष्यपशुपक्ष्यादिविविधजातिविशेषेषु विविधदेहविशे-

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥**

---

पाणां कारणान्तरस्य संभवाद् ? इति संभाव्यशङ्काया निराकरणेन 'मम-योनिर्महद्ब्रह्म'ेति पूर्वोक्तमेव स्पष्टीकरोति—सर्वेति ।

व्याख्या—हे कौन्तेय सर्वयोनिषु देवपितृमनुष्यपशुमृगादिसर्वजातिपु या मूर्त्तयः शरीराकृतयः संभवन्ति तासां सर्वयोनिमूर्त्तीनाम्, महत् ब्रह्म तत्तत्सर्वावस्थम् मदीया माया तत्तत्सर्वावस्था प्रकृतिर्योनिरुपादानकारणम् अस्ति । अहम् ईशो बीजप्रदो गर्भाधानस्य कर्ता पिता अस्मि । मम माया सर्वभूतानां मातृस्थानीयाऽस्ति अहन्तु पितृस्थानीयोऽस्मीत्यभिप्रायः । तत्र तत्र हेत्वन्तरप्रतिभासेष्वपि अस्यैव तत्तद्रूपेण अवस्थानान्न हेत्वन्तरम्, अयमेव हेतुरिति भावः ॥४॥

अवतरणम्—एवं क्षेत्रक्षेत्रज्ञसंयोगाद् ब्रह्मैव स्वाऽविद्यया संसरतीत्युक्तम् । इदानीं ? के गुणाः ? कथं बध्नन्ति ? इति प्रश्नद्वयम् अध्यायस्य अवतरणे उक्तं समुत्तरति—सत्त्वमिति ।

व्याख्या—"हे महाबाहो, महान्तौ समर्थतरौ आजानुप्रलम्बौ बाहू यस्य स महाबाहो" इति भाष्यम् । प्रकृतिसंभवाः–प्रकृतिर्भगवन्माया त्रिगुणात्मिका सत्त्वरजस्तमसां गुणानां परस्परसाम्यावस्था । संभवति अस्मादिति संभवः । प्रकृतिः संभवः परस्परवैपम्येण हेतुना परस्परं प्रति अङ्गाङ्गिभावं गतानां गुणानाम् आविर्भावस्य अवधिर्येषां ते प्रकृति-संभवाः । "सत्त्वं रजस्तम इति-एवं नामानः । गुणा इति पारिभाषिकः शब्दो न रूपादिवद् द्रव्याश्रिताः । न च गुणगुणिनोरन्यत्त्वम् अत्र विवक्षितम् । तस्माद् गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति अविद्यात्मकत्वात् । क्षेत्रज्ञं निबध्नन्तीव । तम् आस्पदीकृत्य आत्मानं प्रतिलभन्ते इति निबध्नन्तीत्युच्यते ।" इति भाष्यम् । अत्रानन्द-गिरिः—"सत्त्वादिपु कथं गुणशब्दप्रवृत्ति रित्याशङ्क्य परतन्त्रत्वादित्याह—गुणा इति । रूपादिष्विव गुणशब्दः सत्त्वादिपु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्याद् इत्याशङ्क्य प्रकृत्यात्मकानां तेपां सर्वाश्रयत्वाद् नैवम् इत्याह—न रूपादिवदिति । गुणानां प्रकृतेश्च पृथगुक्तेरन्यत्वे कुतस्तेपां प्रकृत्यात्मकत्वम् ? इत्याशङ्क्य आह—न च गुणेति ।" इत्याह । पुनश्चानन्दगिरिः-"क्षेत्रज्ञं प्रति नित्यपारतन्त्र्ये हेतुमाह—अविद्येति ।" इत्याह । ततश्चाऽ

तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चाऽनघ ॥६॥

---

यमर्थः—सत्त्वं रजस्तम इत्येवंनामानो गुणाः, गुणशब्दिताः परस्परवैषम्येण हेतुना परस्परं प्रति अङ्गाङ्गिभावेन परिणताः प्रकृते स्तेषां साम्यावस्थायाः स्वरूपस्य घटकाः, देहे प्रकृतिपरिणम-विशेषरूपे शरीरे देहिनम् देहवन्तम् अव्ययम् निर्विकारम् निबध्नन्ति निबध्नन्तीव सुखदुःखमोहादिष्वविकारवत्तया उपदर्शयन्ति इति। अत्र इव शब्दानुषङ्गेण व्याख्यानात् 'न करोति न लिप्यते' (१३।३१) इति यदुक्तं तेन विरोधः परिहृतो भवति ॥५॥

अवतरणम्—किं लक्षणो गुणः, केन बध्नाति ? इत्यपेक्षायाम् ? प्रथमं सत्त्वस्य लक्षणं बन्धकत्वप्रकारं चाह—तत्रेति ।

व्याख्या—हे अनघ अव्यसन, तत्र तेषु सत्त्वरजस्तमःसु गुणशब्दितेषु, सत्त्वं सत्त्वनामा गुणः, निर्मलत्वात् स्वच्छत्वात् स्फटिकमणिरिव प्रकाशकम् चैतन्याभिव्यञ्जकम् इत्यर्थः। (तथा) निर्मलत्वादेव अनामयम् निरुपद्रवम् निर्दुःखम्। निर्मलत्वात् सुखस्य अतिव्यञ्जकम् इत्यर्थः। सुखसङ्गेन-सुखरूपस्य आत्मभूतस्य अन्तःकरणे अभिव्यञ्जकतया बुद्धिवृत्तिविशेषस्य अभिव्यक्तसुखस्य क्षेत्ररूपान्तःकरणधर्मस्य अन्तःकरणे अभिव्यक्ततया क्षेत्रज्ञधर्मत्वाऽभावात् क्षेत्रज्ञे अविद्यमानस्य अविवेकलक्षणया अविद्यया 'सुखी अहम्' इति मृषैव संश्लेपजननेन इत्यर्थः। बध्नाति देहे देहिनं बध्नातीव। ज्ञानसङ्गेन च ज्ञानरूपस्य आत्मचैतन्यस्य अन्तःकरणे अभिव्यञ्जकतया अन्तःकरणेभिव्यक्तस्य ज्ञानस्य बुद्धिवृत्तिविशेषरूपस्य क्षेत्ररूपान्तःकरणधर्मस्य अविवेकलक्षणया अविद्यया 'ज्ञानवान् अहम्' इति मृषैव संश्लेपजननेन च इत्यर्थः। बध्नाति बध्नातीव देहे देहिनम् इति शेषः। अत्रेदं बोध्यम् सच्चिदानन्दस्वरूप एवात्मा। नो सुखवान् न वा ज्ञानवान् अस्ति। अभिव्यक्तेः कारणजन्यत्वेन अन्तःकरणे बुद्धौ अभिव्यक्तसुखस्य अभिव्यक्तज्ञानस्य च अनित्यत्वव्यवहारः। परमानन्दबोधस्वरूपः प्रत्यगात्मा नित्य एवेति॥ एवञ्च अन्तःकरणे ज्ञानसुखाभिव्यञ्जकत्वं प्रकाशकत्वाऽनाऽऽमयत्वं सत्त्वस्य लक्षणम् इति ॥६॥

अवतरणम्—अथ रजसो लक्षणं बन्धकत्वप्रकारश्चाह—रज इति ।

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ।।७।।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ।।८।।

सत्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ।।९।।

---

व्याख्या- -हे कौन्तेय, रजः रजोगुणं रागात्मकं रज्यते संसृज्यते अनेन पुरुषो दृश्यैरिति रागोऽनुरागः स आत्मा स्वरूपं यस्य तद् विद्धि जानीहि। अत्र भाष्यम्–'रञ्जनाद् रागो गैरिकादिवत्' इति। (तथा) तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्तस्याऽभिलाषः । आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः। तृष्णाऽऽसङ्गयोः समुद्भवं जनकं विद्धि जानीहि। तद् रागात्मकं रजो देहिनं कर्मसङ्गेन दृष्टाऽदृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्ग स्तेन निबध्नातीव। तथा च रागात्मकत्वं रजसो लक्षणम्। तच्च कर्मसु प्रवर्तकम् तृष्णा सङ्गयो र्जनकं च भवतीत्यर्थः ।।७।।

अवतरणम्—अथ तमसो लक्षणं बन्धकत्वप्रकारं चाह—तम इति।

व्याख्या—हे भारत, तमस्तु तमोगुणं तु अज्ञानजम् अज्ञानाज्जातम् सर्वदेहिनां सर्वेषां देहवतां मोहनं मोहकरम् अविवेककरम् विद्धि जानीहि। तत् तमोगुणः प्रमादालस्यनिद्राभिः प्रमादश्च आलस्यं च निद्रा च ताभिः, निबध्नाति निबध्नातीव। एतेन मोहकरत्वं तस्य लक्षणं फलितम्। अज्ञानं तस्य कारणम्। प्रमादालस्यनिद्राश्च तमसः कार्याणि भवन्तीति बोध्यम् ।।८।।

अवतरणम्—पुनरपि संक्षेपेण गुणानां व्यापार उच्यते—सत्त्वमिति।

व्याख्या—हे भारत, सत्त्वं सुखे सञ्जयति संश्लेषयति, रजः कर्मणि सञ्जयति इत्यनुवर्तते। तमस्तु ज्ञानं सत्त्वगुणकृतं विवेकम् आवृत्य आच्छाद्य स्वेन आवरणात्मना, प्रमादे प्रमादो नाम प्राप्तकर्तव्याऽकरणम्, तत्र, उत अपि, सञ्जयति देहिनमित्यनुवर्तते। अपि शब्दाद् तद्द्वारा निबध्नातीवेत्यस्य समुच्चयः ।।९।।

रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥११॥

---

अवतरणम्—उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—रज इति।

व्याख्या—हे भारत, (यदा) सत्त्वं सत्त्वगुणः, रजस्तमश्च रजस्तमसी, अभिभूय तिरस्कृत्य, भवति उद्भवति, वर्धते (तदा सत्त्वं ज्ञानसुखादि स्वकार्यं करोति। यदा तु) रजः रजोगुणः, सत्त्वं तमश्च सत्त्वतमसी, अभिभूय भवतीत्यनुवर्तते। तिरस्कृत्य वर्धते उद्भवति (तदा रजोगुणः स्वकार्यं कर्म तृष्णादि करोति जनयति) तथा तमः तमोगुणः (यदा) सत्त्वं रजश्च, सत्त्वरजसी चकाणेनुवर्तते, अभिभूय तिरस्कृत्य, भवति उद्भवति वर्धते (तदा तमोगुणः स्वकार्यं ज्ञानाऽऽवरण-प्रमादादि आरभते जनयति) इत्यर्थः ॥१०॥

अवतरणम्—यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गम्? इत्युच्यते त्रिभिः—सर्वेति।

व्याख्या—प्रथमं सत्त्वस्य उद्भूतस्य लिङ्गमाह सर्वद्वारेष्विति। यदा अस्मिन् देहे सर्वद्वारेषु, सर्वाणि द्वाराणि आत्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि, तेषु। करणानामधिकरणत्वविवक्षया सप्तमी। सर्वद्वारैः श्रोत्रादिभिरिन्द्रियैरित्यर्थः। प्रकाशः—"अन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन् उपजायते। तदेव ज्ञानम्। यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद् विवृद्धम् उद्भूतम्, सत्त्वम् इति उत अपि।" इति भाष्यम्। अत्र मधुसूदनसरस्वती—'श्रोत्रादिषु करणेषु यदा प्रकाशो बुद्धिपरिणामविशेषो विषयाकारः स्वविषयावरणविरोधी दीपवत्, तदेव ज्ञानं, शब्दादिविषय उपजायते तदाऽनेन शब्दादिविषय-ज्ञानाख्यप्रकाशेन लिङ्गेन प्रकाशात्मकं सत्त्वं विवृद्धम्-उद्भूतम् इति। विद्याज्जानीयात्। उत अपि सुखादिलिङ्गेनापि जानीयादित्यर्थः। इत्याह ॥११॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥
यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकान् अमलान् प्रतिपद्यते ॥१४॥

---

अथ उद्भूतस्य रजसो लिङ्गमाह –लोभ इति । हे भरतर्षभ "लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा ।" (इति भाष्यम्) कर्मणाम् आरम्भ उद्यमः । "काम्यानि निषिद्धानि च लौकिकानि कर्माणि आरम्भस्य विषयत्वेन निर्दिशति भगवान् भाष्यकारः कर्मणाम् इति" इत्यानन्दगिरिः । तत्र भाष्यम्—"आरम्भ उद्यमः कस्य कर्मणाम् ।" इति । "अशमः अनुपशमः, हर्षरागादिप्रवृत्तिः ।" इति भाष्यम् । "स्पृहा सर्वसामान्यवस्तुविषया तृष्णा ।' एतानि लिङ्गानि रजसि विवृद्धे सति जायन्ते । लोभाद्युपलम्भाद् रजोवृद्धि-र्बोद्धव्या इति भावः ॥१२॥

अथ उद्भूतस्य तमोगुणस्य लिङ्गमाह—अप्रकाश इति । हे कुरुनन्दन, अप्रकाशः अविवेकोऽत्यन्तः अप्रवृत्तिश्च प्रवृत्त्यभावश्च । सर्वथैव ज्ञान-कर्मणोरभावो विशेषणाभ्यामुक्तः । प्रमादः प्राप्तकर्तव्याऽकरणमिति पूर्वं व्याख्यातः स च अविवेकस्य कार्यम् । मोह एव च मोहो वेदितव्यस्य अन्यथा-वेदनम्, अविवेको मूढतेत्यर्थः । अप्रकाशस्तु अत्यन्ताऽविवेकः, मोहस्तु अन्यथा-वेदनरूपोऽविवेक इति विशेषः । तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते। चकार आलस्यादिसमुच्चयार्थः । एव शब्दो मोह एव न तु मोहाऽभाव इत्यर्थकः । अप्रकाशादिना विवृद्धं तमो ज्ञेयमित्यभिप्रायः ॥१३॥

अवतरणम्—मरणद्वारेणापि यत्फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वं सत्त्वाद्यन्यतमगुणकृतमेवेति दर्शयन्नाह—यदेति ।

व्याख्या—यदा यस्मिन् काले देहभृद् देही आत्मा (जीवः) सत्त्वे गुणे तु प्रवृद्धे सति प्रलयं मरणं याति प्राप्नोति तदा तस्मिन् काले उत्तमविदाम् लोकान् अमलान् प्रतिपद्यते । अत्र भाष्यम्—उत्तमविदां महदादितत्त्वविदाम् इत्येतत् । लोकान् अमलान् मलरहितान् प्रतिपद्यते प्राप्नोति इत्येतत् ॥'

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखम् अज्ञानं तमसः फलम् ॥१६॥

सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

---

इति । मल रहितान् रजस्तमसोरन्यतरस्योद्भवो मलम् तद्रहितान् । लोकान् ब्रह्मलोकादीन् इत्यर्थः । कैवल्यं तु सम्यग्दर्शिनामेव गुणातीतानाम् इति द्रष्टव्यम् ॥१४॥

रजसि रजो गुणे तु प्रवृद्धे सति प्रलयं मरणं गत्वा प्राप्य देहभृद् देहवान् आत्मा 'कर्मसङ्गिषु कर्माऽऽसक्तियुक्तेषु मनुष्येषु जायते' इति भाष्यम् । तथा तद्वदेव तमसि तमोगुणे प्रवृद्धे सति मरणं प्राप्य देहभृद् मूढयोनिषु पश्वादियोनिषु जायते पुनर्जन्म लभते ॥१५॥

अवतरणम्—अतीतश्लोकार्थस्यैव संक्षेप उच्यते—कर्मण इति ।

व्याख्या—कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः । सात्त्विकम् एव निर्मलं फलम् भवतीति शिष्टा आहुः, कथयन्ति । रजसस्तु राजसस्य तु कर्मणः फलं दुःखमेव । कारणानुरूप्याद् राजसमेव शिष्टा आहुः । (तथा) तमसस्तामसस्य कर्मणस्तु अधर्मस्य फलम् अज्ञानम् आहुः कथयन्ति शिष्टा इति शेषः । सात्त्विकादिकर्माणि अष्टादशे 'नियतं सङ्गरहितम्' इत्यादिना वक्ष्यति ॥१६॥

अवतरणम्—कस्माद् गुणात् किं जायते इति संक्षिप्य दर्शयति—सत्त्वादिति ।

व्याख्या—सत्त्वात् लब्धात्मकात्, ज्ञानं संजायते समुत्पद्यते सर्वकरणद्वारकमित्यानन्दगिरिः । रजसो लब्धात्मकात्, लोभ एव च न तु कदापि लोभस्याऽभावः । तमसो लब्धात्मकात् प्रमादमोहौ भवतः । अज्ञानम् एव च भवति संजायते न तु कदाचिदपि अज्ञानस्याऽभावो भवति । प्रमादः प्राप्तकर्तव्याऽकरणम् । मोहो वेदितव्यस्यान्यथा वेदनम् । अज्ञानम् अविवेकः विवेकस्याऽभावः ॥१७॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१८॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

---

अवतरणम्—किञ्च गुणानामिदं फलम्—ऊर्ध्वमिति ।

व्याख्या—सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः, ऊर्ध्वं गच्छन्ति देवलोकादिषु उत्पद्यन्ते । राजसाः रजोगुणवृत्तस्थाः, मध्ये तिष्ठन्ति मनुष्येषु उत्पद्यन्ते । जघन्यगुणवृत्तस्थाः जघन्यश्चासौ गुणश्चेति जघन्यगुण स्तमः, तस्य वृत्तं-निद्रालस्यादि तस्मिन् स्थिता मूढा अधो गच्छन्ति पश्वादिषु उत्पद्यन्ते । तामसाः तमोगुणप्रधानाः । 'निद्रालस्यादितमोगुणवृत्तस्थाः कदाचिद् राजसाः सात्त्विका अपि भवन्ति तद्वारणायं तामसाः' इति प्रयुक्तमिति मधुसूदन-सरस्वती ,।१८॥

अवतरणम्—पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु सुखदुःखमोहात्मकेषु 'सुखी दुःखी मूढोऽहमस्मि' इत्येवं रूपो यः सङ्गस्तत् कारणं पुरुषस्य सदसद्योनिप्राप्तिलक्षणस्य संसारस्य, इति समासेन पूर्वाध्याये यदुक्तं तदिह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इत्यत आरम्य 'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' इत्यादि श्लोकं यावद् गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां वन्धकत्वं गुणवृत्तनिवद्धस्य च पुरुषस्य या गतिरित्येतत् सर्वं मिथ्याज्ञानम् अज्ञानमूलं वन्धकारणं विस्तरेण उक्त्वा अधुना सम्यग्दर्शनाद् मोक्षो वक्तव्य इत्याह भगवान् द्वाभ्याम्—नान्यमिति ।

व्याख्या—यदा यस्मिन् काले द्रष्टा विद्वान् सन् गुणेभ्यः कार्यकरण-विषयाकारपरिणतेभ्योऽन्यं भिन्नं कर्तारं सर्वकर्मणां कायिकवाचिकमान-सिकविहितप्रतिपिद्धाऽविहिताऽप्रतिपिद्धानां सर्वेषां कर्मणां कर्तारं निष्पा-दकं न अनुपश्यति, अनु विद्याप्राप्तेरनन्तरं न पश्यति, न साक्षात्करोति 'गुणा एव सर्वावस्थास्तत्तत्कार्यकरणाकारपरिणताः सर्वकर्मणां कर्तारः सन्ति' इति साक्षात्करोति । गुणेभ्यश्च तथा गुणेभ्यः परं व्यतिरिक्तं गुणव्यापार-साक्षिभूतं निर्गुणं परमात्मानं वेत्ति साक्षात्करोति (तदनु) स द्रष्टा मद्भावं मम भावं मत्स्वरूपताम् मदैक्यम् अधिगच्छति प्राप्नोति । ब्रह्मभावोऽस्य रूपस्य अभिव्यज्यते इत्यर्थः ॥१९॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतान् अतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणान् अतिवर्तते ॥२१॥

श्रीभगवान् उवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥

---

कथं ब्रह्मभावम् अधिगच्छतीत्युच्यते-गुणानेतानिति । देही देहसमुद्भवान् समुद्भवन्ति एभ्य इति समुद्भवाः, देहानां समुद्भवा देहसमुद्भवास्तान्, देहोत्पत्तिबीजभूतान् एतान् यथोक्तान्-त्रीन् गुणान् सत्त्वरजस्तमांसि अतीत्य अतिक्रम्य जीवन् एव जन्ममृत्युजरादुःखैः संसारदुःखैर्विमुक्तः सन् अमृतम् अश्नुते । एवं ब्रह्मभावं विद्वान् अधिगच्छतीत्यर्थः ॥२०॥

अवतरणम्—'जीवन् एव देही गुणानेतान् अतीत्य अमृतम् अश्नुते' इति प्रश्नबीजं प्रतिलभ्य—अर्जुन उवाच ।

व्याख्या—हे प्रभो, देही एतांस्त्रीन् गुणान् यथाव्याख्यातान् अतीतोऽतिक्रान्तः सत्त्वादियथाव्याख्यातगुणपरिणामभूतान् अध्यासान् अतिक्रान्त इत्यर्थः । कैर्लिङ्गैः कैश्चिह्नै स्तथोपलक्षितो भवति ? गुणातीतस्य कानि चिह्नानि सन्तीत्येकः प्रश्नः । प्रश्नान्तरमाह—किमाचारः क आचारो यस्य सः । गुणातीतस्य आचारः कोऽस्ति ? इति द्वितीयः प्रश्नः । तृतीयं प्रश्नमाह—कथं च केन च प्रकारेण एतांस्त्रीन् गुणान् सत्त्वरजस्तमांसि अतिवर्तते अतिक्रामति ? अत्र त्रयः प्रश्ना उक्ताः । आचारस्य लिङ्गत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन कंचिद् विशेषम् आश्रित्य पृथगुक्तिः ॥२१॥

अवतरणम्—यथोक्तानां प्रश्नानां क्रमेण प्रतिवचनं षड्भिः—करिष्यन् श्रीभगवान् उवाच ।

व्याख्या—तत्र कैर्लिङ्गैर्गुणातीत उपलक्षितो भवति इतितावदाह—एकेन प्रकाशमिति । हे पाण्डव प्रकाशं च यथोक्तं सत्त्वकार्यम्, प्रवृत्तिं च यथोक्ताम् रजःकार्यम् । मोहमेव च यथोक्तं तमः कार्यम् । एतानि संप्रवृत्तानि संप्राप्तानि न द्वेष्टि (तथा) निवृत्तानि अप्राप्तानि प्रवृत्य गतानि वा न

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥२३॥**

---

काङ्क्षति यः स गुणातीत उच्यते इति चतुर्थगतेन अन्वयः। संप्रवृत्तानि निवृत्तानि इति च नपुंसकस्यैकशेषः सामान्ये नपुंसकं वा। अयं भावः अत्र प्रकाशं चेत्यादि चकारैः सर्वेषां तत्तदगुणकार्याणां समुच्चयः इति धनपतिः। प्रकाशादेरूपलक्षणार्थत्वेन सर्वेषां गुणकार्याणां संग्रह इति श्रीधरस्वामि-मधुसूदनसरस्वत्यौ। यथा कश्चिद् अविद्वान् (अगुणातीतः) सात्त्विकः पुरुषः प्राप्तं सात्त्विकं गुणं प्रकाशादिकम् अयं सात्त्विको गुणः प्रकाशादिर्मां विवेकित्व-मापादयन्, सुखे च आसञ्जयन् मां बध्नाति' इत्येवं क्षेत्रधर्मं प्रत्यगात्मनि अध्यारोप्य द्वेष्टि दुःखबुध्या तस्माद् उद्विजते। तथा राजसोऽगुणातीतः पुरुषः (अयं राजसो गुणः प्रवृत्त्यादिः कुतश्चित्प्राप्तो मां दुःखा करोति। तेन अहं दुःखी अस्मि) इत्येवं प्राप्तं राजसं गुणं द्वेष्टि तस्मादुद्विजते। तथा तामसः पुरुषः (अयं तामसोगुणो मोहादिः कथञ्चित्प्राप्तो मां विमोहयति। तेन मूढोऽहं जातः' इति तामसं मोहादि संप्रवृत्तं द्वेष्टि तस्मादुद्विजते। एवमेव (कश्चिद् अविद्वान्, सात्त्विकादिः पुरुषो यथा निवृत्तं सुखादिकं काङ्क्षति सुखादिकं मम भूयादिति। तथा विद्वान् सम्यग्दर्शी गुणातीतः पुरुषो न द्वेष्टि न च सुखादिकं काङ्क्षति तत्र तस्य अध्यासाभावाद् मिथ्यात्वस्य निश्चयाद् इति। इदं गुणातीतस्य लिङ्गं न परप्रत्यक्षम् किन्तु स्वात्ममात्रप्रत्यक्षम्। स्वान्तःकरणगतस्य द्वेषाभावस्य काङ्क्षाऽभावस्य च स्वेनैवप्रत्यक्षीकरणादिति शिवम् ॥२२॥

**अवतरणम्**—अथेदानीं किमाचारो गुणातीत इति द्वितीयप्रश्नस्यो-त्तरमाह त्रिभिः—उदासीनेति।

**व्याख्या**—उदासीनवद्, यथोदासीनस्तटस्थो न कस्यचित्पक्षं भजते तथाऽयम् निष्पक्ष आसीनो गुणातीतत्वोपायमार्गेऽवस्थितो गुणैः सुखदुःखशब्दा-द्याकारपरिणतैर्गुणकार्यैर्न विचाल्यते विवेकदर्शनावस्थातः पृथङ् न क्रियते। तदेव स्फुटीकरोति 'गुणाः कार्यकरणविषयाकारपरिणता, वर्तन्ते परस्परस्मिन् वर्तन्ते नाहम्' इत्येव इत्येवं विचार्यैव यः अवतिष्ठति अवतिष्ठते स्वरूपावस्थ एव भवतीत्यर्थः। 'छन्दोभङ्गभयात्परस्मैपदम् आर्षम्। योऽनुतिष्ठति' इति पाठान्तरम्' इति भाष्यम्। स्वरूपावस्थानमेव स्फुटी करोति नेङ्गते, न, चलति स्वरूपावस्थातः न प्रचलति। अनुतिष्ठतीति पाठे बाधिताऽनु-

समदुःखसुखः स्वस्थः समलोष्टाऽश्मकाञ्चनः ।
तुल्यप्रियाऽप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६॥

---

वृत्त्या लोकसंग्रहार्थम् अनुष्ठानम् करोतीत्यर्थः। स गुणातीत उच्यते इति वक्ष्यमाणेन सम्बन्धः ॥२३॥ गुणातीतस्य आचारान्तरमाह समेति। समदुःखसुखः समे दुःखसुखे यस्य सः। स्वस्थः स्वे आत्मनि स्थितः प्रसन्नः। समलोष्टाश्मकाञ्चनः लोष्टं च अश्मा च काञ्चनं च समानि यस्य सः। तुल्यप्रियाऽप्रियः प्रियं च अप्रियं च प्रियाप्रिये ते तुल्ये यस्य सः। धीरः धीमान् तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च तुल्ये यस्य सः। गुणातीत उच्यते इति वक्ष्यमाणेन संवन्धः ॥२४॥ गुणातीतस्य आचारान्तरमाह-- मानेति मानापमानयोः पूजापरिभवयोरादराऽनादरयोः, तुल्यः समो निर्विकारः। मित्रारिपक्षयोः मित्रशत्रुदलयोस्तुल्यः समो निर्विकारो निर्विशेषः। विदुषः स्वाऽभिप्रायेण उदासीनत्वेऽपि परदृष्टया यौ मित्रशत्रू तयो निर्विशेष इत्यर्थः। एवमेव समदुःखसुखादावपि वोध्यम्। सर्वारम्भपरित्यागी दृष्टाऽदृष्टार्थानि कर्माणि आरभ्यन्तेइत्यारम्भाः, सर्वान् आरम्भान् परित्यक्तुं शीलम् अस्येति सर्वारम्भपरित्यागी 'देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः' इति भाष्यम्। गुणातीतः स उच्यते य एवं यथोक्तसर्वविशेषणः स गुणातीत इत्युच्यते शिष्टैः। अत्र भाष्ये--"उदासीनवत्' इत्यादि 'गुणातीतः स उच्यते' इत्येतदन्तम् उक्तं यावद् यत्नसाध्यं, तावत् संन्यासिनोऽनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः। स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवति इति।" इत्युक्तम् ॥२५॥

अवतरणम्-- अधुना 'कथं च त्रीन् गुणान् अतिवर्तते' इति प्रश्नस्य प्रतिवचनमाह--मां चेति।

व्याख्या--'यो यतिः कर्मी वा' इति भाष्यम्। मां च ईश्वरं नारायणं सर्वभूतहृदयाश्रितम्, अव्यभिचारेण न कदाचिद् यो व्यभिचरति तेन निरन्तरेण

**ब्रह्मणो हि प्रतिष्ठाऽहम् अमृतस्याऽव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।।२७।।**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।।

---

भक्तियोगेन भजनं भक्तिः सैव योग स्तेन ज्ञानात्मकेन कर्मात्मकेन वा सेवते- चकारात् पूर्वोक्तानि यत्नसाध्यानि धर्मजातानि सेवते अनुतिष्ठति इत्यर्थः। स यतिः कर्मी वा, एतान् यथोक्तान् गुणान् सत्त्वरजस्तमांसि समतीत्य सम्यग् अतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते समर्थो भवति। सर्वदा- भगवद्भजनं रागद्वेषाऽभावादियथोक्तधर्मजातानुष्ठानसहकृतं गुणातीतभावो- पाय इति भावः ।।२६।।

अवतरणम्—गुणातीतः कुतो ब्रह्मभावाय कल्पते इत्यत उच्यते— ब्रह्मणो हीति ।

व्याख्या—हि यस्मात् कारणात्, अहं प्रत्यगात्मा, ब्रह्मणः परमात्मनः, प्रतिष्ठा प्रतितिष्ठति अस्मिन् इति प्रतिष्ठा, शक्तिरस्मि। शक्तिमद् ब्रह्म शक्तिरूपे प्रत्यगात्मनि अभेदेन आश्रयते इत्यर्थः। यद् ब्रह्म शक्तिमद्रूपं तत् किं विशेषणम् इत्यत आह—अमृतस्येति। अमृतस्य अविनाशिनः अव्ययस्य अविकारिणः सर्वविकारशून्यस्य च, शाश्वतस्य च नित्यस्य, धर्मस्य ज्ञान- योगधर्मप्राप्यस्य, सुखस्य आनन्दरूपस्य ऐकान्तिकस्य अव्यभिचारिणश्च। अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा यस्मात् तस्मात् सम्य- ग्ज्ञानेन अविद्यावरणनाशाद् ब्रह्मभूयाय कल्पते इति सिद्धम्। अत्र भाष्ये— "यया च ईश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते सा शक्ति र्ब्रह्मैव अहम्। शक्तिशक्तिमतोरनन्यत्वाद्—इत्यभिप्रायः। अथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म। तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठा आश्रयः। किं विशिष्टस्य ? अमृतस्य अमरणधर्मकस्य, अव्य- यस्य व्ययरहितस्य किं च शाश्वतस्य च नित्यस्य, धर्मस्य ज्ञाननिष्ठालक्षणस्य, सुखस्य तज्जनितस्य ऐकान्तिकस्य एकान्तनियतस्य च, प्रतिष्ठा, अहम्

इति वर्तते ।" इत्युक्तम् । तदेवम् अनेन अध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य मिथ्याज्ञानलक्षणस्य संसारकारणत्वं विस्तरेण प्रतिपाद्य सम्यग्ज्ञानेन संसारान्मोक्ष इति च प्रतिपाद्य तत्त्ववित्प्राप्यं ब्रह्म प्रत्यगभिन्नम् इति सिद्धान्तितम् ॥२७॥

ॐ तत्सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां चतुर्दशोऽध्यायः ॥१४॥

श्रीकृष्णार्पणमस्तु ।



# अथ गीतावंश्यां पञ्चदशोऽध्यायः

श्रीभगवान् उवाच—

ऊर्ध्वमूलमधःशाखम् अश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

---

अवतरणम्—यस्मात्कारणात् कर्मिणां कर्मफलं जिज्ञासूनां च ज्ञानयोगफलम् ईश्वराधीनम् क्रमशः 'फलमत उपपत्तेः' (ब्र० सू० ३।२।३८) इति न्यायात् 'ततोह्यस्य वन्धविपर्ययौ' (ब्र० सू० ३।२।५) इति न्यायाच्चेति। तस्मात्कारणाद् मां परमेश्वरं नारायणं भक्तियोगेन ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्ति क्रमेण गुणातीता मोक्षं गच्छन्ति। किमु वक्तव्यम् आत्मनस्तत्त्वमेव सम्यग् विजानन्तो तेन ज्ञानेन गुणातीताः सन्तः मोक्षं गच्छन्तीति ? अतोऽर्जुनेन अपृष्टमपि आत्मनस्तत्त्वं विवक्षुर्भक्तवत्सलः पञ्चदशमध्यायमारभमाणः—श्रीभगवान् उवाच।

व्याख्या—तत्र तावद् वृक्षरूपक कल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति, विरक्तस्य हि संसाराद् भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति। "ऊर्ध्वमूलम्—कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वाद् महत्त्वाच्च ऊर्ध्वम् उच्यते ब्रह्म-अव्यक्तमायाशक्तिमत्। तद् मूलम् अस्येति सोऽयं संसारवृक्षऊर्ध्वमूलः। श्रुतेश्च 'ऊर्ध्वमूलोऽवाक्शाखः' (कठो० २।६।१) इति। पुराणे च—'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धि-स्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा। धर्माऽधर्मसुपुष्पश्च सुखदुःखफलोदयः॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः। एतद् ब्रह्मवनं चैव ब्रह्मा चरति नित्यशः॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः॥' इत्यादि। तम्, ऊर्ध्वमूलम् संसारं मायामयं वृक्षम्।" इति भाष्यम्। अधःशाखम् अधो लक्षणया अव्यक्तमायाशक्तिमतो ब्रह्मणो निकृष्टा महदहङ्कारतन्मात्रादयः शाखा इव शाखा यस्य तम्। अव्ययम् अनादिकालप्रवृत्तदेहादिसन्तानप्रवाहाश्रयत्वरूपेण नित्यम्। अश्वत्थम् न श्वोऽपि स्थाता इति अश्वत्थः क्षणप्रध्वंसी तम्,

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥२॥

---

लक्षणया अश्वत्थनामकवृक्षसदृशम् जन्ममरणाऽविच्छेदलक्षणं संसारम् आहुः कथयन्ति (पूर्वोक्तानि) श्रुतिपुराणानीति शेषः । यस्य अश्वत्थस्येव संसारस्य मायामयस्य, पर्णानि पत्राणि लक्षणया पत्राणीव परिरक्षणार्थानि, छन्दांसि छादनाद् रक्षणाद् ऋग्यजुः-सामरूपाणि कर्मकाण्डस्थानि वेदवाक्यानि सन्तीति शेषः । यथा पर्णानि वृक्षस्य परिरक्षणार्थानि भवन्ति तथैव कर्मकाण्डस्थवेदा धर्माऽधर्मतद्धेतुफलप्रकाशनार्थत्वात् संसारपरिरक्षणार्थाः सन्तीति भावः । यः पुरुषस् तम् संसारवृक्षं समूलम् यथाव्याख्यातम्, वेद विजानाति स वेदविद् वेदार्थविद् इत्यर्थः । अत्र भाष्यम्--'न हि संसारवृक्षाद् अस्मात् समूलाद्, ज्ञेयोऽन्योऽणु मात्रोऽपि अवशिष्टोऽस्ति । अतः सर्वज्ञः स यो वेदार्थविदिति समूलवृक्षज्ञानं स्तौति ॥' इति । ऊर्ध्वमूलस्य अधःशाखस्य च वृक्षस्य मायामयस्यैव संभवात्संसारस्य मायामयत्वबोधनाय इयं रूपककल्पना ॥१॥

अवतरणम्—तस्यैव संसारवृक्षस्य अपरान् अवयवान् आह— अधश्चेति :

व्याख्या--तस्य ऊर्ध्वमूलस्य अधःशाखस्य अश्वत्थस्य मायामयस्य संसारवृक्षस्य गुणप्रवृद्धाः गुणैः सत्त्वरजस्तमोभिरुपादानभूतैः प्रवृद्धाः स्थूलीकृताः, विषयप्रवालाः विषयाः शब्दादयः प्रवालाः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरी भवन्तीव याभ्यस्ताः—शाखाः शाखा इव शाखाः यथाश्रुतं यथाकर्म च तत्तद्योनिषु ज्ञानकर्मफलभूतानि जन्मानि अधश्च मनुष्यादिभ्यो यावत्-स्थावरम् । ऊर्ध्वं च यावद् ब्रह्माणम् प्रतताः सन्ति । च=अपि च, अधः-देवाद्यपेक्षया अधोवर्तिनि मनुष्यदेहे इति इत्यर्थः । निकृष्टे मनुष्यलोके लोक्यते इति लोको देहः । मनुष्यश्चासौ लोकश्चेति मनुष्यलोकस्तत्र । ब्राह्मणत्वादिविशिष्टदेहे, कर्मानुबन्धीनि कर्म अनुबन्धः पश्चाद्भावि येषां तानि कर्मप्रयोजकानि, धर्माऽधर्मप्रवृत्तिकारणभूतानि मूलानि तस्य संसारस्य वृक्षस्य अवान्तरमूलानीव अवान्तरमूलानि कर्मफलभोगजनित-

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनम् सुविरूढमूलम्
असङ्गशस्त्रेण दृढेन छित्त्वा ॥३॥

---

रागद्वेषादीनां वासनाः, अनुसन्ततानि अनुप्रविष्टानि सन्ति । मनुष्यलोक इत्यस्य मनुष्यदेहे इत्यर्थः । मूलानि इत्यस्य अवान्तरमूलानि इत्यर्थः । वृक्षस्य अवान्तरमूलं 'सोर' इति भाषायां कथ्यते । पूर्वश्लोके ऊर्ध्वमूलमित्यत्र तु मूलं प्रधानमूलम् परब्रह्म गृह्यते । इह तु श्लोके मूलानि कर्मफलजनित-रागद्वेषादिवासना गृह्यन्ते । यथाश्रुतं ज्ञानेति ज्ञानम्--उपासनमेव । मनुष्याणां विशेषतः कर्माधिकारादिह अनुष्यलोक इत्युक्तम् । पूर्वकृत-कर्मफलभोग-जनिता वासनाः प्रयोजककर्त्र्यः मनुष्यदेहैः प्रयोज्यकर्तृभिः स्वानुरूपाणि कर्माणि कारयन्ति ततश्च पुनः कर्मफलप्राप्त्या जन्मादि जायते । इत्येवं संसारवृक्षस्य अवान्तरमूलानि वासना भवन्ति । परममूलन्तु सर्वाधिकारि सर्वशक्तिमद् मायाशक्तिमद् परब्रह्मैव स्वमायया संसारस्येति बोध्यम् ॥२॥

अवतरणम्—'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः' (तै० ब्रा० २।८।९) इत्यादिश्रुतिबोधितं संसारस्य सत्त्वाऽसत्त्वाभ्याम् अनिर्वाच्यत्वेन मिथ्यात्वं वदन् तत्त्वज्ञानेन वैराग्यविवेकादिपूर्वकेण अस्य संसारस्योच्छेदयोग्यतामाह भगवान्—न रूपमिति ।

व्याख्या—अस्य अश्वत्थवृक्षत्वेन अध्यवसितस्य संसारस्य इह अस्मिन् गीताशास्त्रे वर्णितं यथा ऊर्ध्वमूलत्वादिकम् यथा च लोके अविद्वद्भिः प्राप्तं तथा परीक्षणवेलायां प्रमाणतो न उपलभ्यते न प्रत्यक्षीक्रियते विद्वद्भिः भ्रान्तिप्रत्ययरूपतया वस्तुतोऽसत्त्वात् । स्वप्न-मरीच्युदक-मायामय-गन्धर्व-नगरस्येव अस्य तत्त्वज्ञानबाध्यत्वेन दृष्टनष्टत्वात् । इह शास्त्रे ऊर्ध्वमूल-त्वादिरूपेण वर्णनं तु आरोपितस्य अविद्यया भ्रमभूतस्य ब्रह्माधिष्ठानकत्वाद् रज्ज्वादिमूलकत्ववर्णनमिव उरगादेरिति न तत् तत्त्वसाधकम्, यस्माद् 'अध्यारोपापवादाभ्यां-निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायेन ऊर्ध्वमूलमिति ब्रह्मणि तस्य मूलत्वमारोप्य 'न रूपमस्येह तथोपलभ्यते' इति प्रपञ्चस्य असत्त्वप्रतिपादनेन ब्रह्मणस्तन्मूलत्वम् अपोद्यते । वस्तुतोऽसत्त्वादेव

ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाऽऽद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

---

अस्य अन्तोऽवसानं समाप्तिर्न उपलभ्यते। 'तत्त्वज्ञानं विना' इति शेषः। तत्त्वज्ञानस्याऽभावे भ्रान्तिश्च वासना च कर्म च एषाम् बीजाङ्कुरवद् अन्योऽन्यनिमित्तत्वेन जायमानस्य प्रवाहस्य अविच्छेदादिति भावः। न च आदिः आदिश्च अस्य नो लभ्यते 'इत आरभ्य अयं प्रवृत्तः' इति आरम्भोऽपि नोपलभ्यते अनादित्वादिति भावः। (अत एव) संप्रतिष्ठा मध्यञ्च अस्य नोपलभ्यते मध्यत्वस्य आद्यन्तप्रतियोगिकत्वेन तज्ज्ञानस्य आद्यन्तज्ञानाधीनत्वात्। यस्माद् अनिर्वाच्यत्वेन मिथ्याभूतोऽयम् अश्वत्थवृक्षरूपः संसारस्तस्मात् सुविरूढमूलम् सुष्ठु विरूढानि पुष्टिं गतानि मूलानि पूर्वकृतकर्मफलभोगजनितरागद्वेषादिवासनारूपाणि यस्य तम् (अपि) एनं यथोक्तम् अश्वत्थम् अश्वत्थवृक्षत्वेन अध्यवसितं संसारम् सर्वानर्थकरम् दृढेन परमात्माऽऽभिमुख्यनिश्चयदृढीकृतेन पुनः पुनर्विवेकाभ्यास-शिलासंघर्षणनिशितीकृतेन असङ्गशस्त्रेण असङ्गः पुत्रवित्तलोकैषणाभ्यो व्युत्थानम् वैराग्यम् वैराग्यपूर्वकं पारिव्राज्यं वा, स एव शस्त्रम् शस्त्रमिव छेदनसाधनम् तेन, छित्वा सबीजं (सवासनं) संसारवृक्षम्–उद्धृत्य 'ततः पदं तत् परिमार्गितव्यम्' इत्युत्तरश्लोक गतेन अन्वयः। यद्यपि असङ्गभूतवैराग्यमात्रेण तत्पूर्वकपारिव्राज्यमात्रेण वा केवलेन तत्त्वज्ञानं विना संसारवृक्षश्छेत्तुं न शक्यते मिथ्याज्ञानरूपत्वात् तथापि वैराग्यं तत्पूर्वकं पारिव्राज्यं वा संसाराच्छेदकस्य तत्त्वसंसाक्षात्कारस्य प्रधानं द्वारमस्ति इति बोधनाय छित्वेति प्रयुक्तम्। यद्वा पुत्रवित्तलोकादिषु अनुरागं सङ्गरूपं :संसारकारणत्वात् संसारम् छित्वा परित्यज्येत्यर्थः ॥३॥

छित्वा ततः परं किं कर्तव्यम् इत्युच्यते ततः पदमिति। ततः संसारवृक्षस्य छेदनात्पश्चाद् अनन्तरम्, तत् पदम् वैष्णवं स्वरूपम्। परिमार्गितव्यम् परिमार्गः अन्वेषणम्, तत् कर्तव्यम् तज्ज्ञातव्यम् साक्षात्कर्तव्यम् इत्यर्थः। तथा च श्रुतिः–'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (   ) इति। यस्मिन् पदे गताः प्रविष्टाः विज्ञानवन्तः भूयः पुनः, न निवर्तन्ति न संसाराय आव-

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तद् ॥५॥

---

तंन्ते, 'न स पुनरावर्तते न स पुनरावर्तते ।' ( ) इति श्रुतेः कथं परिमार्गितव्यम् ? इत्यतः परिमार्गणोपायमपि आह दयानिधिस्तमेवेति । 'तमेव च, यः पदशब्देन पूर्वमुक्त आद्यपुरुषस्तमेव च आद्यम् आदौ 'भवम् सत्तावन्तं पुरुषं पुरुषोत्तमम् प्रपद्ये शरणं गच्छामि' इत्येवं तच्छरणतया तत्पदं परिमार्गितव्यमित्यर्थः । तं कं पुरुषम् ? इत्यत आह यत इति । यतः यस्मात्पुरुषात्, पुराणी चिरन्तनी, प्रवृत्तिः संसाररूपमायामयवृक्षस्य प्रवृत्तिः स्थितिः प्रसृता निःसृता । ऐन्द्रजालिकाद् मायेव इत्यर्थः । तथा च श्रुतिः- 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्याद्या ॥४॥

अवतरणम्—कथं भूतास्तत्पदं गच्छन्ति ? इत्युच्यते —निर्मानेति ।

व्याख्या—निर्मानमोहाः निर्गतौ मानमोहौ येभ्यस्ते ।' 'मानोऽहङ्कारः । मोहस्त्वविवेकः ।' इत्यानन्दगिरिः । जितसङ्गदोषाः—सङ्ग एव दोषो सङ्गदोषः । जितः सङ्गदोषो यैस्ते, 'शत्रुमित्रसंनिधावपि द्वेषप्रीति वर्जिता इत्यर्थः' इत्यानन्दगिरिः । अध्यात्मनित्याः, आत्मानमधि कृत्य भवतीति अध्यात्मम् । परमात्मस्वरूपालोचनम् । तत्र, नित्यास्तत्पराः, विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते, यतय इत्यर्थः । द्वन्द्वैः प्रियाऽप्रियादिभिः सुखदुःखसञ्ज्ञैः सुखदुःखभूतैर्विमुक्ताः रहिताः, परित्यक्ताः, अमूढा मोहवर्जिताः । "मोहवर्जितत्वम् उक्तहेतुतः सञ्जात सम्यग्धीत्वम् ।' इत्यानन्दगिरिः पूर्वत्र तु मोहोऽविवेकमात्रम् । इह मोहस्तु अविवेकस्य कारणभूता अविद्या, अज्ञानरूपा इति न निर्मानमोहेत्यस्य पुनरुक्तिः । एवंभूताः, तद् अव्ययं शाश्वतं अविनाशि पदं यथोक्तम् गच्छन्ति प्राप्नुवन्ति । अमूढाः— वेदान्तप्रमाणसंजातसम्यग्ज्ञाननिवारिताऽज्ञानाः इत्यर्थः ॥५॥

अवतरणम्—तदेव पदं पुनर्विशेष्यते—न तदिति ।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥
ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

---

व्याख्या—तद् धामरूपं तेजोरूपं यथोक्तं वैष्णवं पदम् सूर्यं आदित्यो न भासयते न प्रकाशयति । न शशाङ्कः चन्द्रमाः न प्रकाशयति, न पावकोऽग्निः (अपि) न प्रकाशयति, तथा च श्रुतिः—'न तत्र सूर्यो भाति न चन्द्रतारकम् नेमा विद्युतो भान्ति कुतोऽयमग्निः ? तमेव भान्तमनु भाति सर्वम् तस्य भासा सर्वमिदं विभाति ॥' इति ! यद धाम वैष्णवं पदं गत्वा प्राप्य विद्वांसस्ततो न निवर्तन्ते न आवर्तन्ते संसाराय । तद् धाम परमानन्दबोधरूपं सच्चिदानन्दात्मकं मम विष्णोः परमं प्रकृष्टं निरतिशयं स्वरूपम् अस्तीति शेषः ॥६॥

अवतरणम्—तद्धामगतानां नास्ति निवृत्तिरित्यत्र कारणं शृणु—ममेति ।

व्याख्या—जीवलोके जीवानां लोके संसारे जीवभूतः 'कर्ता भोक्ता' इति प्रसिद्धः ममैव परमात्मनः एव सनातनः शाश्वतः, अंशो भागोऽवयव एकदेशः, अस्तीति शेषः । अत्र भाष्यम्—"यथाजलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते । तथा अयमपि अंशस्तेनैव आत्मना संगच्छति एवमेव । यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते इत्येवम् । अत उपपन्नमुक्तं यद् गत्वा न निवर्तन्ते इति । ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति ? सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागात् । नैप दोपः । अविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितो यतः । दर्शितश्चाऽयमर्थः क्षेत्राध्याये विस्तरशः ।" इति । अत्रानन्दगिरीये—'प्रतिबिम्बपक्षमादाय दृष्टान्तो यथेति । अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरम्-यथावेति । परस्य निरवयवत्वात् तदेकदेशत्वं जीवस्य अयुक्तमिति शङ्कते नन्विति । तस्य निरवयत्वं साधयति सावयवत्त्वे चेति । वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोंऽशो भविष्यति इति परिहरति-नैप दोप इति । वस्तुतस्तु जीवस्य नांशत्वं परमात्मनस्तावन्मात्रताया दर्शितत्वादित्याह दर्शित-

२२

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धान् इवाशयात् ॥८॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयान् उपसेवते ॥९॥

---

श्चेति ।" इत्युक्तम् । स च जीवो मदंशत्वेन कल्पितो यदि वस्तुतो मदात्मैव तर्हि कथं संसरति उत्क्रामति इति चेत्युच्यते—मन इत्यादि । स जीवः प्रकृतिस्थानि प्रकृतौ स्वस्थाने कर्णशष्कुल्यादौ स्थितानि मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि एकं मनश्च षष्ठं येषां तानि कर्षति आकर्षति । कदा आकर्षतीत्युत्तरेण वक्ष्यते ॥७॥

अवतरणम्—कस्मिन् काले कर्षतीत्युच्यते—शरीरमिति ।

व्याख्या—यच्चापि यदा चापि, 'ईश्वरो जीवो देहादिसंघातस्वामी, उत्क्रामति (शरीरं त्यजति), तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात् प्राथम्येन संबध्यते ।' इति भाष्यम् । यद् यदा च शरीरं पूर्वस्माच्छरीराच्छरीरान्तरम्, अवाप्नोति प्राप्नोति तदा चापि एतानि मनः षष्ठानीन्द्रियाणि, वायुः पवनः, आशयात् पुष्पादेर्गन्धान् इव गृहीत्वा आदाय संयाति सम्यग् गच्छति ॥८॥

अवतरणम्—कानि पुनस्तानि ? किमर्थञ्च गृहीत्वा संयाति ? तत्राह—श्रोत्रमिति ।

व्याख्या—श्रोत्रं चक्षुः, स्पर्शनं त्वगिन्द्रियं च, रसनं घ्राणमेव च । मनश्च षष्ठम् प्रत्येकमिन्द्रियेण सह अधिष्ठाय आश्रित्य अयं देहस्थो विषयान् शब्दादीन् उपसेवते गृह्णाति । 'शरीरं यदवाप्नोति ।' इत्यादिश्लोके (१५।८) देहाद् आत्मनोऽतिरेकमुक्त्वा 'श्रोत्रं चक्षुः स्पर्शनञ्चेत्यादि श्लोके(१५।९) करणानां प्रवर्तकत्वात् करणेभ्यश्च अतिरिक्त आत्मेति उक्तम् इत्यानन्दगिरीये । ननु 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति'-(बृह० ४।४।२) इति श्रुतेः 'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥'. (ब्र० पु०) इति स्मृतेश्च सप्तगत्यधिकरणन्यायाच्च ब्रह्मसूत्रोक्ताद् एकादशानामपि इन्द्रियाणाम् उत्क्रमणकालेजीवेन कर्षणं भवितुमर्हति । कथमत्र मनःषष्ठानामेव कर्षणं विहितम्

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

---

इति चेत् सत्यम् । सर्वेषामेव करणानाम् उत्क्रमणकाले कर्षणे सत्यपि 'जीवः कथं-संसरति ? इत्याकाङ्क्षायां 'संसरणे मनःषष्ठानामेव प्राधान्येन निमित्तत्वम् इतरेषां करणानां तु तदनुगामित्वमेव' इत्यभिप्रेत्य 'इत्थं संसरति' इति समाधानाऽभिप्रायेण तदुक्तेः । अत एव 'अधिष्ठाय मनश्चायं विषयान् उपसेवते' इति विषयोपसेवनेनोपसंहृतम् ॥ पुर्यष्टकम्—वागादिपञ्च, श्रवणादिपञ्च, प्राणादिपञ्च, शब्दादिपञ्च, मनो बुद्धिश्चित्तम् अहङ्कारश्चेति अन्तःकरणचतुष्टयम् अविद्या, कामः कर्म चेति ॥९॥

अवतरणम्—एवं कार्यकरणसंघाताद् अतिरिक्तम् उत्क्रान्त्यादि कुर्वन्तं किमिति सर्वे न पश्यन्ति ? इत्यत आह—उत्क्रामन्तमिति ।

व्याख्या—उत्क्रामन्तं पूर्वोपात्तं देहं परित्यजन्तं, स्थितं वाऽपि देहे तिष्ठन्तं वापि, गुणान्वितं सुखदुःखमोहाख्यैः सत्त्वादिभिर्गुणैरन्वितं संयुक्तं, भुञ्जानं वाऽपि शब्दादीन् विषयान् उपलभमानं वापि, एनं जीवम् एनमिति उत्तरश्लोकादपकर्षः । सन्निहिततमत्वेन दर्शनयोग्यमपि विमूढा दृष्टाऽदृष्टभोगबलाकृष्टचेतस्तया अनेकधा मूढा जनाः, न अनुपश्यन्ति । अहो कष्टं वर्तते इति अज्ञान् अनुक्रोशति भगवान् । ये तु पुनर्ज्ञानचक्षुषः प्रमाणजनितं ज्ञानं चक्षुर्येषां ते ज्ञानचक्षुषो विविक्तदृष्टयो जनास्ते एनं पश्यन्ति ॥१०॥

अवतरणम्—शास्त्रे न्यायानुगृहीते श्रवणादिना यत्नं कुर्वतामपि केचिदेव पश्यन्ति केचिन्न पश्यन्ति अत्र को हेतुः ? इत्यत आह भगवान्—यतन्त इति ।

व्याख्या—केचित्तु यतन्तः शास्त्रादिप्रमाणैः श्रवणमननात्मकं प्रयत्नं कुर्वन्तः योगिनश्च समाहित-चित्ताश्च । योगिनश्चेति चकारो यत्नयोगयोः समुच्चयार्थः । एनम् प्रकृतमात्मानम् आत्मनि स्वस्यां बुद्धौ अवस्थितं प्रतिफलितं पश्यन्ति—'अयम् अहम् अस्मि' इत्युपलभन्ते । (अपरे तु) यतन्तोऽपि शास्त्रादिप्रमाणैः प्रयत्नं श्रवणमननरूपं कुर्वन्तोऽपि अकृतात्मानस्तपसा इन्द्रियजयेन च संस्कृत आत्मा येषां ते कृतात्मानः, न कृतात्मानो अकृतात्मानो दुश्च-

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाऽग्नौ तत् तेजो विद्धि मामकम् ॥१२॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥१३॥

---

रिताद्—अनुपरता अशान्तदर्पात्मानः प्रयत्नं कुर्वन्तोऽपि अचेतसोऽविवेकिनो न एनं पश्यन्ति यत्नसाम्येऽपि आत्मदर्शने शमदमादिसंस्कृतमनसोऽपि कारणत्वात् तत्सत्त्वे आत्मदर्शनं जायते तदभावे तु न जायते इति विशेषः ॥११॥

अवतरणम्—यत्पदं सर्वाऽवभासनक्षमा अपि सूर्यादयो नावभासयन्ते यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराऽभिमुखा न निवर्तन्ते । यस्य च पदस्य उपाधिभेदम् अनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान्—यदादित्येति ।

व्याख्या—यद् आदित्यगतं सूर्यगतं तेजो दीप्तिः प्रकाशोऽखिलं समस्तं जगत् संसारं भासयते प्रकाशयति । यत् तेजश्चन्द्रमसि चन्द्रे विद्यते इति शेषः । यच्च तेजोऽग्नौ पावके विद्यते इति शेषः । तत् तेजोऽवभासकं ज्योतिर् मामकं मम विष्णोर्मदीयं वैष्णवं ज्योतिर्विद्धि जानीहि । अथवा यद् आदित्यगतं तेजश्चैतन्यात्मकं ज्योतिर् यच्चन्द्रमसि यच्चाग्नौ तत् तेजश्चैतन्यात्मकं ज्योतिर्मामकं जानीहीत्यर्थः । यद्यपि स्थावरेषु जङ्गमेषु च तत् समानं चैतन्यात्मकं ज्योतिरित्यविशेषाद् आदित्यादिगतत्वविशेषणाभिधानम् अयुक्तं प्रतिभाति तथापि नैष दोषः । सत्त्वाधिक्याद् आधिक्योपपत्तेः । आदित्यादिषु हि सत्त्वम् (अन्तःकरणम्) अत्यन्तप्रकाशम्, अत्यन्तभास्वरम्, अतस्तत्रैव आविस्तरं चैतन्यं ज्योतिरिति तद् विशेषणं युक्तमेव । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखम् आविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे च स्वच्छतमे च तारतम्येन आविर्भवति तद्वत् । तथा च श्रुतिः 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥१२॥

अवतरणम्—किञ्च-(अयञ्च विभूतिसंक्षेप ईश्वरस्य)—गामिति ।

व्याख्या—गां पृथिवीम्, आविश्य प्रविश्य (अहम्) ओजसा बलेन भूतानि जगद् धारयामि बिभर्मि । यद् बलं मम कामरागविवर्जितं वैष्णवम् ऐश्वरं जगद्विधारणाय पृथिव्या अन्तः-प्रविष्टम्, तेन बलेन जगद् धारयामीत्यर्थः । येन कारणेन गुर्वी अपि पृथिवी नाधःपतति, न च विदीर्यते । तथा च

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥
सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृति र्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद् वेदविदेव चाहम् ॥१५॥

---

मन्त्रवर्णः—'येन द्यौरुग्रा पृथिवी च दृढा' (तै० सं० ४।१।८) इति । 'सदाधार पृथिवीं' (तै० सं० ४।१।८) इत्यादिश्च । अतो गामाविश्य च भूतानि चराऽचराणि धारयामीति युक्तमुक्तम् । किञ्च, अहं सर्वा ओषधीः पृथिव्यां जाता व्रीहियवाद्याः, रसात्मको रसस्वभावः सोमश्चन्द्रो भूत्वा पुष्णामि पुष्टिमती रसस्वादुमतीश्च करोमि । 'सोमो हि सर्वरसानाम् आकरः । सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति'–इति भाष्ये ॥१३॥

अवतरणम्—(किञ्च)—अहमिति ।

व्याख्या—अहं वासुदेव ईश्वरो वैश्वानर उदरस्थोऽग्निर्भूत्वा 'अयमग्नि-वैश्वानरो योऽयम् अन्तः पुरुषे येनेदमन्नं पच्यते' (बृह० ५।९।१) इत्यादि श्रुतेर्वैश्वानरः सन् प्राणिनां प्राणवतां देहम् आश्रितः प्रविष्टः प्राणापानसमा-युक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि चतुर्विधं चतु-ष्प्रकारम्— भोज्यं भक्ष्यं चोष्यं लेह्यञ्च अन्नम् अशनम् । तत्र यद् दन्तैरव-खण्डच-अवखण्डच भक्ष्यते अपूपादि तद् भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते सूपौदनादि तद् भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् । यत्तु दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्य अवशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यम् इति भेदः । अत्र 'भोक्ता वैश्वानरो-ऽग्निर्भोज्यमन्नं सोमस्तदेतद् उभयम् अग्नीषोमौ सर्वम्' इति पश्यतो भुक्ति-काले ध्यायतो भोक्तु-रन्नदोषलेपो न भवति' इति प्रासङ्गिकं सफलं ध्यानं द्रष्टव्यं भाष्योक्तम् ॥१४॥

अवतरणम्—इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वम् ईश्वरस्येत्याह–सर्वस्येति ।

व्याख्या—च = किञ्च, सर्वस्य प्राणिजातस्य अहम् आत्मा सन् हृदि बुद्धौ संनिविष्टः प्रविश्य स्थितोऽस्मि । अतो मत्तः मद्रूपाद् आत्मनः सकाशात्

**द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥**

---

सर्वप्राणिनां स्मृतिः-अनुभूतस्य परामर्शो भवति। ज्ञानम् अनुभवो भवति। अपोहनं च स्मृत्यनुभवयो रपोहनम् अपगमनं च भवतीति शेषः। पुण्यकर्माऽनुरोधेन पुण्यकर्मिणां ज्ञानस्मृती भवतः। तथा पापकर्माऽनुरोधेन पापकर्मिणां ज्ञानस्मृत्योरपगमनं भवति। अतः प्राणिकृताभ्यां धर्माऽधर्माभ्यां तत्फलदाने वैषम्यं कुर्वतो नेश्वरस्य नैर्घृण्यं न च पक्षपातः। अथ वेदवेद्यं परं ब्रह्म भगवतो वासुदेवाद् अन्यदिति शङ्कां वारयति-वेदैरिति। सर्वैर्वेदैश्च ऋग्यजुःसामाथर्वाख्यैः, अहमेव परमात्मा वेद्यो वेदितव्योऽस्मि। तथा। "वेदान्तकृद् वेदान्तार्थसम्प्रदायकृदित्यर्थः" इति भाष्यम्। अतो न वेदान्तानां पौरुषेयत्वम्। अहमस्मि इत्यनुवर्तते। 'वेदविद् वेदार्थविदेव चे'ति भाष्यम्। अहमस्मीत्यर्थः। वेदार्थसम्प्रदाय प्रवर्तकत्वाय वेदार्थयाथातथ्यज्ञानवान् अहमेवास्मीति भावः। वेदान्तकृदिति वेदान्तानां पौरुषेयत्व प्रसक्तिरिति 'वेदान्तानां पौरुषेयत्वं परिहरति भाष्यकारः—वेदान्तार्थसम्प्रदायकृदित्यर्थ इति' इत्यानन्दगिरिः ॥१५॥

अवतरणम्—भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो—'यदादित्यगतं तेजः' इत्यादिना। अथाऽधुना तस्यैव क्षराऽक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्धारणार्थम् उत्तरश्लोका आरभ्यन्ते तत्र सर्वमेव अतीताऽनागताध्यायार्थजातं समस्तं गीताशास्त्रोक्तम्—त्रिधा राशीकृत्य आह—द्वाविमौ इति।

व्याख्या—लोके संसारे क्षरश्च क्षरतीति क्षरो विनाशी एको राशिः। अक्षर एव च अविनाशी एव च अपरो राशिः। इमौ द्वौ पृथक्-पृथग् राशीकृतौ 'पुरुषौ' इत्युच्येते। कौ तौ क्षराऽक्षरपुरुषौ? इत्यत आह–क्षर इति। सर्वाणि भूतानि समस्तविकारजातं क्षर उच्यते। कूटस्थः कूटो राशिः राशिरिवस्थितः। अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्यायाः। तेन कूटेन स्थितः कूटस्थः। तेन कूटेन आवरणविक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थ इति यावत्। 'अनेकमायादिप्रकारेण स्थितः कूटस्थः।' इति भाष्यम्। 'अक्षरः क्षराद् विपरीतो भगवतो माया शक्तिः क्षराख्यस्य पुरुषस्य उत्पत्तिबीजम्, अनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयः, अक्षरः पुरुष उच्यते'

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

यस्मात् क्षरमतीतोऽहम् अक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

---

इति च भाष्यम् । 'संसार बीजानऽऽन्त्याद् न क्षरतीति अक्षर उच्यते ।' इति च भाष्यम् ॥ अविवेकिलोकस्य देहादिजडवर्गे एव पुरुषत्वाऽभिमानाद् अविवेकिभिरुच्यते इत्यर्थः । यद्वा पुरुषस्य परमात्मन उपाधित्वात् तयोः पुरुषत्वं न साक्षादिति गुणवृत्त्या 'द्वाविमौ पुरुषौ' इति पुरुषत्वेन तौ उच्येते विवेकिभिरपि लोकैरित्यर्थः ॥१६॥

कार्यकारणाख्यौ राशी दर्शयित्वा ताभ्यां विलक्षणं राश्यन्तरं दर्शयति--उत्तमेति । उत्तम उत्कृष्टतमः पुरुषस्तु आभ्यां क्षराऽक्षराभ्याम् उपाधिभ्याम् अत्यन्तविलक्षणः-क्षराऽक्षरोपाधिद्वयदोषेण अस्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः, आभ्यां क्षराऽक्षराभ्यां जडराशिभ्याम् अन्य एव उभयभासकस्तृतीयश्चेतनराशिः परमात्मा इत्युदाहृतः । परमश्चासौ देहादिभ्योऽविद्याकृतात्मभ्यः, आत्मा च सर्वभूतानां प्रत्यक् चेतनः इत्यतः परमात्मेत्युक्तो वेदान्तेषु । उत्तमान्यशब्दौ परमात्मनोऽत्यन्तवैलक्षण्यं क्षराऽक्षरपुरुषाभ्यां-सूचयतः । तस्माद् अक्षर शब्देन प्रत्यगात्मनो ग्रहणं कैश्चित् कृतं नात्र विद्वद्भिः कर्तव्यम् । जडवर्गस्य स्वातन्त्र्यं निरस्यति-यो लोकेति । यः परमात्मा अव्ययो विनाशरहितः, ईश्वरः, ईशनशीलः सर्वज्ञो नारायणाख्यः, लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्या आविश्य प्रविश्य बिभर्ति, स्वरूपसद्भावमात्रेण धारयति, न त्वस्य लोकधारणे व्यापाराऽन्तरम् । 'स्वरूपसद्भावमात्रेण बिभर्त्ति धारयति' इति भाष्यम् । तत्रानन्दगिरिः 'जगद्धारणे परस्य व्यापारान्तरं वारयति स्वरूपेति ।' इति । 'लोकत्रयम् इत्युपलक्षणम्, सर्वं जगद् अपि विवक्षितम् । चैतन्यबलशक्त्या चैतन्यमेव बलम् तत्र शक्तिर्माया तयेति यावद्' इत्यानन्दगिरिः ॥१७॥

अवतरणम्—यथाव्याख्यातस्य ईश्वरस्य 'पुरुषोत्तमः' इत्येतद् नाम लोके वेदे च प्रसिद्धम् । तस्य नाम्नो निर्वचनप्रसिद्ध्याऽर्थवत्त्वं दर्शयन्—'निरतिशयोऽहम् ईश्वर' इत्यात्मानं दर्शयति भगवान् -यस्मादिति ।

व्याख्या यस्मात्कारणात्, क्षरम् संसाररूपं मायाविनिर्मितम् अश्वत्थं विनाशिनम् अतीतः अतिक्रान्तः, अहं वासुदेवोऽस्मि, (तथा) अक्षरादपि

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥**

---

संसारवृक्षवीजभूताद् स्वस्य मायाशक्तेरपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वा अस्मि । अतःकारणाद् लोके वेदे च 'पुरुषोत्तमः इत्येवं प्रथितः प्रख्यातोऽस्मि। भक्तजनाः कवयश्च वैदिकाश्च मां 'पुरुषोत्तमः' इत्येवं विदुरित्यर्थः । तथा च वेदः—'स उत्तमः पुरुषः' इत्यादिः । मधुसूदनसरस्वतीधनपतिभ्यां प्रदर्शितोऽयं वेदः । लोके काव्ये च 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इति कालिदासः ॥१८॥

अवतरणम्—अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्य फलमाह—यो मामिति ।

व्याख्या—हे भारत, यः कश्चिद् माम् ईश्वरं यथोक्तविशेषणम्, असंमूढः सन् सम्मोहवर्जितः सन् देहादिषु आत्मात्मीयत्वबुद्धया रहितः सन् इत्यर्थः । एवम् क्षराऽक्षरातीतत्व-प्रकारेण यथोक्तेन पुरुषोत्तमम् जानाति 'अयम् अहमस्मि—क्षराऽक्षरातीतः पुरुषोतमः' इत्येवं विजानाति, स यथोक्तविज्ञानवान् सर्वविद् सर्वात्मन । सर्ववेत्तीति सर्ववित्—सर्वज्ञः पुरुषः, मां सर्वभूतस्थं सर्वभावेन सर्वात्मनि मयि आसक्तचित्ततया भजति सेवते । भगवत्तत्त्वविज्ञानं सर्वभावेन भजने हेतुरिति भावः । यथोक्तं श्रीमद्भागवते—'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिम् इत्थंभूतगुणो हरिः ॥' इति । अन्यत्रापि—'द्वैतं मोहाय बोधात्प्राग् ज्ञाते तत्त्वे मनीषया। भक्त्यर्थं कल्पितं द्वैतम् अद्वैतादपि सुन्दरम् ॥' इति । अत्रानन्दगिरिः—'असंमूढः संमोहवर्जितः सन्' इति भाष्ये 'संमोहवर्जितः संमोहेन देहादिषु आत्मात्मीयबुद्धया रहित इत्यर्थः । भगवन्तं जानतः सर्ववित्त्वं तस्यैव सर्वात्मना ज्ञेयत्वाद् इत्याह स सर्वविदिति । सर्वात्मनि मयि एव आसक्तचित्तत्वेनेत्यर्थः ॥' इति ॥१९॥

अवतरणम्—अस्मिन् अध्याये भगवत्तत्त्वज्ञानं मोक्षफलम् उक्त्वा अथेदानीं तत् स्तौति—इतीति ।

**इति गुह्यतमं शास्त्रम् इदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।।२०।।**

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम पञ्चदशोऽध्यायः

---

व्याख्या—हे अनघ अपाप, इति-एतद्, गुह्यतमं गोप्यतमम् अत्यन्तरहस्यमित्येतद् । इदं पञ्चदशाऽध्यायरूपं शास्त्रम् मया उक्तम् कथितम् । अत्र भाष्यम्—'यद्यपि गीताख्यं समस्तं शास्त्रम् उच्यते तथापि अयमेवाध्याय इह शास्त्रम् उच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन् अध्याये समासेन उक्तो न केवलं सर्वश्च वेदार्थ इह परिसमाप्तः । 'यस्तं वेद स वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्यः' 'इति चोक्तम् ।' इति । एतद्-शास्त्रं यथादर्शितार्थं बुद्ध्वा ज्ञात्वा बुद्धिमान् स्याद् भवेद् नान्यथा । 'कृतकृत्यश्च कृतं कृत्यं कर्तव्यं येन सः, कृतकृत्यः । विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न च अन्यथा कर्तव्यं परिसमाप्यते कस्यचिद् इत्यभि प्रायः । 'सर्वं-कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते' इति चोक्तम् । 'एतद् हि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा ।।' (मनु स्मृति—१२।९३) इति च मानवं वचनम् । यत एतत्परमार्थं तत्त्वं मत्तः श्रुतवान् असि ततः कृतार्थस्त्वं भारत इति ।।' इति ।। तदेवम् अनेन अध्यायेन गीताशास्त्रोक्तं भगवत्तत्त्वं विज्ञाय कृतकृत्यता स्याद् नान्यथेति विशेषतः प्रदर्शितम् ।।२०।।

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु शाङ्करभाष्यानुसारिण्यां वंशीव्याख्यायां वंशीधरमिश्रकृतायां विश्वरूपदर्शनयोगो नाम पञ्चदशोऽध्यायः इति श्रीकृष्णार्पणमस्तु ।।१५।।



# अथ गीतावंश्यां षोडशोऽध्यायः

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥

---

अवतरणम्—अनन्तरातीते पञ्चदशेऽध्याये 'अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके' (१५।२) इत्यग्रंवासनानां संसारस्य अवान्तरमूलत्वम् उक्तम्। ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकादिभेदेन दैवी आसुरी राक्षसी चेति प्रकृतित्रयत्वेन विभक्ता भवन्ति। नवमेऽध्याये इह शास्त्रे संक्षेपेण सूचिताश्च 'मोघकर्माणो मोघज्ञाना विचेतसः राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति। 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥ इति च। तासां विस्तरेण प्रदर्शनाय अयं षोडशोऽध्याय आरभ्यते। तत्र राक्षस्यामेव आसुर्या 'अन्तर्भावं कृत्वा द्वयोरेवेह दैव्यासुर्योः प्रकथनम्। तत्र संसारमोक्षाय दैवी प्रकृतिः, संसारबन्धाय आसुरी राक्षसी च प्रकृती भवतः। छान्दोग्यश्रुतिरपि शुभाशुभवासनाभेदमाह—'द्वया ह प्राजापत्या देवाश्चासुराश्च' इति। तत्र दैव्या आदानाय तदितरयोः परिवर्जनाय च प्रदर्शनं क्रियते। तत्र प्रथमं दैवीं प्रकृतिं दर्शयिष्यंस्त्रिभिः—श्रीभगवान् उवाच।

व्याख्या—अभयम् अभीरुता, अभयशीलता। 'अभयम् अभीरुता' इति भाष्ये 'अभीरुता शास्त्रोपदिष्टेऽर्थे संदेहं हित्वा अनुष्ठाननिष्ठत्वम्' इत्यानन्दगिरिः। मधुसूदनसरस्वती 'शास्त्रोपदिष्टेऽर्थे सन्देहं विना अनुष्ठाननिष्ठत्वम्। एकाकी सर्वपरिग्रहशून्यः कथं जीविष्यामि इति भयराहित्यं वा अभयम्।' इत्याह। तत्र धर्मदत्तः—'न विद्यते भयं यस्मात् (कारणात्) तद् अभयम् इति व्युत्पत्त्यनुसारेणाह—शास्त्रमिति। तादृशानुष्ठानशीलस्य प्रत्य-

तेजः क्षमा धृतिः शौचम् अद्रोहो नाऽतिमानिता ।
भवन्ति सम्पदं दैवीम् अभिजातस्य भारत ॥३॥

---

वायाऽभावाद् नरकादिभयस्य, चेतः शुद्धद्वारा ज्ञानोत्पत्तौ संसारभयस्य च अभावात् तादृशानुष्ठाननिष्ठत्वस्य अभयत्वम् उपपद्यते, इति भावः।' इत्याह। अभीरुतेति भाष्यस्य अभयशीलतेत्यर्थः, इति वयम्। व्याघ्रादौ सर्पादौ वा विद्यमाने भयोत्पत्तेः सर्वसाधारणत्वेऽपि भयशीलता सा आसुरी राक्षसी वा संपद्, न सामान्यं भयम् इति भाष्यकारस्याशयः प्रतिभाति। 'सत्त्वसंशुद्धिः सत्त्वस्य अन्तःकरणस्य संव्यवहारेषु परवञ्चन-मायाऽनृतादिपरिवर्जनं शुद्धभावेन व्यवहारइत्यर्थः' इति भाष्यम्। 'ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रतश्च आचार्यतश्च आत्मादिपदार्थानाम् अवगमः। योगोऽवगतानाम् आत्मादिपदार्थानाम् इन्द्रियाद्युपसंहारेण एकाग्रतया स्वात्मसंवेद्यताऽऽपादनम्। तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठता। एषा प्रधाना दैवी सात्त्विकी संपद्' इति भगवान् भाष्यकारः। तत्रानन्दगिरिः—"एषा अभयाद्या ज्ञानादिस्थित्यन्ता, त्रिधा उक्तेति यावत्।" इत्याह। दानम् यथाशक्तिसंविभागोऽन्नादीनाम्। 'दमश्च बाह्यकरणानाम् उपशमः। अन्तःकरणस्य उपशमं शान्तिं वक्ष्यति।' इति भाष्यम्। यज्ञश्च श्रौतोऽग्निहोत्रादिः स्मार्तश्च देवयज्ञादिः। अग्निहोत्रादिरित्यादिपदेन दर्शपूर्णमासादिः। देवयज्ञादिरित्यादिपदेन पितृयज्ञभूतयज्ञ मनुष्ययज्ञानां ग्रहणम् ब्रह्मयज्ञस्य स्वाध्यायशब्देन पृथक्करणाद् ब्राह्मणवसिष्ठन्यायाद्। स्वाध्याय ऋग्वेदादीनामध्ययनम् अदृष्टार्थम्। तपो वक्ष्यमाणं शारीरादि। आर्जवम् ऋजुभावः 'ऋजुत्वं सर्वदा' इति भाष्यम् ॥१॥

किञ्च अहिंसा अहिंसनम्, प्राणिनां पीडाया वर्जनम्। सत्यम् अप्रियाऽनृतवर्जितं यथाभूतार्थं वचनम्। अक्रोधः परैराक्रुष्टस्य अभिहतस्य वा प्राप्तक्रोधस्योपशमनम्। त्यागः संन्यासः। पूर्वं दानस्योक्तत्वात्। 'शान्तिरन्तःकरणस्योपशमः।' इति भाष्यम्। अपैशुनम् पररन्ध्रस्य परस्मै प्रकटीकरणं-पैशुनम् तदभावः। दया कृपा भूतेषु दुःखितेषु। अलोलुप्त्वम् इन्द्रियाणां विषयसन्निधौ अविक्रिया। 'रकारोत्तराकारस्य लोपः' इति श्रीधरस्वामी। मार्दवं मृदुता अक्रौर्यम्। ह्रीर्लज्जा। अचापलम् असति प्रयोजने वाक्पाणिपादादीनाम् अव्यापारयितृत्वम् ॥२॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥४॥

---

किञ्च तेजः प्रागल्भ्यम्। न त्वग्गता दीप्तिः। क्षमा आक्रुष्टस्य अभिहतस्य वा अन्तर्विक्रियाया अनुत्पत्तिः। उत्पन्नायां विक्रियायां तत्प्रशमनम् अक्रोधः इत्यवोचाम। इत्थं क्षमाया अक्रोधस्य च विशेषः। धृतिर् धैर्यम्—देहेन्द्रियेषु अवसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणस्य वृत्तिविशेषः। येन उत्तम्भितानि करणानि देहश्च नावसीदन्ति। शौचं द्विविधम् मृज्जलकृतं वाह्यम्, आभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यम् मायारागादिकालुष्याऽभावः। एवं द्विविधं शौचम्। अद्रोहः परजिघांसाऽभावः। नातिमानिता अत्यर्थं मानोऽतिमानः, सोऽस्ति यस्य सोऽतिमानी, तस्य भावोऽतिमानिता अतिमानिताया अभावो नातिमानिता—आत्मनः पूज्यताऽतिशयभावनाया अभाव इत्यर्थः। हे भारत, अभयादीनि एतदन्तानि दैवीं देवानाम् इमाम् सम्पदम् अभिजातस्य अभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थः, भवन्ति। साधकस्य मनुष्यदेहस्थस्यैव दैवविभूत्यर्हस्य भाविकल्याणस्येति यावत्, एतानि षड्विंशति विशेषणानि भवन्तीति भावः ॥३॥

अवतरणम्—मुमुक्षोरादानाय दैवीं सम्पदमुक्त्वाऽथेदानीं परिवर्जनाय आसुरी संपदुच्यते एकेन श्लोकेन—दम्भ इति।

व्याख्या—दम्भो धर्मध्वजित्वम्। दर्पो धनस्वजनादिनिसित्तक उत्सेकः। उत्सेको मदः। अभिमानश्चेति स्थाने अतिमानश्चेति भाष्यकारगृहीतः पाठः मधुमूदनसरस्वतीगृहीतश्च। अतिमान. पूर्वोक्तः। आत्मनः पूज्यताऽतिशयभावनेत्यर्थः। क्रोधः 'क्रुद्धो हन्याद् गुरूनपि' इत्युक्तदिशा आघातभर्त्सनादिप्रयोजकश्चित्तवृत्तिविशेषः। दर्प उत्सेको महदवधीरणा हेतुः। अतिमान आत्मनि उत्कृष्टत्वाऽध्यारोप इत्यनयोर्विशेषः' पारुष्यमेव च पारुष्यं परुषवचनम् यथा काणं प्रति चक्षुष्मान् इति, विरूपं रूपवानिति, हीनाऽभिजनम् उत्तमाभिजन इतिवचनम्। अज्ञानं च विवेकज्ञानस्य अभावः कर्तव्याऽकर्तव्यादिविषयस्य. मिथ्याप्रत्ययः। हे पार्थ इमानि दम्भादीनि अज्ञानान्तानि विशेषणानि, आसुरीम् असुरस्य इयम् आसुरी ताम्, संपदम् अभिजातस्य अभिलक्ष्य जातस्य असुरविभूत्यर्हस्य भाविपतनस्येति यावद् भवन्तीतिशेषः ॥४॥

**दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता।**
**मा शुचः संपदं दैवीम् अभिजातोऽसि भारत ॥५॥**

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥**

---

**अवतरणम्**—अनयोः संपदोः फलविभाग उच्यते—दैवीति।

**व्याख्या**—दैवी देवस्य इयं दैवी सम्पद् यथोक्ता अभयाद्या नातिमानितान्ता सम्पद् विमोक्षाय संसारबन्धनाद् विमुक्तये मता अभिप्रेता। आसुरी सम्पद् दम्भाद्या यथोक्ता (तु) निबन्धाय संसारबन्धन प्रसक्तये मता। नियतो बन्धो निबन्ध इत्यर्थः। इह आसुरी शब्देन उपलक्षणार्थत्वाद् राक्षस्या अपि ग्रहणं भवति। तदा एवमुक्ते सति अर्जुनस्य अन्तर्गतं भावम् 'किमहं दैवीं सम्पदम् अभिजातोऽस्मि किंवा आसुरीम् ? इत्यालोचनारूपम् अभिलक्ष्य भगवान् भक्तवत्सल आह—हे पाण्डव, त्वं दैवीं संपदम् अभिलक्ष्य जातोऽसि उत्पन्नोऽसि (अतः) मा शुचः शोकं मा कार्षीः। भाविकल्याणस्त्वमसीति भावः ॥५॥

**अवतरणम्**—निर्दयानां रक्षसां संपदं तृतीयाम् आयुर्यां संपदि अन्तर्भाव्य आह—द्वौ इति।

**व्याख्या**—अस्मिन् लोके संसारे 'भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ, सृज्येते इति सर्गौ भूतानि एव सृज्यमानानि दैवासुरसंपद्युक्तानि द्वौ भूतसर्गौ इत्युच्येते सर्वेषां द्वैविध्योपपत्तेः। 'द्वौ द्विसंख्याकौ' इति भाष्यम्। 'द्वया ह प्राजापत्या देवाश्चासुराश्च' (बृह० १।३।१) इति श्रुतेः। कौ तौ भूतसर्गौ इति उच्येते ? इत्यत आह दैव आसुर एव च। दैवसम्पदा युक्तो दैवो भूतसर्गः। आसुरसम्पदा युक्त आसुरो भूतसर्गः। उक्तयोरेव पुनरनुवादे प्रयोजनमाह—दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशः विस्तरप्रकारेण प्रोक्तः कथितः। न त्वासुरो विस्तरशः प्रोक्तः। अतस्तत्परिवर्जनार्थम् आसुरं भूतसर्गं मे मम वचनात्, हे पार्थ विस्तरश उच्यमानम् शृणु अवधारय ॥६॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥८॥

---

अवतरणम्—आ अध्यायपरिसमाप्तेरासुरी संपत् प्राणिविशेषणत्वेन प्रदर्श्यते । प्रत्यक्षीकरणेन च शक्यतेऽस्याः परिवर्जनं कर्तुमिति–प्रवृत्तिमिति ।

व्याख्या—आसुरा असुरसंपदा युक्ता जना मनुष्याः प्रवृत्तिं च पुरुषार्थ-साधने कर्तव्ये–विहितत्वेन यस्मिन् प्रवर्तितव्यम् तां प्रवृत्तिं प्रवर्तनं प्रवृत्ति-योग्यं कर्मेत्यर्थः । न विदुर्न जानन्ति । निवृत्तिश्च प्रवृत्तिविपरीतां यस्माद् अनर्थहेतोः कर्मणो निषिद्धत्वेन निवर्तनीयं तां निवृत्तिं निवृत्तियोग्यं कर्म च न विदुर्न जानन्ति । (किञ्च) तेषु आसुरेषु जनेषु शौचं शुचिभावो न विद्यते नास्ति । नापि च आचारो मन्वादिभिरुक्तस्तेषु विद्यते । सत्यं यथाभूतार्थ-वचनं (च) तेषु न विद्यते । अशौचा अनाचारा अनृतवादिनो मायाविनो हि आसुराः । प्रवृत्तिं विहितां क्रियामित्यर्थः । निवृत्तिं निषिद्धां क्रियामित्यर्थः । विधिनिषेधौ न जानन्तीति यावत् । 'शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मण-परिव्राजकन्यायेन पृथगुपादानम्' इत्यानन्दगिरिः ॥७॥

अवतरणम्—आसुराणां जनानां विशेषणान्तराण्यपि सन्तीत्याह—(किञ्चेति भाष्ये) –असत्यमिति ।

व्याख्या—ते आसुरा जना जगद् इदं सर्वं ब्राह्मणादिसहितं मनुष्य-जातम्, असत्यं सत्यहीनं 'यथा वयम् अनृतप्रायास्तथा सर्वे लोका अनृतप्रायाः' इति आहुः कथयन्ति । (तथा) जगद् अप्रतिष्ठम् नास्य धर्माऽधर्मौ प्रतिष्ठा व्यवस्थाहेतू विद्येते इति अप्रतिष्ठम् (च) आहुः कथयन्ति । (किञ्च) जगद्-अनीश्वरम् न च धर्माऽधर्मसव्यपेक्षकोऽस्य शासिता ईश्वरो विद्यते इत्यतोऽ-नीश्वरम् आहुः कथयन्ति । (किञ्च) जगद् अपरस्परसंभूतम् अपरं च परं चेति अपरस्परम् तस्मात् संभूतम्, स्त्रीपुंसमिथुनात् सततं सं जातम् । 'अपरस्पराः क्रियासातत्ये' (पा० सू०) इति सुट् । किमन्यत् ? कामाद् अन्यत् किञ्चिद् अदृष्टं धर्मादि कारणान्तरं जगतो न विद्यते किन्तु कामहैतुकम् कामहैतुकमेव

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणःक्षयाय जगतोऽहिताः ॥९॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥

चिन्ताम् अपरिमेयां च प्रलयान्ताम् उपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥

---

जगत् । काम एव हेतुर्यस्य तत् कामहेतुकम् कामहेतुकमेव 'कामहैतूकम्' इति भाष्यम् । स्त्रीपुंसयोः काम एव प्राणिनां कारणम् इति आहुः । लौकायतिकदृष्टिरियम् ॥८॥

अवतरणम्—न चेयं यथोक्ता दृष्टिरिष्टेत्याह—एतामिति ।

व्याख्या—एतां यथोक्तां लौकायतिकचार्वाकसम्बन्धिनीं दृष्टिं बुद्धिम् अवष्टभ्य आश्रित्य नष्टात्मानः नष्टस्वभावाः, विभ्रष्टपरलोकसाधनाः अल्पबुद्धयः अल्पविषयविषया अल्पैव बुद्धिर्येषां ते, उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः, जगतोलोकस्य-अहिताः शत्रवः जगतो लोकस्य क्षयाय नाशाय प्रभवन्ति समर्था भवन्ति ॥९॥

अवतरणम्—तानेव असुरान् प्रकारान्तरेण विशिनष्टि—कोममिति ।

व्याख्या—ते च असुराः-दम्भमानमदान्विताः दम्भश्च मानश्च मदश्च-तैरन्विताः अधार्मिकत्वेऽपि आत्मनो धार्मिकत्वख्यापनं दम्भः । अपूज्यत्वेऽपि आत्मनः पूज्यत्वख्यापनं मानः । अनुत्कृष्टत्वेऽपि आत्मन उत्कृष्टत्वारोपो महद्वधीरणा हेतुर्मदः । तैरन्विता युक्ताः । अशुचिव्रता अशुचीनि मद्यमांसादि विषयाणि व्रतानि आहारनियमाः पूजननियमा वा येषांते । दुष्पूरं पूरयितुम् अशक्यं कामं विषयेच्छाम् आश्रित्य कृत्वा मोहाद् अविवेकाद् असद्ग्राहान् अशुभनिश्चयान् गृहीत्वा उपादाय प्रवर्तन्ते अवैदिकं कर्म कुर्वन्ति ॥१०॥

अवतरणम्—तानेव पुनःप्रकारान्तरेण विशिनष्टि—चिन्तामिति ।

याख्या—च=किञ्च, असुराः प्रलयान्ताम् प्रलयो मरणमेव अन्तो यस्यास्ताम्, मरणान्ताम् । अपरिमेयां न परिमातुं शक्यते यस्या इयत्ता ताम् । चिन्ताम् । स्वकीययोगक्षेमोपायालोचनाऽत्मिकाम् उपाश्रिताः सदा चिन्ता-

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थम् अन्यायेनार्थसञ्चयान् ॥१२॥
इदमद्य मया लब्धम् इदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१४॥

---

परा इत्यर्थः । कामोपभोगपरमाः काम्यन्त इति कामाः शब्दादयो विषयास्तदुपभोग एव परमः पुरुषार्थो येषां ते । एतावदिति निश्चिताः—'एतावत्कामोपभोग एव परमः पुरुषार्थो, न धर्ममोक्षौ' इत्येवं कृतनिश्चयाः । अन्यायेनार्थसंचयानीहन्ते इत्युत्तरेणान्वयः ॥११॥

आशापाशशतैर्बद्धाः आशा एव पाशास्तच्छतैर्बद्धा नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परम् अयनं पर आश्रयो येषां ते, अन्यायेन परस्वापहरणादिना इत्यर्थः । अर्थसंचयान् अर्थप्रचयान् ईहन्ते चेष्टन्ते ॥१२॥

अवतरणम्—ईदशश्च तेषाम् विवेकविरोधी अभिप्रायः—इदमिति ।

व्याख्या—इदं द्रव्यम्, अद्य इदानीम्, मया आसुरसंपदन्वितेन जनेन लब्धम् प्राप्तम् । इदम् अन्यद् द्रव्यं गोहिरण्यादि मनोरथं मनस्तुष्टिकरं प्राप्स्ये लप्स्ये । भाष्यकारेण आनन्दगिरिणा मधुसूदनसरस्वती धनपतिभ्याश्च 'इदं मनोरथम्' इत्येव पाठो व्याख्यातः । अत एव 'इमं मनोरथम्' इति पाठो न स्वीकर्तव्यः । (किञ्च) इदम् धनम्, मे मम अस्ति प्राप्तमिति शेषः । इदमपि अन्यद्, धनम् मे मम पुनर्भविष्यति आगामिनि संवत्सरे । तेन अहं धनी सुखी विख्यातश्च भविष्यामि ॥१३॥

यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि मम न संभवतीत्याह—मया (असुरेण) असौ दुर्जयः शत्रुर्देवदत्तनामा हतः । हनिष्ये च अपरान् अन्यान् अपि वराकान् । किम् एते करिष्यन्ति तपस्विनः । सर्वथाऽपि नास्ति मत्तुल्यः कश्चिद् यस्माद्—अहम् ईश्वरः सर्वसमर्थः, भोगी भोगसामर्थ्यवान् अस्मि च= (तथा) सिद्धः—सम्पन्नोऽहमस्मि सर्वप्रकारेण पुत्रैः पौत्रैः नप्तृभिः । न केवलं मानुषोऽहं किन्तु बलवान् सुखी च अहमेव । अन्ये तु भूमिभाराय अवतीर्णाः ॥१४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥ ।
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाऽविधिपूर्वकम् ॥१७॥

---

अवतरणम्—(किञ्च)—आढ्य इति ।

व्याख्या—(किञ्च) आढ्यो धनेन सम्पन्नः, अभिजनवान् कुलेन च सप्तपुरुषं श्रोत्रियत्वादिना सम्पन्नोऽस्मि । मया सदृशोऽन्यः कोऽस्ति ? मम सदृशोऽन्यो नास्ति, अहमेव मम सदृशोऽस्मि इत्यर्थः । इह अन्यपदप्रयोगाद् भगवताऽपि सूचितम् 'सादृश्यं भेदघटितं नास्तीति । तस्मात् 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम्' इति सादृश्यलक्षणे कैश्चित्स्वीकृतं 'तद्भिन्नत्वे सति' इति विशेषणं नादरणीयम् इति निरूपितं मञ्जूषायां वैयाकरणशिरोमणिना श्रीमन्नागेशेन । भगवता पतञ्जलिनाऽपि 'नञिवयुक्तमन्यसदृशाऽधिकरणे तथाह्यर्थगतिरि'ति परिभाषाम् अङ्गीकृतवता सूचितोऽयमर्थस्तत्र अन्यपदप्रयोगादित्यादि विस्तरेण निरूपितं मयाऽपि परमलघुमञ्जूषाया वंशीव्याख्यायाम् । तस्माद् ईश्वरसादृश्यात्क्षेत्रज्ञस्य ईश्वराद् भिन्नत्वं स्वीकुर्वन्तः परास्ता रामानुजप्रभृतयः इति द्रष्टव्यम् । (किञ्च) यक्ष्ये यागं करिष्यामि यागेनापि अन्यान् अभिभविष्यामि । दास्यामि नटादिभ्यो मोदिष्ये हर्षञ्चातिशयितं प्राप्स्यामि, इति एवम्, अज्ञानविमोहिताः अज्ञानेन विविधं मोहिता अविवेकभावम् आपन्नाः ॥१५॥

अनेकचित्तविभ्रान्ताः उक्तप्रकारैरनेकैश्चित्तैर्विचारैर्विविधं भ्रान्ताः, मोहजालसमावृताः, मोहोऽविवेकोऽज्ञानम् । तदेवजालम् जालमिव आवरणात्मकत्वात् तेन समावृताः, कामभोगेषु कामा विषयास्तेषां भोगेषु ग्रहणेषु प्रसक्तास्तत्रैव निपण्णाः, तेन उपचितपापा आसुराः, अशुचौ विण्मुत्रादिपूर्णे नरके वैतरण्यादौ पतन्ति । आसुराणाम् इदं फलम् इयं गतिरिति भावः ॥१६॥

अवतरणम्—ननु असुराणामपि कथञ्चिद् वैदिके कर्मणि प्रवृत्तेर्दर्शनाद् अयुक्तं सर्वेषां तेषां नरके पतनम् ? इति चेत् तत्राह—आत्मेति ।

व्याख्या—आत्मसंभाविताः आत्मनैव सर्वगुणविशिष्टतया संभाविताः पूजिताः । न साधुभिरित्यात्मसंभाविताः स्तब्धाः अप्रणतस्वभावाः, धनमान-

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥१९॥

---

मदान्विताः धननिमित्तकौ मानमदौ, ताभ्याम् अन्विता युक्तास्ते आसुरसम्पद्युक्ताः पुरुषाः नामयज्ञैः-नाममात्रैर्यज्ञैर्दम्भेन धर्मध्वजितया अविधिपूर्वकं विहिताङ्गेति-कर्तव्यतारहितैर्यजन्ते यज्ञं कुर्वन्ति । दम्भेन अविधिपूर्वकयजनाद् यागस्य फलं पुण्यं ते न लभन्ते । तस्माद् आसुरा अशुचौ नरके पतन्तीति यदुक्तं तत् स्थितम् इत्यभिप्रायः ॥१७॥

अवतरणम्—ज्ञानवैराग्यभगवद्भजनादिकं तु अन्तरङ्गसाधनं तेषाम् अतिदूरम् अपास्तम् इत्याह भगवान् अहङ्कारमिति ।

व्याख्या—"अहङ्कारम्-अहङ्करण-महङ्कारः विद्यमानैरविद्यमानैश्च गुणैरात्मनि अध्यारोपितैः 'विशिष्टोऽहम्' इति बुद्धिः । स हि अध्यारोपितवैशिष्ट्यविषयत्वेन अविद्याया विवर्तः 'सर्वदोषाणां कष्टतमः सर्वानर्थप्रवृत्तीनां मूलञ्च" इति भाष्यम् । तम् आश्रिताः इति संबन्धः । बलं शारीरम् धनाभिजनादि-प्रयुक्तञ्च । पराभिभवनिमित्तं कामरागान्वितम् । दर्पम्-दर्पो नाम यस्योद्भवे धर्मम् अतिक्रामति सोऽयम् अन्तःकरणाश्रयो दोषविशेषः । अहङ्कार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्प इति भाष्याशयमाहानन्दगिरिः । तं संश्रिताः इति संबन्धः । कामं स्त्र्यादिविषयम्, क्रोधम् अनिष्टविषयम्, चकाराद् अन्यानपि महादोषान् संश्रिताः संदधानाः । (किञ्च) माम् ईश्वरम्, आत्मपरदेहेषु स्वदेहे परदेहेषु च । तद्बुद्धिकर्मसाक्षिभूतम् प्रद्विषन्तः प्रद्वेषो मच्छासनाऽतिवर्तित्वम् । मच्छासनं श्रुतिस्मृती । तदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वं तदतिवर्तित्वम् । तं कुर्वन्तः अभ्यसूयकाः सन्मार्गस्थानां गुणेषु असहमानाः । एवंभूता आसुरा भवन्तीति शेषः ॥१८॥

अवतरणम्—आसुरसम्पत्समन्वितानां यः परिणामो भवति तमाह—तानिति ।

व्याख्या—तान् सर्वान् सन्मार्गप्रतिपक्षभूतान् द्विषतः साधूनां मम च विद्वेषं कुर्वतः क्रूरान् दुर्जनान् नराऽधमान् नरेषु मनुष्येषु अधमान् नीचान् अशुभान् आसुरान् अहं सर्वाध्यक्षः संसारेषु नरकसंसरणमार्गेषु आसुरीषु

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
माम् अप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस् तस्मादेतत् त्रयं त्यजेत् ॥२१॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥

---

असुरसम्पन्धिनीषु एव योनिषु जातिषु क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु एव अजस्रं सततं क्षिपामि प्रक्षिपामि अधर्मदोषवत्त्वात् ॥१९॥

अवतरणम्—ननु तेषामपि क्रमेण बहुषु जन्मसु गतेषु अन्ते श्रेयो भविष्यति ? नेत्याह—आसुरीमिति ।

व्याख्या—हे कौन्तेय मूढा अविवेकिनस्ते जन्मनि जन्मनि प्रतिजन्म आसुरीम् तिर्यक्स्थावरादिसंबन्धिनीम् योनिं जातिम् आपन्नाः प्राप्ताः । प्रतिजन्म तमो बहुलासु एव योनिषु जायमानाः, अधो गच्छन्तः माम् ईश्वरम् अप्राप्य एव अनासाद्यैव ततस्तस्मादपि अधमां निकृष्टतमां गतिं योनिं कृमिकीटादिजातिं स्थानञ्च नरकादिलक्षणं—यान्ति प्राप्नु वन्ति । अत्र भाष्ये—'माम् अप्राप्यैवेति, न मत्प्राप्तौ तेषां काचिदपि संभावनाऽस्ति । अतो मच्छिष्ट-साधुमार्गमपि अप्राप्यैवेत्यर्थः ।' इत्युक्तम् । यस्माद् आसुरी सम्पत् सर्वपुरुषार्थ-परिपन्थिनी अनर्थपरम्परा तस्माद्—यावत् पुरुषः स्वतन्त्रो न काञ्चित् पार-वश्यकरीं योनिम् आपन्नः कर्मज्ञानानुष्ठानसमर्थस्तावदेव सकलपुरुषार्थ-विरोधिनी आसुरी संपत् तेन परिहरणीयेति समुदायार्थः । तदुक्तं केनाऽपि कविना—'इहैव नरकव्याधेश्चिकित्सां न करोति यः । गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ? ॥' इति । भर्तृहरिणाप्युक्तम्—'यावत्स्वस्थमिदं कलेवरकुलं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान् संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ? ॥' इति ॥२०॥

अवतरणम्—सर्वस्या आसुर्याः संपदः संक्षेपोऽयम् उच्यते । त्रिविधे यस्मिन् सर्व एव आसुरसम्पद्भेदोऽनन्तोऽपि अन्तर्भवति । यत्परिहारेण परि-हृतश्च भवति । यच्च मूलं सर्वस्य अनर्थस्य । तदेतद् उच्यते—त्रिविध'मिति ।

व्याख्या—आत्मनो नाशनं नरकस्य द्वारम् यत् प्रविशन् एव आत्मा अन्तःकरणं नश्यति कस्मैचित् पुरुषार्थाय न क्षमते तद्, इदं त्रिविधं त्रिप्रकारम्

य: शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥
तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥

---

अस्ति । कामः क्रोध स्तथा लोभ इति । तस्माद् आत्मनो नाशकत्वाद् नरकस्य द्वारत्वाच्च एतत्त्रयं कामक्रोधलोभान् त्यजेत् श्रेयोऽर्थी ॥२१॥

(अव:) कामक्रोधलोभत्यागस्य फलमाह— एतैरिति । हे कौन्तेय, एतैः कामक्रोधलोभैस्त्रिभिः त्रिसंख्याकैस्तमोद्वारैः तमसो नरकस्य दुःखमोहात्मकस्य द्वारैः प्रवेशमार्गैः, विमुक्तः परित्यक्तो नरः पुरुषः, आत्मनः स्वस्य श्रेयः कल्याणसाधनम् ईश्वराराधनादिकम्, आचरति करोति प्रतिबन्धकनिवृत्तेरित्याशयः । ततः श्रेयःसाधनानुष्ठानात् परां गतिं मोक्षाख्याम् (अपि) याति प्राप्नोति किमु वक्तव्यम् लौकिकं सुखं यातीति । भाष्ये मोक्षम् अपीति पाठाद् अपिना लौकिकसुखप्राप्तेः समुच्चय इत्यानन्दगिरिः ॥२२॥

अवतरणम्—सर्वस्यैतस्य आसुरसंपत्परिवर्जनस्य श्रेय आचरणस्य च कारणं (प्रमाणम्) शास्त्रम् । शास्त्रप्रमाणादेव उभयं शक्यं कर्तुम् नाऽन्यथा । अतः—य इति ।

व्याख्या—यः शास्त्रविधिम् कर्तव्याऽकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यम् । उत्सृज्य त्यक्त्वा कामकारतः कामस्य करणं कामेन वा करणं कामकारस्तस्मात् कामप्रयुक्तः सन्नित्यर्थः । वर्तते करोति स पुरुषः सिद्धिं पुरुषार्थयोग्यतां चित्तशुद्ध्यादिलक्षणाम् न अवाप्नोति न प्राप्नोति । न सुखम् ऐहिकं—कल्याणं च न अवाप्नोति न परां गतिम् प्रकृष्टां निरतिशयां गतिं स्थानं मोक्षं स्वर्गं वा न अवाप्नोति । क्रोधलोभयोरपि मूलं काम एवेति कामकारतः सर्वथा हानिरेवेतिभावः ॥२३॥ शास्त्राद् ऋते कर्मानुष्ठानस्य निष्फलत्वे सति यत्फलितं तदाह— तस्मादिति । तस्मात् शास्त्रविध्यतिक्रमेण सिद्धि-सुख-परगतीनाम् अभावस्य प्रसक्तेः श्रेयोऽर्थिनस्तेतव शास्त्रं शास्त्रमेव वेदात्मकं तदनुसारिमन्वादिस्मृत्यात्मकञ्च कार्याऽकार्यव्यवस्थितौ कार्यञ्च

अकार्यंश्च तयोर्व्यवस्थितौ कर्तव्याऽकर्तव्यनिर्णये प्रमाणं यथार्थज्ञानसाधनम् अस्ति। अतः शास्त्रविधानोक्तं विधानं विधिः। शास्त्रेणविधानं शास्त्रविधानम्—'इदं कुर्याद् इदं न कुर्यात्' इत्येवंरूपम्। तेन उक्तं तेन बोधितं ज्ञात्वा बुद्ध्वा, कर्म स्वकर्म यत् तव कर्म क्षत्रियस्य तत्, इह कर्माधिकारभूमौ, कर्तुम् अनुष्ठातुं त्वम् अर्हसि योग्यो भवसीति। तदेवम् अनेन अध्यायेन आसुरसंपत्संक्षेपरूपान् कामक्रोधलोभान् परित्यज्य शास्त्रानुसारम् आचरन् दैवसंपत्समन्वितो भूत्वा सत्त्वशुद्धिज्ञानप्राप्तिज्ञाननिष्ठाक्रमेण मोक्षं लभते इत्यवधारितम्। गीतातद्भाष्यशास्त्राभ्यां सच्चिदानन्दबोधकौ। वन्दे परस्परात्मानौ सोऽहं श्रीकृष्णशङ्करौ ॥२४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां षोडशोऽध्यायः ॥१६॥

श्रीकृष्णार्पणमस्तु।



# अथ गीतावंश्यां सप्तदशोऽध्यायः

**अर्जुन उवाच—**

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१॥

---

अवतरणम्—पूर्वाध्याये शास्त्रविधिम् अनुरुद्ध्य श्रद्दधानतया प्रवृत्तानाम् आस्तिकानां देवानां गतिरुक्ता मोक्षाख्या । शास्त्रविधिम् अश्रद्दधानतया परित्यज्य कामकारतः प्रवर्तमानानाम् असुराणां नास्तिकानां गतिश्च अधः-पतनरूपा उक्ता । सम्प्रति 'तस्माच्छास्त्रं प्रमाणं ते' इत्यध्यायान्तवाक्यादुपलभ्य प्रश्नबीजम् आस्तिकानामेव शास्त्रानभिज्ञानां गतेर्जिज्ञासया—अर्जुन उवाच ।

व्याख्या—ये केचित् पूर्वम् अनुक्ताः सुराणाम् असुराणां च विशेषणै-र्यथोक्तैरविशेषिताः सुरासुरविलक्षणाः, शास्त्रविधिम् शास्त्रस्य श्रुतिलक्षणस्य स्मृतिलक्षणस्य च विधिं प्रेरणाम् उत्सृज्य आलस्यादिना अपश्यन्तो वृद्ध-व्यवहारदर्शनादेव प्रमाणात् श्रद्धया आस्तिक्यबुद्ध्या अन्विताः संयुक्ताः सन्तो यजन्ते देवादीन् पूजयन्ति इत्यर्थः । इह ये पुनः देवादिपूजापरं कञ्चिच्छा-स्त्रविधिम् उपलभमाना एव अश्रद्दधानतया तम् उत्सृज्य अयथाविधि स्वोत्प्रेक्षया देवादीन् पूजयन्तीति नार्थः, 'श्रद्धयाऽन्विताः' इतिविशेषणात् । श्रद्धया अन्वितत्वे सति सति च शास्त्रज्ञाने शास्त्रविधिपरित्यागे निमित्ताऽ-भावात् । तस्माद् अज्ञानादेव शास्त्रविधेरदर्शनाद् वृद्धव्यवहारदर्शनमात्रात् प्रमाणात् श्रद्धया अन्विताः सन्तो देवादीन् पूजयन्तीत्येवार्थः कल्पयितुं शक्यः । शास्त्रप्रामाण्यस्य अज्ञाने सत्यपि वृद्धव्यवहाररूपसदाचारमात्रस्य प्रामा-ण्यानुसारेण देवादीन् ये पूजयन्तीत्यर्थः । तेषां शास्त्राऽनभिज्ञानां वृद्धव्यवहार-मात्रप्रमाणानुसारिणां श्रद्दधानानां, हे कृष्ण सच्चिदानन्द का निष्ठा ? किम-वस्थानम् ? क आश्रयः ? किं सत्त्वम् ? आहोस्विद् रजः ? आहोस्वित् तमः ? एतदुक्तंभवति या तेषां देवादिपूजा सा किं सात्त्विकी ? किं वा ? राजसी ? किं वा तामसी ? इति । ननु पूर्वत्र सर्वेषां भूतानां द्वैविध्यमुक्तं 'द्वौ भूतसर्गौ' इति ? तत्र तृतीयेयं विधा कस्माद् ? इति चेद् मैवम्, श्रद्धाभेदेन

श्रीभगवान् उवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥

सत्त्वाऽनुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

---

एषामपि यथायथं द्वयोरेव दैवासुरभेदयोरन्तर्भावात्। पूर्वोक्तविशेषणानाम् उपलक्षणार्थत्वेन एषां पूर्वविशेषणैरविशेषित्वेऽपि न क्षतिः, सच्चिदा-नन्दस्य तव अविदितं किंचिन्नास्तीति सूचयन् संबोधयति कृष्णेति ॥१॥

अवतरणम्—आलस्यादिना शास्त्रविधिम् अपश्यन्तः सामान्यश्रद्धान्विता ये यजन्ते तेषां यजनं—किं सात्त्विकं, किं वा राजसं, किं वा तामसम्? इत्येवं सामान्यश्रद्धावद्विषयोऽयं प्रश्नः श्रद्धायाः सात्त्विकत्वादिभेदादेव तेषां यजनस्याऽपि सात्त्विकत्वादिकम्' इति विशेषनिष्ठं प्रतिवचनं श्रद्धाया भेदानां निरूपणं विना न अर्हति अतः श्रद्धाया भेदान् विवक्षुः—श्रीभगवान् उवाच।

व्याख्या—देहिनां प्राणिनां, स्वभावजा-जन्मान्तरकृतधर्माऽधर्मादिजन्यसंस्कारोऽतीतमरणसमयेऽभिव्यक्त इदानीन्तनजन्मारम्भकः स्वभाव उच्यते, ततो जाता, ययाऽन्वितानां निष्ठां पृच्छसि सा श्रद्धा आस्तिक्यबुद्धिस्त्रिविधा त्रिप्रकारा भवति—सात्त्विकी सत्त्वगुणनिर्वृत्ता, राजसी चैव रजोगुणनिवृत्ता, तामसी तमोगुणनिर्वृत्ता चेति। तत्र सात्त्विकी श्रद्धा देवपूजादिविषया भवति। राजसी यक्षरक्षःपूजादिविषया, तामसी भूतप्रेतपिशाचपूजादिविषया भवतीति। तां त्रिविधां श्रद्धां प्रत्येकम् उच्यमानां शृणु। अत्र स्वभावजेति विशेषणात् शास्त्रज्ञानजन्या तु श्रद्धा देवपूजादिविषया एकविधैव सात्त्विकी भवतीति सूचितम् ॥२॥

अवतरणम्—प्राचीनकर्मोद्बोधिता स्वभावशब्दिता त्रिविधा वासना-त्रिविधायाः श्रद्धाया निमित्तकारणं भवतीत्युक्तम्। इदानीं तस्या उपादानकारणं दर्शयति कथं सा त्रिविधा भवतीति—सत्त्वेति।

व्याख्या—हे भारत, सर्वस्य प्राणिजातस्य श्रद्धा सत्त्वानुरूपा विशिष्टसंस्कारोपेताऽन्तःकरणानुरूपा भवति। अन्तःकरणोपादाना श्रद्धा स्वोपादानकारणस्य अन्तःकरणस्य त्रैविध्येन त्रिविधा भवतीति भावः। अत्र श्लोके

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥**
**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥५॥**

---

सत्त्वं विशिष्टसंस्कारोपेतम् अन्तःकरणं विवक्षितम् । तत्र विशिष्टसंस्कारस्य स्वभावशब्दितस्य निमित्तकारणत्वम् । स्वभावोपेतस्य चित्तस्य अन्तःकरणस्य (सत्त्वस्य) श्रद्धां प्रति उपादानकारणत्वं भवति। ननु निष्ठायाः सात्त्विकत्वादि- प्रश्ने श्रद्धाया स्त्रैविध्यनिरूपणस्य कथम् उत्तरत्त्वम् इति चेत् तत्राह—अयं संसारी, पुरुषः, जीवः, श्रद्धामयः प्रकृता प्राचुर्येण प्रस्तुता श्रद्धा यस्मिन् स श्रद्धामयः। मयट् प्रत्ययः 'तत्प्रकृतवचने मयट्' (पा० सू०) इति श्रद्धामयः, अस्तीतिशेषः। कथं श्रद्धामयोऽयं जीवः ? इत्यत आह--यः पुरुषो यच्छ्रद्धः, या सात्त्विकी वा राजसी वा तामसी वा श्रद्धास्ति यस्य स यच्छ्रद्धः स एव सः-तच्छ्रद्धभूत एव स पुरुषः। तच्छ्रद्धाऽनुरूप इत्यर्थः। अत्रापि अस्तीतिशेषः। एकस्य यच्छब्दस्य स एवेति सशब्देन प्रतिनिर्देशः। अपरस्य यच्छब्दस्य अपरेण स इति शब्देन प्रतिनिर्देशः। यद्यपि यच्छ्रद्ध इति पदे यच्छब्दस्य स्त्रीत्वबोधकत्वम्, तथापि 'शैत्यं हि यत् सा-प्रकृतिर्जलस्य' इतिवत् लिङ्गभेदो न दोषायेत्यन्यत्र विस्तरः। श्रद्धाया व्याख्यानेनैव निष्ठाऽपि व्याख्याता। सात्त्विकश्रद्धावान् सत्त्वनिष्ठो राजसश्रद्धावान् रजोनिष्ठस् तामसश्रद्धावान् तमोनिष्ठोऽस्तीत्यभिप्रायः ॥३॥

अवतरणम्—एवञ्च कार्येण देवादिपूजारूपेण लिङ्गेन पुरुषस्य सत्त्वादिगुणभेदनिष्ठा अनुमेया भवतीत्याह--यजन्ते इति।

व्याख्या--सात्त्विकाः सत्त्वनिष्ठाः, जनाः, देवान् यजन्ते पूजयन्ति राजसा रजोनिष्ठा जना यक्षरक्षांसि यजन्ते। अन्ये तामसा स्तमोनिष्ठा जनाः प्रेतान् स्वधर्मात् प्रच्युता विप्रादयो देहपाताद् ऊर्ध्वं वायुदेहमापन्नाः प्रेताः, तान् यजन्ते पूजयन्ति, भूतगणांश्च भूतगणाः सप्तमातृकादयः, तान् यजन्ते पूजयन्ति ॥४॥

अवतरणम्—एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्राऽनभिज्ञानां वृद्धव्यवहारमात्रदर्शनानुसारेण देवादीन् यजतां श्रद्धावताम्। तत्र सहस्त्रेषु

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्धचासुरनिश्चयान् ॥६॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

---

कश्चिदेव देवपूजादितत्परः सत्त्वनिष्ठो भवति । बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव पुरुषा भवन्ति । कथम् ? इत्यत आह—द्वाभ्याम्—अशास्त्रेति ।

व्याख्या—अशास्त्रविहितम् शास्त्रेण श्रुतिलक्षणेन स्मृतिलक्षणेन च विहितं शास्त्रविहितं शास्त्रविहितं न भवतीति अशास्त्रविहितम्, घोरं पीडाकरं प्राणिनाम् अन्येषाम् आत्मनश्च । तपः तप्तशिलारोहणादि अशास्त्रेण शास्त्रविरोधिना बुद्धाद्यागमेन बोधितं यथा, यथा वा स्वमांसहोमादि, ब्राह्मणलोहितादिना वा होमादि कौलिकाद्यागमादिना बोधितं शास्त्रविरोधिना । दम्भाहङ्कारसंयुक्ताः दम्भो धर्मध्वजितम् । अहङ्कारः स्वस्मिन् पूज्यताबुद्धिः, ताभ्यां संयुक्ताः, कामरागबलान्विताः । कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलम् तेन अन्विताः संयुक्ताः । 'अवश्यमिदं साधयिष्यामि' इत्याग्रह एव कामरागबलम् । तत्र कामो विषयाभिलाषः । रागः कामस्य कारणीभूतो विषयेषु अभिनिवेशः । ये रजोनिष्ठा जनाः तप्यन्ते (तपो) निर्वर्तयन्ति ॥५॥

ये च अचेतसोऽविवेकिनः, तमोनिष्ठाः, जनाः । शरीरस्थं भूतग्रामं करणसमुदायत्वेन परिणतं पृथिव्यादिपञ्चकम् कर्शयन्तः उपवासदिना कृशी कुर्वन्तः । अन्तःशरीरस्थं हृदयस्थं मां चैव तत्कर्मबुद्धिसाक्षिणम् कर्शयन्तः श्रुतिस्मृतिलक्षणमदनुशासनाऽननुसरणमेव मत्कर्शनं तत्कुर्वन्तः, अशास्त्रविहितं घोरं तपस्तप्यन्ते तान् सर्वान् उभयान् आसुरनिश्चयान् असुरस्य अयम् आसुरः आसुरो निश्चयो येषां तान् विद्धि जानीहि परिहरणार्थमिति शेषः । इति ममोपदेशः ॥६॥

अवतरणम्—प्रसङ्गादिह आहारयज्ञतपोदानानाम् अपि सात्त्विकादिपुरुषप्रियत्वकृतेन भेदेन त्रैविध्यं प्रतिज्ञापूर्वकं प्रदर्श्यते तत्र सात्त्विकप्रियाणां तेषां ग्रहणाय तदितरेषां परिहाराय चेति—आहारेति ।

व्याख्या—आहारस्तु अपि भोजनं तु अपि सर्वस्य त्रिविधस्य भोक्तुः, त्रिविधः प्रिय इष्टो भवति । यज्ञस्तपस्तथा दानं सर्वस्य त्रिविधस्य कर्तुस्त्रि-

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकाऽऽमयप्रदाः ॥९॥
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥

---

विधं प्रियं भवति । तेषाम् त्रिविधानाम् आहारयज्ञतपोदानानां भेदं प्रकारम् इमम् अनन्तरमेव वक्ष्यमाणं शृणु ॥७॥

तत्र सात्त्विकप्रियम् आहारमुदाहरति—आयुरिति । आयुःसत्त्वबला-रोग्यसुखप्रीतिविवर्धनाः—आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च तासां विवर्धनाः विवर्धयन्तीति विवर्धनाः । तत्र आयुर्जीवनम् । सत्त्वम् उत्साहः । बलं शक्तिः । आरोग्यं रोगराहित्यम् अरोगस्य भावः । सुखं चित्तप्रसादः । प्रीतिरभिरुचिः । आसां विशेषेण वृद्धिकारका विवर्धनाः । ते च रस्याः रसोपेताः शर्करादयः स्निग्धाः स्नेहोपेता दुग्धादयः, स्थिराः देहे सारांशेन चिरकालस्थायिनश्चिरतरं शरीरोपकारकाः । हृद्या हृदयप्रियाः दृष्टमात्रा एव हृदयङ्गमाः । आहाराश्चर्व्यचोष्यलेह्यपेया घृतक्षीरसितादयः सात्त्विकप्रियाः सात्त्विकस्य जनस्य इष्टा भवन्ति ॥८॥

राजसप्रियम् आहारमाह—कट्वम्लेति—अतिशब्दः सामर्थ्यात् कट्वा-दिषु सप्तस्वपि योज्यः । अतिकटुः, अत्यम्लः, अतिलवणः इत्येवम् । अत्र कटुस्तिक्तः प्रसिद्धस्य कटुरसस्य तीक्ष्णपदेनैव ग्रहणात् । अतितिक्तो निम्बादिः । अत्यम्लो जम्बीरादिः, अतिलवणोऽतिप्रक्षिप्तसैन्धवादिः । अत्युष्णोमुखविदाहकः अतितीक्ष्णो मरीचादिः । अतिरूक्षः कङ्गुकोद्रवादिर्निःस्नेहः । अतिविदाही सर्षपादिरुदरसंतापकः । कटुश्च अम्लश्च लवणश्च अत्युष्णश्च तीक्ष्णश्च रूक्षश्च विदाही चेति तथाभूताः । एवं भूता आहारा आहारद्रव्याणि राजसस्य इष्टाः प्रिया भवन्ति । ते च दुःखशोकाऽऽमयप्रदाः—दुःखं तात्कालिकी पीडा, शोकः पश्चाद्भावि दौर्मनस्यम् आमयो रोगः । दुःखं च शोकं च आमयं च प्रददातीति दुःखशोकाऽऽमयप्रदा भवन्ति ॥९॥

अथ तामसप्रियमाहारमाह—यातयाममिति 'यातयामं मन्दपक्वं निर्वी-र्यस्य गतरसेनोक्तत्वात्' इति भाष्यम् । अयमाशयः—यद्यपि यातयामशब्दो

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥

---

निर्वीर्येऽर्थेरूढस्तथा च श्रीमद्भागवते—'तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः । छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥' (१०।८०।४२) इत्येवं दृश्यते । तथापि अत्र निर्वीर्यत्वसामान्याद् गौणलक्षणावृत्त्या मन्दपक्वस्यैव ग्रहणं स्यान्निर्वीर्यस्य गतरसेनोक्तत्वादिति । एतेन योगार्थं यातो यामो यस्य-तदिति व्याचक्षाणाः परास्ताः 'रूढिर्योगापहारिणी' तिन्यायात् पर्युषितस्य वैयर्थ्यादिश्च । गतरसं गतो रसो यस्य तद् रसविमुक्तम् । पूति दुर्गन्धि लशुन-पलाण्ड्वादि पर्युषितं च यत् पक्वं सत् रात्र्यन्तरितं यत् तच्च । 'उच्छिष्टम् भुक्तशिष्टम्' इति भाष्यम् । अपि च अमेध्यम् अयज्ञार्हं कलञ्जादि निषिद्धम् । यद् भोजनम् आहारवस्तु तत् तामसप्रियम् तामसस्येष्टम् । अत्र पर्युषितं स्नेहाक्ताऽतिरिक्तं तामसप्रियमिति द्रष्टव्यम् 'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्' इति याज्ञवल्क्यस्मृतेरिति धनपतिः ॥१०॥

**अवतरणम्**—एवं हानादानार्थम् आहारत्रैविध्यं विभज्य अथेदानीं क्रमप्राप्तम् यज्ञत्रैविध्यं विभजन् तावत्सात्त्विकं यज्ञमाह आदानार्थम्—अफलेति ।

**व्याख्या**—अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः, विधिदृष्टो विधिना वेदवाक्यविशेषेण दृष्ट आवश्यकतया विहितो (बोधितो) यो यज्ञः, 'यष्टव्यम् एव' यज्ञस्वरूपमेव निर्वर्तनीयं न तु अनेन फलान्तरं साध्यम् इति बुद्ध्वा मनः समाधाय 'नाऽनेन पुरुषार्थो मम कर्तव्यः' इत्येवं निश्चित्य इज्यते निर्वर्त्यते-शास्त्रतः सोऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धज्योतिष्टोमादिर्नित्यप्रयोगः सात्त्विको यज्ञ उच्यते ॥११॥

**अवतरणम्**—हानार्थं राजसं यज्ञमाह—अभिसंधायेति ।

**व्याख्या**—हे भरतश्रेष्ठ, भरतवंशश्रेष्ठ, फलं स्वर्गादि, अभिसंधाय उद्दिश्य, दम्भार्थम् अपि चैव आत्मनो धार्मिकतायाः ख्यापनाय च, यत् यो यज्ञः, इज्यते क्रियते तं यज्ञं राजसं रजोगुणनिर्वर्त्यं विद्धि जानीहि ॥१२॥

विधिहीनम् असृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

---

अवतरणम्—हानार्थमेव तामसं यज्ञमाह भगवान्—विधीति ।

व्याख्या—विधिहीनम् यथाविहित विपरीतम्, 'असृष्टान्नम् ब्राह्मणेभ्यो न सृष्टं दत्तम् अन्नं यस्मिन् यज्ञे तम्, मन्त्रहीनम् 'मन्त्रतः स्वरतो वर्णतश्च विमुक्तम् मन्त्र हीनम्' इति भाष्यम् । अदक्षिणम् यथोक्तदक्षिणारहितम् श्रद्धाविरहितं श्रद्धया विरहितं शून्यम्, हीनम्, यज्ञं तामसं तमोगुणनिर्वर्त्यं परिचक्षते कथयन्ति शिष्टाः । मन्त्रहीनस्य विधिहीनत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिः । 'विधिहीनत्वाद्येकैकविशेषणत्वेन तामसयज्ञस्य पञ्चविधत्वम् । सर्वविशेषणसमुच्चयेन च एकविधत्वमिति षड् भेदाः । एवं द्वित्रिचतुर्विशेषणतया च तामसयज्ञस्य बहवो भेदा ज्ञेयाः, इति मधुसूदनसरस्वती ॥१३॥

अवतरणम्—एवं हानादानार्थं यज्ञत्रैविध्यं निरूप्य अथेदानीम् उद्देशक्रमप्राप्तं तपस्त्रैविध्यं सात्त्विकत्वादिभेदेन निरूपयिष्यन् सात्त्विकादीनां त्रिविधानामपि तपसां प्रत्येकं शारीरत्ववाङ्मयत्वमानसत्वभेदेन त्रैविध्यं निरूपयिष्यंश्च तावच्छारीरं तपआह—देवेति ।

व्याख्या—देवद्विजगुरुप्राज्ञपूजनम् देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च तेषां पूजनम् । 'द्विजाः पूज्यपूज्यत्वाद्, ब्राह्मणाः ?' इत्यानन्दगिरिः । प्राज्ञा गुरुव्यतिरिक्ता अपि तत्त्वविदः पण्डिताः । देवा ब्रह्मविष्णुशिवादयः । तेषां पूजनम्-प्रणामशुश्रूषादि । शौचं मृज्जलाभ्याम् शरीरशोधनम् । आर्जवम्, ऋजुत्वम् । ब्रह्मचर्यम्, मैथुननिवृत्तिः । अहिंसा च प्राणिनाम् अपीडनं च । शारीरं शरीरनिर्वर्त्यम, शरीरप्रधानैः । 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥' इति हि (१८।१४।१५) वक्ष्यति 'शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैर्देवकार्यकरणैः कर्मादिभिः साध्यं शारीरं तप उच्यते । 'पञ्चैते तस्य हेतवः' इति हि वक्ष्यति' इति भाष्यम् ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥१६॥

---

**अवतरणम्**—सामान्येन शारीरं तप उक्त्वा वाङ्मयं तत् सामान्येनाह—अनुद्वेगेति ।

**व्याख्या**—अनुद्वेगकरम् प्राणिनाम् अदुःखकरम् सत्यं यथादृष्टार्थप्रतिपादकम्, प्रियं श्रुतिसुखं, हितं परिणामे सुखकरम् । प्रियं दृष्टार्थम्, हितम् अदृष्टार्थम् इति च तयोर्विभागः । अत्र भाष्यम्—'प्रियहिते दृष्टाऽदृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशेष्यते । विशेषणधर्मसमुच्यार्थश्चशब्दः । परप्रत्यायनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहिताऽनुद्वेगकरत्वानाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद् यदि न तद्वाङ्मयं तपः' इति । यद् वाक्यं वचनं तत् । स्वाध्यायाऽभ्यसनं चैव यथाविधि (प्राङ्मुखत्व-पवित्रपाणित्व-यथो चितस्वरवर्णमात्रादिसाहित्यादिविधिम् अनतिक्रम्य) स्वाध्यायस्य स्वपाठवेदादेरभ्यसनम् आवर्तनञ्च वाङ्मयं वाक् प्रकृता प्राचुर्येण प्रस्तुताऽस्मिन् इति वाङ्मयंवाक्प्रधानं वाक्प्रधानैः कर्त्रादिभिः साध्यत्वाद् वाङ्मयं तप उच्यते । शुद्धिकरत्वात् तादृशवाक्यस्य तपस्त्वम् इति भावः ॥१५॥

**अवतरणम्**—एवं वाङ्मयं तप उक्त्वा मानसमाह—मन इति ।

**व्याख्या**—मनःप्रसादो मनसः प्रसादः प्रशान्तिः, स्वच्छताऽऽपादनम्, चिन्ताव्याकुलत्वादिहीनतासंपादनम् इति यावत्, 'सौम्यत्वं यत् सौमनस्यम् आहुर्मुखादिप्रसादकार्याऽन्तःकरणस्य वृत्तिः' इति भाष्यम् । अत्रानन्दगिरिः—'सौमनस्यं सर्वेभ्यो हितैपित्वम् अहिताऽचिन्तनञ्च । तत्कथं गम्यते ? तत्राह—मुखादीति । तस्य स्वरूपमाह-अन्तःकरणस्येति ।' इति मौनं मनःसंयमः । 'वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनम् इति' इति भाष्यम् । 'आत्मविनिग्रहो मनोनिरोधः 'आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहः । वाग्विपयस्यैव मनसः संयमो मौनमिति विशेषः ।' इति भाष्यम् । 'भावसंशुद्धिः परैर्व्यवहारकाले अमायावित्वम् भावसंशुद्धिः' इति भाष्यम् । इत्येतत् सर्वं मनःप्रसादादिभावसंशुद्धयन्तं धर्मजातं मानसं तप उच्यते शिष्टैः ॥१६॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ॥१९॥

---

अवतरणम्—यथोक्तं कायिकं वाचिकं मानसं च तपः कथं सात्त्विकत्वादिभेदेन त्रिविधं भवति ? इत्युच्यते तत्र प्रथमं सात्त्विकं तप आह—श्रद्धयेति।

व्याख्या—श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः, युक्तैः समाहितचित्तैः नरैः तप्तं निर्वर्तितं तत् पूर्वोक्तं त्रिविधं कायिकवाचिकमानसं तपः सात्त्विकं सत्त्वगुणनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥१७॥

अवतरणम्—सात्त्विकं तप उक्त्वा राजसं तप आह—सत्कारेति।

व्याख्या—सत्कारः 'साधुरयं तपस्वी'त्येवंस्तुतिरूपः साधुकारः। मानः प्रत्युत्थानाऽभिवादनादिरादरः, पूजा पादप्रक्षालनार्चनभोजनदानादिः। सत्कारश्च मानश्च पूजा च सत्कारमानपूजाः, ताभ्य इदम् इति सत्कारमानपूजार्थम् सत्कारमानपूजारूपफललाभार्थमित्यर्थः। दम्भेन चैव तथा धर्मध्वजित्वेनैव न तु आस्तिक्यबुद्ध्या, यत् तपः क्रियते तत् तपो राजसं रजोगुणनिर्वृत्तं चलम् क्षणिकफलम् अध्रुवम् अनियत फलम्, इह अस्मिन्नेव लोके फलदं यदि किञ्चित्फलदं स्यात् न तु लोकान्तरे पुण्यफलमित्यर्थः। प्रोक्तं कथितं शिष्टैः ॥१८॥

अवतरणम्—तामसं तप आह—मूढेति।

व्याख्या—मूढग्राहेण मूढस्य ग्राहोऽविवेकनिश्चयस्तेन। मूढोऽत्यन्ताऽविवेकी तस्य ग्राह आग्रहोऽभिनिवेशस्तेनेत्यर्थः। आत्मनः स्वस्य देहादेः पीडया कष्टदानेन यत् तपः क्रियते परस्य शत्रोरुत्सादनार्थं वा विनाशार्थं वा यत् तपः क्रियते अनुष्ठीयते नरेण तत् तपस्तामसं तमोगुणनिर्वृत्तम् उदाहृतं कथितं शिष्टैः ॥१९॥

दातव्यम् इति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद् राजसमुदाहृतम् ॥२१॥

अदेशकाले यद् दानम् अपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातम् तत्तामसमुदाहृतम् ॥२२॥

---

अवतरणम्—इदानीं दानभेदान् उदाहरिष्यन् प्रथमं सात्त्विकं दानम् आह—दातव्यमिति ।

व्याख्या—दातव्यम् इति 'दातव्यम्' इत्येवं मनः कृत्वा 'दानमेव मया भाव्यं न किञ्चित् तत्कृतं फलमपि' इत्येवम् अभिसंधाय इत्यर्थः । अनुपकारिणे प्रत्युपकारनिरपेक्षमित्यर्थः । देशे पुण्ये कुरुक्षेत्रादौ काले च पुण्ये संक्रान्त्यादौ, पात्रे च युक्ते षडङ्गवेदविदादौ यद् दानं दीयते क्रियते तद् दानं सात्त्विकं सत्त्वगुणनिर्वृत्तं विदुर्जानन्ति शिष्टाः । पात्रे इति सम्प्रदानस्य अधिकरणत्व-विवक्षया सप्तमी । सामर्थ्याद् देशे काले च पात्रे चेति सुयोग्य देशादावित्यर्थः । अन्यथा तद्-वैयर्थ्यम् देशकालपात्राणि विना दानाऽनिष्पत्तेरिति भावः ॥२०॥

अवतरणम्—राजसं दानमाह—यत्तु इति ।

व्याख्या—यत्, तु पुनः, यद्, दानम् । तु पुनः शब्दौ पूर्वोक्ताद् वैल-क्षण्यं गमयतः । प्रत्युपकारार्थम् 'काले तु अयं मां प्रत्युपकरिष्यति' इत्येव-मर्थम् वा अथवा फलम् अदृष्टम् उद्दिश्य 'अस्य दानस्य फलम्—अदृष्टं मे जायताम्' इत्येवम् अभिसन्धाय परिक्लिष्टं च 'कथमेतावान्मे व्ययः ? हा कष्टम्' इत्येवं खेदसंयुक्तञ्च दीयते तद् दानं राजसं रजोगुणनिर्वृत्तम् उदाहृतं कथितं शिष्टैः ॥२१॥

अवतरणम्—अथ तामसं दानमाह—अदेश इति ।

व्याख्या—अदेशकाले देशश्च कालश्च तयोः समाहारो देशकालम् न देशकालम्-अदेशकालम् तस्मिन् । अदेशे अकाले च दानस्याऽसंभवात् अदेशे अपुण्ये म्लेच्छाऽशुच्यादिसंकीर्णे देशे इत्यर्थः । एवम् अकाले पुण्यहेतुत्वेन अप्रख्याते संक्रान्त्यादिविशेषरहिते काले इत्यर्थः । (एवम्) अपात्रेभ्यश्च

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

तस्माद् ओमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

---

मूर्खतस्करादिभ्यो नटविटादिभ्यो वा यद् दानं दीयते क्रियते । देशकालपात्रसंपत्तावपि असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितम् अवज्ञातं पात्रपरिभवयुक्तं च यद् दानं दीयते क्रियते तद् दानं तामसं तमोगुणनिर्वृत्तम् उदाहृतं कथितं शिष्टैः ॥२२॥

अवतरणम्—अथ प्रसङ्गाद्, यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणाय अयम् उपदेश उच्यते ॐतत्सदिति ।'—

व्याख्या—'विहितानां कर्मणां प्रमादेन युक्ते वैगुण्ये कथं परिहारः स्यादित्याशङ्क्य आह, भाष्यकृद्—"यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणाय अयमुपदेश उच्यते" इति । इत्यानन्दगिरिः । एतन्नामत्रयाऽन्यतमनामोच्चारणं प्रमादकृतवैगुण्यपरिहारकं प्रायश्चित्तम् इत्याशयेन परमकारुणिकतया भगवानुपदिशति–ॐ तत्सदिति इति तद्भाष्याशय आनन्दगिरीये । ॐ तत् सद् इत्येवं त्रिविधो निर्देशो निर्दिश्यते अनेनेति निर्देशो वाचकः शब्दो नामेति यावद् ब्रह्मणः परमात्मनः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । 'ओमिति ब्रह्म' इति तैत्तिरीयके, 'तत् त्वमसि' इति छान्दोग्ये, 'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' इति च छान्दोग्ये श्रुतत्वादित्याशयः । यज्ञादिसाद्गुण्यसिद्धयर्थम् एतन्नामत्रयान्यतमोच्चारणम् अवश्यं कर्तव्यं-यज्ञादौ इत्याशयेन तं निर्देशं स्तौति भगवान्–ब्राह्मणास्तेनेति' तेन 'ॐ तत्सद्' इत्येतेन त्रिविधेन निर्देशेन पुरा पूर्वं सर्गादौ प्रजापतिना ब्राह्मणा वेदाश्च यज्ञाश्च विहिता-निर्मिताः । वेदा विहिता बोधिता वेदानामनादित्वेन अपौरुषेयत्वात् । ब्राह्मणा यज्ञाश्च विहिता निर्मिता इत्यर्थः "तस्माद्यज्ञादिसृष्टिहेतुत्वेन महाप्रभावोऽयं त्रिविधो निर्देशः समर्थो यज्ञादिवैगुण्यपरिहारायेत्यभिप्रायः' इति श्रीधरस्वामिमधुसूदनसरस्वतीययोः ॥२३॥

अवतरणम्—इदानीं प्रत्येकम् ओमादीनां प्राशस्त्यं दर्शयिष्यन् प्रथमम् ओङ्कारस्य तदाह—तस्मादिति ।

व्याख्या—तस्माद्–यस्माद् अयम् ओङ्कारो ब्राह्मणादीनां कारणम्, यस्माच्चायं ब्रह्मणो निर्देशः (वाचकः शब्दः नामेति यावत् । तस्माद् हेतोः ।

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः॥२५॥
सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

---

'ओम्' इति शब्दम् उदाहृत्य उच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः विधानोक्ताः शास्त्रविहिताः ब्रह्मवादिनाम् ब्रह्मवदनशीलानाम् सततं सर्वदा प्रवर्तन्ते । 'वेदवदनशीलानाम्' इत्यानन्दगिरिः । प्रवर्तन्ते यत्किञ्चिद-ङ्गवैकल्येऽपि प्रकर्षेण वर्तन्ते सद्गुणा भवन्तीत्यर्थः । आरभ्यन्ते इत्यर्थो वा ॥२४॥

**अवतरणम्**—ओमित्यस्य विनियोगमुक्त्वा तदित्यस्य विनियोग-माह—तदिति ।

**व्याख्या**—तद् इति ब्रह्माऽभिधानम्, उदाहृत्येति पूर्वस्मादनुवर्तते । उदाहृत्य उच्चार्य, फलम् अनभिसंधाय कर्मणः फलं स्वर्गादि अनपेक्ष्य (च), मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः, यज्ञतपःक्रियाः यज्ञक्रियास्तपःक्रियाश्च, विविधा दानक्रियाश्च क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते । अत्र अन्तःकरणशुद्धयर्थम् इति वाक्यशेषः ॥२५॥

**अवतरणम्**—ओं तच्छब्दयोर्विनियोग उक्तः । अथेदानीं सच्छब्दस्य विनियोगः कथ्यते—सद्भाव इति ।

**व्याख्या**—सद्भावे असतः सद्भावे यथा अविद्यमानस्य पुत्रस्य जन्मनि तथा साधुभावे च असद्वृत्तस्य असाधोः सद्वृत्तता साधुभावस् तस्मिन् साधु-भावे च सद् इति एतदभिधानं ब्रह्मणः प्रयुज्यते तत्र उच्यते अभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यते इत्येतद् । यथा देवदत्तादेः पुत्रादिकम् सद् इति । 'सत्पुरुषोऽयं सम्प्रति संवृत्तः' इति । सत्कर्म विवाहादिकं (च) भवतीत्यादि च ॥२६॥

**अवतरणम्**—प्रकारान्तरेणापि सच्छब्दस्य विनियोगमाह—यज्ञइति ।

**व्याख्या**—यज्ञे यज्ञकर्मणि, तपसि तपःकर्मणि दाने च दानकर्मणि च (या) स्थितिः (सा) च 'सद्' इत्युच्यते विद्वद्भिः । तदर्थीयं यज्ञतपोदान-

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असद् इत्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥२८॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

---

रूपेषु तेषु अर्थेषु भवं तदनुकूलं च कर्म 'सद्' इत्येव अभिधीयते कथ्यते। अथवा तदर्थीयं यस्य ईश्वरस्य इदं तदर्थम् पूजोपहारगृहाङ्गणपरिमार्जनोपलेपरञ्जनादि कर्म । तदर्थस्य कर्मणोऽन्यदिदं कर्म तदर्थीयम् तत्पूजोपहारादिकर्मसाधनभूतं कर्म तदुपकरणसंपादकं धनार्जनादि । 'सद्' इत्येव अभिधीयते इत्यर्थः । तत्र यज्ञादौ स्थितिस्तत्परतयाऽवस्थानं निष्ठेति यावत् । अत्र भाष्यम् 'तदेतद् यज्ञदानतपआदि कर्म असात्त्विकं विगुणम् अपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ।' इति । अत्र श्रीधरस्वामी 'यस्मादेवम् अतिप्रशस्तम् एतन्नामत्रयम् तस्मादेतत् सर्वकर्मसाद्गुण्यार्थं कीर्त्तयेदिति तात्पर्यार्थः । अत्र च अर्थवादाऽनुपपत्त्या विधिः कल्प्यते –'विधेयं स्तूयते वस्तु' इति न्यायाद्' इत्याह ॥२७॥

अवतरणम्—ननु यदि आलस्यादिना शास्त्रीयं विधिम् उत्सृज्य श्रद्धानतयैव वृद्धव्यवहारदर्शनमात्रेण यज्ञादिकर्म कुर्वतां प्रमादाद् वैगुण्ये प्राप्त 'ॐ तत्सद्' इति ब्रह्मनिर्देशन तत्परिहारो भवति तर्हि श्रद्धा अश्रद्धानतया शास्त्रीयं विधिम् उत्सृज्य कामकारेण यत्किञ्चित्कुर्वतामपि असुराणां तेनैव निर्देशेन उच्चारितेन वैगुण्यपरिहारः स्याद् ? इति कृतं श्रद्धया सात्त्विकत्वहेतुभूतया ? इत्यत आह भगवान् –अश्रद्धयेति ।

व्याख्या—अत्र भाष्यम्—"तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात् तस्माद् अश्रद्धया हुतं हवनं कृतम् दत्तं च यत् स्तुतिनमस्कारादि तत्सर्वम् 'असद्' इति उच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ । न च तद् बह्वायासम् अपि प्रेत्य फलाय नोऽपि इहार्थं साधुभिर्निन्दितत्वाद् इति ।" इति ॥ अत्रानन्द गिरिः 'तत्र च सर्वत्रेति सप्तमीभ्यां प्रकृतं यज्ञादि गृह्यते । सर्वं यज्ञादि सगुणम् इति शेषः ।' इत्याह, 'तस्य असत्त्वं साधयति मत्प्राप्तीति । ऐहिकम् आमुष्मिकं वा फलम् अश्रद्धितेनाऽपि कर्मणा संपत्स्यते, कुतोऽस्य असत्त्वम् ? इत्याशङ्क्याह चेति । तस्योभयविधफलाऽहेतुत्वे हेतुमाह—

साधुभिरिति। निन्दन्ति हि साधवः श्रद्धारहितं कर्म। अतो नैतद् उभयफलोपयिकम् इत्यर्थः।' इति चाह ॥ तदेवम् अनेन सप्तदशेन अध्यायेन'—कर्मकाण्डं शास्त्रप्रमाणेन अजानतामपि सात्त्विकश्रद्धावतां वृद्धव्यवहारदर्शनमात्रेण आचारप्रमाणेन सात्त्विकानि यज्ञतपोदानानि कुर्वतां सात्त्विकं च आहारादिकं सेवमानानां राजसतामसानि आहारादीनि परिहरतां ब्रह्मनिर्देशेन 'ॐ तत् सद्' इत्यनेन यज्ञादिकर्मसु प्रमादनिष्पन्नं वैगुण्यं परिहरतां तत्कर्मभिश्च शुद्धीकृतबुद्धीनां परतश्च कर्मकाण्डं संन्यस्य ज्ञानकाण्डशास्त्रत आचार्यद्वारकं श्रवणमननिदिध्यासनानि ब्रह्मणः कुर्वतां ब्रह्मात्मैक्यसाक्षात्कारोदयेन मोक्षसिद्धिःस्यादित्युपपादितम् ॥२८॥

ॐ तत्सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु वंशीव्याख्यायां वंशीधरमिश्रकृतायां शाङ्करभाष्यानुसारिण्यां सप्तदशोऽध्यायः ॥

श्रीकृष्णार्पणमस्तु।



# अथ गीतावंश्याम् अष्टादशोऽध्यायः

अर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वम् इच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ।।१।।

अवतरणम्—सर्वस्यैव गीताशास्त्रस्यार्थः सर्वश्च वेदार्थः सुखप्रतिपत्त्यर्थम् उपसंहृत्य अस्मिन् अन्तिमेऽध्यायेऽष्टादशे वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते । सर्वेषु हि अतीतेषु अध्यायेषु पूर्वोक्तोर्थोऽस्मिन् अध्यायेऽवगम्यते । अस्याम् अष्टादशाऽध्याय्याम् प्रथमे उपोद्घातितानां द्वितीये सूत्रितानाम् शेषैर्व्युत्पादितानाम् अर्थानां कार्त्स्न्येन उपसंहाराय अस्याऽन्तिमस्याऽध्यायस्य आरम्भः । किञ्च पूर्वाध्याये श्रद्धात्रैविध्यम् आहारयज्ञतपोदानं त्रैविध्यञ्च सात्त्विकानां तेषां ग्रहणाय राजसतामसानां परित्यागाय चोक्तम् । अधुना तु त्याग-ज्ञान-कर्म-कर्तृत्रैविध्यं वक्तव्यम् । अवशिष्टञ्च मुमुक्षोरत्यन्तहितं किञ्चिद् वक्तव्यम् इत्ययम् अध्याय आरभ्यते । तत्र अर्जुनस्तु तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वत्र, अतस्तत्र संदिहानः संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुः सन् सर्वज्ञं दयानिधिं जगद्गुरुं प्रार्थयते—अर्जुन उवाच ।

व्याख्या—हे हृषीकेश, हे सर्वेन्द्रियनियामक, हे केशिनिषूदन, केशिनाम्नो हि महाहयाकृते 'दैत्यस्य' युद्धे मुखं व्यादाय भक्षयितुम् आगतस्य अति व्यात्ते मुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत् तं विदार्य निषूदितवान् अतएव हे महाबाहो, अत्यनुरागात् संबोधनत्रयम् । संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य च त्यागशब्दार्थस्य च तत्त्वं तस्य भावस्तत्त्वं याथात्म्यं पृथग् इतरेतरविभागतः, वेदितुं ज्ञातुम्, इच्छामि काङ्क्षे । 'पृथगिति विशेषणाद् अपृथगर्थस्तयोरस्तीति गम्यते ।' इत्यानन्दगिरिः ।।१।।

अवतरणम्—पूर्वेषु अध्यायेषु तत्र तत्र 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' (५।१३), 'योगसंन्यस्तकर्माणम् ज्ञानसंछिन्नसंशयम्' (४।४१) 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा' (३।३०), 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः' (१२।६) संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' (५।६)

श्रीभगवान् उवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

---

'स संन्यासी च योगी च' (६।१) 'ज्ञेयः स नित्यसंन्यासी' (५।३) 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' (६।२), 'सर्वसंकल्पसंन्यासी' (६।४), 'संन्यासयोगयुक्तात्मा' (९।२८) इत्यादौ संन्यासशब्दः, 'त्यक्त्वा कर्मफलासङ्गम्' (४।२०) 'त्यक्तसर्वपरिग्रहः' (४।२१) 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः' (५।१०) 'युक्तः कर्मफलं त्यक्त्वा' (५।१२) 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' (५।११) 'संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः' (६।२४) 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' (१२।११) 'ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्'(१२।१२)'सर्वारम्भपरित्यागी'(१२।१६) 'शुभाऽशुभपरित्यागी' (१२।१७) 'सर्वारम्भपरित्यागी' (१४।२५) इत्यादौ च त्यागशब्द उक्तः। एतौ च विभिन्नविषयौ निर्दिष्टौ—कर्मत्यागविषये संन्यासशब्दः कर्मफलादित्यागविषये तु त्यागशब्दः। न च पूर्वत्र कुत्रापि निर्दिष्टं तयोः शब्दार्थयोरयं विशेष इति। अन्यत्र तु संन्यासत्यागशब्दौ एकार्थकतया प्रसिद्धौ। तस्मादत्र अर्जुनस्य संदेहः। प्रसिद्धेरेकार्थकत्वसन्देहः। विषयवैषम्यदर्शनात्तु विभिन्नार्थत्वसंदेहः। यदि तु भिन्नार्थता तर्हि सा वक्तव्येति। एवं प्रश्नकर्तुराशयं ज्ञात्वा प्रश्नौचित्यं मन्यमानःसन् 'एकदेशिमतेन तयोः शब्दार्थयोर्भेदस्य सत्त्वेऽपि नाऽस्मन्मतेन तयोर्भेद' इत्याशयेन तदुत्तरं दर्शयिष्यन् तत्सन्देह निर्णयाय—श्रीभगवान् उवाच।

**व्याख्या**—अत्र केचिदित्यस्याध्याहारः सामर्थ्याद् भाष्ये व्याख्यानाच्च। केचिद् विचक्षणाः निपुणाः, कवयः पण्डिताः, काम्यानां कर्मणाम्—'स्वर्गकामो यजेत' (शत० ब्रा०) इत्यादिना स्वर्गादिकामाय अधिकारिणे स्वर्गादिफलसाधकतया विहितानाम् अश्वमेधादीनां वैकल्पिकानां कर्मणाम् अनुष्ठेयत्वेन प्राप्तानां न्यासं परित्यागम् अननुष्ठानम् संन्यासं संन्यासशब्दार्थम् संन्यासशब्दवाच्यं विदुर्जानन्ति। ते एव पुनः सर्वकर्मफलत्यागं सर्वेषाम् कर्मणाम् अवश्यकर्तव्यत्वेन विहितानां नित्यानां नैमित्तिकानां च कर्मणाम् अनुष्ठीयमानानाम् 'अहरहः सन्ध्याम् उपासीत' 'राहूपरागे स्नायात्' इत्यादीनाम् आत्मसम्बन्धितया प्राप्तस्य फलस्य त्यागम् अनपेक्षणम् त्यागं त्यागशब्दार्थं प्राहुर्-

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥

---

वदन्ति मुमुक्षोः प्रकरण इति शेषः । मुमुक्षोः काम्यकर्मणो वैकल्पिकत्वेन प्रसङ्ग एव नास्ति अतः सर्वपदेन काम्यकर्माऽतिरिक्तानामेव ग्रहणं कृतं भाष्यकारेण । फलमात्रत्यागश्रवणाद्, अर्थाद् अनुष्ठीयमानानामित्यर्थ आयाति । यथा 'सर्वे ब्राह्मणा भोज्यन्ताम्' इत्यत्र न भूतलवतिसकलब्राह्मणबोधः किन्तु आमन्त्रितानामेव ब्राह्मणानां ग्रहणम् सर्वब्राह्मणपदेन तथैवाऽत्र मुमुक्षुप्रकरणे सर्वकर्मपदेन प्रकरणप्राप्तानामेव अवश्यकर्तव्यानां नित्यानां नैमित्तिकानां च ग्रहणं कर्तव्यमिति सर्वज्ञस्य भाष्यकारस्याशयः । अर्थाद् एकदेशिमतेन यत्र-यत्र पूर्वोक्तेषु श्लोकेषु संन्यासपदं तत्र तत्र काम्यकर्मानुष्ठानसंन्यासोऽवगन्तव्यः काम्यकर्मणाम् अनुष्ठानस्य मुमुक्षोरत्यन्तविरोधित्वात् । यत्र यत्र तु त्यागपदं तत्र तत्र अवश्यकर्तव्यानां नित्यनैमित्तिकानां कर्मणाम् अनुष्ठानस्य कर्तव्यत्वेऽपि फलमात्रस्यत्यागः कर्तव्य इत्याशयः । एवञ्चात्र सर्वपदेन काम्यानामपि ग्रहणं कुर्वन्तः परास्ताः । ननु नित्यनैमित्तिकानां कर्मणां विधिप्रकरणे अश्रुतत्वात् फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्याग इति ? यथा वन्ध्यायाः पुत्रत्याग इति ? नैष दोषः । नित्यनैमित्तिकानामपि कर्मणां फलवत्त्वस्य भगवता इष्टत्वात् । वक्ष्यति हि भगवान् 'अनिष्टमिष्टं मिश्रं–च त्रिविधं कर्मणः फलम्' (१८।१२) इति । तत्र च संन्यासिनामेव कर्मफलाऽसंबन्धं दर्शयति । इतरेषां तु कर्मफलप्राप्ति दर्शयत्येव–'भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥' (१८।१२) इति । एवञ्चास्मिन् एकदेशिमतेऽपि काम्यकर्मपरित्यागः संन्यासशब्दार्थः । अनुष्ठीयमाननित्यनैमित्तिक-सर्वकर्मफलमात्रत्यागस्त्यागशब्दार्थः, इत्येवं संन्यासत्यागशब्दार्थयोरवान्तर-भेदेऽपि त्यागरूपेऽर्थेऽभेदाद् नात्यन्तिकभेदः । अतो न घटपटशब्दाविव जात्यन्तरभूतार्थौ संन्यासत्यागशब्दाविति । भगवन्मते तु 'अनिष्टमिष्टं मिश्रञ्चेति श्लोके (१८।१२) 'फलं भवति अत्यागिनां न तु संन्यासिनाम्' —इति विवरणदर्शनात् सर्वथा एकार्थौ एव संन्यासत्यागशब्दाविति अवगम्यते । अत एवाग्रे 'त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः' (१८।४) इत्यत्र संन्यासस्य गतार्थत्वेन न न्यूनतापत्तिः ॥२॥

**अवतरणम्**—काम्यानि वर्जयित्वा नित्यनैमित्तिकानि विविदिषाऽतिरिक्तफलाऽभिलाषाद् ऋते अनात्मज्ञेन मुमुक्षुणा सत्त्वशुद्ध्यर्थं तद्द्वारा

विविदिषादिसिद्ध्यर्थं कर्माणि अनुष्ठेयान्येवेति पूर्वाऽध्यायेपूक्तं स्वमतं प्रतिपक्षनिरासेन द्रढयितुं विप्रतिपत्तिमाह प्रसङ्गात्—त्याज्यमिति ।

**व्याख्या**—एके सांख्यादिदृष्टिमाश्रिता मनीषिणः पण्डिताः दोषवद्-दोषोऽस्यास्तीति दोषवद्, बन्धहेतुत्वदोषयुक्तम् अस्तीतिशेषः । इति कृत्वा कर्म सर्वमेव त्याज्यम् त्यक्तव्यम् । अथवा दोषवद् दोषेण तुल्यम् । दोषो यथा त्यज्यते तथा, सर्वमेव कर्म त्याज्यं त्यक्तव्यम् अधिकृतै॰पि कर्मिभिरिति प्राहुः कथयन्ति । अपरे च पूर्वमीमांसकाः यज्ञदानतपःकर्म न त्याज्यम् अधिकृतैः कर्मिभिरिति प्राहुः । अत्र भाष्ये–"कर्मिण एव अधिकृतान् अपेक्ष्य एते विकल्पाः—'काम्यानां कर्मणां न्यासम्' इत्यारभ्य 'न त्याज्यमिति चापरे ॥' इत्यन्ताभ्यां श्लोकाभ्याम् उक्ताः श्लोकान्तरैर्वक्ष्यमाणाश्च । न तु ज्ञाननिष्ठान् (एषणाभ्यो) व्युत्थायिनः परमार्थसंन्यासिनोऽपेक्ष्य । 'ज्ञानयोगेन सांख्यानाम् निष्ठा-(३।३) मया पुरा प्रोक्ता' इति कर्माधिकाराद् अपोद्धृता ये न तान्प्रति चिन्ता । ननु 'कर्मयोगेन योगिनाम्' इत्यधिकृताः पूर्वं विभक्त-निष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्ताम् इति ? न तेषां मोहदुःखनिमित्तत्यागाऽनुपपत्तेः । न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्ति. (१३।६) इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात् । अतस्ते न कायक्लेशदुःखभयात् कर्म परित्यजन्ति । नापि ते कर्माणि आत्मनि पश्यन्ति । येन नियतं कर्म मोहात् परित्यजेयुः । गुणानां कर्म । अहं नैव किञ्चित्करोमि ? (५।८) इति हि ते संपश्यन्ति । ईदृशविचार एव तेषां कर्मसंन्यासो न तु प्राप्तकर्मपरित्यागः । 'सर्वं कर्माणि मनसा संन्यस्य' (५।१३) इत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तः । तस्माद् येऽन्येऽधिकृतां कर्मणि अनात्मविदो येषां च मोहात् त्यागः संभवति कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यन्ते, कर्मिणाम् अनात्मज्ञानाम् कर्मफलत्यागस्तुत्यर्थम् । सर्वारम्भपरित्यागी मौनी संतुष्टो येन केनचिद् अनिकेतः स्थिरमतिरिति गुणातीतलक्षणे च परमार्थ-संन्यासिनो विशेषितत्वात् । वक्ष्यति च–'ज्ञानस्य या परा निष्ठा' इति । तस्माज्ज्ञाननिष्ठाः परमार्थसंन्यासिनो गुणातीता इह गुणनिदर्शनप्रकरणे नैव विचार्यत्वेन विवक्षिताः । कर्मफलत्याग एवेह प्रकरणे सात्त्विकत्वेन गुणेन-तामसत्वाद्यपेक्षया संन्यास उच्यते, न मुख्यः सर्वकर्मसंन्यासः । सर्वकर्मसंन्यासाऽसंभवे च–'नहि देहभृता' इति हेतुवचनान्मुख्य एवेतिचेन्न, हेतुवचनस्य

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥४॥**

---

स्तुत्यर्थत्वात् । यथा 'त्यागाच्छान्तिरनन्तरम्' इति कर्मफलत्यागस्तुतिरेव यथोक्ताऽनेकपक्षाऽनुष्ठानाऽशक्तिमन्तम् अज्ञं प्रति विधानात्, तथा इदमपि 'न हि देहभृता शक्यम्' इति कर्मफलत्यागस्तुत्यर्थं वचनम् । 'सर्वकर्माणि मनसा संन्यस्य'–"नैव कुर्वन् न कारयन्" आस्ते, अस्यपक्षस्य अपवादो न केनचिद् दर्शयितुं शक्यः । तस्मात् कर्मणि अधिकृतान् प्रत्येव एष संन्यासत्यागविकल्पः । (विकल्पो विचारः ।) ये तु परमार्थदर्शिनः सांख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायाम् अधिकारोनाऽन्यत्र इति न ते विकल्पार्हाः । तथोपपादितम् अस्माभिर्वेदाऽविनाशिनम् इत्यस्मिन् प्रदेशे तृतीयादौ च ।" इत्युक्तम् ॥३॥

अवतरणम्—'काम्यानां कर्मणां न्यासम्' इति 'त्याज्यं दोषवदित्येके' इति च श्लोकाभ्यां त्रयो विकल्पा निर्दिष्टाः—संन्यासत्यागशब्दार्थयोर्विषये एको विकल्पः । कर्मत्यागविषये तु द्वौ विकल्पौ इति । एषु विकल्पेषु स्वनिर्णयस्य श्रवणाय शिष्यं प्रवर्तयति भगवान् – निश्चयमिति ।

व्याख्या—हे भरतसत्तम भरतानां साधुतम, तत्र यथादर्शिते त्यागे त्यागसंन्यासविकल्पे मे मम वचनात्, निश्चयं शृणु अवधारय । त्यागशब्देन वाच्यो योऽर्थः स एव संन्यासशब्देनाऽपि वाच्यः, संन्यासत्यागशब्दयोः पर्यायवाचकत्वाद् इत्यभिप्रेत्य आह– त्यागो हीति । एतेन केवलत्यागशब्दोच्चारणेन प्रथमविकल्पे स्वनिर्णयो दत्तो भगवता त्यागसंन्यासशब्दार्थस्य एकत्वमिति । अन्यथा न्यूनतापत्तेः । द्वितीयतृतीयविकल्पयोरपिनिर्णयं श्रावयितुं तावत् त्यागं विभजते–हे पुरुषव्याघ्र ? त्यागो हि त्यागसंन्यासशब्दवाच्यो हि, त्रिविधस्त्रिप्रकारस्तामसराजससात्त्विकप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक् कथितः । हि यस्मात्—तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्यैव त्रिविधः संभवति न तु परमार्थदर्शिन इत्ययमर्थो दुर्ज्ञानस्तस्मादत्र तत्त्वं नान्यो वक्तुं समर्थः । तस्माद् निश्चयं परमार्थशास्त्रार्थविषयम् अध्यवसायं मे मम वचनाद् ऐश्वरं शृणु इत्यभिप्रायः । इह प्रकरणे संन्यासशब्देन न मुख्यः सर्वकर्मसंन्यास आत्मज्ञकर्तृकः परिगृह्यते । किञ्च संजाततीव्रवैराग्येण तत्त्वबुभुत्सुनाऽपि कृतस्य कर्मसंन्यासस्य नाऽत्र विवक्षितत्वम् इत्यवधेयम् ॥४॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।।५।।

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।।६।।

---

अवतरणम्—कः पुनरसौ निश्चयः ? तत्राह—यज्ञेति ।

व्याख्या—यज्ञो दानं तपः-इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यम् (किन्तु) तत् कार्यम् एव करणीयम् एव । (यस्मात्) यज्ञो दानं तपश्चैव मनीषिणाम् फलाऽनभिसन्धीनाम् पावनानि चित्तशुद्धिकराणि सन्ति ।। इह पावनानि भवन्तीत्यवगम्यते आत्मज्ञस्य विशुद्धचित्तस्य न तेषामुपयोगः 'तस्य कार्यं न विद्यते' (३।१७) इत्युक्तत्वाच्चेति बोध्यम् ।।५।।

अवतरणम्—यथोक्तं निश्चयम् उपसंहरति—एतानीति ।

व्याख्या—हे पार्थ, एतान्यपि तु कर्माणि यज्ञदानतपांसि यथोक्तानि सासङ्गस्य फलार्थिनो बन्धहेतवोऽपि सङ्गं तेषु अहं करोमीति कर्तृत्वाऽभिमानं, फलानि च तेषां कर्मणां स्वर्गादीनि त्यक्त्वा अनपेक्ष्य फलानां कामनां त्यक्त्वेत्यर्थः । (मुमुक्षुणातु विविदिषोत्यर्थं) कर्तव्यानि अनुष्ठेयानि सन्तीति मे मम निश्चितम् उत्तमं मतम् अस्तीति शेषः । अत्र "निश्चयं शृणु मे तत्र" इति प्रतिज्ञातं 'यज्ञदानतपः कर्म न त्याज्यम्' इति निश्चयस्वरूपं प्रदर्श्य, तादृशनिश्चये तेषां पावनत्वं हेतुमुक्त्वा एतान्यपीति श्लोकेन प्रतिज्ञातार्थोपसंहार इत्यवधेयम् । न अपूर्वार्थं वचनमिदम् । एतान्यपीति प्रकृतसंनिकृष्टार्थंतोपपत्तेः । (तत्र) 'सासङ्गस्य फलार्थिनो बन्धहेतवोऽपि एतानि कर्माणि मुमुक्षोः कर्तव्यानि' इत्यपि शब्दस्यार्थः । न तु अन्यानि (नित्यनैमित्तिकाऽतिरिक्तानि कर्माणि काम्यानि) अपेक्ष्य 'एतान्यपि' इत्युच्यते । अन्ये वर्णयन्ति नित्यानां कर्मणां फलाऽभावात् सङ्गं त्यक्त्वा फलानि च इति नोपपद्यते । एतान्यपि इति यानि काम्यानि कर्माणि नित्येभ्योऽन्यानि एतान्यपि कर्तव्यानि किमुत यज्ञदानतपांसि नित्यानि इति । तद् असत्, नित्यानाम् अपि कर्मणां फलवत्त्वस्य उपपादितत्वात्—'यज्ञो दानं तपश्चैव पावनानि' इत्यादिवचनेन । नित्यान्यपि कर्माणि बन्धहेतुत्वाऽऽशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः ? 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वात् 'यज्ञार्थात्कर्मणोऽन्यत्र'

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥
दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥

---

इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात्, 'त्रैगुण्यविषया वेदाः' 'त्रैविद्या मां सोमपाः' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति च दूरव्यवहितत्वाच्च न काम्येषु एतान्यपीति व्यपदेशः ॥" इत्युक्तं भाष्ये ॥६॥

अवतरणम्—तस्माद् अज्ञस्य अधिकृतस्य मुमुक्षोर्नियतकर्मसंन्यासाऽनुपपत्तिं दर्शयन् प्रतिज्ञातं त्यागस्य त्रैविध्यं कथयितुमारभते—नियतस्येति ।

व्याख्या—नियतस्य तु काम्यस्य कर्मणो बन्धकत्वात् संन्यासो युक्तश्चित्तशुद्धयकरणाच्च नित्यस्य नैमित्तिकस्य च आवश्यकस्य तु कर्मणः संन्यासः परित्यागो न उपपद्यते अज्ञस्य पावनत्वेन दृष्टत्वात् । मोहाद् अज्ञानात् तस्य नियतस्य परित्यागः, नियतम् अवश्यकर्तव्यञ्च त्यज्यते च इति विप्रतिषिद्धम् अतो मोहनिमित्तः परित्यागस्तामसः परिकीर्तितो मोहश्च तम इति । अत्र च श्लोके संन्यास-परित्यागशब्दयोरेकार्थे प्रयोगात् 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥' इत्येकदेशिमतं न युक्तमिति सूचितम् । तत्त्वबोधेजाते तत्त्वबुभुत्सायां च जातायां कर्मणां परित्यागस्य क्रमेण गुणातीतत्वाद् निर्गुणत्वाच्च नात्र भेदनिरूपणं, तत्र गुणकृतभेदस्याऽसंभवात् । गुणातीतलक्षणनिरूपणेन 'निस्त्रैगुण्यो भवार्जुन' इत्यनेन च तदा कर्मत्यागस्य अभ्यनुज्ञानात् इत्यवधेयम् ॥७॥

अवतरणम्—अनुपजाततत्त्वबुभुत्सोऽनात्मज्ञो यदा मोहं विनैव कर्मणः पावनत्वज्ञानेऽपि सति अनुष्ठाने क्लेशभयात् नियतं कर्म परित्यजति तदा तस्य स त्यागो राजसोऽस्ति इत्याह—दुःखमिति ।

व्याख्या—दुःखम् इत्येव मोहाऽभावेऽपि 'दुःखरूपम् इदम्' इति मत्वा कायक्लेशभयात् शरीरदुःखभयादेव यो नियतं कर्म यत् त्यजेत् । अत्र नियतमिति संबध्यते । स पुरुषो राजसं रजोगुणनिर्वृत्तं दुःखस्य रजोरूपत्वात् तं त्यागं कृत्वा त्यागफलम् ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं नैव लभते । चित्तशुद्धयभावेन ज्ञानप्राप्तेरभावात् । किन्तु तादृशेन (राजसेन) कर्मत्यागेन तदनुरूपं नरकमेव गच्छेदित्यभिप्रायः । प्रत्युत निष्कामं कर्म कृत्वैव

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥९॥

---

चित्तशुद्धिद्वारेण विविदिषां प्राप्य ज्ञानं च श्रवणादिना संप्राप्य मोक्षं फलेदिति भावः। अत्र यदिति त्यजेत् क्रियाया विशेषम् अतस्तं त्यागमिति विशेषण-वाचकस्य तच्छब्दस्य अध्याहार आवश्यकः साकाङ्क्षत्वात्। 'स तं त्यागं कृत्वा त्यागफलं नैव लभते' इत्यनेन ज्ञानपूर्वकं त्यागं कृत्वा मोक्षम् अवश्यं लभेत इति सूचितम् ॥८॥

अवतरणम्—अथ प्रतिज्ञाते त्यागत्रैविध्ये तृतीयविधं त्यागमाह—कार्यमिति ।

व्याख्या—हे अर्जुन, 'कार्यम्' 'कर्तव्यम्' इत्येव 'नाऽनेन किञ्चिद् अन्यद् भाव्यम्' इत्येतन्मात्रं बुद्ध्वा नियतम् आवश्यकं नित्यं नैमित्तिकं च। भाष्ये नित्यमिति नैमित्तिकस्याऽपि उपलक्षणम्। कर्म, सङ्गम् अहं करोमीति कर्तृत्वाभिमानं फलञ्च स्वर्गादि, अर्थात् स्वर्गस्याभिलाषं, यत् त्यक्त्वा क्रियते निर्वर्त्यते, यदिति त्यक्त्वाक्रियाया विशेषणम्। स त्यागः कर्मविषयकसङ्गफल-त्यागः सात्त्विकः सत्वगुणनिर्वृत्तः मतोऽभिमतः शिष्टैरिति शेषः। नित्य-नैमित्तिकानामपि कर्मणां विधिप्रदेशेषु फलाऽश्रवणेऽपि फलवत्वस्येष्टत्वात्। तेषां फलवत्वे भगवद्वचनं प्रमाणं–अनिष्टमिष्टं मिश्रञ्चेतित्यवोचाम। अथवा यद्यपि नित्यनैमित्तिककर्मणां विध्युद्देशे न किमपि फलं श्रूयते तथापि फलाऽभावे विधेरानर्थक्यापत्तेरात्मसंस्काररूपं तदकरणजन्यप्रत्यवायपरिहाररूपं वा फलं कल्पयत्येव अनात्मविल्लोकः। तत्र तस्य तामपि कल्पनां निवारयति भगवान् फलं त्यक्त्वा इत्यनेन। अतः सङ्गं त्यक्त्वा फलं चैवेति साधूक्तं भगवता। अत्र भाष्यम्—"ननु कर्मपरित्यागस्त्रिविधः संन्यास इति च प्रकृतः। तत्र तामसो राजसश्च उक्तस्त्यागः। कथम् इह सङ्गफलत्याग-स्तृतीयत्वेन उच्यते? यथा त्रयो ब्राह्मणा आगताः। तत्र षडङ्गविदौ द्वौ, क्षत्रियस्तृतीय इति तद्वत्। नैष दोषः, त्यागसामान्येनस्तुत्यर्थत्वात्। अस्ति हि कर्मसंन्यासस्य फलाऽभिसंधित्यागस्य च त्यागत्वसामान्यम्। तत्र राज-सतामसत्वेन कर्मत्यागनिन्दया कर्मफलाऽभिसंधित्यागः सात्त्विकत्वेन स्तूयते—'स त्यागः सात्त्विको मतः' इति।" इति ॥९॥

न द्वेष्ट्यकुशलं कर्म कुशले नाऽनुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

अवतरणम्—यस्त्वधिकृतः सङ्गं फलाऽभिसंधिं च त्यक्त्वा नित्यं नैमित्तिकं च कर्म करोति तस्य फलरागकर्मस्वरूपासङ्गैरकलुषीक्रियमाणम् अन्तःकरणम् नित्यनैमित्तिकैः कर्मभिः संस्क्रियमाणश्च विशुद्धयति । विशुद्धं प्रसन्नम् अन्तःकरणम् आत्माऽऽलोचनक्षमं भवति । मलविकलत्व-प्रसन्नत्वोभयवत्त्वं विशुद्धत्वम् संस्क्रियमाणत्वरूपम् । तस्यैव नित्यनैमित्तिककर्मानुष्ठानेन विशुद्धान्तःकरणस्य आत्मज्ञानाऽभिमुखस्य क्रमेण आत्मज्ञाननिष्ठा यथा स्यात् तद् वक्तव्यम् इत्याह क्रमेण श्रवणाद्यावृत्तिद्वारेणेत्यर्थः— न द्वेष्टीति ।

व्याख्या—त्यागी पूर्वोक्तेन सात्त्विकेन सङ्गफलपरित्यागेन त्यागवान् अर्थात् यः कर्मणि सङ्गं त्यक्त्वा तत्फलं च अनपेक्ष्य नित्यनैमित्तिककर्मानुष्ठायी वर्तते स त्यागी (यदा) सत्त्वसमाविष्टः सत्त्वेन आत्माऽनात्मविवेकविज्ञानहेतुना यथार्थग्रहणसमर्थेन अन्तःकरणेन समाविष्टः संव्याप्तः संयुक्त इत्येतत् । अत एव मेधावी मेधया आत्मज्ञानलक्षणया प्रज्ञया संयुक्तस्तादृशप्रज्ञावान् मेधावित्वादेव छिन्नसंशयश्छिन्नोऽविद्याकृतः संशयो ब्रह्मस्वरूपविषयको यस्य सः । आत्मस्वरूपावस्थानमेव परं निःश्रेयसम् । तस्य च साधनम्—'अहमेव सर्वात्मा ब्रह्म, न मत्तोऽन्यत् किञ्चित्' इत्येवम् ब्रह्मात्मैक्यदर्शनमेव नाऽन्यत् किञ्चित्' इत्येवं निश्चयात्मकविद्यया छिन्नसंशयो भवति (तदा) अकुशलम् अशोभनं काम्यं निषिद्धं च कर्म न द्वेष्टि—'शरीरारम्भद्वारेण संसारकारणमिदम् काम्यं निषिद्धं च कर्म । किम् अनेन ?' इत्येवं न द्वेष्टि । तथा कुशले शोभने नित्ये नैमित्तिके च कर्मणि न अनुषज्जते—'सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकरणमिदम्' इत्येवम् अनुषङ्गं प्रीतिं न करोति । तत्रापि प्रयोजनम् अपश्यन् इति भावः । योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण फलासङ्गत्यागात्मना कर्मयोगाऽनुष्ठानेन संस्कृतात्मा सन् क्रमेण श्रवणाद्यनुष्ठानद्वारेण जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानम् आत्मत्वे संबुद्धवान् स सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन् न कारयन् आसीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठां संप्राप्य मोदते इति वाक्यार्थः । एवं च पूर्वोक्तस्य कर्मयोगानुष्ठानस्य मोक्षसिद्धिरेव परम्परया (चित्तशुद्धिज्ञानप्राप्तिज्ञाननिष्ठाद्वारेण ) प्रयोजनम् इत्यनेन श्लोकेनोक्तम् ॥१०॥

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।।११।।

---

अवतरणम्—यः पुनस्त्रैवर्णिकः सन् देहात्माभिमानी अनात्मज्ञोऽवाधितात्मकर्तृत्वविज्ञानतया 'अहं कर्ता' इति निश्चितबुद्धिस्तस्य अशेषकर्मपरित्यागस्य असंभवात् (अशक्यत्वात्) कर्मफलपरित्यागेन विहितकर्माऽनुष्ठान एवाऽधिकारो न तत् परित्यागे इत्येतमर्थं दर्शयितुम् अनात्मज्ञस्य सर्वकर्मसंन्यासाऽसम्भवे हेतुमाह—न हीति ।

व्याख्या—हि यस्माद् देहभृता देहात्माऽभिमानिना अज्ञेन कर्माणि अशेषतो निःशेषतस्त्यक्तुं संन्यसितुं न शक्यम् 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' (३।५) इत्युक्तन्यायात् । तस्माद् यस्तु त्रैवर्णिकोऽनात्मज्ञो नित्यनैमित्तिककर्माणि कुर्वन्नेव कर्मफलत्यागी क्रियमाणकर्मफलाऽभिसन्धिमात्रसंन्यासी स त्यागीति अभिधीयते, कर्मत्यागी इति कथ्यते कर्मी अपि सन् । देहभृता - देहं विभर्त्ति इति देहभृद् देहात्माऽभिमानवान् अज्ञ एव, न विज्ञस्तस्य प्रारब्धकर्मशेषेण आध्यासिकसंबन्धेन देहवत्त्वेपि देहधारण-पोषणक्रियायाः कर्तृत्वाऽभावात् । अतो न देहभृत्पदेन विवेकिनो ग्रहणम् । 'वेदाऽविनाशिनम्' (२।२१) इत्यनेन विज्ञस्य कर्तृत्वाधिकारान्निवर्तितत्वात् । अतो देहभृता देहात्माभिमानवता इत्यर्थः । अतएव—'सर्वं कर्माणि मनसा संन्यस्यास्ते सुखं वशी' (५।१३) इत्यनेन नाऽस्य विरोधः, तत्र मनसा विवेकबुद्धया अकर्त्रात्मस्वरूपसम्यग्दर्शनेन ('नाहं कर्ता' इति सम्यग्दर्शनेन) सर्वकर्मसंन्यासस्य विद्वत्कर्तृकस्य संभवप्रतिपादनात् । कर्मी अपि सन् कर्मत्यागी कथ्यते कर्मफलत्यागस्य स्तुत्यभिप्रायेणैव न वस्तुतः । वस्तुतस्तु परमार्थदर्शिना एव अदेहभृता देहात्मभावरहितेन अशेषकर्मसंन्यासः शक्यते कर्तुम् । कार्यकरणसंघातगतानां कर्मणाम् अविद्यया प्रत्यगात्मनि कूटस्थेऽध्यारोपितानां हि 'नाऽहं कर्ता' इति विवेकविज्ञानेन विद्यया एव संन्यासोऽध्यारोपापवादेन कर्तुं शक्यते । स एव हि मुख्यः कर्मसंन्यासः । कर्मफलमात्रत्यागरूपो गौण एव कर्मसंन्यासो बोध्यः । 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखंवशी' (५।१३) इत्यादिभिर्वाक्यैरेकवाक्यता एवम् उपपद्यते इत्यलम् ।।११।।

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥**

---

अवतरणम्—ननु देहात्माभिमानिना कर्माणि अशेषतस्त्यक्तुं न शक्यम्, इत्यभिप्रायस्य सूचनं क्रियते। तत्र अशेषकर्मपरित्यागस्य किं प्रयोजनं विशिष्टं स्याद् इत्युच्यते—अनिष्टमिति।

व्याख्या—अनिष्टं नरकतिर्यगादिलक्षणम्, इष्टं देवादिलक्षणम्, मिश्रम् इष्टाऽनिष्टसंयुक्तं मनुष्यलक्षणं चेति त्रिविधं त्रिप्रकारं कर्मणो धर्माऽधर्मलक्षणस्य फलम्। फल्गुतया लयम् अदर्शनं गच्छतीति फलशब्दनिर्वचनम्। बाह्याऽनेककारकव्यापारनिष्पन्नं सद् अनेकविधम् अविद्याकृतं सद् इन्द्रजालमायोपमं मिथ्याभूतं प्रतीतितो रमणीयत्वाऽऽभासान्महामोहकरं वस्तुतः प्रत्यगात्माऽऽश्रितत्वाऽभावेऽपि प्रत्यगात्मोपसर्पीव इत्येतदेवंलक्षणं फलम् अत्यागिनाम् अज्ञानां कर्मिणाम् सकामानां निष्कामानाञ्च विविदिषोत्पत्तिपर्यन्तं सत्त्वशुद्धेर्ज्ञानप्राप्तेश्च प्रागेव अन्तराले मृतानां फलाऽभिसन्धिमात्रत्यागेन गौणसंन्यासिनाम् अपरमार्थसंन्यासिनां प्रेत्य शरीरपातादूर्ध्वं भवति। न तु संन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचिद् देशेकाले वा कुत्राऽपि भवति। तेषां ज्ञानेन-अज्ञानोच्छेदे अज्ञानकार्याणां कर्मणामुच्छिन्नत्वात्। तथा च मुण्डकश्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' इति। न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं न उन्मूलयति कदाचिदित्यर्थः। यत्तु अत्र संन्यासिशब्देन फलत्यागसाम्यात् प्रकृताः कर्मफलपरित्यागिनोऽपि गृह्यन्ते 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः। स संन्यासी च योगी च' (६।१) इत्येवमादौ च कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् तेषां सात्त्विकानां पापाऽसंभवाद् ईश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थं इति-श्रीधरस्वामिना व्याख्यातं तद्-भाष्यविरुद्धत्वादुपेक्ष्यम्। शब्दार्थमर्यादाभ्यां विरोधाच्च। तथा हि फलत्यागसाम्यात् संन्यासित्वं कर्मिणां कथयता तेषां गौणमेव संन्यासित्वं स्वयमपि अभिप्रेयते। तथा च 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति महाभाष्यकारसम्मता शब्दमर्यादा सत्यपि मुख्यार्थसंभवे परित्यक्ता भवति। सत्यां कारणसामग्र्यां कार्योत्पाद आवश्यक इति चार्थमर्यादा सर्वमीमांसकसम्मता अस्ति। ईश्वरार्पणेन त्यक्तकर्मफलस्यापिऽ

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥**

---

सत्त्वशुद्धयर्थं नित्यनैमित्तिकानि अनुतिष्ठतोऽन्तराले मृतस्य प्रागर्जितैः कर्मभिः कारणैः कार्यभूतं त्रिविधशरीरग्रहणं कथं वार्येत ? अन्ततः सत्त्वशुद्धिज्ञानोत्पत्त्यर्थं तदधिकारिशरीरग्रहणम् आवश्यकमेव। अतएव योगभ्रष्टस्य 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यादिना ज्ञानाधिकारिशरीरग्रहणम् अवश्यं भावि इति निर्णीतं षष्ठे। तस्माद् अज्ञस्य अवश्यं शरीरग्रहणम् इत्यर्थमर्यादा। सा चोक्तव्याख्याने परित्यक्ता भवति। अतएव मधुसूदनसरस्वतीधनपतिभ्यां च भाष्यानुसारिभ्यां दूषितोऽयं भाष्यविरुद्धोऽर्थः श्रीधरस्वामिनः। आश्चर्यं च श्रीमद्भागवतव्याख्यया समर्जितयशसः संलब्धप्रतिष्ठस्य तस्याऽत्र भाष्यविरोधपुरःसरं त्यक्तमर्यादत्वम् इत्यलम् ॥१२॥

अवतरणम्—अतः परमार्थदर्शिन एव अशेषकर्मसंन्यासः संभवति; तस्य सम्यग्दर्शनेन अविद्याया निवृत्तेरविद्ययाऽध्यारोपितानाम् आत्मनि क्रियाकारकफलानां संनिवृत्तेः। न तु अज्ञस्य, अधिष्ठानादीनि क्रियाकर्तॄणि कारकाणि आत्मत्वेन पश्यतोजनस्य अशेषकर्मसंन्यासः संभवति। तदेतद् 'न हि देहभृता शक्यम् त्यक्तुं कर्माण्यशेषतः।' इत्यनेन सामान्यतः। प्रदर्शितमपि विशेषतः प्रदर्शयति चतुर्भिरुत्तरैः श्लोकैः—पञ्चेति।

व्याख्या—पञ्चैतानीति—हे महाबाहो, सर्वकर्मणां सिद्धये निष्पत्तये एतानि उत्तरत्र वक्ष्यमाणानि पञ्च कारणानि निर्वर्तकानि मे मम (वचनाद्) निबोध जानीहि, ज्ञातुं सावधानो भव। अन्यथा चेतःसमाधानादृते, आत्मनः शुद्धस्य अकर्तृत्वज्ञानार्थकर्तृत्वेन ज्ञातव्यानां वक्ष्यमाणानाम् 'अधिष्ठानादीनां दुर्बोधत्वं स्यात्। वेदान्तप्रमाणमूलानि च तानीति नूनं ज्ञातव्यानि आत्मज्ञानाङ्गत्वेनेत्याशयेन तानि स्तौति भगवान्-सांख्य इति। कृतान्ते आत्मज्ञानार्थे शास्त्रे। कृतमिति कर्मोच्यते। तस्य अन्तःपरिसमाप्तिर्यत्र आत्मज्ञाने तत् कृतान्तम् आत्मज्ञानम्। लक्षणया तदर्थे शास्त्रे। सांख्ये—संख्यायन्ते ब्रह्मात्मैक्यशमदमादिपदार्था ज्ञातव्या यस्मिन् इति सांख्यं वेदान्तशास्त्रम् तस्मिन् प्रोक्तानि प्रकर्षेण कथितानि इत्यर्थः। कृतान्त इति सांख्ये इत्यस्य विशेषणम्। 'यावानर्थ उदपाने सर्वतः संप्लुतोदके। तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥' (२।४६) इति 'सर्वं कर्माऽखिलंपार्थं ज्ञाने परि-

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥

समाप्यते ॥'(४।३३) इति च आत्मज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति अतः कृतान्तम् आत्मज्ञानं भवति, तदर्थं शास्त्रमपि कृतान्तं भवति ॥ व्याकरणशास्त्रे क्रियानिष्पादकानि कर्तृकर्मकरणसम्प्रदानापादानाधिकरणानिति षट् कारकाणि स्वशास्त्रपारिभाषिकानि सन्तीति न विरोधः ॥१३॥

अवतरणम्—कानि तानि ? इत्युच्यते—

व्याख्या—अत्र भाष्ये—"अधिष्ठानमिति । अधिष्ठानम् इच्छाद्वेषसुखदुःखज्ञानादीनाम् अभिव्यक्तेराश्रयोऽधिष्ठानं शरीरम् । तथा कर्ता उपाधिलक्षणो भोक्ता, करणं च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं द्वादशसंख्यम्, विविधाश्च पृथक् चेष्टा वायवीयाः प्राणापानाद्याः, दैवं चैव दैवमेव च अत्र एतेषु चतुर्षु पञ्चमं पञ्चानां (संख्यानां) पूरणम् आदित्यादि चक्षुराद्यनुग्राहकम् ॥" इत्युक्तम् । अत्रानन्दगिरीये—'उपाधिलक्षणो बुद्ध्यादिरुपाधिस्तल्लक्षणस्तत्स्वभावो बुद्ध्याद्यनुविधायी तद्धर्मान् आत्मनि पश्यन् उपहितस्तत्प्रधान इत्यर्थः । तत्र कार्यलिङ्गकम् अनुमानं सूचयति शब्दादीति । ज्ञानेन्द्रियाणि पञ्च, पञ्च कर्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशसंख्यत्वम् । चेष्टाया विविधत्वान्नानाप्रकारत्वम् । तदेव स्पष्टयति—वायवीया इति । पृथक्त्वम् असंकीर्णत्वम् । न हि प्राणापानादिचेष्टानां मिथः संकरोऽस्ति । दैवमेवेति विशदयति आदित्यादीति ॥' इति व्याख्यातम् । अत्र मधुसूदनीये—'इच्छाद्वेषसुखदुःखचेतनाद्यभिव्यक्तेराश्रयोऽधिष्ठानं शरीरम् । तथा कर्ता यथाऽधिष्ठानम् अनात्मा भौतिकं मायाकल्पितं स्वाप्नगृहरथादिवत् तथा कर्ता 'अहं करोमि' इत्याद्यभिमानवान् ज्ञानशक्तिप्रधानोऽपञ्चीकृतपञ्चमहाभूतकार्योऽहंकारोऽन्तःकरणं बुद्धिविज्ञानमित्यादिपर्यायशब्दवाच्यस्तादात्म्याध्यासेन आत्मनि कर्तृत्वादिधर्माऽध्यारोपहेतुरनात्मा भौतिको मायाकल्पितश्चेति तथा शब्दार्थः । स्थूलशरीरस्य लोकायतिकैरात्मत्वेन परिगृहीतस्यापि अन्यैः परीक्षकैरनात्मत्वेन निश्चयात् तद्दृष्टान्तेन तार्किकादिभिरात्मत्वेन परिगृहीतस्य कर्तुरपि अनात्मत्वनिश्चयः सुकर इत्यर्थः । करणवर्गे मनोबुद्धिश्चेति वृत्तिविशेषौ वृत्तिमांस्त्वहङ्कारः कर्तैव । चिदाभासस्तु सर्वत्रैव अविशिष्टः । विविधा नानाप्रकाराः पञ्चधादशधा वा प्रसिद्धाः । च शब्दस्तथेत्यनुकर्षार्थः ।

शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥

---

पृथग् असंकीर्णाः । चेष्टाः क्रियारूपा क्रियाशक्तिप्रधाना अपञ्चीकृतपञ्चमहाभूतकार्याः क्रियाप्राधान्येन वायवीयत्वेन व्यपदिश्यमानाः प्राणापानव्यानोदानसमानाः नागकूर्मकृकलदेवदत्तधनंजयाख्याश्च तदन्तर्भूता एव । अत्र च सुषुप्तौ अन्तःकरणस्य कर्तुर्लयेऽपि प्राणव्यापारदर्शनाद् भेदव्यपदेशाच्च अन्तःकरणाद् अत्यन्तभिन्न एव प्राण इति केचित् । क्रियाशक्तिज्ञानशक्तिमद् एकमेव जीवत्वोपाधिभूतम् अपञ्चीकृतपञ्चमहाभूतकार्यं क्रियाशक्तिप्राधान्येन प्राण इति, ज्ञानशक्तिप्राधान्येन च अन्तःकरणमिति व्यपदिश्यते इत्यभियुक्ताः । श्रुतौ 'स ईक्षां चक्रे' इत्यादौ उत्क्रान्त्याद्युपाधित्वं प्राणस्योक्तम् । तथा 'सधीः""ध्यायतीव लेलायतीव' इत्यादौ उत्क्रान्त्याद्युपाधित्वं बुद्धेरुक्तम् । स्वतन्त्रोपाधिभेदे च जीवभेदप्रसङ्गः । तस्माद् बुद्धिप्राणयोरेकत्वेनैव उत्क्रान्त्याद्युपाधित्वं युक्तम् भेदव्यपदेशश्च शक्तिभेदात् । सुषुप्तौ च ज्ञानशक्तिभागलयेऽपि क्रियाशक्तिभागदर्शनम् एकत्वेऽपि न विरुद्धम् अनुभवसिद्धत्वात् ।' इत्युक्तम् । पुनश्च मधुसूदनीये—'दैवं च अनुग्राहकदेवताजातम् । च शब्दस्तथेत्यनुकर्षणार्थः । अत्र कारणवर्गे पञ्चमं पञ्चमसंख्या पूरणम् । एव शब्दस्तथाशब्देन संबध्यमानोऽनात्मत्वभौतिकत्वमायाकल्पितत्वावधारणार्थः पञ्चानामपि । तत्र शरीरस्य कर्तृकरण-क्रियाधिष्ठानस्य देवता पृथिवी । कर्तुरहङ्कारस्य अधिष्ठात्री देवता रुद्रः पुराणादिप्रसिद्धः (यत्रास्य पुरुषस्येत्यादि श्रुतेः) श्रोत्रत्वक्चक्षूरसनघ्राणानां दिग्वातार्कप्रचेतोऽश्विनः । वाक्पाणिपादपायूपस्थानां वह्नीन्द्रोपेन्द्रमित्रप्रजापतयः । मनोबुद्धयोश्चन्द्रबृहस्पती इति । पञ्चानां प्राणानां क्रियारूपाणां सद्योजातवामदेवाघोरतत्पुरुषेशानाः पुराणप्रसिद्धाः । भाष्ये दैवमादित्यादिचक्षुराद्यनुग्राहकम् इति अधिष्ठानादिदेवतानामप्युपलक्षणम् ।' इत्युक्तम् । श्रीधरीये - 'अधिष्ठानं शरीरम् । कर्ता चिज्जडग्रन्थिरहङ्कारः ।' इत्युक्तम् ॥१४॥

अवतरणम्—पञ्चैतानि कारणानि सर्वकर्मणां सिद्धये वेदान्ते शास्त्रे प्रोक्तानीति यदुक्तं तत्र तेषां पञ्चानां कारणानां स्वरूपम् 'अधिष्ठानं तथा इत्यादिना उक्त्वा तेषां सर्वकर्मसाधकत्वमिदानीं विवृणोति - शरीरेति ।

व्याख्या—'नरः मनुष्यः—मनुष्याधिकारित्वाच्छास्त्रस्येति मधुसूदनसरस्वती । शरीरवाङ्मनोभिः शरीरं च वाक् च मनश्चेति तैः । न्याय्यं धर्म्यं

तत्रैवं सति कर्तारम् आत्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वाद् न स पश्यति दुर्मतिः ॥१६॥

---

शास्त्रीयम्, विपरीतं वा अधर्म्यम् अशास्त्रीयम्, यच्चापि निमिषितचेष्टादि-दर्शनश्रवणादि च जीवनहेतुस्तदपि पूर्वकृतधर्माऽधर्मयोरेव कार्यमिति न्याय्य-विपरीतयोरेव ग्रहणेन गृहीतम् । यत् कर्म प्रारभते करोति तस्य कर्मणः, एते यथोक्ताः पञ्च अधिष्ठानादयो हेतवः कारणानि सन्ति इति त्वं निबोध इत्यनेन अन्वयः । ननु शरीरादिभिस्त्रिभिर्यत्कर्म करोति तस्य कर्मणः पञ्च अधिष्ठा-नादयो हेतवः इति कथं संगच्छते ? त्रित्वपञ्चत्वयोर्विरोधात् । पूर्वापरग्रन्थ-विरोधः । इति चेदत्र भाष्यकृतः 'ननु अधिष्ठानादीनि सर्वकर्मणां कारणानि, कथमुच्यते शरीरवाङ्मनोभिः कर्म प्रारभते इति ? नैष दोषः विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानम् तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते। शरीरादिभिरारभते इति। फलकालेऽपि तत्प्रधानैर्भुज्यते इति पञ्चानामेव हेतुत्वं न विरुद्धयते ॥ इत्याहुः । अत्र श्रीधरस्वामी-'यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्यशरीरवाङ्मनोभिरित्युक्तम्-शारीरं वाचिकं मानसं च त्रिविधं कर्म इति प्रसिद्धेरि'त्याह । मधुसूदन-सरस्वती च-'शारीरं वाचिकं मानसिकं च विधिप्रतिषेधलक्षणं त्रिविधं कर्म धर्मशास्त्रेषु प्रसिद्धम् । अक्षपादेन चोक्तं 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' इति । बुद्धिर्मनः । अतः प्राधान्याऽभिप्रायेणोच्यते । इत्युक्तवान् नीलकण्ठश्च-इदं शारीरं कर्म इदं मानसमिदं वाचिकमितिव्यपदेशो देहादीनां प्राधान्यापेक्ष इति न कश्चिद् विरोधः' इति । तदेवं सर्वमेव कर्म वस्तुतोऽधिष्ठानादिभिः पञ्चभिरेव साध्यमपि प्रसिद्धयनुरोधाच्छरीरादिभिः प्रारभते इत्युक्तमित्यविरोधः । अत्र-दण्डचक्रादिन्यायेन समुदाये कारणत्वस्य विवक्षायामपि उद्भूतावयवभेदस्य समुदायस्य विवक्षितत्वाद् हेतव इति बहुवचनं न विरुद्धम् । काव्यप्रकाशे तु 'इति हेतुस्तदुद्भवे' इत्यत्र शक्तिनिपुणताऽभ्याससमुदायस्य अनुद्भूतावयवभेदस्य विवक्षया हेतुरित्येकवचनम् इत्यविरोधः । एवमेव विवक्षाभेदेनैव 'सर्वः सर्वौ सर्वे' इत्येकवचनद्विवचनबहुवचनसिद्धिरिति तान्त्रिकाणां निर्णयः ॥१५॥

अवतरणम्—एवम् अधिष्ठानादीनामेव भौतिकानाम् अनात्मनाम् सर्वकर्म-कर्तृत्वात् प्रत्यगात्मनो न कर्तृत्वम् इति युक्तियुक्तम् । तदेवाऽनुवदति-तत्रेति ।

व्याख्या—तत्र = सर्वस्मिन् कर्मणि न्याय्ये अन्याय्ये वा, एवं सति अधि-ष्ठानादिभिः पञ्चभिर्यथोक्तैर्निर्वर्त्ये सति । इदं विशेषणं सत्यन्तम्, वक्ष्यमाणस्य

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमांल्लोकान् न हन्ति न निबद्धचते ॥१७॥

दुर्मतित्वस्य हेतुत्वेन संबध्यते। केवलं शुद्धम्, आत्मानं प्रत्यगात्मानं योऽनात्मज्ञः कर्तारम् अधिष्ठानादिषु पञ्चसु अविद्यया आत्मानम् अनन्यत्वेन परिकल्प्य तैः क्रियमाणस्य कर्मणोऽहमेव कर्ता' इति पश्यति साक्षात्करोति अकृतबुद्धित्वाद् वेदान्ताचार्योपदेशन्यायैरसंस्कृतबुद्धित्वाद्। योऽपि तार्किको देहादिव्यतिरिक्तात्मवादी सन्नपि आत्मानमेव केवलं शुद्धं कर्तारं पश्यति असावपि अकृतबुद्धिरेव। अतः केवलात्मकर्तृत्वदर्शनाद्, दुर्मतिर्दुष्टा कुत्सिता विपरीता अजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिर्बुद्धिरस्येति दुर्मतिः स केवलात्मकर्तृत्वदर्शी अविद्वान् कर्मण आत्मनो वा तत्त्वं न पश्यति। कौटस्थ्यम् आत्मनस्तत्त्वम् याथात्म्यम्। कर्मणस्तत्त्वं तु अविद्याकृताऽधिष्ठानादिपञ्चकृतत्वेन आत्माऽस्पर्शित्वम्, एतदुभयं न पश्यतीत्यर्थः। यथा तैमिरिकोऽनेकं चन्द्रं पश्यति, यथा वाऽभ्रेषु धावत्सु चन्द्रं धावन्तं पश्यति, यथा वा वाहने उपविष्टोऽन्येषु धावत्सु आत्मानं धावन्तं पश्यति तद्वद् इत्यभिप्रायः ॥१६॥

अवतरणम्—कः पुनः सुमतिर्यः सम्यक् पश्यतीत्युच्यते—यस्येति।

व्याख्या—यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवति 'अहंकृतः' 'अहं कर्ता' इत्येवंलक्षणो भावो भावना, प्रत्ययः। 'एते एव पञ्च अधिष्ठानादयोऽविद्यया आत्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहम्। अहन्तु तद्व्यापाराणां साक्षिभूतो'ऽप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' 'केवलोऽविक्रियः' इत्येवं यः पश्यतीत्यर्थः। यस्य बुद्धिरन्तःकरणम् चिदात्मन उपाधिभूता, न लिप्यते नाऽनुशायिनी भवति, अर्थात् 'इदमहमकार्षम् ते न नरकं गमिष्यामि' इत्येवं यस्य बुद्धिर्न क्लेशशालिनी भवति स सुमतिः पश्यतीतिभावः। स सुमतिरिमान् ब्रह्माण्डोदरवर्तिनः सकलान् लोकान् प्राणिनो हत्वाऽपि न हन्ति हननक्रियां न करोति। न निबध्यते नाऽपि तत्कार्येण अधर्मफलेन संबध्यते। ननु हत्वाऽपि न हन्ति इति विप्रतिषिद्धमुच्यते यद्यपीयं स्तुतिरिति चेद् नैष दोषः। लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहस्यात्मबुद्धया 'हन्ताऽहम्' इति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह। यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य तु 'न हन्ति न निबध्यते' इत्युच्यते। एवं तदुभयम् उपपद्यते एव। ननु अधिष्ठानादिभिः संभूय करोत्येवात्मा 'कर्तारमात्मानं केवलन्तु' इति केवलशब्दप्रयोगात्? नैष दोषः। आत्मनोऽविक्रियस्वभावत्वे अधिष्ठानादिभिः

संहतत्वाऽनुपपत्तेः। विक्रियावतो हि अन्यैः संहननं संभवति। संहत्या वा कर्तृत्वं स्यात्। न तु अविक्रियस्य आत्मनः केनचित् संहननमस्ति। इति न संभूय कर्तृत्वम् उपपद्यते। अतः केवलत्वम् आत्मनः स्वाभाविकम् इति केवल शब्दोऽनुवादमात्रम्। अविक्रियत्वं चात्मनः श्रुतिस्मृतिन्यायप्रसिद्धम्। 'अविकार्योऽयमुच्यते' 'गुणैरेव कर्माणि क्रियन्ते 'शरीरस्थोऽपि न करोति' इत्यादि असकृदुपपादितं गीतास्वेव तावत्। श्रुतिषु च 'ध्यायतीव लेलायतीव' इत्येवमाद्यासु। न्यायतश्च निरवयवम् अपरतन्त्रम्, अविक्रियम् आत्मतत्त्वम् (छा० ७।६।१) इति राजमार्गः। तथा हि आत्मा तावत् स्वतो न विक्रियते निरवयवत्वादाकाशवत्। नापि परतो विक्रियते स्वतन्त्रस्य अविकार्यस्य पराधीनत्वाऽयोगात्। किञ्च आत्मनः स्वनिष्ठा विक्रिया न संभवति श्रुतिस्मृतिन्यायतस्तस्य अविक्रियत्वस्य निर्धारणात्। नापि अधिष्ठानादिनिष्ठविक्रियया तस्य विक्रियावत्त्वम्। न हि अधिष्ठानादीनां कर्माणि आत्मकर्तृकाणि स्युः। यत्तु अविद्यया तत्र गमितं न तत् तस्य। यथा रजतत्वं न शुक्तिकायाः। ननु द्वितीयाध्याय एव 'नायं हन्ति न हन्यते' इत्यादिना आत्मनोऽविक्रियत्वं प्रतिपादितम्। इह किमिति पुनरुक्तम्? इति चेदत्र भाष्ये-'नायं हन्ति न हन्यते' इति प्रतिज्ञाय 'न जायते म्रियते वा कदाचित्' इत्यादिना हेतुवचनेन तत्र प्रतिज्ञायाम् अविक्रियत्वं हेतुमुक्त्वा 'वेदाऽविनाशिनम्' इति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा मध्ये च तत्र तत्र प्रसङ्गं कृत्वा प्रसारितां विदुषः कर्माधिकारनिवृत्तिम् इहोपसंहरति शास्त्रार्थपिण्डीकरणाय 'विद्वान् न हन्ति न निबध्यते' इति।' इत्युक्तम्। ततश्चाग्रेपि भाष्ये-'एवञ्च सति (विदुषः कर्माऽधिकारो नेति स्थिते) विदुषां देहभृत्त्वाऽभिमानाऽनुपपत्तौ अविद्याकृताऽशेषकर्मणां विद्यया संन्यासस्य उपपत्तेः संन्यासिनाम् अनिष्टमिष्टं मिश्रञ्चेति त्रिविधं कर्मफलं न भवतीत्युपपन्नम्। तद्विपर्ययाच्च इतरेषाम् (अविदुषाम्) देहभृत्त्वाऽभिमानाद् अधिष्ठानादिभिस्तादात्म्याऽध्यासाद् अधिष्ठानादिभिः कृतस्य कर्मणः फलं भवत्येव अपरिहार्यत्वाद् इत्येष गीताशास्त्रस्यार्थ उपसंहृतोऽत्र। स एष सर्ववेदार्थसार इति निपुणमतिभिः पण्डितैर्विचार्य प्रतिपत्तव्य इति॥' इत्युक्तम्॥ "नाऽनुशायिनीति भाष्ये-'नाऽनुशायिनी नाऽनुशयवती न क्लेशशालिनीत्यर्थः।' इत्यानन्दगिरिः। 'इदमहमकार्षम्-एतत्फलं भोक्ष्ये' इत्यनुसंधानं कर्तृत्ववासनानिमित्तं लेपोऽनुशयः। स च पुण्ये कर्मणि हर्षरूपः पापे पश्चात्तापरूपः। ईदृशेन द्विविधेनाऽपि लेपेन बुद्धिर्न युज्यते कर्तृत्वाऽभिमानबाधात्' इति मधुसूदनसरस्वती॥१७॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

---

अवतरणम्—सर्ववेदार्थसाररूपस्य गीताशास्त्रार्थस्य 'यस्य नाहं कृतो-भाव:' इत्यादिना एकेनापि श्लोकेन उपसंहारकरणस्य अनन्तरं कर्मणां प्रवर्तकस्य उपदेशाऽपेक्षाया अवस्थायाम् उच्यते प्रवर्तकविद्ययाऽपि कर्मणाम् आत्माऽस्पर्शित्वमेवेति सूचयितुम्—ज्ञानमिति ।

व्याख्या—अत्र भाष्ये—"अथेदानीं कर्मणां प्रवर्तकमुच्यते—ज्ञानमिति । ज्ञानं ज्ञायते अनेनेति सर्वविषयम् अविशेषेण उच्यते । तथा ज्ञेयं ज्ञातव्यं तदपि सामान्येनैव सर्वमुच्यते तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता इत्येतत्त्रयम् एषाम् । अविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीनां हि त्रयाणां संनिपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात् । ततः पञ्चभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते इत्येतदुच्यते—करणं क्रियतेऽनेनेति बाह्यं श्रोत्रादि, अन्तःस्थं बुद्ध्यादि । कर्म ईप्सिततमं कर्तुः क्रियया व्याप्यमानं, कर्ता करणानां व्यापारयिता उपाधिलक्षण इति त्रिविधस्त्रिप्रकारः कर्मसंग्रहः संगृह्यते अस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः । कर्म एषु हि त्रिषु समवैति तेनाऽयं त्रिविधः कर्मसंग्रहः ॥" इत्युक्तम् । अत्रेदं बोध्यम्—'ज्ञायते अनेनेति ज्ञानम्' इति भाष्येऽत्र मूले च ज्ञानं बुद्धेर्वृत्तिविशेषः । बुद्धिश्च अविद्याया विवर्तविशेषः । 'सत्यं ज्ञानमनन्तं ब्रह्म' (      ) इति श्रुतौ तु नित्यं ज्ञानम् आत्मरूपं तदभिन्नं ब्रह्मरूपञ्चास्ति । तत्र ज्ञायते इत्यस्य भाष्यस्य ज्ञानानुकूलव्यापारप्रयोज्यफलरूपज्ञानस्य धीवृत्तिविशेषस्य विषयः क्रियते घटादिरित्यर्थः । अत्र 'ज्ञानानुकूलव्यापारश्च' आत्ममनःसंयोगः इति वैयाकरणाः । चिदाभासविशिष्टमनःप्रतियोगिकचक्षुरादितत्तदिन्द्रियाऽनुयोगिकः सम्बन्ध इति तदर्थः अत एव च "मनः संयुक्तानीन्द्रियाणि विषयोपलब्धौ कारणानि भवन्ति" इति लिट् सूत्रे महाभाष्योक्तेर्वैयाकरणसिद्धान्तमञ्जूषायां वैयाकरणदार्शनिकेन नागेशभट्टेनोक्तम्—'जानातेर्विषयतया ज्ञानं फलम् । आत्ममनःसंयोगो व्यापारः । अतएव मनो जानातीत्युपपद्यते । आत्माऽन्तःकरणम् मनोऽपि तद्वृत्तिविशेषरूपम् । आत्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥

---

शरीरावच्छिन्नः कर्मेति कर्मवत्सूत्रे महाभाष्ये स्पष्टम् । यत्तु आवरणभङ्गो विषयता वा फलम् व्यापारस्तु ज्ञानमेवेति तन्न कर्मस्थक्रियकत्वापत्तेः ।' इत्यादि । तत्र फलरूपं ज्ञानम् विषयोपलब्धिरेव नान्यत् । भावार्थकल्युट्प्रत्ययेन निष्पन्नज्ञानशब्दस्य तु विषयप्रकाशनव्यापाररूपोऽर्थः । ज्ञानशब्दस्य उपलब्धिरूपे फलेऽर्थे तदनुकूलव्यापाररूपेऽर्थे च उभयथा प्रयोगः । हानोपादानादिप्रयोजन इति भाष्ये आदिपदेन उपेक्षाया ग्रहणम् । तत्र ज्ञायतेऽनेनेति भाष्यबोधितकरणल्युडन्तज्ञानशब्दस्य उपलब्धिरूपं फलात्मकमेव धीवृत्तिविशेषरूपं ज्ञानमर्थो न व्यापाररूपः, व्यापाररूपाणां सर्वकर्मणां प्रवर्तकत्वेनोच्यमानत्वात् न हि स्वमेव स्वस्य प्रवर्तकं स्याद् । अन्योऽन्याश्रयदोषात् । इदं चात्र बोध्यम्--अधिकरणस्य कारकत्वेऽपि न साक्षात् कर्माश्रयत्वम् । कर्तृकर्मद्वारैव अधिकरणस्य कर्माश्रयत्वम् इति न क्षतिः अधिष्ठानमित्यादिश्लोके कर्मणां कर्तृकारकस्यैव पञ्च भेदा उक्ताः । इह तु कर्मसंग्रहे कारकाणां वैयाकरणैः परिभाषितानां कर्तृकरणकर्मणां सर्वकर्मसंग्रहत्वम् उक्तम् इति विशेषः । यद्यपि संप्रदानापादानयोरपि कर्तृकारकनिष्ठायाः प्रधानक्रियाया उत्पत्त्यनुकूलव्यापाराऽऽश्रयत्वम् करणकर्मणोरिव वर्तते इति तयोरपि अत्र ग्रहणं न्याय्यम् तथापि सम्प्रदानापादानयोः केवलदानविश्लेषक्रिययोरेव संग्रहत्वं, न सर्वकर्मणां संग्रहत्वमिति सर्वकर्मसंग्रहप्रसङ्गे न तयोर्ग्रहणं कृतम् । एवञ्च ज्ञानज्ञेयज्ञातॄणां सर्वकर्मप्रवर्तकानां त्रिगुणात्मकत्वाद् जडत्वाच्च आत्मनश्च चेतनत्वाद् निर्गुणत्वाच्चिदानन्दे निष्क्रिये आत्मनि निर्गुणे कथमपि कर्तृत्वस्य संस्पर्शो नास्ति इति प्रतिपादितम् अनेन श्लोकेन इत्यलम् ॥१८॥

अवतरणम्—अथेदानीं क्रियाकारकफलानां सर्वेषाम् आत्मसंबन्धो नास्तीति दर्शयितुं तेषां गुणात्मकत्वात् सत्त्वरजस्तमोगुणभेदतस्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—ज्ञानमिति ।

व्याख्या—ज्ञानम् ज्ञायते अनेनेति ज्ञानम् विषयप्रकाशनात्मा बुद्धेर्वृत्तिः। ज्ञायते विषयीक्रियते अनेनेत्यर्थः । बुद्धिस्तु वृत्तिमतीति बुद्धिज्ञानयोर्भेदः । कर्म क्रिया, न कर्तुरीप्सिततमं कर्मेति पारिभाषिकं कर्मकारकम् । कर्ता च

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

---

क्रियायाः स्वातन्त्र्येण निर्वर्तकउपाधिलक्षणो भोक्ता। एषां प्रत्येकं गुणभेदतः सत्त्वरजस्तमोभेदतः, त्रिधैव त्रिप्रकारमेव। अवधारणन्तु ज्ञानकर्म-कर्तॄणां गुणव्यतिरेकेण प्रकारान्तरं नास्तीति वोधयितुम्। गुणसंख्याने गुणाः सत्त्वादयः सम्यक् ख्यायन्ते कार्यभेदेन प्रतिपाद्यन्ते यस्मिन् तत्र, कापिले शास्त्रे प्रोच्यते कथ्यते। यद्यपि परमार्थब्रह्मैकत्वविषये विरुद्धयते कापिलं शास्त्रम् तथापि गुणगौणव्यापारनिरूपणे कापिलाः सन्ति अभियुक्ता इति तदपि गुणभेदविषये प्रमाणमेव। अतो गुणसंख्याने प्रोच्यते' इति कथनं वक्ष्यमाणार्थस्तुत्यर्थम्। तन्त्रान्तरेऽपि ज्ञानादीनां त्रिविधत्वं वक्ष्यमाणरीत्या प्रसिद्धमेव, न केवलम् अस्मिन्नेव तन्त्रे इति हि स्तुतिर्वक्ष्यमाणस्यार्थस्य। ज्ञानादिषु प्रत्येकम् अवान्तरभेदो वक्ष्यमाणोऽर्थस्तस्य स्तुत्यर्थमिति यावत्। सगरपुत्राणां प्रतप्ता भगवान्, कपिलस्तु अन्य एवेति ब्रह्मसूत्रभाष्ये भगवान् शङ्कराचार्य प्राहेति ध्येयम्। तान्यपि ज्ञानादीनि गुणभेदकृतानि तद्--भेदजातान्यपि यथावद् यथान्यायं, यथाशास्त्रं शृणु। वक्ष्यमाणेऽर्थे मनःसमाधिं कुरु इत्यर्थः। पूर्वम् अन्येषां भेदजातानि यथा श्रुतवान् असि तथा इमान्यपि शृणु इत्यपि शब्दार्थः ॥१९॥

अवतरणम्—तत्र ज्ञानस्य त्रैविध्यं निरूपयिष्यन् प्रथमं सात्त्विकं ज्ञानमाह—सर्वभूतेति।

व्याख्या--सर्वभूतेषु अव्यक्तादिस्थावरान्तेषु येन ज्ञानेन, ज्ञानं बुद्धेर्वृत्तिः बुद्धिस्तु वृत्तिमती. एकम् अद्वितीयम् अव्ययं न व्येति स्वात्मना धर्मैर्वा-यस्तम्. कूटस्थनित्यमित्यर्थः। भावं वस्तु, एकम् आत्मवस्तु इत्यर्थः। विभक्तेषु देहभेदेषु प्रति देहम् अविभक्तं विभागरहितम्, व्योमवन्निरन्तरमित्यर्थः। ईक्षते पश्यति तज्ज्ञानं दर्शनम् अद्वैतात्मदर्शनमित्यर्थः। सात्त्विकं सत्त्वगुणनिर्वृत्तं सम्यग्दर्शनं विद्धि जानीहि ॥२०॥

अवतरणम्—यानि द्वैतदर्शनानि तानि असम्यग्भूतानि राजसानि तामसानि चेति न साक्षात् संसारोच्छित्तये भवन्तीत्याह--पृथक्त्वेनेति।

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥
नियतं सङ्गरहितम् अरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥२३॥

---

व्याख्या—यत्तु ज्ञानं सर्वेषु भूतेषु सर्वदेहेषु पृथक्त्वेन प्रतिशरीरम् अन्यत्वेन शरीरभेदेन हेतुनेत्यर्थः। पृथग्विधान् पृथक् प्रकारान् भिन्नलक्षणान् इत्यर्थः। नानाभावान् बहून् आत्मनो वेत्ति जानाति ज्ञानस्य कर्तृत्वाऽसंभवाद् येन ज्ञानेन वेत्तीत्यर्थः। तद् द्वैतदर्शनलक्षणं ज्ञानं राजसं रजोगुणनिर्वृत्तम् अत्र–पृथक्त्वेनेति हेतुवचनम्। पृथग्विधान् इति हेतुमद्वचनमिति अपुनरुक्तिः ॥२१॥

अवतरणम्—(किञ्च)–यत्तु इति।

व्याख्या—यत्तु ज्ञानं दर्शनं, कृत्स्नवत् समस्तवत् सर्वविषयमिव एकस्मिन् कार्ये देहे बहिर्वा प्रतिमादौ सक्तम्—'एतावान् एव आत्मा ईश्वरो वा। नातः परम् अस्तीति। यथा नग्नक्षपणकादीनां शरीरानुवर्ती देहपरिमाणो जीव ईश्वरो वा पाषाणदार्वादिमात्रम्' इत्येवम् एकस्मिन् कार्ये सक्तम्। अहैतुकम् निर्युक्तिकम्। अतत्त्वार्थवद् अयथाभूतार्थविषयम्। अल्पञ्च अल्पविषयत्वाद् अल्पफलकत्वाद् वा, तद् दर्शनं तामसं तमोगुणनिर्वृत्तम् उदाहृतम् कथितम् 'तामसानां हि प्राणिनाम् अविवेकिनाम् ईदृशं ज्ञानं दृश्यते' इति भाष्ये ॥२२॥

अवतरणम्—अथ कर्मणां त्रैविध्यमुच्यते, तत्र सात्त्विकं तावदाह—नियतमिति।

व्याख्या—नियतम् आवश्यकं नित्यं नैमित्तिकञ्चेत्यर्थः। सङ्गरहितम् आसक्तिवर्जितम्, अरागद्वेषतः रागद्वेषाभ्याम् अप्रयुक्तेन, अफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुस्तद्विपरीतेन, फलतृष्णारहितेन कर्त्रा, कृतं निर्वर्तितं यत् कर्म तत् सात्त्विकं सत्त्वगुणनिर्वृत्तम् उच्यते कथ्यते ॥२३॥

अवतरणम्—राजसं कर्माह—यत्तु इति।

व्याख्या—यत् तु कर्म बहुलायासम् बहुल आयासो यस्मिंस्तत् महता परिश्रमेण सहितम्, कामेप्सुना फलप्रेप्सुना साहंकारेण वा–'अहं विशिष्टोऽस्मि' इत्येवं साभिमानेन वा क्रियते निर्वर्त्यते, तत् कर्म राजसं रजोगुणनिर्वृत्तम्

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद् राजसमुदाहृतम् ॥२४॥

अनुबन्धं क्षयं हिंसाम् अनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥२५॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥

---

उदाहृतं कथितम् ॥ अत्र भाष्ये—"साहङ्कारेणेति (विशेषणं) न तत्त्वज्ञानाऽपेक्षया (अर्थात् तत्त्वज्ञानिनं व्यावर्तयितुं नास्ति) किं तर्हि ? लौकिकश्रोत्रियनिरहङ्काराऽपेक्षया (अर्थात् लौकिकनिरभिमानश्रोत्रियव्यावर्तनाय)। यो हि परमार्थनिरहङ्कारः (अहं कर्ताऽस्मीत्यभिमानरहितः) आत्मविद् न तस्य कामेप्सुत्व कर्तृत्व-बहुलायासप्राप्तिरस्ति । (अतस्तद्व्यावर्तनं वृथा स्यात् । ) सात्त्विकस्याऽपि कर्मणोऽनात्मवित् साहङ्कारः कर्ता ('अहंकरोमि' इति अज्ञतासहितः) किमुत राजसतामसयोः ? (अतः 'अहं करोमि' इत्यहङ्कारग्रहणे सात्त्विकस्याऽपि कर्मणो व्यावर्तनं न स्यादिति (साहङ्कारविशेषणं व्यर्थमेव स्यात्) लोके अनात्मविदपि श्रोत्रियो निरहङ्कार उच्यते निरहङ्कारोऽयं ब्राह्मण इति । तस्मात् तदपेक्षया 'साहंकारेण वा' "इत्युक्तम् । पुनः शब्दः पादपूरणार्थः ॥" इत्युक्तम् ॥२४॥

अवतरणम्—अथ तामसं कर्माह—अनुबन्धमिति ।

व्याख्या—अनुबन्धं (पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते' इति भाष्यम् । तम्, क्षयम्, कर्मणि क्रियमाणे यः शक्तिक्षयोऽर्थक्षयो वा तम्, हिंसाम् प्राणिपीडनम्। पौरुषम् पुरुषकारं 'शक्नोमीदं कर्म समापयितुम्' इति आत्मसामर्थ्यम् । अनुबन्धादीनि पौरुषान्तानि एतानि अनवेक्ष्य अविचार्य मोहाद् अविवेकतो यत् कर्म आरभ्यते तत् कर्म तामसम् तमोगुणनिर्वृत्तम् उदाहृतम् कथितम् ॥२५॥

अवतरणम्—अथ कर्तृत्रैविध्यं दर्शयिष्यन् प्रथमं सात्त्विकं कर्तारमाह—मुक्तेति ।

व्याख्या—मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन सः । 'सङ्गो नाम फलाऽभिसंधिर्वा कर्तृत्वाऽभिमानो वा' इत्यानन्दगिरिः । अनहंवादी न अहं-

रागी कर्मफलप्रेप्सु र्लब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।२९॥

---

वदनशीलः 'धृत्युत्साहसमन्वितः धृतिर्धैर्यम् धारणम् उत्साह उद्यमः कार्यकरणे अभिरुचिस्ताभ्यां समन्वितः संयुक्तः सिद्ध्यसिद्ध्योर्निर्विकारः क्रियमाणस्य कर्मणः फलसिद्धौ फलाऽसिद्धौ च हर्षविषादरूपविकाररहितः । केवलं शास्त्र-प्रमाणेन प्रयुक्तो न फलरागादिना प्रयुक्त इति भावः । एवंभूतो यः कर्ता स सात्त्विक उच्यते ॥२६॥

अवतरणम्—अथ राजसं कर्तारमाह—रागीति ।

व्याख्या—रागी रागोऽस्यास्तीति रागी पुत्रादिप्रीतिमान् इति श्रीधर-स्वामी । कामाद्याकुलचित्त इति मधुसूदनसरस्वती । विषयलोलुप इति नीलकण्ठः । कर्मविषयको रागः 'कर्मफलप्रेप्सुरिति फलविषयकरागस्य पृथक्-करणादित्यानन्दगिरिः' कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः 'परद्रव्येषु संजात-तृष्णः, तीर्थादौ च स्वद्रव्याऽपरित्यागी' इति भाष्यम् । हिंसात्मकः परपीडा-करस्वभावः, हर्षशोकान्वितः तस्यैव च कर्मणः संपत्तिविपत्तिभ्यां हर्षशोकौ स्यातां ताभ्यां संयुक्तः । अशुचिः बाह्याभ्यन्तरशौचरहितः । एवंभूतो यः कर्ता स राजसः परिकीर्तितः कथितः ॥२७॥

अवतरणम्—अथ तामसं कर्तारमाह—अयुक्त इति ।

व्याख्या—अयुक्तः असमाहितः प्राकृतः अत्यन्ताऽसंस्कृतबुद्धिर्बालसमः, स्तब्धो दण्डवद् न नमति कस्मैचित्, शठो मायावी, शक्तिगूहनकारी, नैष्कृतिकः परवृत्तिच्छेदनपरः, अलसः अप्रवृत्तिशीलः कर्तव्येषु अपि विषादी सर्वदा अव-सन्नस्वभावः, दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणो यद् अद्य श्वो वा कर्तव्यं तद् मासेन अपि न करोति, यश्च एवंभूतः कर्ता स तामस उच्यते ॥२८॥

अवतरणम्—क्रियाकारकफलानां सर्वेषामेव आत्मसंबन्धो नास्तीति दर्शयितुं ज्ञानादीनां प्रत्येकं त्रैविध्यम् उक्त्वाऽथेदानीं वृत्तिमत्या बुद्धेस्तद्वृत्ति-विशेषरूपाया धृतेश्च त्रैविध्यं दर्शयति—बुद्धेरिति ।

**प्रवृत्तिं च निवृत्तिं च कार्याऽकार्ये भयाऽभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥**

---

व्याख्या—हे धनञ्जय, 'दिग्विजये मानुषं दैवञ्च प्रभूतं धनम् अजयत्, तेनासौ धनञ्जयोऽर्जुनः (संबोध्यते)' इति भाष्यम् । बुद्धे र्धृतेश्चैव गुणतः सत्त्वादिगुणैस्त्रिविधं त्रिप्रकारं भेदं विशेषं पृथक्त्वेन विवेकतः । अशेषेण साकल्येन, निरवशेषेण यथावत् प्रोच्यमानं मया कथ्यमानं शृणु श्रोतुं सावधानो भव । बुद्धिधृत्योस्त्रिविधं भेदं शृणु इति सूत्रोपन्यासः । सूत्रस्य विवरणं प्रति जानीते प्रोच्यमानम् अशेषेणेति ॥२९॥

अवतरणम्—तत्रादौ सात्त्विकीं बुद्धिमाह—प्रवृत्तिचेति ।

व्याख्या—प्रवृत्तिं च-प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः, ताम् च निवृत्तिं च निवृत्ति निवर्तनं मोक्षहेतुः संन्यासमार्गस्तां च अत्र भाष्यम्—"बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गौ इति अवगम्यते ।" इति । अत्रानन्दगिरिः–'प्रवृत्तिराचरणमात्रम् अनाचरणमात्रं च निवृत्तिरिति किं नेष्यते ? तत्राह–बन्धेति । यस्मिन् वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वाच्च संन्यास-मार्गस्यं तावेवात्र ग्राह्यावित्यर्थः ।' इति प्रवृत्तिं च इत्यस्मिन्नेव श्लोकात्मके एकस्मिन् वाक्ये प्रवृत्तिनिवृत्त्योर्बन्धमोक्षयोश्चोक्तत्वात्प्रवृत्तिनिवृत्तिभ्यां कर्ममार्गसंन्यासमार्गयोरेव ग्रहणं साहचर्यस्य वृत्तिनियामकत्वादितिभाष्य-स्याशयः । तदुक्तम् मञ्जूषायाम्—'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः । सामर्थ्यमौचितीदेशः कालो-व्यक्तिः स्वरादयः । शब्दार्थस्याऽनवच्छेदे विशेष स्मृतिहेतवः ॥' इति । कार्याऽकार्ये विहितप्रतिषिद्धे कर्तव्याऽकर्तव्ये देशकालाद्यपेक्षया दृष्टाऽदृष्टार्थानां कर्मणां करणाऽकरणे इत्येतत् । भयाऽभये विभेत्यस्मादितिभयम्, तद्विपरीतम् अभयम्, भयञ्च अभयं च भयाऽभये दृष्टाऽदृष्टविषययोर्भयाऽभययोः कारणे इत्यर्थः । बन्धं सहेतुकम्, मोक्षं च सहेतुकं या वेत्ति विजानाति सा बुद्धिः हे पार्थ, सात्त्विकी सत्त्वगुणनिर्वृत्ता अस्तीतिशेषः । अत्र भाष्ये—"तत्र ज्ञानं बुद्धेर्वृत्तिः, बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेषः एव बुद्धेः" इति । विशेषशब्देन, ज्ञानाद् व्यावृत्तिरिष्टा' इत्यानन्दगिरिः ॥३०॥

यया धर्ममधर्मं च कार्यं चाऽकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२॥
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३॥

---

अवतरणम्—अथ राजसीं बुद्धिमाह—ययेति।

व्याख्या—यया बुद्धया धर्मं शास्त्र-विहितं कर्म, अधर्मं शास्त्रप्रतिषिद्धं कर्मं च। कार्यं च अकार्यमेव च-पूर्वश्लोकोक्ते एवकार्याऽकार्ये देशकालाद्यपेक्षया दृष्टाऽदृष्टार्थानां कर्मणां करणाऽकरणे चैव—'नातो धर्माऽधर्माभ्यां कर्मपर्यायाभ्यां पौनरुक्त्यम्' इत्यानन्दगिरिः। अयथावत् न यथावत् सर्वतो निर्णयेन प्रजानाति सा बुद्धिः वृत्तिमती, वृत्तिमदहङ्कारूपा वृत्तिमदन्तःकरणरूपा च हे पार्थ राजसी रजोगुणनिर्वृत्ता अस्तीतिशेषः। अत्रेदं बोध्यम्—अन्तःकरणोपहितश्चित् कर्ता। अन्तःकरणं चिदाभासयुक्तन्तु करणम्। पूर्वश्लोके या बुद्धिर्वेत्तीति कर्तृत्वोपचारः काष्ठानि पचन्ति इति वदति ॥३१॥

अवतरणम्—अथ तामसीं बुद्धिमाह—अधर्ममिति।

व्याख्या—अधर्मं शास्त्रप्रतिपिद्धं कर्म, धर्मं शास्त्रविहितं कर्म इति इत्येवं या बुद्धिस्तमसा अविवेकेन आवृता वेष्टिता सती मन्यते विजानाति (तथा) सर्वार्थान् सर्वानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतानेव मन्यते विजानति सा बुद्धिः हे पार्थ तामसी तमोगुणनिर्वृत्ता अस्तीतिशेषः। 'चकारोऽवधारणार्थः चकारमवधारणे गृहीत्वा विपरीतानेवेत्युक्तम्' इत्यानन्दगिरिः। विपरीतांश्चेत्यस्य विपरीतानेवेति भाष्ये विवरणात्। 'धर्मशब्दो नपुंसकलिङ्गोऽपि इत्यभिप्रेत्य धर्ममित्युक्तम्' इत्यानन्दगिरिः। 'अधर्मं धर्मोयमस्तीति या मन्यते' इत्येवं इतिशब्देन वाक्यार्थस्य परामर्शाद् धर्मशब्दस्य प्रथमान्ततया 'धर्मम्' इति नपुंसकत्वमावश्यकम् इति तद्भावः। अतएव 'नारद इत्यबोधि सः' इति माघकवेः प्रयोगः। स्पष्टंचेदं शब्देन्दुशेखरे कारकप्रकरणे ॥३२॥

अवतरणम्—इदानीं धृतित्रैविध्यं व्युत्पिपादयिपुरादौ सात्त्विकीं धृतिमाह—धृत्या इति।

व्याख्या—योगेन योगो ब्रह्मणि समाधानम् ऐकाग्र्यम्, तेन। अव्यभिचारिण्या अविनाभूतया नित्यसमाध्यनुगतया यया धृत्या ध्रियतेऽनयेति धृति-

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५।

---

बुद्धेर्वृत्तिविशेषः प्रयत्नरूपः । तथा मनः प्राणेन्द्रियक्रियाः मनश्च प्राणश्चेन्द्रियाणि च तेषां क्रियाश्चेष्टाः संकल्पश्वासप्रश्वासशब्दादिग्रहणरूपाः धारयते उच्छास्त्रमार्गप्रवृत्तेर्वारयते । नित्यसमाध्यनुगतया यया धृत्या हि धार्यमाणाः मनःप्राणेन्द्रियक्रियाः उच्छास्त्रमार्गविषया न भवन्ति इत्यर्थः । हे पार्थ सा धृतिः सात्त्विकी सत्त्वगुणनिर्वृत्ता अस्तीतिशेषः । ननु धृतेर्नियमेन समाध्यनुगतत्वं कथं मनःप्राणेन्द्रियक्रियाणां धारणोपयोगि ? शृणु, उक्तक्रिया धारयमाणो नरो योगेन ब्रह्मणि समाधानेन ऐकाग्र्येण समाधिना अविनाभूतया (एव) धृत्या उक्तक्रिया उच्छास्त्रप्रवृत्तेर्वारयते । अन्यथा नित्यसमाध्यनुगतत्वाऽभावे तया नियमेन तद्धारणासिद्धेरिति ॥३३॥

अवतरणम्—अथ राजसीं धृतिमाह—यया तु इति ।

व्याख्या—हे अर्जुन, यया तु धृत्या धर्मकामार्थान् धर्मश्च, कामश्च, अर्थश्च तान्, प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी तस्य तस्य धर्मादेः फलाभिलाषी पुरुषो धारयते मनसि नित्यकर्तव्यरूपम् अवधारयते सा धृतिः । हे पार्थ राजसी रजोगुणनिर्वृत्ता मतेतिशेषः ॥३४॥

अवतरणम्—अथ तामसीं धृतिमाह—यया इति ।

व्याख्या—हे पार्थ यया धृत्या स्वप्नं निद्रां भयं, त्रासं, शोकं प्रियवियोगनिमित्तं संतापं, विषादम् अवसादम्, मदमेव च विषयसेवाम् एव च दुर्मेधाः कुत्सितबुद्धिः पुरुषो न विमुञ्चति स्वप्नादिमदान्तं सर्वमेव आत्मनो बहुमन्यमानो मनसि नित्यमेव कुर्वन् न त्यजति मत्त इव मदम्, किन्तु धारयत्येव सा धृतिस्तामसी तमोगुणनिर्वृत्ता मतेतिशेषः ॥३५॥

अवतरणम्—एवं क्रियाणां कारकाणां च गुणभेदेन त्रिधा त्रिधा भेद उक्तः । अथेदानीं फलस्य च सुखस्य त्रिधा भेद उच्यते । तत्रादौ मनः समाधानाय विधत्ते—सुखमिति ।

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद् रमते यत्र दुःखान्तं च निगच्छति ।।३६।।
यत् तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तम् आत्मबुद्धिप्रसादजम् ।।३७।।
विषयेन्द्रियसंयोगाद् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।।३८।।

---

व्याख्या—हे भरतर्षभ, इदानीं क्रियाकारकभेदश्रवणानन्तरं तु फलभेदश्रवणस्यावसरे प्राप्ते सति सुखं त्रिविधं त्रिप्रकारं मे मम वचनात् शृणु श्रोतुं समाधेहि । यत्र सुखाऽनुभवे अभ्यासात् परिचयाद् आवृत्तेः, रमते रतिं प्रतिपद्यते दुःखान्तं च दुःखस्य अन्तम् अवसानम्, उपशमं च निगच्छति निश्चयेन प्राप्नोति पुरुष इति शेषः । तत् त्रिविधं सुखं शृणु इति पूर्वेण अन्वयः ।।३६।।

अवतरणम्—तत्र सात्त्विकं सुखमाह—यदिति ।

व्याख्या—तत् साधुजनप्रसिद्धम्, यत् सुखम् अग्रे प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद् विषमिव, दुःखात्मकं भवति । परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखम् अमृतोपमं भवति । आत्मबुद्धिप्रसादजम् आत्मनो बुद्धिस्तस्याः प्रसादो नैर्मल्यं सलिलवत्, स्वच्छता, ततो जातम् । आत्मविषया वा आत्मावलम्बनावा बुद्धिरात्मबुद्धिस्तत्प्रसादस्तत्प्रकर्षस्तस्माद् वा जातम् । तत् सुखम् (तस्मात्कारणात् (अन्तःकरणनैर्मल्याद्वा सम्यग्ज्ञानप्रकर्षाद्वा जातत्वात्) सात्त्विकं सत्त्वगुणनिर्वृत्तं प्रोक्तं विद्वद्भिः ।।३७।।

अवतरणम्—राजसं सुखमाह हानाय—विषयेति ।

व्याख्या—तद् राजसजनप्रसिद्धम् । यत्सुखं विषयेन्द्रियसंयोगाज्जातम् अग्रे प्रथमक्षणे अमृतोपमम् अमृतसमं, परिणामे तदुपभोगविपरिणामान्ते दुःखात्मकं भवति । तत् सुखं राजसं रजोगुणनिर्वृत्तं स्मृतम् कथितं स्मृतिकारैः । एतदुक्तं भवति विषयेन्द्रियसंयोगाद् आविर्भूतं भोगकाले अमृतसममपि परिणामकाले विषमिव बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वाद् अधर्मतज्जनितनरकादिहेतुत्वाच्च दुःखात्मकं यत्सुखं भवति तद् राजसं कथ्यते इति । तत्र प्रज्ञा श्रुतार्थग्रहणसामर्थ्यम् । मेधा गृहीतार्थस्य अविस्मरणेन धारणशक्तिरित्यानन्दगिरिः ।।३८।।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥३९॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥४०॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥

---

अवतरणम्—अथ तामसं सुखं त्यागार्थमेवोदाहरति—यदग्रे इति ।

व्याख्या—यत् सुखम् अग्रे च अनुबन्धे च-अग्रे पूर्वं च, अनुबन्धे अवसाने पश्चात् च आत्मनो मोहनम् मोहकरम् । तदुत्पत्तिहेतुमाह-निद्रालस्य-प्रमादोत्थम् निद्रा च आलस्यं च प्रमादश्च इत्येतेभ्य उत्तिष्ठतीति निद्रालस्य-प्रमादोत्थम् । तत् सुखम् तामसमुदाहृतं कथितम् ॥३९॥

अवतरणम्—क्रियाकारकफलात्मनः संसारस्य प्रत्येकं सात्त्विकादि-भेदेन त्रैविध्यमुक्त्वाऽथेदानीं सर्वस्यैव संसारस्य गुणत्रयसंस्पृष्टत्वम् अस्तीति प्रकरणस्योपसंहारार्थः श्लोक आरभ्यते—न तदिति ।

व्याख्या—यत् सत्त्वं मनुष्यादिप्राणिजातम्, अन्यद्वा अप्राणिजातम्, प्रकृतिजैः सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, ततो जातैः वैषम्यावस्थां प्राप्तैः, यद्वा प्रकृतिर्माया भगवतः शक्तिविशेषः ततो जातैस्तत्कल्पितैः, एभि-र्यथोक्तैः सत्त्वरजस्तमोभिस्त्रिभिर्गुणैः पुरुषं प्रति गुणत्वाद् गुणनामधेयैः प्रकृते-र्धर्मविशेषैः, मुक्तं परित्यक्तं हीनं स्यात । तत् सत्त्वं पृथिव्यां वा मनुष्यादिषु वा दिवि देवेषु वा मध्ये नास्तीत्यर्थः । सर्वस्यैव अनात्मवस्तुनस्त्रिगुणात्मकत्व-ध्रौव्यादित्याशयः ॥ अनेनश्लोकेन प्राग् अनुक्तमपि अनात्मवस्तुसकलं संगृ-हीतम् गौणम् । एवञ्च क्रियाकारकफललक्षणः सर्व एव संसारः सत्त्वरजस्त-मोगुणात्मकः प्रकृतिरूपया अविद्यया परिकल्पितः समूलोऽनर्थः इति प्रकर-णार्थः श्लोकेनाऽनेनोपसंहृतः ॥४०॥

अवतरणम्—सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणा-त्मकोऽविद्यापरिकल्पितः समूलोऽनर्थं उक्तोऽष्टादशे पूर्वत्र, अनर्थत्वात्तस्य त्याज्यत्वं सूचितम् । अनर्थत्वं तस्य अविद्यापरिकल्पितत्वाद् दुःखरूपत्वाच्च । वृक्षरूपककल्पनया च 'ऊर्ध्वमूलमधःशाखम्' इत्यादिना पञ्चदशेऽपि समू-लोऽनर्थः संसार उक्तः । तं च असङ्गशस्त्रेण दृढेन छित्वा ततः पदं तत् परि-

मार्गितव्यम्' इति चोक्तं पञ्चदशे। तत्र च सर्वस्य त्रिगुणात्मकत्वात् संसारस्य कारणीभूतानां प्रकृत्यात्मकानां गुणानां प्रकृतेर्नित्यत्वान् निवृत्तिर्नोपपद्यते इत्याशङ्कायां स्वधर्मानुष्ठानात् तत्त्वज्ञानोत्पत्त्या गुणानाम् अज्ञानात्मकानां प्रकृतेः प्रवाहनित्यत्वेऽपि कूटस्थनित्यत्वाऽभावाद् निवृत्तिर्यथा भवति तथा स्वधर्मजातं वक्तव्यम् इत्युत्तरग्रन्थप्रवृत्तिः। सर्वश्च गीताशास्त्रार्थं उपसंहर्तव्यः। तत्तद्वर्णप्रयुक्तधर्मज्ञाताऽनुपदेशे चोपसंहारप्रकरणप्रकोपः स्यात्। एतावानेव च सर्वो वेदार्थः स्मृत्यर्थश्च अनुष्ठेयः पुरुषार्थमिच्छद्भिर् न अनुष्ठेयान्तरं वक्तव्यत्वेन अवशिष्टमस्तीत्येवमर्थश्च 'ब्राह्मणक्षत्रियविशाम्' इत्यादि आरभ्यते—ब्राह्मणेति।

व्याख्या—हे परंतप, ब्राह्मणक्षत्रियविशाम् ब्राह्मणाश्च क्षत्रियाश्च विशश्च तेषाम्। शूद्राणां च। अत्र भाष्यम्—'शूद्राणां च शूद्राणाम् असमासकरणम् एकजातित्वे सति वेदेऽनधिकारात्।' इति। तत्रानन्दगिरिः—'उपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं समानमिति त्रयाणां समासकरणम्। इतरेषाम् असमासे हेतुमाह—शूद्राणामिति। एकजातित्वम् उपनयनवर्जितत्वम्' इत्याह। कर्माणि प्रविभक्तानि इतरेतरविभागेन व्यवस्थापितानि। केन प्रविभक्तानि? इत्यत आह—स्वभावप्रभवैर्गुणैरिति। स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवाः तैर्गुणैः सत्त्वादिभिः शमादीनि परिचर्यान्तकर्माणि प्रविभक्तानि ब्राह्मणादीनाम् शूद्राणाञ्चेति संवन्धः। अथवा स्वभावस्य प्रभवाः कारणानि तैः, स्वभावश्च स्वोभावः स्वभावः। तत्तदसाधारणो धर्मः। 'ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः। वैश्यस्वभावस्य तम उपसर्जनं रजः प्रभवः। शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः। प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम्' इति भाष्यम्। अथवा जन्मान्तरकृतसंस्कारः प्राणिनाम् वर्तमानजन्मनि स्वकार्याऽभिमुखत्वेन अभिव्यक्तः स्वभाव उच्यते प्रकृतिरिति च। स्वभावः प्रभवो येषां गुणानां तैरित्यर्थः। गुणप्रादुर्भावस्य निष्कारणत्वाऽनुपपत्तेः स्वभावः कारणम् इति कारणविशेषस्योपादानम्। 'सत्त्वं प्रकृतिजैर्मुक्तम्' इति पूर्वश्लोके एव यद्यपि गुणानां प्रादुर्भावस्य कारणमुक्तम्—प्रकृतिजैरिति तथापि तत्र प्रकृतिर्माया सा उपादानकारणम् गुण प्रादुर्भावस्य। इह तु प्रकृतिः स्वभावो वासना सा निमित्तकारणं गुणप्रादुर्भावस्योक्तमित्यपुनरुक्तम्। एवं स्वभावप्रभवैः प्रकृतिप्रभवैर्वासनाप्रभवैः सत्वादिगुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि परिचर्या च

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥**

---

ब्राह्मणादीनां शूद्राणां च प्रविभक्तानीत्यर्थः। शास्त्रेणाऽपि ब्राह्मणादीनां सत्त्वादिगुणविशेषाऽपेक्षयैव शमादीनि कर्माणि शूद्राणां परिचर्या च गुणविशेषापेक्षयैव प्रविभक्तानि, न गुणविशेषाऽनपेक्षया इति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते ॥४१॥

अवतरणम्—कानि पुनस्तानि कर्माणि ? इत्युच्यन्ते त्रिभिः। तत्र ब्राह्मणस्य तावदाह—शम इति ।

व्याख्या—अत्र भाष्यम् 'शमो दमश्च यथाव्याख्यातार्थौ' इति। तत्रानन्दगिरिः—'अन्तःकरणोपशमो शमः। दमो बाह्यकरणोपरतिरित्युक्तं स्मारयति-यथेति ।' इत्याह । षोडशेऽध्याये—'अभयम्' इत्यादिदैवसंपत्प्रदर्शनसमये-'दमश्च बाह्यकरणानामुपशमः। अन्तःकरणस्योपशमं शान्ति वक्ष्यति' इति भाष्ये। अभयम् इत्यादि श्लोके उक्तम्। ततश्च 'अहिंसा सत्यम्' इत्यादि श्लोके भाष्ये—'शान्तिरन्तःकरणस्योपशमः।' इत्युक्तम्। (एवमेव) श्रीधरस्वामिमधुसूदनसरस्वतीनीलकण्ठधन तिभिरपि शमदमशब्दौ व्याख्यातौ। किन्तु रामानुजाचार्येण तौ अन्यथा उक्तौ—शमो बाह्येन्द्रियनियमनम्। दमोऽन्तःकरणनियमनम्।' इति। तत्र व्याकरणकोशपर्यालोचनायाम् भगवच्छङ्कराचार्यकृतं व्याख्यानमेव रमणीयं प्रतिभाति नेतरत्। तथा हि वैयाकरणसिद्धान्तकौमुद्याम् उक्तम्—'दमु उपशमे अन्तर्भावितण्यर्थोऽयम्। न तु शमिवदकर्मकः' इति। तथा च शमेरकर्मकत्वात् मुनिः शाम्यति इति प्रयोगे मुनिः शान्ति प्राप्नोतीत्यर्थः। वृषभोऽयं दान्तः स्वामिनेति वृषभस्य-दमं कृतवान् तत्स्वामी इत्यर्थः प्रतीयते। अमरकोशेऽपि–'शमथुस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः' इत्येवमुक्तम्। तथा च 'अन्तःकरणस्यैव जीवोपाधित्वेन शमुधातोरकर्मकत्वात् स्वरूपभूतस्य अन्तःकरणस्यैवोपशमः शमपदवाच्यो भवितुमर्हति। दमुधातोस्तु सकर्मकत्वात् स्वेतरभूतानाम् बाह्येन्द्रियाणामेव उपशमो दमपदवाच्यः स्यादिति स्पष्टम्। एवञ्च भगवच्छङ्कराचार्यस्य सर्वज्ञस्य प्रातिकूल्ये प्रवृत्तोऽयं रामानुजाचार्यः सर्वत्रोपेक्षणीय एव प्रेक्षावद्भिरिति स्फुटं व्याकरणकोशप्रामाण्यादिति ॥ तपः शारीरादि सप्तदशे व्याख्यातम्। शौचं बाह्यान्तरभेदेन व्याख्यातं षोडशे। तथा क्षान्तिराक्रुष्टस्य ताडितस्य वा अन्तर्विक्रियाऽनुत्पत्तिरिति षोडशे व्याख्यातम्।

शौर्यं तेजोधृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।।४३।।
कृषिगौरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्याऽपि स्वभावजम् ।।४४।।

---

आर्जवं-ऋजुत्वम् सर्वदेति षोडशे व्याख्यातम् । ज्ञानं शास्त्रत आचार्यतश्च आत्मादिपदार्थानाम् अवगमः इति षोडशे व्याख्यातम् । षष्ठे च ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम् । विज्ञानं तु शास्त्रतो ज्ञातानाम् तथैव स्वाऽनुभवकरणम्' इत्युक्तं भाष्ये । तत्र ज्ञानं परोक्षम् विज्ञानं तु अपरोक्षमिति विवेकः । आस्तिक्यम् आस्तिकभावः श्रद्दधानता आगमार्थेषु—एतन्नवकं ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजम् स्वभावाज्जातम् । यदुक्तं पूर्वम्-कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैरिति तदेवेहोक्तम्—स्वभावजम् इति ।। 'स्वभावजम् प्राचीनधर्मसंस्कारजम्' इति नीलकण्ठः । 'इयं च सर्वा दैवी संपत् प्राग्व्याख्याता ब्राह्मणस्य स्वाभाविकी । इतरेषां तु नैमित्तिकी इति न विरोधः ।' इति मधुसूदनसरस्वती ।। इदम् उपलक्षणम् मन्वादिस्मृत्युक्तानाम् अध्ययनाऽध्यापन यजनयाजनदानप्रतिग्रहाणाम् अपीति बोध्यम् ।।४२।।

अवतरणम्—अथ क्षत्रियस्य कर्मोदाहरति–शौर्यमिति ।

व्याख्या-–'शौर्यं शूरस्य भावः । तेजः प्रागल्भ्यम् । 'धृतिर्धारणम् । यया धृत्या उत्तम्भितस्य सर्वासु अवस्थासु अनवसादो भवति ।' इति भाष्यम् । 'महत्यामपि विपदि देहेन्द्रियोत्तम्भनी चित्तवृत्तिर्धृतिरितिव्याचष्टे सर्वावस्थास्वितीत्यानन्दगिरिः । दाक्ष्यम् दक्षस्य भावः, सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तिः युद्धे चापि अपलायनम् अपराङ्मुखीभावः शत्रुभ्यः । दानं देयद्रव्येषु मुक्तहस्तता, ईश्वरभावश्च ईश्वरस्य भावः प्रभुशक्तिप्रकटीकरणम् ईशितव्यान्प्रति । एतत् शौर्यादिसप्तकं क्षात्त्रं क्षत्रियजातेर्विहितं कर्म स्वभावजम् क्षत्रियस्वभावजम् इत्यर्थः । इदञ्चोपलक्षणं स्मृत्यन्तरोक्तानां क्षत्रियकर्मणाम् ।।४३।।

अवतरणम्—वैश्यस्य शूद्रस्य च कर्माण्याह—कृषीति ।

व्याख्या—कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च तेषां समाहारः कृषिगौरक्ष्यवाणिज्यम् । कृषिर्भूमेर्विलेखनम् । गा रक्षतीति गोरक्ष-

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥

---

स्तस्यभावो गौरक्ष्यं पाशुपाल्यम् । वाणिज्यं वणिजः कर्म क्रयविक्रयादि-लक्षणम् । वैश्यकर्म वैश्यजातेः कर्म स्वभावजम् । परिचर्यात्मकं शुश्रूपास्व-भावं कर्म शूद्रस्याऽपि स्वभावजम् । इदञ्चोपलक्षणम् स्मृत्यन्तरोक्ता-नाम् ॥४४॥

अवतरणम्—अत्र भाष्ये--'एतेषां जातिविहितानां कर्मणां सम्यग् अनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः । 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलम् अनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्माऽऽयुःश्रुतवृत्त-वित्तसुखमेधसो जन्म प्रतिपद्यन्ते' (आप० स्मृ० २।२।२।३) इत्यादिस्मृतिभ्यः । पुराणे च वर्णिनाम् आश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्त-रात्तु इदं वक्ष्यमाणं फलम्--स्वे स्वे कर्मणीत्यादि ।' इत्युक्तं, तत्र 'स्वभावत इत्यस्य विहितत्वादेव मोक्षापेक्षामन्तरेणाऽनुष्ठानादित्यर्थः । 'कारणान्तरात्तु इत्यस्य मोक्षापेक्षाप्रयुक्तानुष्ठानरूपाद् स्वभावप्रयुक्ताऽनुष्ठानरूपकारणाऽ-पेक्षया अन्यस्मात् कारणात्तु इत्यर्थो व्याख्यात आनन्दगिरीये---स्वे स्वे इति ।

व्याख्या--स्वे स्वे यथोक्तलक्षणभेदे कर्मणि शमदमादौ, शौर्यादौ कृष्यादौ परिचर्यायाञ्च यथाऽधिकारं विहिते अभिरतस्तत्परो नरः अधिकृतः पुरुषः संसिद्धिम्--स्वकर्माऽनुष्ठानाद् अशुद्धिक्षये सति कायेन्द्रियाणां ज्ञान-निष्ठायोग्यतालक्षणां, लभते प्राप्नोति । किं स्वकर्माऽनुष्ठानत एव साक्षात् संसिद्धिः ? न । कथं तर्हि ? स्वकर्मनिरतः, यथा येन प्रकारेण सिद्धिं विन्दति लभते तत् शृणु ॥४५॥

अवतरणम्—तमेव प्रकारमाह--यत इति ।

व्याख्या—यतो यस्माद् अन्तर्यामिण ईश्वराद् भूतानां प्राणिनाम् प्रवृत्तिरुत्पत्तिश्चेष्टा वा स्याद् । येन ईश्वरेण सर्वम् इदं जगत् ततं व्याप्तम्, तम् ईश्वरं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णम् अभ्यर्च्य पूजयित्वा आराध्य (तत्प्रसादाद्) मानवो मनुष्यः सिद्धिं केवलं ज्ञाननिष्ठायोग्यतालक्षणां विन्दति ।

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥४७॥**

---

तदनन्तरं तु ज्ञानप्राप्तेर्मोक्षं विन्देतेति भावः। कर्मानुष्ठानेन ईश्वराराधनेश्वरप्रसादद्वारा ज्ञाननिष्ठायोग्यतां प्राप्नोति न कर्मानुष्ठानादेव साक्षादिति च भावः ॥४६॥

**अवतरणम्**—यतः स्वधर्मानुष्ठानस्य बुद्धिशुद्धयादिद्वारा मोक्षावसायित्वम् । अतस्तदनुष्ठानमावश्यकम् इत्याह—श्रेयानिति ।

**व्याख्या**—स्वधर्मः स्वोधर्मः स्व धर्मः यथावर्णं यथोक्तलक्षभेदः कर्मात्मा 'विगुणोऽपि इत्यपि शब्दो द्रष्टव्यः' इति भाष्यम् । विगुणोऽपि असम्यग् अनुष्ठितोऽपि, परधर्मात् स्वेतरवर्णधर्मात् स्वनुष्ठितात् साद्गुण्येन संपादितादपि अत्रापि अपिशब्दो भाष्ये व्याख्यातस्तृतीयेऽध्याये । तत्रापि ईदृश एकः श्लोकः श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो-भयावहः । (३।३५) इति । श्रेयान् प्रशस्यतरः परधर्मस्य भयावहत्वादिति भावः । ननु युद्धादि लक्षणं स्वधर्मं कुर्वन् क्षत्त्रियः कृष्यादि लक्षणं स्वधर्मं कुर्वन् वैश्यो हिंसाधीनं पापं प्राप्नुयाताम् ? इत्येवमन्योऽपि ? ततः कथं स्वधर्मः श्रेयान् ? इत्यत आह—स्वभावनियतं स्वभावेन नियतं स्वभावजम् । यदुक्तं 'ब्रह्मकर्म स्वभावजम्' 'क्षात्त्रं कर्म स्वभावजम्' 'वैश्यकर्म स्वभावजम्' 'शूद्रस्याऽपि स्वभावजम्' इत्यत्र स्वभावजमिति, तदेवात्रोक्तं स्वभावनियतमिति एवंभूतं कर्म कुर्वन् अनुतिष्ठन् किल्विषं पापं न आप्नोति विहितस्य पापाऽजनकत्वा दिति भावः । यथा विषजातस्य कृमेर्विषं न दोषकरं तथेति च भावः ॥४७॥

**अवतरणम्**—अनन्तर पूर्वश्लोकेन 'स्वभावनियतं दोषवदपि कर्म कुर्वन् किल्विषं नाप्नोति । यथा विषजातः कृमिर्विषनिमित्तं मरणं नापद्यते तद्वद्' इत्युक्तम् । ननु तर्हि दोषरहितमेव भिक्षाटनादिकं सर्वैरनुष्ठीयताम् अतो न पापप्राप्त्याशङ्का इति चेद् ? मैवम्, परधर्मो भयावहः' (३।३५) परकीय धर्मस्य भयावहत्वोक्तेरिति, इति । ननु तर्हि पापप्राप्तिशङ्कां परिहर्तुम् अकर्म-निष्ठत्वमेव सर्वेषां स्यात् ? आनात्मज्ञो इत्यपि न वक्तव्यम् आत्मज्ञानाऽभावे तस्याऽसंभवाद्, न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' (३।५) इत्युक्तत्वात् । तस्मात्प्रकारान्तराऽसंभवात्, विहितं कर्म दोष वदपि कर्तव्यम् एवेत्याह—सहजमिति ।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥

व्याख्या—हे कौन्तेय, सहजं सहजातमिति सहजम् सह जन्मनैवोत्पन्नं स्वभावनियतं नित्यम् इत्यर्थः । एवं भूतं कर्म सदोपमपि त्रिगुणत्वात् केनचिद् दोषेण सहितमपि न त्यजेत् किन्तु कुर्यादिवेत्यर्थः । तत्र हेतुमाह –हि यस्मात् अत्र हि शब्दो सर्वकर्मणां दोषावृतत्वे हेतोः प्रसिद्धिं द्योतयति । प्रसिद्धो हेतुस्त्रिगुणात्मकत्वमिति । सर्वारम्भाः आरभ्यन्ते इति आरम्भाः सर्वे च ते आरम्भाः सर्वारम्भाः सर्वकर्माणि इत्येतत् प्रकरणात् । ये केचिद् आरम्भाः स्वधर्माः परधर्मा वा ते सर्वे त्रिगुणात्मकत्वाद् दोषेण केनचिद् धूमेन अग्निरिव आवृता वेष्टिताः सन्ति । सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषाद् नैव मुच्यते नरः । भयावहश्च परधर्मः । न च शक्यते अशेषतस्त्यक्तुं कर्म अज्ञेन 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' (१८।११) इत्युक्तत्वाद् यतस्तस्माद् न त्यजेदित्यर्थः ।

इदञ्चात्रवोध्यम्—'सदोपमपि न त्यजेत्' । सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' । 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' (१८।११) 'न हि कश्चित क्षणमपि जातु निष्ठत्यकर्मकृत्' (३।५) 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी (५।१३)' 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्' (१८।१२) इत्यादि वाक्यजातपर्यालोचनया अयमर्थः फलति । यद्यपि सर्वकर्मपरित्यागः फलवान् अस्ति तथापि देहाभिमानवता अज्ञेन सर्वकर्मपरित्यागः कर्तुं न शक्यते । चित्तशुद्धयभावेन ज्ञाननिष्ठायोग्यताया अभावात् । आत्मज्ञानिनैव अविद्यायां निवृत्तायां तदध्यारोपितात्मनिष्ठकर्तृत्वविज्ञानस्य निवृत्त्या अशेषकर्मपरित्यागः कर्तुं शक्यते न तु अज्ञेन अविद्याध्यारोपितकर्तृत्वविज्ञानस्य सत्त्वात् । शरीरेन्द्रियाणां सर्वदा कर्मकर्तृत्वाच्चेति । तस्मादज्ञः सर्वकर्मपरित्यागाऽसमर्थः सदोपमपि स्वभावनियतं कर्म चित्तशुद्धिद्वारा ज्ञाननिष्ठायोग्यताप्राप्त्यये तद्द्वारा ज्ञान प्राप्तये तद्द्वारा च नैष्कर्म्यसिद्धये कुर्यादिवेति । अत्र भाष्ये अशेषतः कर्मत्यागस्य विषये वादिनां मतानि प्रदर्श्य खण्डयित्वा च अद्वैतवेदान्तमतं सुयुक्तिभिः संस्थापितम् । तथाहि—'नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः' इति देहात्मवादिनां मते अशेषकर्मपरित्यागो न

संभवति। न च बौद्धानां 'क्रियैव कारकं-कारकस्यैवात्मनः क्रियात्वम्' इति वादिनां मते स संभवति उभयधाऽपि स्वभावभङ्गापत्तेः। यद्यपि 'व्यवस्थिते द्रव्ये' अविद्यमाना क्रिया उत्पद्यते विद्यमाना च विनश्यति। शुद्धं द्रव्यं शक्तिमद् अवतिष्ठते' इति वादिनां काणादानां मते यदा करोति तदा सक्रियं वस्तु इति अशेषतः कर्म त्यक्तुं शक्यम्। तथापि 'असतो भावः सतश्च अभावः' इति काणादानां मतं 'नासतो विद्यते भावः नाभावो विद्यते सतः' इति भगवद्वचनविरोधादत्यन्तमेव हेयं विद्यते। सर्वप्रमाणविरुद्धञ्चेदं मतम्। कथम्? यदि तावद् द्व्यणुकादिद्रव्यं प्रागुत्पत्तेरत्यन्तमेव असत्, उत्पन्नं च स्थितं कंचित् कालम्, पुनरत्यन्तमेव असत्त्वम् आपद्यते। तथा च सति असदेव सज्जायते, सदेव असत्त्वमापद्यते। अर्थात्—अभावो भावो भवति भावश्च अभाव इति। तत्र अभावो भावतया जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायते इति वक्तव्यम्। न चैवम् अभाव उत्पद्यते कारणं वा अपेक्षते इति शक्यं वक्तुम् असतां शशविषाणादीनाम् अदर्शनात्। भावात्मकाश्चेद् घटादय उत्पद्यमानाः किञ्चिदभिव्यक्तिमात्रकारणम् अपेक्ष्य उत्पद्यन्ते इति शक्यं वक्तुम् किञ्च न हि वन्ध्यापुत्रस्य सता संबन्धो वा कारणं वा केनचित् कल्पयितुं शक्यम्। कथम् असतः सत्कारणं भवेत् संबन्धो वा केनचित् स्यात्। सांख्यस्यापि यः परिणामपक्षः सोऽपि अपूर्वपरिणामोत्पत्तिविनाशाङ्गीकरणाद् वैशेषिकपक्षाद् न विशिष्यते। अभिव्यक्तितिरोभावाङ्गीकरणेऽपि अभिव्यक्तितिरोभावयोर्विद्यमानत्वाऽविद्यमानत्व निरूपणे पूर्ववदेव प्रमाणविरोधः। पारिशेष्यादेकमेव सद् वस्तु अविद्यया उत्पत्तिविनाशादिधर्मैर्नटवद् अनेकधा विकल्प्यते इतीदं भागवतं मतम् उक्तम्—'नासतो विद्यते भावः।' इत्यस्मिन् श्लोके। सत्प्रत्ययस्य अव्यभिचाराद् व्यभिचाराच्च इतरेषामिति। एवञ्च आत्माऽविक्रियत्वेऽपि शरीरेन्द्रियधर्मभूतं कर्म आत्मनि अविद्याध्यारोपितमेवेति अविद्वान् न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदिति, न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः इति चोक्तम्। विद्वांस्तु पुनर्विद्यया निवृत्तायां शक्नोत्येव अशेषतः कर्म परित्यक्तुम्। अविद्याध्यारोपितस्य शेषाऽनुपपत्तेः। न हि तैमिरिकदृष्ट्या अध्यारोपितस्य द्विचन्द्रादेस्तिमिरापगमे शेषोऽवतिष्ठते। एवं च सतीदे वचनमुपपन्न सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशीत्यादि। स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥' इति चेतिदिक्॥४८॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।।४९।।

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।।५०।।

---

अवतरणम्—या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा। तस्याः फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा वक्तव्येति श्लोक आरभ्यते—असक्तेति ।

व्याख्या—सर्वत्र पुत्रदारादिषु आसक्तिनिमित्तेषु असक्तबुद्धिः असक्ता-सङ्गरहिता बुद्धिर्यस्य सः। बुद्धिरन्तकरणम् जितात्मा जितो वशीकृत आत्माऽन्तःकरणं यस्य सः। विगतस्पृहः विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात्सः। य एवंभूत आत्मज्ञः सः परमां प्रकृष्टां कर्मजसिद्धिविलक्षणाम्, सद्यो मुक्त्यवस्थानरूपां, नैष्कर्म्यसिद्धिम् निर्गतानि कर्माणि यस्माद्, निष्क्रिय-ब्रह्मात्मसंवोधात् स निष्कर्मा, तस्य भावो नैष्कर्म्यम्, नैष्कर्म्यञ्च तत् सिद्धिश्च सा नैष्कर्म्यसिद्धिः, नैष्कर्म्यस्य वा निष्क्रियात्मस्वरूपाऽवस्थानलक्षणस्य सिद्धिर्निष्पत्तिस्तां नैष्कर्म्यसिद्धिम् संन्यासेन सम्यग्दर्शनेन सम्यग्दर्शनपूर्वकेण वा सर्वकर्मसंन्यासेन। अधिगच्छति प्राप्नोति। तथा चोक्तम्—'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ।।' (५।१३)' इति ।।४९।।

अवतरणम्—पूर्वोक्तेन स्वकर्मानुष्ठानेन ईश्वराऽभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां (ज्ञाननिष्ठायोग्यतालक्षणां) सिद्धिं प्राप्तस्य उत्पन्नात्मविवेक-विज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिर्येन क्रमेण भवति स क्रमो वक्तव्य इत्याह—सिद्धिमिति ।

व्याख्या—सिद्धिम्—स्वकर्मणा ईश्वरम् अभ्यर्च्य ईश्वरस्य प्रसादेन जनितां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिम् प्राप्तः पुरुषो यथा येन प्रकारेण ज्ञाननिष्ठाप्राप्तिक्रमरूपेण ब्रह्म परमात्मानम् आप्नोति, तथा तं-प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनात् समासेनैव संक्षेपेणैव न तु विस्तरेण। निबोध, निश्चयेन अवधारय। विस्तरस्य उक्तौ दुर्बोधत्वाऽऽ-

शङ्कावर्तते इत्याशय आनन्दगिरीये। हे कौन्तेय या ब्रह्मप्राप्तिर्ज्ञानस्य ब्रह्मज्ञानस्य परा प्रकृष्टा निष्ठा पर्यवसानं परिसमाप्तिरित्येतत्। या ब्रह्मप्राप्तिर्ब्रह्मज्ञानस्य प्रकृष्टा परिसमाप्तिस्तां ब्रह्मप्राप्तिं येन क्रमेण साधकः पूर्वोक्तसिद्धिं प्राप्तः प्राप्नोति तं क्रमं निबोधेत्यर्थः। ननु या ब्रह्मप्राप्तिर्ब्रह्मज्ञानस्य परा परिसमाप्तिः सा ब्रह्मप्राप्तिः कीदृशी ? इति चेदुच्यते—आत्मज्ञानम्, ब्रह्मज्ञानम्, ब्रह्मप्राप्तिश्चेति पर्यायाः। आत्मा च भगवता 'न जायते म्रियते वा कदाचिद्' (२।२०) इत्यादिना वचनेन 'तत् त्वमसि' (छा. ) 'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' (छा. ) 'सत्यं ज्ञानमानन्तं ब्रह्म' (तै. ) इत्याद्युपनिषद्वाक्यैः 'कूटस्थत्वम् असङ्गत्वम्' इत्यादि ब्रह्मसूत्रादिदर्शितन्यायतश्च यादृश उक्तस्तादृशः। ननु ज्ञानं विषयाकारं भवति। आत्मा तु न विषयो, नापि आकारवान् क्वचिदुक्तः। तथा च ज्ञानस्य विषयाकारत्वाद् आत्मनस्तु अविषयत्वादनाकारत्वाच्च आत्माकारज्ञानाऽयोगाद् आत्मप्रसिद्धावपि न आत्मज्ञानप्रसिद्धिः। न च 'आदित्यवर्णो भारूपः' 'स्वयञ्ज्योतिः' इत्याकारवत्त्वम् आत्मनः श्रूयते इति वाच्यम् तमोरूपत्वप्रतिषेधार्थत्वात्तेषां वाक्यानाम्। द्रव्यगुणाद्याकारप्रतिषेध आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि 'आदित्यवर्णम्' इत्यादीनि वाक्यानि। 'अरूपम्' (कठो. १।३।१५) इति च विशेषतो रूपप्रतिषेधात्। अविषयत्वाच्च 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् (श्वेता. ४।२०) 'अशब्दमस्पर्शम्' इत्याद्युपनिषद्वाक्यैः। तस्माद् 'आत्माकारं ज्ञानम्' इत्यनुपपन्नम्। कथं तर्हि आत्मनो ज्ञानम् ? सर्वं हि ज्ञानं यद्विषयं तत् तदाकारं भवति। 'निराकारश्च आत्मा' इत्युक्तम्। ज्ञानात्मनोरुभयोर्निराकारत्वे कथं तद्भावनानिष्ठा ? इति चेद, नैष दोषः। अत्यन्तनिर्मलत्व-स्वच्छत्व-सूक्ष्मत्वैरात्मनो बुद्धेश्च साम्याद् आत्मचैतन्याऽऽभासव्याप्ता ज्ञानपरिणामवती बुद्धिः। साभासबुद्धिव्याप्तं मनः। साभासमनोव्याप्तानि इन्द्रियाणि। साभासेन्द्रियव्याप्तः स्थूलो देहः। अतो लौकिकैर्देहमात्रे एव आत्मदृष्टिः क्रियते। परीक्षकेषु च देहचैतन्यवादिनो लोकायतिकाः, तथा अन्ये इन्द्रियचैतन्य वादिनः। अन्ये मनश्चैतन्यवादिनः। अन्ये बुद्धिचैतन्यवादिनः। ततोऽप्यन्तरव्यक्तम् अव्याकृताख्यम् अविद्यावस्थम् आत्मत्वेन प्रतिपन्नाः केचिद्। सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासता आत्मभ्रान्तिकारणम् शुक्तौ रजतरूपाभासता यथा रजतभ्रान्तिकारणं तद्वदिति। एवञ्च आत्मन इव आत्मज्ञानस्यापि लौकिकेषु परीक्षकेषु च प्रत्यक्षेणैव प्रसिद्धिरिति आत्मविषयं ज्ञानं शास्त्रेण न विधेयम्। किन्तु शास्त्रेण 'आत्मावारे द्रष्ट-

व्यः' (बृह. ) इत्यादि वाक्यैरात्मनि नामरूपाद्यनात्मधर्मारोपणनिवृत्तिरेव-कार्या नात्मविज्ञानम्। अविद्याध्यारोपितसर्वपदार्थाकारैर्विशिष्टतयैव आत्मनो गृह्यमाणत्वाद् अविद्वद्भिः। अत एव हि विज्ञानवादिनो बौद्धा विज्ञानव्यतिरेकेण वस्तु एव नास्ति' इति प्रतिपन्नाः प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाऽभ्युपगमेन। यद्यपि ब्रह्मात्मैक्यविज्ञानादौ विज्ञानवादिनोऽपि बौद्धा न प्रमाणम् तथापि 'विज्ञानव्यतिरेकेण वस्तु एव नास्ति' इत्यत्र तेऽस्माकं सहयोगिन एव सन्तीति तेषां नामाऽत्र गृहीतम्। 'तस्माद् अविद्याऽध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्तव्यं, न तु ब्रह्मज्ञाने यत्नः (कर्तव्यो)ऽत्यन्तप्रसिद्धत्वाद्' इति भाष्यम्। 'यत्नोऽत्र भावना' इत्यानन्दगिरिः। ब्रह्मणस्तज्ज्ञानस्य च अत्यन्तप्रसिद्धत्वेपि ब्रह्मणि अन्यथा प्रथा लौकिकानाम् अविद्याकल्पितनामरूपविशेषाकाराऽपहृतबुद्धित्वाद् एव भवति। तथा च भाष्यम्—"अविद्याकल्पितनामरूपविशेषाकाराऽपहृतबुद्धित्वाद् अत्यन्तप्रसिद्धं सुविज्ञेयम् आसन्नतरम् आत्मभूतमपि अप्रसिद्धं दुर्विज्ञेयम् अतिदूरम् अन्यदिव च प्रतिभाति अविवेकिनाम्। बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां नातः परं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नम् अस्ति। तथा चोक्तम्—'प्रत्यक्षावगमं धर्म्यम्' (गी. ९) इत्यादि। केचित्तु पण्डितंमन्या निराकारत्वाद् आत्मवस्तु न उपैति बुद्धिः। अतो दुःसाध्या सम्यग्ज्ञाननिष्ठा इत्याहुः। सत्यमेवम्, गुरुसम्प्रदायरहितानाम् अश्रुतवेदान्तानाम् अत्यन्तवहिर्विषयासक्तबुद्धीनां सम्यक् प्रमाणेषु अकृतश्रमाणाम्। तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसंपाद्या। आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्य अनुपलब्धेः। यथा च एतदेवम् (अद्वैतमेव सद्, द्वैतं तु मिथ्या) नान्यथा इति (तथा तत्र-तत्र अध्यायेषु) अवोचाम। उक्तं च भगवता (वासुदेवेन) 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' (२।६९) इति। तस्माद् बाह्याकारभेदबुद्धिनिवृत्तिरेव आत्मस्वरूपालम्बने कारणम् न हि आत्मा नाम कस्यचित् कदाचिद् अप्रसिद्धः प्राप्यो हेय उपादेयो वा। अप्रसिद्धे हि तस्मिन् आत्मनि अस्वार्थाः सर्वाः प्रवृत्तयः प्रसज्येरन् न हि देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम्। न च सुखार्थं सुखम्, दुःखार्थं वा दुःखम्, आत्मावगत्यवसानार्थत्वात् च सर्वव्यवहारस्य। तस्माद् यथा स्वदेहस्य परिच्छेदाय (ज्ञानाय) न प्रमाणान्तरापेक्षा तथा ततोऽपि आत्मनोऽन्तरतमत्वात् तदवगतिं प्रति न प्रमाणान्तराऽपेक्षा इति आत्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धेति सिद्धम्। येषामपि निराकारं ज्ञानम् अप्रत्यक्षं तेषाम् अपि ज्ञानवशा एव ज्ञेयावगतिरिति ज्ञानम्

बुद्धया विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।।५१।।
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।।५२।।

---

अत्यन्तं प्रसिद्धं सुखादिवदेवेति अभ्युपगन्तव्यम् । जिज्ञासाऽनुपपत्तेश्च । अप्रसिद्धं चेद् ज्ञानं ज्ञेयवद् जिज्ञास्येत । यथा ज्ञेयं घटादि लक्षणं ज्ञानेन ज्ञाता व्याप्तुम् इच्छति तथा ज्ञानम् अपि ज्ञानान्तरेण ज्ञाता व्याप्तुम् इच्छेत् । न च एतद् अस्ति । अतः अत्यन्त प्रसिद्धं ज्ञानं ज्ञाता अपि अत एव प्रसिद्ध इति । तस्माद् ज्ञाने यत्नो न कर्तव्यः किन्तु अनात्मबुद्धिनिवृत्तौ एव । तस्माद् ज्ञाननिष्ठा सुसंपाद्या ।।" इत्यलम् ।।५०।।

अवतरणम्—सेयं ज्ञानस्य परा निष्ठा कथं संपाद्या इत्युच्यते चतुर्भिः बुद्धया इत्यादिभिः ।

व्याख्या—बुद्धया अध्यवसायात्मिकया, विशुद्धया मायारहितया, युक्तः सम्पन्नः, धृत्या धैर्येण आत्मानं कार्यकरणसंघातं, नियम्य च नियमनं कृत्वा वशीकृत्य, शब्दादीन् शब्द आदिर्येषां तान् शब्दस्पर्शरूपरसगन्धान्, विषयान्, विषयाख्यान् त्यक्त्वा परित्यज्य सामर्थ्याच्छरीरस्थितिमात्रहेतून् केवलान् अपरित्यज्य ततोऽधिकान् सुखार्थान् शब्दादीन् परित्यज्येत्यर्थः । रागद्वेषौ शरीरस्थितिहेतुत्वेन प्राप्तेष्वपि शब्दादिषु रागद्वेषौ व्युदस्य परित्यज्य ।।५१।।

विविक्तसेवी विविक्तान् देशान् अरण्यनदीपुलिनगिरिगुहादीन् जन-संमर्दरहितान् पवित्रांश्च सेवितुं शीलमस्य सः, लघ्वाशी लघु परिमितं हितं मेध्यं च अशितुं शीलमस्य सः, लघ्वशनशीलः, यतवाक्कायमानसः वाक् च कायश्च मानसं च यतानि संयतानि यस्य सः । 'विविक्तदेशसेवित्वलघ्वशन-योर्निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वाद् ग्रहणम् इति भाष्यम् । निद्रादि इत्यादिशब्दाद् आलस्यप्रमादादयो बुद्धिविक्षेपका विवक्षिता इत्या-नन्दगिरिः । नित्यं सर्वदा, ध्यानयोगपरः—ध्यानम् आत्मस्वरूपचिन्तनम्, योगो मनस आत्मविषये एव एकाग्रीकरणम्, तौ परत्वेन कर्तव्यौ यस्य सः । 'नित्यमिति नित्यग्रहणं मन्त्र जपाद्यन्यकर्तव्याऽभाव प्रदर्शनार्थम्' इति भाष्यम् वैराग्यं विरागभावम्, दृष्टाऽदृष्टेषु विषयेषु वैतृष्ण्यम् समुपाश्रितः सम्य-गुपाश्रितो नित्यमेव वैराग्ययुक्त इत्यर्थः ।।५२।।

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शन्तो ब्रह्मभूयाय कल्पते ॥५३॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

---

किञ्च--अहङ्कारम् अहङ्करणम् अहङ्कारो देहेन्द्रियादिषु तम्, बलं सामर्थ्यं कामरागादियुक्तम् नेतरच्छरीरादिसामर्थ्यम् स्वाभाविकत्वेन तत्त्यागस्य अशक्यत्वात्'। दर्पम् दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः 'दृप्तो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणाद्। तम्। कामम् इच्छाम्, क्रोधम् द्वेषम्, परिग्रहम् इन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तस्तम्। (च) विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनभावेऽपि निर्गतममभावो निर्ममः, अत एव शान्त उपरतः। एवं भूतो यो ज्ञाननिष्ठः स ब्रह्मभूयाय ब्रह्मभवनाय ब्रह्मसाक्षात्काराय कल्पते समर्थो भवति। एष ब्रह्मप्राप्तियोग्यतायाः प्राप्तेः क्रमः ॥५३॥

अवतरणम्—'बुद्धया विशुद्धया युक्तः' इत्यादिना ब्रह्मप्राप्तेर्योग्यतायाः प्राप्तेः क्रममुक्त्वा ब्रह्मप्राप्तियोग्यस्य स्वभावं परज्ञाननिष्ठालाभञ्चाह— ब्रह्मभूत इति ।

व्याख्या ब्रह्मभूतः 'बुद्धया विशुद्धया युक्तः' इत्याद्युक्तक्रमेण ब्रह्मप्राप्तियोग्यताम् (ब्रह्मज्ञानयोग्यताम्) आपन्नः, प्रसन्नात्मा लब्धाध्यात्मप्रसादः, अध्यात्मं प्रत्यगात्मा, तस्मिन् प्रसादः सर्वाऽनर्थनिवृत्त्या परमानन्दाविर्भावः स लब्धो येन जीवन्मुक्तेन सः। न शोचति आत्मनः किञ्चिदर्थवैकल्यं वैगुण्यञ्च उद्दिश्य न संतप्यते। न काङ्क्षति न च किञ्चिदप्राप्तं वाञ्छति। ब्रह्मविदः शोकाकाङ्क्षयोरनुपपत्त्या ब्रह्मभूतस्याऽयं स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति। न हि अप्राप्तविषयाकाङ्क्षा, न वा प्राप्तनाशविषयः शोको ब्रह्मविद उपपद्यते। न काङ्क्षतीत्यत्र न हृष्यति' इति वा पाठः। रमणीयं प्राप्य न प्रमोदते। तत्र सर्वत्र विषयेषु अस्य मिथ्यात्वनिश्चयादिति भावः। (किञ्च) सर्वेषु भूतेषु समस्तुल्यः, आत्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा आत्मसुखदुःखसमानमेव पश्यतीत्यर्थः। अत्र भाष्ये—'समः सर्वेषु भूतेषु आत्मौपम्येन सर्वेषु भूतेषु सुखं-दुःखं वा सममेव पश्यति इत्यर्थो, न आत्म-

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।।५५।।**

---

दर्शनमिह, तस्य वक्ष्यमाणत्वात् 'भक्त्या मामभिजानाति'इति' इत्युक्तम् । एवं भूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं पराम् उत्तमां ज्ञानलक्षणां चतुर्थीं लभते 'चतुर्विधा भजन्तेमाम्' (७।१६) इत्युक्तम् । उक्तविशेषणवतो जीवन्मुक्तस्य ज्ञाननिष्ठा प्रागुक्तक्रमेण प्राप्ता सुप्रतिष्ठिता भवतीति भाव आनन्दगिरीये । श्रवणमनन निदिध्यासनवतः शमादियुक्तस्य अभ्यस्तैः श्रवणादिभि र्ब्रह्मात्मनि अपरोक्षं मोक्षफलं ज्ञानं सिद्धयतीत्यर्थः । द्वैत आर्तादिभक्तित्रयापेक्षया ज्ञानलक्षणा भक्तिश्चर्थीत्युक्ता भाष्ये इति चानन्दगिरीये ।।५४।।

अवतरणम्—ननु लब्धया परभक्त्या ज्ञानलक्षणया चतुर्थ्या किम् अपूर्वम् अवाप्यते साधकेनेति चेत् तमाह —भक्त्येति ।

व्याख्या—ततो ज्ञानलक्षणया परया भक्त्या अहं भगवान् यावान् उपाधिकृतविस्तारभेदः, यश्च विध्वस्तसर्वोपाधिभेदः, उत्तमपुरुष आकाशकल्पोऽस्मि तं माम् अद्वैतं चैतन्यमात्रैकरसम्, अजम् अजरम् अमरम् अभयम् अनिधनम् तत्त्वतो याथात्म्येन अभिजानाति अर्थात् क्षेत्रज्ञपरमात्मैकत्वेन विषयीकरोति । माम् । एवं । तत्त्वतो ज्ञात्वा तत स्तस्माद्, ज्ञानात् तदनन्तरं तदव्यवधानेन मां विशते मामेव प्रविशति । अत्र 'ज्ञात्वा विशते तदनन्तरम्' इति ज्ञानतदनन्तरप्रवेशक्रिये न भिन्ने विवक्षिते । किन्तु ज्ञानोत्तरं तदनन्तरं फलान्तराऽभावज्ञानमात्रमेव विवक्षितम् (जनयितुमिष्टम्) ब्रह्मप्राप्तिस्तु ब्रह्मज्ञानमेव नातिरिक्तं ब्रह्मज्ञानात् ।। 'क्षेत्रज्ञं चापि' मां विद्धि सर्वक्षेत्रेषु' (१३।२) इति ब्रह्मात्मनोरेकत्वस्य उक्तत्वात् । तस्माद् भेदोक्तिरौपचारिकी विशतीवेत्यर्थात् । स्पष्टं चेदं भाष्ये । इदञ्चात्र भाष्ये—"ननु विरुद्धम् इदमुक्तम् ज्ञानस्य या परा निष्ठा तया माम् अभिजानातीति । कथं विरुद्धमिति चेदुच्यते-यदैव यस्मिन् विषये ज्ञानमुत्पद्यते ज्ञातुस्तदैव तं विषयम् अभिजानाति ज्ञाता इति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणाम् अपेक्षते इति । ततश्च ज्ञानेन न अभिजानाति ज्ञानावृत्त्या तु ज्ञाननिष्ठयाऽभिजानातीति (विरुद्धम्) नैषदोषः । ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यद् आत्माऽनुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाऽभिलापात् ।

शास्त्राचार्योपदेशेन, ज्ञानोत्पत्तिपरिपाकहेतुं सहकारिकारणं बुद्धिविशुद्धयादि अमानित्वादि च अपेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्व ज्ञानस्य कर्त्रादिकारक-भेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यद् अवस्थानम् सा परा ज्ञाननिष्ठा इत्युच्यते। (प्रामाणिकैः) सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता। तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति। यदनन्तरमेव ईश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते। अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचनं न विरुद्धयते। अत्र च सर्वनिवृत्तिविधायिशास्त्रवेदान्तेतिहासपुराणस्मृति-लक्षणं न्यायप्रसिद्धम् अर्थवद् भवति। (अत्र चेति 'औपदेशिकैक्यज्ञानस्य सर्वकर्मसंन्याससहितस्य स्वरूपावस्थानात्मकस्य परमपुरुषार्थोपायकत्वम् इत्यस्मिन्नर्थे मानमाह—अत्र चेति।' इत्यानन्दगिरीयानुसारम् सर्वकर्म-संन्याससहितस्य ब्रह्मात्मैक्यज्ञानस्य मोक्षहेतुत्वम् इत्यस्मिन्नर्थे चेत्यर्थः। (तदेव शास्त्रमुदाहरति)—'विदित्वा व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृह० उ० ३।५।१) 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' (ना० उ० २।७९) 'न्यास एवात्यरेचयत्' (ना० उ० २।७८) इति। संन्यासः कर्मणां न्यासः। 'वेदान् इमं च लोकम् अमुं च परित्यज्य' (आप. ध. १।२३।१३) 'त्यज धर्मम-धर्मंच' (महा. शा. ३२९।४०) इत्यादि। इह च दर्शितानि वाक्यानि ('सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' (५।१३) इत्यादीनि) न च तेषां वाक्यानाम् आनर्थक्यं युक्तम्। न चार्थवादत्वं स्वप्रकरणस्थत्वात्) प्रत्यगा-त्माऽविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य ('इतश्च मुमुक्षोरपेक्षित मोक्षौपयिक ज्ञाननिष्ठस्य संन्यासेऽधिकारो न कर्मनिष्ठायाम् इत्याह--प्रत्यगिति' इत्या-नन्दगिरीये)' न हि पूर्व समुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक् समुद्रं जिगमि-षुणा समानमार्गत्वं संभवति (ज्ञाननिष्ठस्य कर्मनिष्ठा विरुद्धा इत्यत्रायं दृष्टान्तः)। प्रत्यगात्मविषयप्रत्ययसंतानकरणाऽभिनिवेशश्च ज्ञाननिष्ठा। सा च प्रत्यक्समुद्रगमनवत् (ज्ञानप्रतिकूलेन) कर्मणा सहभावित्वेन विरुध्यते। पर्वतसर्षपयोरिव अन्तरवान् विरोधः प्रमाणविदां निश्चितः। तस्मात्सर्व-कर्मसंन्यासेनैव ज्ञाननिष्ठा कार्या इति सिद्धम्।" इति द्रष्टव्यम्। अत्र चान-न्दगिरीये--"(ब्रह्मणः) आकाशकल्पत्वम्—अनवच्छिन्नत्वम् असङ्गत्वं च। चैतन्यस्य विषयसापेक्षत्वं प्रतिक्षिपति (भाष्यकृत्) अद्वैतमिति। ये तु द्रव्य-बोधात्मत्वम् आत्मनो मन्यन्ते तान्प्रति उक्तं (भाष्यकृता) चैतन्यमात्रेति। आत्मनि चैतन्यमात्रेऽपि धर्मान्तरमुपेत्य धर्मधर्मित्वं (ये मन्यन्ते तान्) प्रत्याह

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

---

(भाष्यकृद्) एकरसमिति । सर्वविक्रियाराहित्योक्त्या कौटस्थ्यम् आत्मनो व्यवस्थापति (भाष्यकृत्) अजमिति । उक्तविक्रियाऽभावे तद्धेत्वज्ञानाऽसंबन्धं हेतुमाह (भाष्यकृत्) अभयमिति । (अनिधनम् इति च) । ज्ञाननिष्ठया परया भक्त्या माम् अभिजानातीत्युक्तमाक्षिपति (भाष्यकृद्) ननु इति । तत्र ज्ञानस्य उत्पत्तेरेव विषयाऽभिव्यक्तिरित्याह—(भाष्यकृद्) यदेति । ज्ञानस्य उत्पत्तेरेव विषयाभिव्यक्तत्वेऽपि कथं प्रकृते विरोधधीरित्याशङ्क्याह—ततश्चेति । विरुद्धमिति शेषः । शङ्कितं विरोधं निरस्यति नैष दोष इति । उक्तमेव हेतुं प्रपञ्चयति शास्त्रेति । यो हि शास्त्रानुसारी आचार्योपदेशस्तेन ज्ञानोत्पत्तिः 'आचार्यवान् पुरुषोवेद' इति श्रुतेः । तस्याश्च परिपाकः संशयादिप्रतिबन्धध्वंसस्तत्र हेतुभूतम् उपदेशस्यैव सहकारिकारणं यद् बुद्धिशुद्ध्यादि तदपेक्ष्य तस्मादेवोपदेशाज्जनितं यद् ऐक्य ज्ञानम् तस्य, कारकभेदबुद्धिनिबन्धनानि यानि सर्वाणि कर्माणि तेषां संन्यासेन सहितस्य फलरूपेण स्वात्मनि एव सर्वप्रकल्पनारहिते यद् अवस्थानं सा ज्ञानस्य परा निष्ठा इति व्यवह्रियते प्रामाणिकैरित्यर्थः । ज्ञाननिष्ठारूपाया भगवद्भक्ते स्तत्त्वज्ञानानतिरेकात्, तत्फलस्य च अज्ञाननिवृत्ते स्तन्मात्रत्वाद् भेदोक्तेश्च औपचारिकत्वात् प्रकृतं वाक्यम् अविरुद्धम् इत्युपसंहरति–अत इति ।" इत्युक्तम् । एवञ्च—'ब्रह्मभूतः प्रसन्नात्मेत्यत्र पूर्वश्लोके ब्रह्मभूतोऽपि ब्रह्मज्ञानवानेव विवक्षितः किन्तु तस्य ज्ञानम् उत्पत्त्यवस्थम् । मद्भक्ति लभते पराम् इत्यत्र तु यथोक्ता ज्ञाननिष्ठा उत्पत्तिपरिपाकावस्थं ज्ञानं विवक्षितम् । भक्त्या माम् । 'भक्त्या माम् तत्त्वतोऽभिजानाति' इत्यस्य च 'अहं सर्वविकारशून्यः परं ब्रह्माऽस्मि' इत्यखण्डया अन्तःकरणवृत्त्या ज्ञाननिष्ठालक्षणया भगवद्भक्त्या यथोक्तया माम् अद्वैतं परं ब्रह्म तत्त्वतः सर्वविकारशून्यत्वेन चिदेकरसत्वेन प्रत्यगात्माऽभिन्नत्वेन एकत्वेन याथात्म्येन अभिव्यक्तीकरोतीत्यर्थः इति न किञ्चिदनुपपन्नम् ॥५५॥

अवतरणम्—स्वकर्मणा भगवदभ्यर्चनस्य भक्तियोगाख्यस्य फलं ज्ञाननिष्ठायोग्यता । यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना भवति । स भगवदभ्यर्चनभक्तियोगः सम्प्रति शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय स्तूयते—सर्वेति ।

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५७॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत् त्वमहंकाराद् न श्रोष्यसि विनङ्क्ष्यसि ॥५८॥

---

व्याख्या—मद्व्यपाश्रयः अहं वासुदेव ईश्वरो व्यपाश्रयः शरणं यस्य सः। मय्यर्पितसर्वात्मभाव इत्यर्थः। सर्वकर्माणि सर्वाणि च तानि कर्माणि सर्वकर्माणि नित्यनैमित्तिककाम्यानि प्रतिषिद्धानि अपि इति सर्वप्रकाराणि कर्माणि सदा असकृत् कुर्वाणोऽपि अनुतिष्ठन् अपि मत्प्रसादात् मम ईश्वरस्य वासुदेवस्य प्रसादाद् अनुग्रहात् सम्यग्ज्ञानोदयात् शाश्वतं नित्यम् अव्ययम् अपक्षयरहितं पदं वैष्णवम् अवाप्नोति प्राप्नोति। अपिशब्दात् सम्यग्ज्ञान-निष्ठः सर्वकर्मसंन्यासी शाश्वतम् अव्ययं पदम् अवाप्नोतीति किम् वक्तव्यम् ? इत्यर्थः। अत्र यद्यपि सर्वशब्दानुरोधात् प्रतिषिद्धानामपि कर्मणां ग्रहणं तथापि विहितेन स्वकर्मणा भगवदभ्यर्चनस्य भक्तियोगस्य स्तुतिपरतया अस्य वाक्यस्य अर्थवादत्वेन अनेन वाक्येन न प्रतिषिद्धानां कर्तव्यताप्राप्तिः। तत्र तात्पर्याऽ-भावात्। प्रतिषिद्धकर्माचरणेऽपि मय्यर्पितसर्वात्मभावो मां प्रसादयत्येव, ततश्च मुच्यते एव मद्भक्त इत्येवं मम भक्तियोगस्य माहात्म्यम् अस्ती-त्याशयः ॥५६॥

अवतरणम्—यस्माद् भक्तियोगस्यैवं माहात्म्यम् तस्मात्—चेत सेति।

व्याख्या–चेतसा चेतो 'भगवत्प्रसादाद् आसादितसम्यग्ज्ञानादेव मुक्तिर्न कर्ममात्रादिति—विवेकबुद्धिः ज्ञानम्' इत्यानन्दगिरिः। तेन विवेकबुद्ध्या सर्व-कर्माणि दृष्टादृष्टार्थानि मयि वासुदेवे ईश्वरे संन्यस्य 'यत्करोषि यदश्नासि' (९।२७) इत्युक्तन्यायेन संन्यस्य समर्प्य, मत्परः अहं वासुदेवः परः प्रकृष्टः प्राप्यो यस्य सः, त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः, बुद्धियोगम् मयि समाहितबुद्धित्वं बुद्धियोगस्तम् उपाश्रित्य आश्रयोऽनन्यशरणत्वम् मदेकशरणो भूत्वा इत्यर्थः। मच्चित्तः मय्येव चित्तं यस्य तव स त्वं सततं सर्वदा भव ॥५७॥

मच्चित्तस्त्वं मत्प्रसादात् सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतु—जातानि तरिष्यसि अति क्रमिष्यसि। अतिक्रम्य मुक्तो भविष्यसीत्यर्थः। अथ चेत् पक्षान्तरे यदि त्वम् अहंकारात् 'पण्डितोऽहम्' इत्यहंकाराद् न श्रोष्यसि

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥६०॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

---

मदुक्तं न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि पुरुषार्थाद् भ्रष्टो भविष्यसि । 'भीत्याऽपि प्रवर्तेतेति मन्वानो विपर्यये दोषमाह 'अथचेदिति' इत्यानन्द गिरिः ॥५८॥

अवतरणम्—इदं च त्वया न मन्तव्यं स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति । स्वातन्त्र्ये सति भीतेरवकाशो नास्तीति चेति यस्माद्—यदिति ।

व्याख्या—यद् यदि (चेत्) त्वम् अहङ्कारमाश्रित्य स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति मिथ्याऽभिमानमाश्रित्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे चिन्तयसि निश्चयं करोपि (तर्हि) एप ते तव व्यवसायो निश्चयो मिथ्या मिथ्यैव (सर्वं वाक्यं सावधारणम् इति न्यायात्) (यस्मात्) प्रकृतिः, क्षात्रस्वभावस्त्वां क्षत्रियम् अर्जुनं नियोक्ष्यति वलाद् युद्धे योजयिष्यति ॥५९॥

अवतरणम्—तदेव प्रकृतिपारतन्त्र्यं विवृणोति—स्वभावजेनेति ।

व्याख्या—हे कौन्तेय, यत् कर्म मोहाद् अविवेकात् त्वं कर्तुं नेच्छसि तत् कर्म त्वं स्वभावजेन स्वभावः क्षत्रियत्वे हेतुः पूर्वजन्मकर्मसंस्कारस्तस्माज्जातेन शौर्यादिना ('शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्' (१८।४३) इत्यादिना) यथोक्तेन स्वेन आत्मीयेन क्षात्त्रेण कर्मणा निवद्धो निश्चयेन वद्धो यन्त्रितः सन् अवशोऽपि अवश एव परवश एव करिष्यसि ॥६०॥

अवतरणम्—अन्तर्यामीश्वरपारतन्त्र्याच्च त्वया स्वकर्म कर्तव्यमेवेत्याह—ईश्वर इति ।

व्याख्या—(यस्माद्) ईश्वरः ईशनशीलो नारायणः सर्वभूतानां सर्वप्राणिनाम् हृद्देशे हृदयदेशे तिष्ठति स्थितिं लभते हे अर्जुन शुक्लान्तरात्मस्वभाव विशुद्धान्तःकरण, 'अहश्च कृष्णम् अहरर्जुनञ्च' (ऋ. सं. ६।९।१) इति दर्शनाद् ।

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥
इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

---

अर्जुनशब्दस्य शुक्लार्थकत्वात् । तत्र स कथं तिष्ठतीत्याह—सर्वभूतानि "यन्त्रारूढानीव यन्त्राधिष्ठितानीव इतीव शब्दोऽत्रद्रष्टव्यः" इति भाष्यम् । मायया निजशक्त्या भ्रामयन् भ्रमणं कारयन् तत्तत्कर्मसु प्रवर्तयन् । यथा दारुकृत-पुरुषादीनि कश्चिन्मायावी 'मायया छद्मना' यन्त्राधिष्ठितानि भ्रमयति तद्वदिति भावः । तथा च श्रुतिः—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वेता. ) 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति यमात्मा न वेद । यस्यात्मा शरीरम् । एष त अन्तर्याम्यमृतः ।' (बृ.) इत्यन्तर्यामिब्राह्मणञ्च । हृद्देशेऽन्तःकरणे तिष्ठति सर्वव्यापकोऽपि तत्र (अन्तःकरणे) अभिव्यज्यते सप्तद्वीपाधिपतिरिव राम उत्तरकोसलेषु' इति मधुसूदनसरस्वती । भ्रामयन् इति भ्रम एव भ्रामः प्रज्ञादिभ्यश्चेति स्वार्थे अण् । प्रज्ञादेराकृतिगणत्वात् । अत्र भ्रम शब्दोऽपि भ्रमुधातोर्णिचि धञि साधुः । तं कुर्वन् इति नामधातोस्तत्करोति तदाचष्टेइति णिजन्तस्य रूपम् । अन्यथा भ्रमयन् इति स्यात् 'मितां ह्रस्वः' इत्यनुशासनात् । कर्तृपूर्वकृतकर्मजन्यवासनानुसारिरागद्वेषहेतुककर्तृप्रवृत्ति प्रेरकत्वं नारायणस्येति निर्णीतं ब्रह्मसूत्रेषु । अत एवेश्वरस्य वैषम्यनैर्घृण्ये नेति च ब्रह्मसूत्रेषु प्रोक्तम् इतिदिक् ॥६१॥

अवतरणम्—यस्मादेवं तस्मात् त्वम् अहङ्कारं परित्यज्य—तमेवेति ।

व्याख्या—हे भारत, तमेव परमेश्वरम् शरणं आश्रयं रक्षकम्, संसारार्तिहरणार्थम्, सर्वभावेन 'सर्वात्मना मनोवृत्त्या वाचा कर्मणा च' इत्यानन्दगिरिः । गच्छ आश्रय तत्प्रसादात् तदनुग्रहात् ईश्वरानुग्रहात् तत्त्वज्ञानोत्पत्तिपर्यन्तात् परां प्रकृष्टाम् शान्तिम् उपरतिम्, शाश्वतं नित्यं स्थानं च मम विष्णोः परमं पदं मोक्षाख्यं प्राप्स्यसि अवाप्स्यसि । 'मुक्तास्तिष्ठन्ति अस्मिन्निति स्थानम्' इत्यानन्दगिरिः ॥६२॥

अवतरणम्—शास्त्रम् उपसंहर्तुमिच्छन्नाह—इतीति ।

व्याख्या—इति—'अशोच्यान् अन्वशोस्त्वम्' (२।११) इत्यारभ्य 'स्थानं प्राप्स्यसि शाश्वतम्' (१८।६२) इति यावद् वाक्यजातम् गुह्याद्

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥

---

गोप्यात् गुह्यतरम् अतिशयेन गोप्यं रहस्यमित्यर्थः । ज्ञानं ज्ञायतेऽनेनेति ज्ञानं गीताशास्त्राऽऽख्यम् ते तुभ्यम् मया आख्यातम् सर्वज्ञेन ईश्वरेण मया कथितम् । एतद् गीताशास्त्रम् तदर्थजातञ्च अशेषेण समस्तं विमृश्य आलोच्य विचार्य यथा त्वम् इच्छसि तथा कुरु यदिष्टं तव तद् अनुतिष्ठ ॥६३॥

अवतरणम्—गीताशास्त्रस्य समस्तस्य पौर्वापर्येण विमर्शनद्वारा तात्पर्यार्थं प्रतिपत्तुं विमर्शनं चिकीर्षन्तं प्रति भक्तवत्सलः करुणानिधिः स्वयमेव श्रीभगवान् तस्य सारं संगृह्य कथयति—सर्वेति ।

व्याख्या—सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तगुह्यम् अत्यन्तरहस्यम्, मे मम परमं प्रकृष्टं वचो वाक्यम् भूयः पुनः शृणु । प्रकारान्तरेण मया असकृदुक्तमपि त्वया तच्छ्रुतमपि मया पुनरुच्यमानं सारसंग्रहरूपं सम्प्रति त्वं पुनः शृणु अनुष्ठानसौकर्यलाभायेत्यर्थः । न भयाद् नाऽपि अर्थकारणाद् वा वक्ष्यामि किं तर्हि ? मे मम दृढम् अव्यभिचारेण इष्टः प्रियोऽसि इति इति कृत्वा ततः तेन कारणेन ते तव हितं परं ज्ञानप्राप्तिसाधनम् तद्धि सर्वं हितानां हिततमं वक्ष्यामि कथयिष्यामि ॥६४॥

अवतरणम्—किं तद् ? इत्याह—मन्मना इति ।

व्याख्या—"मन्मना भव मच्चित्तो भव, मद्भक्तो भव मद्भजनो भव, मद्याजी मद्-यजनशीलो भव मां नमस्कुरु नमस्कारमपि ममैव कुरु । तत्रैवं वर्तमानो वासुदेवे एव समर्पितसर्वसाध्यसाधनप्रयोजनो माम् एव एष्यसि आगमिष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोमि एतस्मिन् वस्तुनि इत्यर्थः । यतः प्रियोऽसि मे । एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभावि मोक्षफलम् अवधार्यं भगवच्छरणैकपरायणो भवेद्, इति वाक्यार्थः ॥" इति भाष्यम् । अत्र भव शब्दस्य च सर्वत्र मन्मना इत्यादौ अन्वयः प्रतीयते भाष्यदिशा—प्रतीयते च मन्मनस्त्वादीनाम् उपलक्षणार्थत्वं सकल साध्य साधन प्रयोजन समर्पणस्येति । अत एव 'नमस्कारमपि ममैव कुरु'

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥**

---

इति भाष्ये विवरणम् । 'वासुदेवे' एव समर्पितसर्वसाध्यसाधन प्रयोजनः इति च ('भगवच्छरणैक परायणो भवेदिति च भाष्ये विवरणं कृतम् । अनेन श्लोकेन कर्मयोगनिष्ठा तस्याः परमरहस्यभूतां भक्तियोगाख्यामीश्वरशरणताम् उपसंहृतवान् ॥६५॥

अवतरणम्—अनन्तरोक्तश्लोकेन कर्मयोगनिष्ठायाः परमरहस्यम् ईश्वरशरणताम् उपसंहृत्य अथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं ज्ञानयोगनिष्ठायाः परमरहस्यम्, ज्ञानयोगनिष्ठाम् उपसंहरता वक्तव्यम् इत्याह—सर्वधर्मान् इति ।

व्याख्या—अत्र भाष्यम्—"'सर्वधर्मान्' सर्वे च ते धर्माश्च सर्वधर्मास्तान् । धर्मशब्देन अत्र अधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् 'नाविरतो दुश्चरिताद्' (कठो. १।२।२४) 'त्यज धर्ममधर्मं च' (महा. शा. ३२९।४०) इत्यादिश्रुतिस्मृतिभ्यः । 'सर्वधर्मान् परित्यज्यं 'संन्यस्य सर्वकर्माणि' इत्येतत् । 'माम् एकम्' सर्वात्मानं समं सर्वभूतस्थम् ईश्वरम् अच्युतम्, गर्भजन्मजरामरणेविवर्जितम् 'अहमेव' इत्येवम् एकम्, शरणं व्रज 'न मत्तोऽन्यद् अस्ति इति अवधारयेत्यर्थः । 'अहं त्वा' त्वाम् एवं निश्चितबुद्धिं 'सर्वपापेभ्यः' सर्वधर्माऽधर्मबन्धनरूपेभ्यो 'मोक्षयिष्यामि' स्वात्मभावप्रकाशीकरणेन । उक्तं च 'नाशयात्मभावस्थो ज्ञानदीपेन भास्वता' ॥ (१०।११) इति । अतो 'मा शुचः' शोकं मा कार्षीरित्यर्थः ॥" इति । अत्रानन्दगिरिः—'धर्मविशेषणाद् अधर्मानुज्ञां वारयति–धर्मेति । ज्ञाननिष्ठेन मुमुक्षुणा धर्माऽधर्मयोस्त्याज्यत्वे श्रुतिस्मृती उदाहरति—नाविरत इति । माम्–एकम् इत्यादेस्तात्पर्यमाह—न मत्तोऽन्यदिति । उक्तेऽर्थे दाशमिकं वाक्यमनुकूलपति–उक्तं चेति । ईश्वरस्य त्वदीयबन्धननिरसनद्वारा त्वत्पालयितृत्वाद् न ते शोकावकाशोऽस्ति इत्याह–अत इति ।' इत्याह ॥ अत्र व्रजेत्यस्य जानीहि, निश्चिनु अवधारय इत्येवार्थः । अत्र हि व्रजधातुर्नोत्तरदेशसंयोगानुकूलव्यापाररूपगत्यर्थकः परमेश्वरस्य सर्वत्र व्यापकत्वात् । किन्तु अवगतिरूपज्ञानार्थक एवात्र संभवति । अत एवोक्तं भाष्यकृता–'अवधारयेत्यर्थः' इति । तत्र भवता करपात्रस्वामिनाऽपि 'अहमर्थविवेकनाम्नि ग्रन्थे शरणं व्रजेत्यस्य एवमेवार्थः कृतोऽस्ति ।

उक्तञ्च श्रीमद्भागवतेऽपि सनकादीन प्रतिहंसरूपेण भगवता—'मनसा वचसा दृष्टया गृह्यतेऽन्यैरपीन्द्रियैः। 'अहमेव न मत्तोऽन्यद्' इति बुद्ध्यध्वमञ्जसा।' (श्रीमद्भा. ११।१३।२४) इति। इत्थम् अनेन श्लोकेन 'अहं ब्रह्मास्मि' (बृह. १।४।१०), 'तत् त्वमसि' (छा. ६।८।७, ६।९।४, ६।१०।३, ६।११।३, ६।१२।३, ६।१३।३, ६।१४।३, ६।१५।३, ६।१६।३, 'अयमात्मा ब्रह्म' (बृह. २।५।१९), 'ब्रह्म वेद ब्रह्मैव भवति' (मु. ३।२।९) 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा. ३।१४।१) 'सदेव सोम्येदमग्र आसीदेक मेवाऽद्वितीयम्' (छा० ६।२।१)—'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ० २।१।१) 'ब्रह्मैवेदममृतं पुरस्ताद्' (मु. २।२।११) इत्यादि सर्ववेदान्तसारविहितं ज्ञानयोगनिष्ठायाः परमरहस्यं-'अहमेव परं ब्रह्माऽस्मि न मत्तोऽन्यत् किञ्चिद्' इति सम्यग्दर्शनं ब्रह्मात्मैक्य-विषयम् ज्ञानयोगनिष्ठाञ्चोपसंहृतवान्। एवं कर्मयोग-ज्ञानयोग-निष्ठाद्वय-विधानात्मकं समस्तं गीताशास्त्रमिहोपसंहृतम्। तथा चोक्तं—'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' ॥ (३।३) इति। 'स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः। भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥' (४।३) इति च। अत्र 'अयं द्वितीय तृतीयाध्यायाभ्यामुक्तः कर्मयोगोपायकः ससंन्यासज्ञाननिष्ठालक्षण-योग' इत्यर्थः। यत्तु अत्र मधुसूदनसरस्वतीकृतटीकायामुक्तम्—'गीताशास्त्रे निष्ठात्रयं साध्यसाधनभावापन्नं विवक्षितम् उक्तं च बहुधा। तत्र कर्मनिष्ठा (१८।४६) सर्वकर्म संन्यास पर्यन्तोपसंहृता 'स्वकर्मणातमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र। संन्यासपूर्वक श्रवणादिपरिपाकसहिता ज्ञाननिष्ठोपसंहृता 'ततो मां तत्त्वतो ज्ञात्वा (१८।५५) विशते तदनन्तरम्' इत्यत्र। भगवद्भक्ति-निष्ठा तु उभयसाधनभूता उभयफलभूता च भवतीति अन्ते उपसंहृता 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज इत्यत्र। भाष्यकृतस्तु (१८।६६) 'सर्वधर्मान्परित्यज्येति सर्वकर्मसंन्यासाऽनुवादेन मामेकं शरणं व्रजेति ज्ञान-निष्ठोपसंहृता' इत्याहुः। 'भगवदभिप्रायवर्णने के वयं वराकाः' इति। तद् नादर्तव्यम्, श्रीमतां सर्वज्ञानां वासुदेवभगवदभिप्रायविदां वासुदेवभगवत्स्व-रूपाणां शङ्करभगवद्भाष्यकृताम् अभिप्रायस्य अपरिज्ञानविजृम्भितत्वात्। तथाहि 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' (१८।४६) इत्यत्र कर्म-निष्ठानिरूपणस्य समाप्तिर्न हि दृश्यते 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्य-पाश्रयः' (१८।५६) 'चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः' (१८।५७) इत्युक्तत्वात्। तस्मात् तत्र तत्र प्रतिपादितं भक्तियोगान्तर्भूतं कर्मयोगं

तदुपायकं ज्ञानयोगश्च सर्वशास्त्रान्ते उपसंहरतीत्येव युक्तम्। 'लोकेऽस्मिन् द्विविधा निष्ठेति' निष्ठाद्वयविषयत्वमेवास्य शास्त्रस्य युज्यते। अत एव 'स्वकर्मणा तमभ्यर्च्य' इत्यनेन भक्तियोगस्य कर्मयोगान्तर्भूतत्वमेवोक्तम्। अत एव च सुष्ठु भगवान् भाष्यकृत् 'मन्मना भव' इत्यनेनैव कर्मनिष्ठायाः परमरहस्यमीश्वरशरणताम् उपसंहृत्येति व्याख्यातवान्। कर्मयोगादिप्रतिपादनपरिसमाप्तौ एव हि यथासंभवम् उपसंहारवर्णनं युक्तं न तु यत्र कुत्रचित्। अत एव सभक्तियोगकर्मयोगनिष्ठाफलभूता ज्ञानयोगनिष्ठा' सर्वकर्मसंन्यासपूर्विका सर्वधर्मान् परित्यज्येत्यनेन सर्वान्ते उपसंहृतेति भाष्ये व्याख्यातम् सर्वज्ञेन। मधुसूदनसरस्वतीकृतटीकायाष्टीकाकृता सुप्रसिद्धेन श्रीवच्चाझामहाशयेन अपि प्रकारान्तरेण भाष्यकृन्मतमेव समर्थितम्। तथाहि 'सर्वानपि धर्मान् परित्यज्य विद्यमानान् अविद्यमानान् वा शरणत्वेन अनादृत्य मामीश्वरम् एकम् अद्वितीयं सर्वधर्माणाम् अधिष्ठातारं च शरणं व्रज। धर्माः सन्तु न सन्तु वा किंतैरन्यसापेक्षैर्भगवदनुग्रहादेव तु अन्यनिरपेक्षाद् अहं कृतार्थो भविष्यामि' इति निश्चयेन परमानन्दघनमूर्तिम् अनन्तम्' श्रीवासुदेवमेव भगवन्तम् अनुक्षणं भावनया भजस्व। इदमेव परमं तत्त्वम् नातोऽधिकमस्तीति विचारपूर्वकेण प्रेमप्रकर्षेण सर्वाऽनात्मचिन्ताशून्यया मनोवृत्त्या तैलधारावद् अविच्छिन्नया सततं चिन्तयेत्यर्थः। अत्र मामेकं शरणं व्रज इत्यनेनैव सर्वधर्मशरणतापरित्यागे लब्धे सर्वधर्मान् परित्यज्येति निषेधानुवादस्तु कार्यकारितालाभाय। 'यज्ञायज्ञीये साम्नि ऐरंकृत्वोद्गेयमित्यत्र न गिरा गिरेतिब्रूयाद्' इतिवत्। तथा च ममैव सर्वधर्मकार्यकारित्वान्मदेकशरणस्य नास्ति धर्माऽपेक्षेत्यर्थः।' इति मधुसूदनः। तत्र श्रीवच्चाझामहाशयः—"परित्यज्येति अन्तःकरणशुद्ध्यधीनंविविदिषासंन्यासात्पूर्वं मुमुक्षुणाऽपि फलकामनापरित्यागेन वर्णाश्रमोचित कर्मकरणस्य भूयसा प्रबन्धेन साधितत्वात् इदानीं तत्परित्यागोपदेशे पूर्वाऽपरविरोधःप्रसङ्गाद् व्याचष्टे-विद्यमानेति। शरणत्वेन संसारसमुद्रे मुहुर्निपततो रक्षकत्वेन अनादृत्य 'फलकामनारहितनित्यनैमित्तिकानुष्ठानमात्रादेवाहं मुक्तः' इति बुद्धिस्तदादरः। तं परित्यज्येत्यर्थः। तादृशानुष्ठानस्य केवलान्तःकरणशुद्धिहेतुत्वेन ज्ञानोपायतैव। मोक्षोपायता तु श्रवणादिसाक्षात्कारान्तस्य मदेकशरणीकरणाऽपरपर्यायस्यैव इति तत्रैवादरो नितरां विधेयो न तु कर्मणि। शुद्धे अन्तःकरणे विक्षेपहेतुस्तत् संन्यसनीयमेवेति भावः। मदेकशरणस्येति। नित्यनैमित्तिकानुष्ठानेन विशुद्धान्तःकरणस्संन्यासरूपसर्वधर्मपरित्यागेन निवृत्तविक्षेपस्य संजाताऽद्वितीयशुद्ध-

चिद्रूपमदेकगोचरनिरन्तरवृत्तिप्रवाहस्येत्यर्थः ॥" इत्युक्तवान् । एवञ्च सर्वकर्मसंन्यासपूर्वकश्रवणादिसाक्षात्कारान्तस्यैव मोक्षोपायतेनि तस्यैवात्र भगवच्छरणीकरणत्वम् नान्यविधस्य भजनस्येति स्पष्टं भाष्यकृन्मतमेव प्रोक्तं तेन,–खण्डितं च प्रकारान्तरेण ततोऽन्यथा व्याख्यानं मधुसूदनसरस्वतीमहाशयस्य । खण्डितश्चतद् भाष्योत्कर्षदीपिकायामपीति विस्तरस्तत्रैव द्रष्टव्य इति शम् ॥६६॥

अवतरणम्—अस्मिन् हि गीताशास्त्रे यद्यपि 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव' इत्येवमादीनि वाक्यानि कर्मणाम् अवश्यकर्तव्यतां दर्शयन्ति तथापि 'यज्ज्ञात्वाऽमृतमश्नुते' 'ततो मां तत्त्वतो ज्ञात्वा विशते तदन्तरम्' इत्यादीनि वाक्यानि केवलाज्ज्ञानान्निःश्रेयसप्राप्ति दर्शयन्ति । तस्माद् आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वम् अवधार्यते । कर्मणां विनियोगस्तु 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इत्युक्तेः, आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्युक्तेः, 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । इत्युक्तेः, 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इत्युक्तेश्च अन्तःकरणशुद्धिहेतुकज्ञानोत्पत्तौ एव । मोक्षस्तु केवलाद् आत्मज्ञानादेव आविर्भवति । तु शब्दोऽत्र पक्षद्वयव्यावृत्त्यर्थौ न केवलेभ्यः कर्मभ्यो न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयस प्राप्तिरिति पक्षद्वयं निवर्तयति । भ्रान्तिप्रत्ययनिमित्त एवाऽयं संसारभ्रमो न तु परमार्थं इति सम्यग्दर्शनादत्यन्तमेवास्य उपरम इति सिद्धम् । तथाहि—शुभम् अशुभं वा सर्वमेव कर्म अविद्याकामबीजम् । क्रियाकारकफलभेदबुद्धिर्हि अविद्यया (अनाद्यविद्योत्थया कार्यया अविद्यया) आत्मनि नित्यप्रवृत्ता । 'मम कर्म' 'अहं कर्ता' 'अमुष्मै फलायेदं कर्म करिष्यामि' इतीयम् अविद्या (कार्याऽविद्या) अनादिकालप्रवृत्ता (अनादिकारणाऽविद्याकार्यत्वात् प्रवाहरूपेण अनादित्वमस्या विवक्षितम्) । अस्या अविद्यायाः कारणभूतायाः कार्यभूतायाश्च निवर्तकम् 'अयम् अहमस्मि केवलोऽकर्ताऽक्रियोऽफलो न मत्तोऽन्योऽस्ति कश्चिद्' इत्येवंरूपम् आत्मविषयं ज्ञानम् उत्पद्यमानम्, कर्मप्रवृत्तिहेतुभूताया भेदबुद्धे निवर्तकत्वात् । अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वाऽनुपपत्तिः । न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते । केवलज्ञानमपि तर्हि न अनर्थकम्, अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात् । अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलाऽवसानत्वम् । रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाश-

फलवत्। विनिवृत्तसर्पादि विकल्परज्जुकैवल्यावसानं हि प्रकाशफलं तथा ज्ञानम्। यथा दृष्टार्थासु छिदिक्रियाग्निमन्थनादिषु क्रियासु व्यापृतानां कर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा प्रवृत्त्यनुपपत्तिस्तथा ज्ञाननिष्ठाक्रियायाम् अपि दृष्टार्थायां व्यापृतस्य ज्ञात्रादिकारकस्य आत्मकैवल्यफलादन्यफले कर्मान्तरे वा प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते। कैवल्यफले हि ज्ञाने प्राप्ते सर्वतः संप्लुतोदके फले कूपतडागादि क्रियाफलार्थित्वाऽभाववत् फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वाऽनुपपत्तिः। न हि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयं च अर्थित्वम्। तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वम् न च ज्ञानकर्मणोः समुच्चितयोः। नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्याऽपेक्षा अविद्यानिवर्तकत्वेन विरोधात्। न हि तमस्तमसो निवर्तकम्। अतः केवलमेव ज्ञानं निःश्रेयससाधनमिति सिद्धम्। न च नित्याऽकरणे प्रत्यवायप्राप्तिर्विदुषः। अविद्वद्विषयं हि कर्म विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा। अविद्याकामबीजं हि सर्वं कर्म। तथाचोपपादितं भाष्यकारैः। 'उभौ तौ न विजानीतः' इति वदता भगवता 'आत्मनि कर्तृत्वं कर्मत्वं च आरोपयन् अज्ञ एवेति प्रकाशयता कर्म अज्ञानमूलमिति दर्शितम्। (वेदाऽविनाशिनम् नित्यम्' इत्यनेन आत्मानं याथातथ्येन जानन् कर्तृत्वादिरहितो भवति इति ब्रुवता कर्मसंन्यासे ज्ञानवतोऽधिकारित्वं सूचितम्। निष्ठाद्वयम् अधिकारिभेदेनैव बोद्धव्यमित्याह भगवान् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति। 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' इत्यत्र च अविद्यामूलत्वं कर्मणः सूचयता कर्मनिष्ठाऽविद्वद्विषयाऽनुमोदिता। 'तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः' इति भगवता विद्वद्विषया संन्यासपूर्विका ज्ञाननिष्ठेति सूचितम्। 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इति च विद्वद्विषया संन्यासपूर्विका ज्ञाननिष्ठेत्याह। विदुषो ज्ञाननिष्ठेत्यत्र 'नैव किञ्चित् करोमीति' पाञ्चमिकं वाक्यम् अनुकूलम्। अर्थाद् अज्ञः करोमीति मन्यते। अज्ञस्य चित्तशुद्ध्यर्थं कर्म, शुद्धचित्तस्य कर्मसंन्यासो ज्ञानप्राप्तौ हेतुरित्यत्र 'आरुरुक्षोर्मुनेर्योगमिति वाक्यम् अनुगुणम्। 'उदारास्त्रयोऽपि अज्ञा ज्ञानी त्वात्मैव मे मतम्' इति यथोक्ते विभागे साप्तमिकं वाक्यम् अनुमोदकम्। 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' इति नावमिकं वाक्यं कर्मिणाम् अज्ञत्वं सूचयति। विदुषः संन्यासपूर्विका ज्ञाननिष्ठेत्यत्र च नावमिकं वाक्यम् अनुकूलम्—अनन्याश्चिन्तयन्तो माम् इत्यादि। तत्र

मामित्यस्य यथोक्तम् आत्मानम् आकाशकल्पम् अकल्मषमित्यर्थः। 'ददामि बुद्धियोगं तम्' इति वाक्यं दाशमिकमपि विदुषः संन्यासपूर्विका ज्ञाननिष्ठेत्यत्रैव प्रमाणम्। अर्थात् न कर्मिणोऽज्ञा भगवन्तमुपयान्ति। ननु भगवत्कर्मकारिणां युक्ततमत्वात् कर्मिणोऽपि भगवन्तं यान्तीति चेत्–सत्यम्। ये मत्कर्मकृत् इत्यादिन्यायेन भगवत्कर्मकारिणस्ते यद्यपि युक्ततमास्तथापि कर्मिणोऽज्ञाः सन्तो न भगवन्तं सहसा गन्तुमर्हन्ति उत्तरोत्तरहीनफलत्यागावसानसाधनाः। 'ये त्वक्षरमनिर्देश्यम्' इत्यादि वाक्यावष्टम्भेन विद्वद्-विषयत्वं संन्यासपूर्वक ज्ञाननिष्ठाया निर्धार्यते। किञ्च त्रयोदशे यानि अमानित्वादीनि चतुर्दशे च प्रकाशं च प्रवृत्तिं चेत्यादीनि यानि पञ्चदशे च यानि असङ्गत्वादीनि उक्तानि तैः सर्वैः साधनैः सहिता भवन्ति अनिर्देश्याक्षरोपासकाः। ततोऽपि ते ज्ञाननिष्ठायामेवाधिक्रियेरन्। निष्ठाद्वयम् अधिकारिभेदेन प्रतिष्ठाप्य ज्ञाननिष्ठानाम् अनिष्टामिष्टं मिश्रंचेति त्रिविधं कर्मफलं न भवति, किन्तु मुक्तिरेव भवति कर्मनिष्ठानां तु त्रिविधं कर्मफलं भवति न मुक्तिरिति शास्त्रार्थविभागः। ननु आत्मज्ञानं विनाऽपि मोक्षसिद्धिरस्त्येव। तथाहि— नित्यनैमित्तिकानां कर्मणामनुष्ठानात् प्रत्यवायस्य अप्राप्तिः। प्रतिषिद्धानाञ्च अकरणाद् अनिष्टशरीराऽनवाप्तिः। काम्यानां च वर्जनाद् इष्टशरीराऽनवाप्तिः। वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतिते अस्मिञ्शरीरे देहान्तरोत्पत्तौ च कारणाऽभावाद् रागादीनां च अकरणाद् आत्मनः स्वरूपावस्थानमेव कैवल्यम् इति अयत्नसिद्धं कैवल्यम् इति वदन्ति। तन्न, अतिक्रान्ताऽनेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्य अनारब्धकार्यस्य उपभोगाऽनुपपत्तेः क्षयाऽभावात्। नित्यनैमित्तिककर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तिरिति तु स्वर्गनरकादिफलप्रतिपादकशास्त्रविरुद्धं स्वकपोलकल्पितं निर्मूलं युक्तिहीनं च वचः। खण्डितं चैतद् विस्तरेण भाष्यकृता। ननु कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात् कर्तुरभावे श्रुतेरप्रामाण्यं स्यादिति चेन्न, ब्रह्मविद्यायाम् अर्थवत्त्वोपपत्तेः। न च कर्मकाण्डश्रुतेरप्रामाण्यं स्यादिति वाच्यम् पूर्वपूर्वं सहजप्रवृत्तिनिरोधेन उत्तरोत्तराऽपूर्वप्रवृत्तिजननस्य प्रत्यगात्माऽऽभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात्। अर्थात् अनादिकालप्रवृत्तस्वाभाविकप्रवृत्तिव्यक्तीनां प्रतिबन्धेन यागाद्यलौकिकप्रवृत्तीर्जनयति कर्मकाण्डश्रुतिः। तज्जननं च चित्तशुद्धिद्वारा प्रत्यगात्माभिमुख्यप्रवृत्तिमुत्पादयति। तथा च कर्मविधिश्रुतीनां पारम्पर्येण प्रत्यगात्मज्ञानार्थत्वात् तात्त्विकप्रामाण्यसिद्धिरिति। [कर्मकाण्डश्रुतेर्विद्योदयात् पूर्वं मपि

इदं ते नातपस्काय नाऽभक्ताय कदाचन।
न चाऽशुश्रुषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

---

व्यावहारिकप्रामाण्यस्य तात्त्विकप्रामाण्याऽभावेऽपि सत्त्वाद् ब्रह्मकाण्डश्रुतीनां च ब्रह्मविद्याजनकत्वेन तात्त्विकप्रामाण्यस्योपपन्नत्वाद् न च अध्ययनविधि-विरोधः। तस्माद्भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रम इति केवलेन ज्ञानेनैव निवर्तते इति सिद्धम्। तथा च श्रुतिः—'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता० ३।८) 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवा-स्तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' (माण्डूक्यकारिका) इत्याद्या। इति शम्॥ एवं सर्वं गीताशास्त्रार्थम् अस्मिन्नध्याये उपसंहृत्य सामान्यतो विशेषतश्चान्त इह शास्त्रार्थदार्ढ्याय संक्षेपतस्तम् उपसंहृत्य अथेदानीं शास्त्रार्थं सम्प्रदाय विधिमाह—इदमिति।

**व्याख्या**—इदं गीताशास्त्रं ते तव हिताय मयोक्तं संसारदुःखविच्छित्तये अतपस्काय तपोरहिताय न वाच्यम् इति व्यवहितेन संबन्धः। तपस्विनेऽपि अभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्याञ्चिदप्यवस्थायां न वाच्यम्। भक्तस्तपस्वी अपि सन् अशुश्रूषुर्यो भवति तस्मै अपि कदाचन न वाच्यम्। न च मां वासुदेवं प्राकृतं मनुष्यं मत्वा योऽभ्यसूयति आत्मप्रशंसादि-दोषाध्यारोपणेन मम ईश्वरत्वम् अजानन् न सहते असावपि अयोग्यस्तस्मै अपि न वाच्यम्। भगवति भक्ताय तपस्विने शुश्रूषवे अनसूयवे च वाच्यं शास्त्रम् इति सामर्थ्याद् गम्यते। अत्र भाष्ये—"मेधाविने तपस्विने वा इति (स्मृत्यन्तरे) अनयोर्विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम्। शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम्। भगवति असूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम्। गुरु शुश्रूषा-भक्तिमते च वाच्यम् इत्येष शास्त्रायसम्प्रदाय विधिः।" इत्युक्तम् ॥६७॥

**अवतरणम्**—सम्प्रदायस्य कर्तुः फलम् इदानीम् आह—य इति।

**व्याख्या**—य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यं रहस्यं मद्भक्तेषु मयि वासुदेवे भक्तिमत्सु अभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यति इत्यर्थः। यथा त्वयि मया। 'भक्तेः

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्माद् अन्यःप्रियतरो भुवि ॥६९॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहम् इष्टः स्यामिति मे मतिः ॥७०॥

---

पुनर्ग्रहणात् तद्भक्तिमात्रेण केवलेन शास्त्रसम्प्रदाने पात्रं भवतीति गम्यते ।' इति भाष्यम् । कथम् अभिधास्यति इति उच्यते—भक्तिं मयि परां कृत्वा 'भगवतः परमगुरोः शुश्रूषा मया क्रियते' इत्येवं कृत्वा इत्यर्थः । तस्येदं फलम्– (सोऽभिधाता प्रवक्ता) माम् एव एष्यति मुच्यते एव । अत्र असंशयः संशयो न कर्तव्यः ॥६८॥

अवतरणम्—किञ्च—(फलान्तरं च आह) न चेति ।

व्याख्या—न च तस्मात् शास्त्रसम्प्रदायकृतः, मनुष्येषु मनुष्याणां मध्ये कश्चिद् मे मम प्रियकृत्तमः अतिशयेन प्रियकृद् अस्ति । वर्तमानेषु मनुष्येषु शास्त्रसम्प्रदायकृतोऽन्यः प्रियकृत्तमो नास्त्येवेत्यर्थः । भविष्यत्यपि काले तस्माद् अन्यः शास्त्रसंप्रदायकृतोऽन्यो द्वितीयः प्रियतरोऽतिशयेन प्रियो न च नैव भविता भविष्यति भुवि लोकेऽस्मिन् ॥ अत्रानन्दगिरिः—'ध्याननिष्ठस्य श्रेष्ठत्वेऽपि स्वसंप्रदायप्रवक्तुः श्रेष्ठतमत्वाद् उचिता विद्यासम्प्रदाने प्रवृत्तिरिति भावः ।' इत्याह ॥६९॥

अवतरणम्—भगवतः प्रियतरत्वात् प्रियकृत्तमत्वाच्च प्रवक्तुर्भक्तिर्ध्रुवेति योऽपि—अध्येष्यत इति ।

व्याख्या—यश्च इमं धर्म्यं धर्माद् अनपेतं आवयोः संवादरूपं ग्रन्थं केशवार्जुनयोः अध्येष्यते पठिष्यति । तेन इदं कृतं स्यात् । तेन अध्येत्रा ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद् विशिष्टतमः, इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्राऽध्ययनरूपेण अहम् वासुदेवः परमात्मा इष्टः पूजितः स्यां भवेयम् इति मे मम मतिर्निश्चयः । अत्र भाष्ये—'ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद् विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्य अध्ययनं स्तूयते । फलविधिरेव वा । देवतादिविषयज्ञानयज्ञफलतुल्यम् अस्य फलं भवतीति ।' इत्युक्तम् । अस्याऽयं भावः– मनुस्मृतौ 'विधि यज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः

**श्रद्धावान् अनसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

---

साहस्रो मानसः स्मृतः ।' (मनु० २।८५) इत्युक्तम् । तच्च कुल्लूकभट्टेन व्याख्यातम्—'विधिविषयो यज्ञो विधियज्ञो दर्शपौर्णमासादिस्तस्मात् प्रकृतानां प्रणवादीनां जपयज्ञो दशगुणाधिकः । सोऽपि उपांशुश्चेद् अनुष्ठितस्तदा शतगुणाधिकः । यत्समीपस्थोऽपि परो न शृणोति तदुपांशु । मानसस्तु जपः सहस्रगुणाधिकः । यत्र जिह्वौष्ठं मनागपि न चलति स मानसः' इति । यद्यपि गीताशास्त्रस्य पाठमात्रं न मुख्यो ज्ञानयज्ञः, सम्यग्दर्शनस्यैव 'ब्रह्मार्पणं ब्रह्महवि र्ब्रह्माग्नौ ब्रह्मणा हुतम्' इत्यादिना ज्ञानयज्ञत्वस्य सम्पादनात् । तथापि ज्ञानयज्ञस्य उक्तरीत्या विशिष्टतमत्वाऽभिधानाद् ज्ञानयज्ञाभेदेन विशेषणं गीताशास्त्राध्ययनस्तुत्यर्थम्—'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परं तप' इति च प्रागुक्तेः । इत्येकः पक्षः । अथवा गीताशास्त्रस्य अध्ययने अर्थानुसंधानाऽभावे विलम्बतः सत्त्वशुद्धिद्वारा ज्ञानोत्पत्त्या कैवल्यप्राप्तिः फलम् । अर्थानुसन्धानसाहित्ये तु क्षिप्रमेव सत्त्वशुद्धिद्वारा । पूर्वत एव सत्त्वशुद्धौ सत्यान्तु साक्षादेव तत्त्वज्ञानोत्पत्त्या कैवल्यप्राप्तिः फलं भवतीति फलविधिरेवायं नत्वर्थवादः स्तुतिमात्रम् इति गीताऽध्ययनस्य ज्ञानयज्ञत्वकथनात् कल्प्यते इति च प्रधानः पक्षः । अयमेव तु भाष्यसम्मतः पक्षः प्रतिभाति । साहित्यदर्पणोक्तरीत्या उत्तरविकल्पस्य दृढत्व सूचकाद् वाशब्दात् तथा प्रतीतेरिति । एवञ्च यथा वेदान्तसारजनितेन सम्यग्दर्शनलक्षणज्ञानयज्ञेन परमेश्वरः प्राप्तो भवति (साक्षात्कृतो भवति) तद्वद् गीताशास्त्राऽध्ययनेनापि परमेश्वर इष्टो भूत्वा सम्यग्दर्शनं प्रदाय प्राप्तो भवतीति वाक्यार्थः ॥७०॥

**अवतरणम्**—अथ गीताशास्त्रश्रवणस्य फलम् आह—श्रद्धेति ।

**व्याख्या**—श्रद्धावान् श्रद्दधानोऽनसूयश्च असूयारहितश्च सन् इमं ग्रन्थं यो नरः शृणुयाद् अपि श्रोत्रेण गृह्णीयाद् अपि 'अपि शब्दात् किमुत अर्थज्ञानवान्' इति भाष्यम् । सोऽपि पापान्मुक्तः शुभान् प्रशस्तान् लोकान् पुण्यकर्मणाम् अग्निहोत्रादिपुण्यकर्मवतां प्राप्तव्यान् प्राप्नुयात् ॥ श्रीमद्भागवतेऽप्युक्तम्—'वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि । वक्तारं प्रच्छकं श्रोतृंस्तत्पादसलिलं यथा ॥' इति ॥ अत्र भाष्ये 'मुक्त इत्यस्य पापान्मुक्त' इति विवरणात् पुण्यकर्मणाम् अग्निहोत्रादिकर्मवतां प्राप्तव्यान् प्रशस्तान् लोकान् प्राप्नुयादिति मूलभाष्ययोः कथनाच्च अयं केवलश्रोता अर्थज्ञानहीनः

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥७२॥

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥

---

पुनरावृत्तिफलकानेव लोकान् गमिष्यति, कर्मिणो यथा यान्ति तथेत्यर्थः प्रतीयते। 'अपि शब्दात् किमुत अर्थज्ञानवान्' इति भाष्य विवरणात् अर्थज्ञानवतस्तु ततः प्रकृष्टतरं फलं प्राप्यते इति सूच्यते। उभावपि 'न मे भक्तः प्रणश्यतीति' न्यायेन यथाकालं मुक्तावपि भविष्यतः। प्रवक्ता अध्येता च मुच्यते इत्यत्र तु संशय एव नास्तीति भगवता स्वयं प्रतिज्ञातम्। अध्येताऽपि ज्ञानयज्ञेन यजनात् काले मुच्यते एवेति सर्वेऽपि प्रवक्त्रादयः शास्त्रस्य अस्य कृतार्था एव भवन्तीत्यलम् ॥७१॥

अवतरणम्—आचार्येण शिष्यस्य यावद् अज्ञानसंशयविपर्यासास्तावत् शिष्याय अनेकधा उपदेष्टव्यम् इति दर्शयितुं भगवान् शिष्यस्य शास्त्रार्थग्रहणाऽग्रहणविवेकबुभुत्सया पृच्छति। तदग्रहणे ज्ञाते पुनर्ग्राहयिष्यामि उपायान्तरेणाऽपि इति प्रष्टुरभिप्रायः। यत्नान्तरं चास्थाय शिष्यः कृतार्थीकर्तव्य इत्याचार्यधर्मोऽत्र प्रदर्शित भवति—कच्चिदिति।

व्याख्या—'कच्चिदिति कोमलप्रश्न' इत्यानन्दगिरिः। कच्चित् किम् एतद् मयोक्तं हे पार्थ त्वया एकाग्रेण समाहितेन चेतसा मनसा श्रुतम् श्रवणेन अवधारितम् ? किम् वा एकाग्रेण चित्तेन न श्रुतम् ? इत्यर्थः—सन्देहस्य अनेककोटिकत्वात्। हे धनञ्जय, कच्चित् किम् ते तव अज्ञानसंमोहः अज्ञाननिमित्तिकः संमोहः अविविक्तभावोऽविवेकः स्वाभाविकः प्रणष्टः यदर्थोऽयं शास्त्रश्रवणायासस्तव, मम च उपदेष्टृत्वायासः प्रवृत्तः ? 'स्वाभाविकः' इति भाष्यस्य स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया तत्कृत इत्यर्थः ॥७२॥

अवतरणम्—एवं पृष्टः स्वस्य भगवत्प्रसादेन कृतार्थतां ज्ञापयन्—अर्जुन उवाचेति।

व्याख्या—"हे अच्युत, त्वत्प्रसादात् तव अनुग्रहाद् मम मोहोऽज्ञानजः समस्तसंसाराऽनर्थ हेतुः सागर इव दुस्तरोऽविवेको नष्टः प्रणष्टः। मया त्व-

त्प्रसादात् तव प्रसादम् आश्रितेन स्मृतिश्च आत्मतत्त्वविषया लब्धा। यस्या लाभात् सर्वग्रन्थीनां विप्रमोक्षः। अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलम् एतावदेव इति निश्चितं दर्शितं भवति यदुत अज्ञानसंमोहनाश आत्मस्मृतिलाभश्चेति। तथाच श्रुतौ 'अनात्मविच्छोचामि' (छा० ७।१।३) इत्युपन्यस्य आत्मज्ञाने सर्वग्रन्थिविप्रमोक्षउक्तः--'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' (मु० उ० १।२।८) इति 'तत्र को मोहः कः शोकः ? एकत्वमनुपश्यतः' (ईशा० ७) इति च मन्त्रवर्णः। अथेदानीं त्वच्छासनेस्थितोऽस्मि गतसंदेहो मुक्तसंशयः। करिष्ये वचनं तव अहं त्वत्प्रसादात् कृतार्थोऽस्मि, न मम कर्तव्यमस्ति इत्यभिप्रायः।" इत्यत्र भाष्यव्याख्यानम्। अत्रानन्दगिरिः—'स्वयंज्योतिषि प्रतीचि ब्रह्मणि अविद्याभ्रमं विद्या अपनयति न अविदितं प्रकाशयतीति मत्वाह--स्मृतिश्चेति।' इति। 'स्मृतिरयमहमस्मि परं ब्रह्म' इत्यात्मानुसंधानरूपा आत्मतत्त्वविषया लब्धा।' इति नीलकण्ठः। 'आत्मविषयो मोहो नष्टः। यतोऽयमहमस्मि इति स्वरूपानुसन्धानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा' इति श्रीधरस्वामी। 'नष्ट उच्छिन्नो मोहोऽज्ञानकृतो विपर्ययः। तन्नाशकमाह--स्मृतिर्लब्धा त्वत्प्रसादान्मया। यस्मात् त्वदुपदेशाद् आत्मज्ञानं लब्धं सर्वसंशयाऽनाक्रान्ततया प्राप्तम् अतः सर्वप्रतिबन्धशून्येन आत्मज्ञानेन मोहो नष्ट इत्यर्थः।' इति मधुसूदनसरस्वती। इदमत्र बोध्यम्—शास्त्रम् 'अहं ब्रह्मास्मि' इत्यखण्डामन्तःकरणवृत्तिं जनयित्वा 'अहं मनुष्योऽस्मि कर्ता भोक्ताऽस्मि अज्ञोऽस्मि' इत्यादिरूपाम् अविद्याम् विनाशयति केवलम्। न च किञ्चिदपूर्वम् अनुभावयति। ब्रह्म तु प्रत्यगभिन्नं स्वप्रकाशमेवेति स्वयमेव आवरणनाशे प्रकाशते। अतोऽनुभूतिर्लब्धा इति नोक्तं किन्तु 'सोहम्' इति स्मृतिरेव लब्धेत्युक्तम्। 'नष्टो मोह' इति अविद्याभ्रमनिवृत्तिरुक्ता। त्वत्प्रसादादिति भगवत्प्रसादस्य तत्र स्वोपदेशद्वारा मोहनाशे असाधारणकारणत्वमुक्तम् 'तत्त्वमसि' इत्याद्युपदेशस्येव। गतसन्देह इति 'भिद्यते हृदयग्रन्थि'रित्यादिश्रुत्युक्तं सर्वं सूचितम्। स्थितोऽस्मि स्वरूपमात्रे स्थितोऽस्मि इति मुक्तत्वमुक्तम्। 'करिष्ये वचनं तव' इत्यनेन 'यस्त्वात्मरतिरेव स्यात् तस्य कार्यं न विद्यते' (३।१७) इति न्यायेन मम कृतार्थस्य किमपि कर्तव्यं नास्तीति सूचितम्। यत् तु पश्चात्तेन युद्धादिकं कृतम् तत्तु 'लोकसंग्रहमेवापि संपश्यन्' (३।२०) इति न्यायेन कृतम्। अत एव 'कर्म करिष्ये' इति नोक्तम्। अधुनाहं सर्वधर्मान् परित्यज्येत्यादित्वदाज्ञाऽनुसारम्—'अहमेव भगवान् वासुदेवो न मत्तोऽन्यत् किञ्चिदस्ति' इत्यवधारयामि।

संजय उवाच—

> इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
> संवादमिममश्रौषम् अद्भुतं रोमहर्षणम् ॥७४॥
>
> व्यासप्रसादाच्छ्रुतवान् एतद्गुह्यमहं परम् ।
> योगं योगेश्वरात् कृष्णात् साक्षात्कथयतः स्वयम् ॥७५॥

---

इत्यर्थः । एवञ्च अविद्यनाश आत्मस्मृतिलाभश्च गीताशास्त्रस्य प्रयोजनम् । तस्य प्रयोजनस्य सम्पादकम् 'सर्वकर्मसन्यासपूर्वकम् ब्रह्मात्मैक्यावधारणमेव गीताशास्त्रोक्तम् । तादृशावधारणयोग्यतामात्रसंपादकं कर्मयोगानुष्ठानमिति निष्ठाद्वयविषयं शास्त्रं सर्वाधिकारिसमुद्धाराय प्रवर्तितं भगवता कृष्णेन करुणाकरेणेति शम् ॥७३॥

अवतरणम्—परिसमाप्तः शास्त्रार्थः । अथेदानीं कथासंबन्धप्रदर्शनार्थम्—संजय उवाचेति ।

व्याख्या—इति एवम्, अहं संजयो नाम महात्मनः पार्थस्य वासुदेवस्य च अद्भुतम् अत्यन्तविस्मयकरम्, रोमहर्षणं रोमाञ्चकरम्, इमं यथोक्तं संवादम् प्रश्नप्रतिवचनरूपम् अश्रौषं श्रुतवान् अस्मि । पार्थस्य महात्मनः कृतार्थस्य वासुदेवस्य महात्मनः सर्वेश्वरस्य परमात्मनः । कृतार्थत्वात्पार्थोऽपि सम्प्रति परमात्मना वासुदेवेन अभेदं गत इत्यभिप्रायः ॥७४॥

'प्रकृष्टं संवादं कथम्' अश्रौपीरितिचेत् तत्राह—व्यासेति । एतत् परं प्रकृष्टं गुह्यं रहस्यम् एतं संवादं योगं योगः सम्यग्दर्शनं मुख्यस्तदर्थत्वात् कर्म च गौणो योगस्तदुभयार्थत्वाद् अयं संवादग्रन्थोऽपि योगस्तं श्रुतवान् । अथवा चित्तवृत्तिनिरोधस्य योगस्य जनकत्वाद् अयं संवादो योगस्तम् व्यासप्रसादात् ततः सकाशाद् दिव्यचक्षुर्लाभात् योगेश्वरात् योगानाम् ईश्वरो योगेश्वरस्तस्मात् तदनुग्रहहेतुकत्वाद् योगतत्फलयो र्योगेश्वरः कृष्णस्तस्मात् सच्चिदानन्दाद् भगवतः परमेश्वरात् स्वयं कथयतः स्वेन परमेश्वरेण अतिसंस्कृतज्ञानैश्वर्यबलवीर्यतेजोरूपेण आत्मना न तु परम्परया कथयतो व्याचक्षाणात् साक्षाद् अव्यवधानेन अहं संजयः श्रुतवान् अस्मि ॥७५॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यास योगो नाम अष्टादशोऽध्यायः ॥
इति श्रीकृष्णार्पणमस्तु ॥१८॥

---

अवतरणम्—यथोक्तं भगवतः श्रुत्वा किम् उपेक्षसे ? नेत्याह—राजन् इति ।

व्याख्या—हे राजन् धृतराष्ट्र पुण्यं श्रवणादपि पापहरम्, अद्भुतम् अत्यन्तविस्मयजनकम् अपूर्वत्वाद् अत्युत्कृष्टत्वाच्चेति भावः। इमं यथोक्तं केशवार्जुनयोः संवादं श्रुतं संस्मृत्य संस्मृत्य क्षणे क्षणे सम्यक् स्मृत्वा स्मृत्वा मुहुर्मुहुः प्रतिक्षणं हृष्यामि च। चकारात् न केवलं श्रुतवानेवास्मि अपि तु प्रतिक्षणं स्मृत्वास्मृत्वा हृष्यामि च, ब्रह्मानन्दमनुभवामीति भावः ॥७६॥

अवतरणम्—यत्तु विश्वरूपाख्यं सगुणं रूपं भगवान् अर्जुनाय ध्यानार्थं दर्शितवान् तदिदानीं स्तौति—तच्चेति ।

व्याख्या—हे राजन् धृतराष्ट्र, तच्च अनुभूतं दिव्यचक्षुषा मया हरेर्विष्णोः कृष्णस्य अत्यद्भुतम् अत्यन्तविस्मयकरम् रूपं विश्वरूपाख्यम् संस्मृत्य संस्मृत्य प्रतिक्षणं सम्यक् स्मृत्वा स्मृत्वा स्थितस्य मे मम महान् विस्मय आश्चर्यम् अस्ति, अहं संस्मृत्य संस्मृत्य पुनः पुनः हृष्यामि हर्षमनुभवामि च ॥७७॥

अवतरणम्—किं बहुना—यत्रेति ।

व्याख्या—'द्वयोरपि कृष्णार्जुनयोर्नरनारायणयोः संवादस्य प्रामाण्यार्थं परम् उत्कर्षं दर्शयति (भगवान् भाष्यकारः) 'किं बहुना इति ।' इत्या-

नन्दगिरिः। संजयो धृतराष्ट्रं वोधयति यद् हे धृतराष्ट्र, कृष्णपार्थयो नर-नारायणयोरप्रतिमानन्ततेजोवलवीर्यशक्तिज्ञानयो निरस्तसाम्याऽतिशयधाम्नोः परमोत्कर्षविषये न वहुवक्तव्यम् वहूक्तिमन्तरेणैव तयोर्महिमा प्रसिद्धोऽस्ति किन्तु संक्षेपत एव कथयामि एतावतैव तयोर्महिमा भवताऽनुमातव्यः। अतः संक्षेपेणैव वदामि—यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानाम् ईश्वरस्तत्प्रभवत्वात् सर्वयोगानाम् तदनुग्रहहेतुकत्वाच्च सर्वयोगतत्फलानाम्। कृष्णः सच्चिदानन्दो भगवान् अस्तीतिशेषः। (तथा) यत्र यस्मिन् पक्षे धनुर्धरो गाण्डीवधन्वा पार्थः अर्जुनोऽस्ति तत्र श्रीः तस्मिन्नेव पाण्डवानां पक्षे श्रीर्लक्ष्मीरस्ति। विजयः परमउत्कर्षः (च) अस्ति भूतिः श्रियोविशेषो विस्तारः। उत्तरोत्तराऽभिवृद्धिः श्रिय इत्यर्थः अस्तीति शेषः। ध्रुवा अव्यभिचारिणी नीतिर्नयश्च (तत्रैव पक्षे अस्ति इति मम संजयस्य व्यासप्राप्तदिव्यनेत्रस्य कृष्णार्जुनसकलसंवादश्रवणमननावगतनिश्चयस्य मतिर्निश्चयोऽस्तीति शिवम्॥ अनेनाष्टादशेनाध्यायेन सर्वश्च गीताशास्त्रार्थः सर्वश्च वेदार्थ (उपनिषदर्थः) उपसंहृतोऽवधार्यः। तदेवम् अनेन गीताशास्त्रेण उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठा सत्त्वशुद्धिद्वारा भगवत्प्रसादद्वारा ज्ञाननिष्ठाया हेतु र्ज्ञाननिष्ठा तु साक्षान्मोक्षस्य हेतुः। भक्तियोगस्तु भागवतादौ पृथक्त्वेनोक्तोऽपि इह कर्मात्मकः कर्मनिष्ठायां ज्ञानात्मकश्च ज्ञाननिष्ठायामैवान्तर्भवतीति सर्वम् उपक्रमोपसंहारादिभिः सिद्धम् ॥७८॥



